THE

# ABHIJNANA SAKUNTALA

OF

KALIDASA

WITH

the commentary of Vaikhanasa Srinivasacharya

AND

the Arthadyotanika commentary of

RAGHAVABHATTA



V. RAMASWAMY SASTRULU & SONS

292, ESPLANADE, MADRAS.

1938

# THE
# ABHIJNANA SAKUNTALA

OF

## KALIDASA

WITH

**the commentary of Vaikhanasa Srinivasacharya**

AND

**the Arthadyotanika commentary of**

**RAGHAVABHATTA**



V. RAMASWAMY SASTRULU & SONS

292, ESPLANADE, MADRAS.

1938

# ॥ भूमिका ॥

भोस्तत्रभवन्तो महाशयाः ! विदितमेव सर्वेषां नाटकस्यास्य प्रणेता कविमण्डलसार्वभौमो महाकविः कालिदासो नाम ॥ स महाकविः कस्मिन् काले कतमस्मिन् मण्डले कान् नृपालान् स्वकवित्वमहिम्ना तोषयामासेति विषयोऽद्यापि सविवादः ॥ इदानीन्तनशासनादिपरिशोधनैः भारविः कालिदासः समकालिकाविति ज्ञायेते ॥ बाणकविना स्वीयहर्षचरिते स्वस्मात्पूर्व एव कालिदास इति प्रत्यपादि—तथाच। सप्तमाच्छताब्दात् पूर्व एवायमिति ज्ञायते ॥ तर्हि कियता कालेन पूर्वइति वक्तुं प्रमाणान्तराणि नोपलभ्यन्ते ॥ तर्हि मल्लिनाथः स्वीयमेघसन्देशव्याख्याने निचुळदिङ्नागनामानौ महाकवेरस्य समानकालिकावित्यभाणीत् ॥ मल्लिनाथव्याख्यानोक्तिर्यदि प्रमाणं भवेत् (विमर्शास्पदं तदिदानीमपि) षष्ठशताब्दमध्यभागे स भूमण्डलमलञ्चकारेति दिङ्नागकालनिर्णयात् ज्ञायते ॥

अन्यः कश्चन विषयो विमर्शितव्योऽस्ति ॥ तस्य मिर्धारणे यदि वयं प्रभवामस्तदा कालिदासकवेः कालनिर्णयः सुलभएवेति ज्ञायते ॥ कालिदासो हि विक्रमसभामलञ्चकारेति विदितमेव सर्वेषां ॥ तर्हि कोऽसौ विक्रम इति सार्वजनीनं वाक्यम् ॥ तच्छकारम्भस्तु क्रीस्तुजननात् षट्पञ्चाशद्वत्सरेभ्यः पूर्वम् ॥ तद्विक्रमार्कसमकालीनश्चेदयं क्रैस्तवशकप्रारम्भात् षट्पञ्चाशद्वत्सरेभ्यः पूर्वमेवावात्सीदिति वक्तुं शक्यते ॥ आधुनिककविकालनिर्णेतृभिस्तु स्वोपलब्धप्रमाणैः षष्ठे क्रैस्तवशकेऽवसदयमिति निरणायि ॥ इदानीमपि विवादपात्रमेवास्य महाकवेः कालनिर्णयविषयः ॥

कालिदासशैली तु मृदुमधुरगम्भीरा अलङ्कारभूयिष्ठा च पठनसमनन्तरमेव सुलभभावबोधा च ॥

अतोऽस्य शैली द्राक्षापाकः ॥ अनन्तरकालिकास्तु स्वनाटकेषु स्वपाण्डिन्यप्रकटनाय गभीरां शैलीं प्रत्यपादयन् ॥

कालिदासस्तु रघुवंशः कुमारसम्भवः मेघसन्देशः इति श्रव्यकाव्यत्रयं। शाकुन्तलं मालविकाग्निमित्रीयं विक्रमोर्वशीयमिति दृश्यकाव्यत्रयं च विरच्य गीर्वाणवाणीमवाकिरद्भूमण्डले ॥ सर्वेष्वप्येषु काव्येषु माघनैषधादिष्विव कवेः प्रयत्नपुरस्सरकवित्वमवगाहितुमस्माभिरपि तथा प्रयत्नपरैर्न भवितव्यम् ॥

कालिदासरचिते नाटकत्रये भावप्रदर्शनकौशल्येऽनितरसाधारणोऽयं पन्थास्तस्य ॥ वर्णनादिष्वपि तदभिप्रायप्रदर्शनमनितरसाधारणमिति प्रतिभाति ॥

तत्कृतकाव्येष्वपि वर्णनचातुरी स्वभावोक्तिभूयिष्ठा ॥ नैषधीये वर्णितदमयन्तीवर्णनापेक्षया कुमारसम्भवे कृतगौरीवर्णनमतीव हृदयङ्गममिति कथने न किमपि साहसम् ॥

भवभूतिरिवात्मश्लाघां कालिदासो न कृतवान् काव्ये स्वकीये ॥ परं तु स्वकीयं विनयं प्रकाशितवान् ॥

यथा—"आ परितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम् । बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥ स्वस्य महिमसत्त्वेऽपि स्वकीयकवितारीतिं विद्वत्परितोषपर्यन्तं साध्विति न मन्ये " इति बभाषे ॥ इतरकाव्येषु तथैव कृतवानयम् ॥

यथा—"पुराणमित्येव न साधु सर्वं नचापि काव्यं नवमित्यवद्यम् । सन्तः परीक्ष्यान्यतरद्भजन्ते मूढः परप्रत्ययनेयबुद्धिः " इति मालविकाग्निमित्रीये ॥

यथा—"मन्दः कवियशः प्रार्थी गमिष्याम्युपहास्यताम् । प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥ " इति रघु-प्र-स ॥

## ॥ शाकुन्तलभूमिका ॥

अभिज्ञानशाकुन्तलमिदं दशविधरूपकेषु नाटकमिति संज्ञितम् ॥ नाटकेऽस्मिन् मुख्यो रसः शृङ्गारः ॥ तदनुसारेण रसान्तराणि तत्र तत्र प्रवेशितानि ॥ नाटके धीरोदात्तो नायकः ॥ इतिवृत्तं प्रख्यातं च भवेत् ॥

* अत्र कथा महाभारतांतर्गतादिपर्वणो गृहीता ॥

तत्र विद्यमाना कथेत्थं दृश्यते ॥ कदाचित् दुष्यन्तो मृगयामटन् कण्वाश्रममासाद्य । कण्वमहर्षिं सोमतीर्थं गतं श्रुत्वा तत्रत्यां शकुन्तलां सखीद्वयपरिवेष्टितां दृष्ट्वा तद्रूपलावण्याकर्षितस्वान्तःकरणः तामेव पृष्ट्वा तदीयजननादिकमुदन्तं ज्ञात्वा तां सवर्णसम्भवां ज्ञात्वा तत्पुत्रस्य राज्यदानसमयपूर्वकं गान्धर्वविधिना तां परिणीय कण्वशापाद्भीतस्तां तत्रैवोत्सृज्य स्वनगरं गत्वा बहुवल्लभत्वात्तां विसस्मार ॥ कण्वस्तु वनं प्रत्यागत्य दिव्यदृष्ट्या शकुन्तलां गान्धर्वविधिना दुष्यन्तपरिणीतां आपन्नसत्त्वां च ज्ञात्वा तुतोषैव ॥ परन्तु न रुरोष ॥ शकुन्तला पुत्रमसूत कण्वस्तु तस्य जातकर्मादिकं विधाय तं नाम्ना सर्वदमनं चकार ॥ स बालो बालचन्द्र इव दिनदिनप्रवर्धमानो द्वादशवर्षदेशीयोऽभूत् ॥ सकलविद्यास्वपि स बालः पारङ्गतो बभूव ॥ अनन्तरं कण्वः शकुन्तलां पुत्रसहितां शिष्याभ्यां साकं भर्तृनगरं प्रेषयामास ॥ शिष्यौ तु नगरसमीपे तां सपुत्रां विसृज्य निजाश्रमं न्यवर्तेताम् ॥

शकुन्तला सपुत्रा दुष्यन्तस्य सभां प्रविश्य तेन पृष्टा स्वकीयपरिणयादिवृत्तान्तं कथयन्त्यपि तं न स्मारयामास ॥ राजा ज्ञातवृत्तान्तोऽपि जनापवादभीत इव तत्परिणयवार्तामप्यजानन्निवास्त ॥ शकुन्तला बहुधा तं ज्ञापयित्वाऽपि अलब्धसम्मतिस्तस्मै चुक्रोध ॥ निनिन्द च तं स्ववाक्यपरिपालनमकुर्वन्तं बहुजनमध्ये ॥ तदाऽकाशवाणी समजायत—'इयं त्वत्पत्नी; अयं त्वत्पुत्रः' इति ॥ अनन्तरं स राजा तामङ्गीकृत्य निजं पुत्रमाश्लिष्य तं राज्येऽभिषिषेच ॥

*नाटकग्रथितवस्तु पद्मपुराणानुसारीति केचन कथयन्ति ॥

अत्र कथायामुदात्तनायके विस्मरणरूपं दोषमारोपितुमसहमानः कविः कथाचमत्काररूपेण तत्रतत्र तत्कथामन्यथा प्रवर्तितवान् ॥ नोचेदुदात्तनायकस्य कळङ्को भवेत् ॥ रसभङ्गश्च समापतेत् इति ॥

काव्यनाटकेषु रसस्यैव प्राधान्यात् रसानुगुण्येन तादृशपरिवर्तने दोषाभावाच्च कालिदासस्तत्रतत्र कथां किञ्चित्किञ्चित्परिवर्तितवान् ॥

## ॥ भारते ॥

1. राज्ञा शकुन्तला पृष्टेत्युक्ता ॥

2. आकाशवाणीमूलेन शकुन्तलापरिणयस्मरणवार्ता ज्ञापिता ॥

3. पुत्रेण साकं भर्तृगृहं गता शकुन्तला राज्ञा विस्मृतवृत्तान्तेन तिरस्कृता । आकाशवाणीवाक्येन पुनर्गृहीता ॥

4. शकुन्तला सपुत्रा कण्वेन भर्तृगृहं प्रेषितेति ॥

## ॥ नाटके ॥

1. तत्सखीभ्यां शकुन्तलावृत्तान्तो राज्ञा ज्ञातः ॥

2. सखीभ्यां शकुन्तलाविरहचिह्नानि ज्ञातानि ॥

3. स्वविरहवृत्तान्तज्ञापनाय भर्तुर्लेखनपत्रिका लिखिता तया ॥

4. दुष्यन्तोऽपि शकुन्तलाविरहवेदनामसहमानः विदूषकेन सह कञ्चित्कालं अपनीय येन केन व्याजेन तं पुरं प्रेष्य शकुन्तलादर्शनाय वनं प्रविश्य वृक्षान्तरितः कञ्चित्कालं शकुन्तलाविरहवेदनां स्वयं दृष्ट्वा अनन्तरं लब्धसमक्षः तां शपथपूर्वकं परिणीय दिनत्रयात्पूर्वमेव भृत्यान् प्रेषयामीति निजनगरं न्यवर्तत ॥

5. चमत्कारकारिकथासंविधानाय दुर्वासश्शापः कल्पितः ॥

6. अभिज्ञानरूपाङ्गुळीयकदर्शनेन राज्ञः पुनः स्मरणं जायेतेति शापविमोक्षः दत्तः ॥ अङ्गुळीयकनाशेन शकुन्तलाया आशाभङ्गः । पुनः धीवरमुखेन राज्ञोऽङ्गुळीयकदर्शनं तेन च शकुन्तलापरिणयवृत्तान्तस्मरणं च वर्णितम् ॥

7. शकुन्तलाया अन्तर्वत्न्याः शिष्याभ्यां गौतम्या च साकं प्रेषणं भर्तुस्तिरस्कारः सानुमत्या मारीचाश्रमप्रवेशनं मातलिना सह गतस्य दुष्यन्तस्य मारीचाश्रमे पुत्रदर्शनं शकुन्तलायाः पुनर्दर्शनं इत्यादयः कथाविशेषाः मूलविरोधेनोपन्यस्ता अपि कथापरिपोषणायेत्थं कृतत्वात् रसपोषणमेव जनयन्तीति निर्विवादोऽयमंशः ॥

महाकविना नाटकलक्षणानि सर्वाण्यपि कथानुसारेण तत्र तत्र वर्णितानि । किं बहुनोक्तेन नैतादृशं नाटकं भूतले प्रयोक्तृप्रयोगार्हं प्रेक्षावतामाह्लादजनकं भाषाव्युत्पत्तिमाकांक्षतां व्युत्पत्तिकरं व्युत्पन्नानां मनोहरं काव्यचम्पूनाटकादिगद्यप्रबन्धेषु हृदयङ्गममन्यदस्तीति विद्वत्सिद्धान्तः ॥ न केवलं भरतखण्डवासिनः नाटकस्यास्य रसाभिज्ञानेन

मोदन्ते ॥ खण्डान्तरवासिनोऽपि स्वस्वभाषासु एतन्नाटकं परिवर्त्य नाटकस्यास्य कथामाधुरीं जुषन्ते ॥ परिपीतगीर्वाणरसास्वादाः । कविकाव्यनिर्माणचातुरीविवेचनपटिष्ठाः रसिकाग्रेसराः नाटकस्यास्य श्रेष्ठतां श्लाघन्त इति किं ब्रूमोऽस्य नाटकस्य प्रणेतुर्महाकवेः कविकुलतिलकस्य कालिदासस्य तद्रचितस्यास्य शाकुन्तलनाटकस्य भूमानम् ॥

एतस्मिन् नाटके सन्दर्भानुसारेण तत्तद्वेषधारिणां कृते तत्रतत्र रागविशेषा अपि प्रदर्शितास्सन्ति ॥ तान् विदाङ्कुर्वन्तु सुधीमणयइति सादरं विज्ञापये ॥

---

## ॥ निवेदनम् ॥

नाटकस्यास्य निरतिशयरसवत्तया पठितृपाठयितॄणामत्यन्तोपयोगीन्यनन्यसुलभशेमुषीविशेषकौशलप्रदर्शकानि मधुरमधुराणि सरलमृदूनि सहृदयहृदयचमत्कारकारीणि तत्तत्कर्तृकाणि बहूनि व्याख्यानानि सन्ति । तेषामपि सर्वेषां मुद्रणस्य दुष्करतया श्रीवैखानसश्रीनिवासाचार्यग्रथितस्य व्याख्यानस्य शैलीमाधुरी राघवभट्टकृताया व्याख्यायाः शैलीमाधुरी च रसिकजनमनोहारिणीति मत्वा राघवभट्टीयव्याख्यापि मुद्रणालङ्करणेन प्राकाश्यमनीयतास्माभिः ॥

इति प्रकाशकाः ॥

॥ श्रीरस्तु ॥

# ॥ शाकुन्तलनाटकसारसंग्रहः ॥

## ॥ प्रथमाङ्के ॥

श्रीमतो दुष्यन्तस्य मृगयानुधावनप्रसक्तिलब्धेन शकुन्तलादर्शनेन तयोर्नायिकानायकयोः परस्परानुरागरूपस्य नाटकबीजस्योत्पादनम् ॥

## ॥ द्वितीये ॥

पूर्वाङ्कोक्तस्य बीजस्य "कामं प्रिया न सुलभे" त्यादिना बहुलीकरणानन्तरं एतां प्रवृत्तिं विदूषकोन्तःपुरे निवेदयेदिति संशय्य राज्ञा "परिहासविजल्पितं सखे" इत्यादिवाक्येन स्वाभिमतगोपनपूर्वकं स्वनगरं प्रति विदूषकप्रस्थापनम् ॥

## ॥ तृतीये ॥

नायकदर्शनसमुल्लसितमनोभवायाश्शकुन्तलायाः विविधमदनावस्थानुभवः राज्ञश्च स्वविषयानुरागनिश्चयेन तस्या उपलालनपूर्वकमुभयमनोरथसंपादनं चाभ्यवर्णि ॥

## ॥ चतुर्थे ॥

नायकैकायत्तचित्तत्वेनाकृतातिथिसत्कारायाः शकुन्तलायाः दुर्वासश्शापप्राप्तिः । तस्या-ङ्गुलीयकदर्शननिवर्त्यत्वरूपानुग्रहप्राप्तिः । ततः कण्वमहर्षिणा सौत्सुक्यवात्सल्यानुबन्धं कुलपालिकाजनोचितधर्मानुशासनाशीर्वचनाद्यभिनन्दनपूर्वकं शकुन्तलायाः भर्तृनगरप्रेषणं चाभ्यधायि ॥

## ॥ पञ्चमे ॥

दुर्वासश्शापविस्मृतशकुन्तलावृत्तान्ततया कण्वाश्रमादागतशकुन्तलादर्शनतद्वचश्श्रवणनिरानन्देन मनसा तां प्रत्याख्यायापि सततस्वस्य परितोषालाभात् । 'प्रत्याययतीव मे हृदय' मिति राज्ञः परिचिन्तनम् ॥

## ॥ षष्ठे ॥

शापनिवर्तकस्वाङ्गुलीयकदर्शनेन शकुन्तलासंबन्धि यावद्वृत्तान्तसन्ततेः स्मृतौ जागरूकतया पश्चात्तप्तहृदयस्य शकुन्तलाप्रतिकृतिलेखनवीक्षणादिना स्वात्मानं विनोदयतः तत्प्रत्याख्यानमहापराधसंभावितस्वसन्तानप्रत्यूहस्य स्वीयविभवेषु नैराश्यात् तत्सर्वमपि प्रजार्थे विनियुज्यतामिति मन्त्रिणोऽनुशास्य शकुन्तलैकायत्तचित्तस्य राज्ञः कथञ्चिन्मातलिसन्दर्शनेन स्वप्रभावं प्राप्य दुर्जयासुरविजयायेन्द्ररथारोहणं प्रतिपादितम् ॥

## ॥ सप्तमे ॥

इन्द्रप्रार्थनया स्वर्गलोके कृतप्रत्यर्थिविजयस्य प्रत्यागमनसमये मारीचसेवार्थं तदाश्रमं प्रविष्टस्य निरतिशयवीर्योत्कर्षक्षत्रियार्भकदर्शनेन तत्प्रसक्त्या स्वविरहव्रताचरणकृशतनोः स्वप्राणप्रेयस्याः शकुन्तलायाः दर्शनेन च समुल्लसितहृदयाह्लादस्य मारीचानुशासनविदित भवितव्यताबलसंप्राप्तपरस्परविश्लेषज्ञाननिस्सङ्कोचविकसितपरस्परानन्दसुदांपत्यस्य राज्ञ इष्ट देवताभूतमारीचप्रसादात् सर्वाभीष्टसिद्धिः निर्वहणे निरूपिता ॥

---

शाकुन्तलनाटकस्थपद्यादिमभागाः

## ॥ अकारादिक्रमेण प्रकाश्यन्ते ॥




| श्लोकाः | गेयरागाः * | | पुटसंख्या |
|---|---|---|---|
| अ | | | |
| अक्लिष्टबालतरुपल्लव | शङ्कराभरणम्–आदितालम् | ... | ३३४ |
| अतः परीक्ष्य कर्तव्यम् | मोहन | ... | २८६ |
| अन्तर्गतप्रार्थनमन्तिकस्थम् | भैरवि | ... | ३५२ |
| अन्तर्हिते शशिनि सैव | बिलहरि | ... | २१३ |
| अद्यापि नूनं हरकोपवह्निः | श्रीरागम् | ... | १५७ |
| अधरः किसलयरागः | नाथनामक्रिय | ... | ६८ |
| अभ्याक्रान्ता वसतिरमुना | देवगान्धारि | ... | १४२ |
| अनवरतधनुर्ज्यास्फालन | यदुकुलकाम्भोदि | ... | १२० |
| अनाघ्रातं पुष्पं किसलय | भैरवि | ... | १३३ |
| अनिशमपि मकरकेतुः | श्रीरागम् | ... | १५७ |
| अनुयास्यन्मुनितनयां | नाथनामक्रिय | ... | ९४ |
| अनुकारिणि पूर्वेषां | कल्याणि | ... | १४५ |
| अनुमत गमना शकुन्तला | आरभि | ... | २३० |
| अनेन कस्यापि कुलाङ्कुरेण | सावेरि | ... | ३७१ |
| अपरिक्षतकोमलस्य | खरहरप्रिय–आदितालम् | ... | १९३ |
| अभ्यक्तमिव स्नातः | केदारगौळ | ... | २६६ |
| अभिमुखे मयि संहृत | पुन्नागवरालि–आदितालम् | ... | १३६ |
| अभिजनवतो भर्तुश्श्लाघ्ये | आनन्दभैरवि | ... | २४५ |
| अभ्युन्नता पुरस्तात् | हिन्दुस्तान् कापि | ... | १६० |
| अमीवेदिं परितः | गीर्वाणि | ... | २२८ |
| अयं स ते तिष्ठति सङ्गमोत्सुकः | पन्तुवरालि | ... | १७६ |
| अयमरविवरेभ्यः | भैरवि | ... | ३५९ |
| अर्थो हि कन्या परकीय एव | मध्यमावति | ... | २४९ |
| अर्धपीतस्तनं मातुः | कल्याणि | ... | ३६६ |
| असंशयं क्षत्रपरिग्रहक्षमा | आरभि | ... | ७१ |
| अस्मान् साधु विचिन्त्य | भैरवि | ... | २३९ |


* संस्कृतनाटकप्रदर्शनमार्गदर्शकप्रथमाचार्यैश्श्रीगोमठं श्रीनिवासाचार्यैश्श्रीमद्भिः (रिटैर्ड्-जड्जि) सि· वि· कृष्णस्वामि अय्यर् महाशयैश्चैतद्गेयरागानुसन्धानमकारि ॥

| श्लोकाः | गेयरागाः | | पुटसंख्या |
|---|---|---|---|
| अस्मात्परं बत यथाश्रुति | मुखारि | ... | ३४२ |
| अहन्यहन्यात्मन एव | शङ्कराभरणम् | ... | ३४४ |
| अहिणवमहुलोलुवो } अभिनवमधुलोलुपः } | यदुकुलकाम्भोदि-त्रिपुट | ... | २५१ |
| आ | | | |
| आखण्डलसमो भर्ता | सुरटि | ... | ३८५ |
| आचार इत्यवहितेन मया | नाथनामक्रिय | ... | २५६ |
| आजन्मनश्शाठ्यमशिक्षितः | नाट | ... | २८७ |
| आपरितोषाद्विदुषां | हिन्दुस्तान् कापि | ... | २५ |
| आलक्ष्यदन्तमुकुलाम् | नीलाम्बरि | ... | ३६९ |
| इ | | | |
| इतः प्रत्यादेशात्स्वजनम् | उशेनि | ... | ३१९ |
| इदं किलाव्याजमनोहरम् | वसन्त-चापुताळम् | ... | ६२ |
| इदमनन्यपरायणम् | आनन्दभैरवि | ... | १८३ |
| इदमशिशिरैरन्तस्तापात् | ,, | ... | १७३ |
| इदमुपनतमेवं रूपम् | नीलाम्बरि | ... | २७६ |
| इसि चुम्बिआइ (ईषच्चुम्बितानि) | नाथनामक्रिय-रूपकताळम् | ... | ३२ |
| उ | | | |
| उग्गलिअदब्भकबळा } उद्गलितदर्भकबळाः } | अनन्दभैरवि | ... | २३२ |
| उत्पक्ष्मणोर्नयनयोः | तोडि | ... | २३७ |
| उत्सृज्य कुसुमशयनम् | जञ्झूटि | ... | १९१ |
| उदेति पूर्वं कुसुमम् | आरभि | ... | ३८६ |
| उन्नमितैकभ्रूलतम् | कल्याणि | ... | १७७ |
| उपोढशब्दा न रथाङ्गनेमयः | केदारगौळ | ... | ३६२ |
| ए | | | |
| एकैकमत्र दिवसेदिवसे | भैरवि | ... | ३२४ |
| एवमाश्रमविरुद्धवर्तिना | केदारगौळ | ... | ३७० |
| एष त्वामभिनवकण्ठ | मोहन | ... | ३४५ |
| एसा वि पिएण विणा } एषापि प्रियेण विना } | नाथनामक्रिय | ... | २३८ |
| एषा कुसुमनिषण्णा | ब्याहागू | ... | ३३ |

| श्लोकाः | गेयरागाः | | पुटसंख्या |
|---|---|---|---|
| औ | | | |
| औत्सुक्यमात्रमवसादयति | वराळि | ... | २६१ |
| क | | | |
| कः पौरवे वसुमतीं | नाट | ... | ७७ |
| कथं नु तं बन्धुरकोमलाङ्गुलिं | आनन्दभैरवि | ... | ३२५ |
| क्व वयं क्व परोक्षमन्मथः | खमास् | ... | १५० |
| का कथा बाणसन्धाने | मोहन | ... | १५२ |
| कामं प्रत्यादिष्टां | घण्टा | ... | २९३ |
| कामं प्रिया न सुलभा | घण्टा-आदिताळम् | ... | ११२ |
| का स्विदवकुण्ठनवती | हिन्दूस्थान्कापि | ... | २६८ |
| कार्या सैकतलीनहंसमिथुना | भैरवि | ... | ३३१ |
| किं कृतकार्यद्वेषः | नाट | ... | २७४ |
| किं तावद्व्रतिनां | भैरवि | ... | २६४ |
| किं शीतलैः क्रमविनोदिभिः | हिन्दूस्थान् कापि - आदिताळम् | ... | १८९ |
| कुमुदान्येव शशाङ्कः | बेगड | ... | २९० |
| कुतो धर्मक्रियाविघ्नः | केदारगौळ | ... | २७० |
| कुल्यांभोभिः पवनचपलैः | केदारगौळ | ... | ५५ |
| कृतं न कर्णार्पितबन्धनं | तोडि | ... | ३३२ |
| कृत्ययोर्भिन्नदेशत्वात् | आनन्दभैरवि | ... | १४८ |
| कृताभिमर्शामनुमन्यमानः | मोहन | ... | २७७ |
| कृताश्शरव्या हरिणा | भैरवि | ... | ३४७ |
| कृष्णसारे ददच्चक्षुः | मोहन | ... | ४३ |
| ग | | | |
| गच्छति पुरश्शरीरं | पुन्नागवराळि | ... | १०४ |
| गाहन्तां महिषा निपान | पुन्नागवराळि | ... | १२४ |
| गान्धर्वेण विवाहेन | आरभि | ... | १९२ |
| ग्रीवाभङ्गाभिरामं | खमास् | ... | ४३ |
| च | | | |
| चलापाङ्गं दृष्टः | आनन्दभैरवि | ... | ७४ |
| चित्रे निवेश्य परिकल्पित | तोडि | ... | १३१ |
| चूअं हरिसिअपिअअं<br>चूतं हर्षितपिककं | ब्याहागू | ... | ३०१ |
| चूतानां चिरनिर्गतापि | आरभि | ... | ३०७ |

| श्लोकाः | गेयरागाः | पुटसंख्या |
|---|---|---|
| ज | | |
| जन्म यस्य पुरोर्वंशे | सुरटि | ... ५० |
| ज्वलति चलितेन्धनोऽग्निः | आरभि | ... ३४९ |
| जाने तपसो वीर्यं | वराळि-चापुताळम् | ... २५४ |
| णा | | |
| णावेक्खिओगुरुअणो / नापेक्षितोगुरुजनः | मध्यमावति | ... २७२ |
| त | | |
| तत्साधुकृतसन्धानं | आरभि | ... १५० |
| तव कुसुमशरत्वं | शहान-आदिताळम् | ... १५५ |
| तपति तनुगात्रि मदनः | नाथनामक्रिय | ... १८२ |
| तस्याः पुष्पमयी शरीर | मुखारि | ... १९९ |
| तदेषा भवतः कान्ता | नाट | ... २८८ |
| तव सुचरितमङ्गुळीय | तोडि-रूपकताळम् | ... ३२२ |
| तवास्मि गीतरागेण | केदार | ... ३९ |
| त्वमर्हतां प्राग्रसरः | कल्याणि | ... २७१ |
| त्वयि भवतु बिडौजाः | सौराष्ट्रकम् | ... ३९१ |
| त्वन्मतिः केवला तावत् | कल्याणि | ... ३५० |
| त्रिस्रोतसं वहति यः | शङ्कराभरणम् | ... ३५८ |
| तीव्राघातप्रतिहत | वसन्त | ... १०० |
| तुरगखुरहतः | वसन्त | ... १०० |
| तुज्झण आणे हिअअं / तव न जाने हृदयं | नाथनामक्रिय | ... १७९ |
| तुं सि मए चूदङ्कुर / त्वमसि मया चूताङ्कुर | उशेनि | ... ३०५ |
| द | | |
| दर्भाङ्कुरेण चरणः क्षतः | भैरवि | ... १३८ |
| दर्शनसुखमनुभवतः | आनन्दभैरवि | ... ३३६ |
| दिष्ट्या शकुन्तला साध्वी | कल्याणि | ... ३८३ |
| दुष्यन्तेनाहितं तेजः | कल्याणि | ... २१८ |
| न | | |
| न खलु न खलु बाणः | शङ्कराभरणम् | ... ४९ |
| न नमयितुमधिज्यं | आनन्दभैरवि | ... ११८ |

| श्लोकाः | गेयरागाः | पुटसंख्या |
|---|---|---|
| नियमयसि विमार्गप्रस्थितान् | नाटकुरञ्जि | ... २६३ |
| नीवाराश्शुकगर्भ | केदारगौळ | ... ५४ |
| नैतच्चित्रं यदयमुदधि | केदारगौळ | ... १४३ |
| **प** | | |
| परिग्रहबहुत्वेऽपि | मोहन | ... १८७ |
| प्रजागरात् खलीभूतः | मोहन | ... ३३७ |
| प्रजाः प्रजास्स्वा इव | आरभि | ... २५९ |
| प्रत्यादिष्टविशेषमण्डनविधिः | तोडि | ... ३१२ |
| प्रथमं सारङ्गाक्ष्या | पुन्नागवराळि | ... ३१३ |
| प्रथमोपकृतं मरुत्वतः | शङ्कराभरणम् | ... ३५२ |
| प्रलोभ्यवस्तुप्रणयप्रसारितः | नीलाम्बरि | ... ३६८ |
| प्रवर्ततां प्रकृतिहिताय | मध्यमावति | ... ३९२ |
| प्राणानामनिलेन वृत्तिरुचिता | केदारगौळ | ... ३६४ |
| प्रादुर्द्वादशधा स्थितस्य | आरभि | ... ३८४ |
| पातुं न प्रथमं व्यवस्यति | आनन्दभैरवि | ... २२९ |
| पुत्त्रस्य ते रणशिरस्ययं | भैरवि | ... ३८३ |
| पृष्टा जनेन समदुःखसुखेन | यदुकुलकाम्भोदि | ... १६८ |
| **ब** | | |
| बाष्पेण प्रतिषिद्धेऽपि | तोडि | ... ३७९ |
| **भ** | | |
| भव हृदय साभिलाषं | भैरवि | ... ९२ |
| भवन्ति नम्रास्तरवः | आरभि | ... २६७ |
| भवनेषु सुधासितेषु | आरभि | ... ३७२ |
| भानुस्सकृद्युक्ततुरङ्ग एव | केदारगौळ | ... २५८ |
| भूत्वा चिराय चतुरन्तमहीसपत्नी | केदारगौळ | ... २४६ |
| **म** | | |
| मनोरथाय नाशंसे | घण्टा-चापुताळम् | ... ३६५ |
| मय्येव विस्मरणदारुण | तोडि | ... २८४ |
| महाभागः कामं नरपतिः | कल्याणि | ... २६५ |
| महतस्तेजसो बीजं | कल्याणि | ... ३६७ |
| मानुषीषु कथं वा स्यात् | वसन्त | ... ८७ |

| श्लोकाः | गेयरागाः | | पुटसंख्या |
|---|---|---|---|
| मुनिसुताप्रणयस्मृति | जन्झूटि-रूपकताळम् | ... | ३१५ |
| मुक्तेषु रश्मिषु | मोहन | ... | ४६ |
| मुहुरङ्गुलिसंवृताधरोष्ठं | ,, | ... | १९७ |
| मूढस्यामहमेषा वा | उशेनि | ... | २९१ |
| मेदश्छेदकृशोदरं | यदुकुलकाम्भोदि | ... | १२२ |
| मोहान्मया सुतनु पूर्वं | कल्याणि-आदिताळम् | ... | ३८१ |
| **य** | | | |
| यतो यतः षट्चरणः | श्रीरागं | ... | ७४ |
| यदालोके सूक्ष्मं | मोहन | ... | ४७ |
| यदि यथा वदति क्षितिपः | मोहन | ... | २८९ |
| यदुत्तिष्ठति वर्णेभ्यः | कानड | ... | १४० |
| ययातेरिव शर्मिष्ठा | सुरटि | ... | २२६ |
| यस्य त्वया व्रणविरोपणं | तोडि | ... | २३६ |
| यद्यत्साधु न चित्रे स्यात् | नाथनामक्रिय | ... | ३२७ |
| यथा गजो नेति समक्षरूपे | केदारगौळ | ... | ३८७ |
| या सृष्टिस्स्रष्टुराद्या | ब्याहाग् | ... | १ |
| यात्येकतोऽस्तशिखरं | भूपाळं | ... | २१० |
| यास्यत्यद्य शकुन्तलेति | यदुकुलकाम्भोदि | ... | २२४ |
| येन येन वियुज्यन्ते | ब्याहाग् | ... | ३४० |
| यो हनिष्यति वध्यं त्वां | नाट | ... | ३४७ |
| **र** | | | |
| रथेनानुत्खातस्तिमितगतिना | कल्याणि | ... | ३८९ |
| रम्यं द्वेष्टि यथा पुरम् | आनन्दभैरवि | ... | ३१० |
| रम्यास्तपोधनानां | केदारगौळ | ... | ५१ |
| रम्यान्तरः कमलिनीभरितैः | सौराष्ट्रकम् | ... | २३१ |
| रम्याणि वीक्ष्य मधुरांश्च | सावेरि | ... | २५४ |
| **व** | | | |
| वल्मीकार्धनिमग्नमूर्तिः | आरभि | ... | ३६३ |
| वसने परिधूसरे वसाना | मोहन | ... | ३७६ |
| व्यपदेशमाविलयितुम् | धनासरि | ... | २८० |
| वाचं न मिश्रयति | वसन्त | ... | ८९ |
| विचिन्तयन्तीयमनन्यमानसा | मोहन | ... | २०६ |
| विच्छित्तिशेषैस्सुरसुन्दरीणाम् | शङ्कराभरणम् | ... | ३५६ |

| श्लोकाः | गेयरागाः | | पुटसंख्या |
|---|---|---|---|
| वृथैव सङ्कल्पशतैरजस्रम् | श्रीरागम् | ... | १५७ |
| वैखानसङ्किमनया | पूरिकल्याणि-रूपकताळम् | ... | ९० |
| **श** | | | |
| शक्यमरविन्दसुरभिः | भैरवि | ... | १५९ |
| शममेष्यति मे शोकः | मुखारि | ... | २४८ |
| शमप्रधानेषु तपोधनेषु | भैरवि | ... | १२६ |
| शहए किळ ए विणिन्दिए<br>सहजं किल यद्विनिन्दितम् | भैरवि | ... | २९६ |
| शान्तमिदमाश्रमपदम् | धनासरि | ... | ५६ |
| शापादसि प्रतिहता | तोडि | ... | ३८८ |
| शुद्धान्तदुर्लभमिदम् | ब्याहाग् | ... | ५८ |
| शुश्रूषस्व गुरून् | तोडि | ... | २४३ |
| शैलानामवरोहतीव | भैरवि | ... | ३६० |
| **स** | | | |
| सङ्कल्पितं प्रथममेव | केदारगौळ | ... | २३४ |
| सख्युस्ते स किल शतक्रतोः | केदारगौळ | ... | ३४९ |
| सतीमपि ज्ञातिकुलैकसंश्रयां | मोहन | ... | २७३ |
| सन्दष्टकुसुमशयनानि | शङ्कराभरणम् | ... | १८३ |
| सरसिजमनुविद्धम् | फरजु-आदिताळम् | ... | ६४ |
| संरोपितेऽप्यात्मनि | तोडि | ... | ३४१ |
| स्तनन्यस्तोशीरम् | तोडि | ... | १६३ |
| स्मरएव तापहेतुः | मोहन | ... | १७० |
| स्वसुखनिरभिलाषः | कल्याणि-आदिताळम् | ... | २६२ |
| स्वप्नो नु ! माया नु ! | उशेनि-चापुताळम् | ... | ३२१ |
| स्रस्तांसावतिमात्र | वसन्त | ... | ५९ |
| सायन्तने सवनकर्मणि | पन्तुवराळि | ... | २०० |
| सा निन्दन्ती स्वानि भाग्यानि | गीर्वाणि | ... | २९२ |
| साक्षात्प्रियामुपगतां | यदुकुलकाम्भोदि | ... | ३३० |
| स्वायम्भुवान्मरीचेर्य | केदारगौळ | ... | ३६१ |
| सिध्यन्ति कर्मसु महत्स्वपि | भैरवि | ... | ३५५ |
| स्निग्धं वीक्षितमन्यतोऽपि | नाथनामक्रिय-आदिताळम् | ... | ११४ |
| स्विन्नाङ्गुलिविनिवेशः | हिन्दुस्थान् कापि | ... | ३२९ |
| स्त्रीणामशिक्षितपटुत्वम् | मोहन | ... | २८३ |
| सुभगसलिलावगाहाः | हिन्दुस्थान् कापि | ... | ३० |
| सुरयुवतिसम्भवं किल | तोडि | ... | १२९ |

| श्लोकाः | गेयरागाः | | पुटसंख्या |
|---|---|---|---|
| सुखपरस्य हरेरुभयैः | शङ्कराभरणम् | ... | ३५४ |
| सुतनु हृदयात्प्रत्यादेश | आनन्दभैरवि | ... | ३७९ |
| स्मृतिभिन्नमोहतमसः | तोडि | ... | ३७८ |
| **क्ष** | | | |
| क्षामक्षामकपोलमाननम् | भैरवि | ... | १६७ |
| क्षौमं केनचिदिन्दुपाण्डु | केदारगौळ | ... | २२२ |

॥ श्रीरस्तु ॥

# ॥ अभिज्ञानशाकुन्तलम् ॥

## ॥ प्रथमोऽङ्कः ॥

या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वं ।
यामाहुः सर्वभूतप्रकृतिरिति यया प्राणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥ १

---

॥ वैखानसश्रीनिवासाचार्यव्याख्या ॥

लक्ष्मीं वस्तुतरां तनोतु मधुकृल्लक्ष्मीमुखाम्भोरुहो
भक्ताभीष्टवरप्रदाननिपुणः श्रीवेङ्कटेशो विभुः ।
लीलापङ्कजमध्यगं मधुकरं सम्बद्धुमङ्के स्थिता
नेत्रं श्रीः पिदधाति यस्य कुतुकात्सव्येतरं पाणिना ॥

वैखानसान्वयपयोधिमृगाङ्कमूर्तिः
श्रीकौशिको विजयते स हि तिम्मयाख्यः ।
श्रीवेङ्कटेशचरणाम्बुजनित्यपूजा-
पूताकृतिर्गुणनिधिर्महितो मनीषी ॥

---

॥ राघवभट्टरचितार्थद्योतनिकाख्या व्याख्या ॥

यत्त्रेधाजनि दशधा द्विधागतं यद्यज्जातं दशविधमेति षोडशत्वम् ।
यद्गीतं सममहदादिकस्य चाद्यं तेजस्तज्जयति हिमोष्णरूपमग्र्यम् ॥

तस्य पुत्रोऽस्ति विद्यानां स्वयंवरपतिः कविः ।
व्याख्याता नाटकादीनां श्रीनिवास इति श्रुतः ॥

यं श्रीनिवासमखिलागमसारसिन्धु-
कुम्भोद्भवं बुधजनाः परिकीर्तयन्ति ।
सोऽहं विचार्य भरतादिमुनिप्रणीतं
शास्त्रं कवीन्द्ररचितानि च नाटकानि ॥

न्यायं फणीन्द्रफणितिं कपिलस्य तन्त्रं
काणादतन्त्रमथ जैमिनिना कृतं च ।
टीकां करोमि विदुषां परितोषणाय
शाकुन्तलस्य वृषशैलपतेः प्रसादात् ॥

व्याख्यायते मया किञ्चिन्नूतनं नात्र कुत्रचित् ।
पूर्वसूरिभिरुक्तेषु सारानुद्धृत्य रच्यते ॥

---

उद्दिश्यामरनिम्नगां गतवतोः श्रुत्वा कलिं शैशवे
यः साक्षात्करवाणि तामिति जटाजूटोपकण्ठं गतः ।
पीत्वा पुष्कलपुष्करेण न किमप्यत्रेति विस्मापय-
न्पित्रोर्विग्रहवग्रहं विहितवान्पायाद्गजास्यः स वः ॥

नाट्यवेदाब्धिमालोड्य ताण्डवं यो विनिर्ममौ ।
स्वात्मनाभिनयन्तं तं प्रणमामि महानटम् ॥

या लास्यसम्प्रयोगेण शिवाराधनतत्परा ।
भवतां भूतये भूयात्सा सदा सर्वमङ्गला ॥

वाचिकाद्यभिनयोपमनाट्याचार्यमत्र भरतं मुनिमीडे ।
लास्यताण्डवनियोजनलीलाकौशलेन परितोषितभर्गम् ॥

इह खलु सकलकविकुलतिलकः प्रसिद्धस्तत्रभवान् कालिदासनामा महाकविः 'नाटकान्तं कवित्वम्' इति धिया नाटकरूपप्रबन्धं निर्मित्सुश्चिकीर्षितस्य ग्रन्थस्याविघ्नेन परिसमाप्तिमभिलषन् 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' इत्यालङ्कारिकशासनमप्यनुसरन् प्रकृतप्रबन्धप्रत्यूहपरिपन्थिनीं पूर्वरङ्गस्य प्रधानाङ्गभूतां नान्दीरूपामाशिषं प्रयुङ्क्ते—**या सृष्टिरित्यादिना ॥** ताभिः प्रत्यक्षाभिरष्टाभिस्तनुभिः प्रपन्न ईशो वः अवत्विति योजना ॥ कीदृश्यस्तनवः इत्यत आह—**येति ॥** या तनुः । स्रष्टुर्ब्रह्मणः आदौ भवा आद्या । सर्जनं सृष्टिः ॥ अनेन जलमयी तनुरुक्ता ॥ 'अप एव ससर्जादौ तासु वीर्यमवासृजत्' इत्युक्तत्वात् ॥ एवं गुणद्वारा गुणिप्रत्यायने सति गुणिनां व्यंग्यत्वेन व्यंग्यप्राधान्यादस्योत्तमकाव्यता प्रकाश्यते ॥ तदुक्तं काव्यप्रकाशे—'इदमुत्तममतिशयिनि व्यंग्ये वाच्याद्ध्वनिर्बुधैः कथित' इति ॥ इक्षुखन्डस्थानीयं हि काव्यं कल्पनीयं ॥ तत्र रसनिष्यन्दस्थानीयं व्यंग्यम् ॥ ऋजीषप्रायं वाच्यम् ॥ तस्मान्निपुणेन कविना वाच्यादपि व्यंग्यस्य चमत्कारार्पणप्रावीण्यं कर्तव्यम् ॥ तत्काव्यमुत्तमम् ॥ यदाह—'प्रधानगुणभावाभ्यां व्यंग्यस्योत्तममध्यमे । काव्ये ध्वनिर्गुणीभूतव्यंग्यमित्युदिते उभे' इति ॥ यस्मिन् काव्ये वाच्यार्थाद्व्यंग्यार्थस्य प्राधान्यं तत्काव्यमुत्तमं ध्वनिरिति च व्यपदिश्यते । यत्र व्यंग्यार्थो वाच्यादेरुपसर्जनीभवति तन्मध्यमं गुणीभूतव्यंग्यमिति चोच्यते ॥ यत्र पुनर्व्यंग्यार्थस्यास्फुटत्वं चित्रशब्दार्थविषयालङ्कारप्राधान्यवत्तत्काव्यमधमं शब्दचित्रमर्थचित्रमिति च द्विधा प्रतिपादितम् ॥ श्रीमदानन्दवर्धनाचार्याभिनवगुप्तपादास्तु काव्यस्यात्मत्वेन ध्वनिं शरीरत्वेन शब्दार्थौ आत्मभूतरसादिधर्मत्वेन दोषगुणालङ्काराणामवस्थानं युक्तिमदेव शब्दार्थयोर्ध्वनिमुखेन वैशिष्ट्यं प्रत्यपादयन् ॥ भामहस्तु अलङ्काररूपधर्ममुखेन वामनो हि गुणरूपधर्ममुखेन कुन्तकश्च वक्रोक्तिव्यपदेशेन भणितिवैचित्र्येण व्यापारेण भट्टनायकः किल भोगकृत्त्वेन व्यापारेण शब्दार्थयोर्वैशिष्ट्यं प्रत्यपादयन् ॥

---

अथ नाटकादौ पूर्वरङ्गाङ्गभूतामाशीरूपां चतुरस्रतालानुसारिणीमष्टपदां सूत्रधारो नान्दीं पठति—**या सृष्टिरिति ।** या तनुः स्रष्टुर्ब्रह्मण आद्या सृष्टिः । जलमित्यर्थः । 'अप एव ससर्जादौ तासु वीर्यमवासृजत्' इति स्मरणात्, सर्वादौ सर्गात्सर्गोत्पत्तिहेतुत्वात्यातिशयो ध्वन्यते । या च विधिर्विधानं श्रुतिस्मृत्युक्तं तेन हुतं दत्तं हविर्हवनीयद्रव्यजातं वहत्यादत्ते । वह्निरित्यर्थः । वहतिनाधाराधेयसम्बन्धेनादानं लक्ष्यते । फलपर्यन्तताप्रापणं च व्यज्यते । अविधिहुतं भस्मीभवति । अतएव विधिहुतमित्युक्तिः । अन्यथा हवनीयस्यैतद्व्यभिचारादर्थपौनरुक्त्यं स्यात् । एतेनातिशयो ध्वनितः । अथ च वह्निरित्यौणादिके निप्रत्यये सिद्धम् । तदपि सूचितम् । या च होत्री यजमानरूपा । जुहोतीति होत्रीतीन्द्रादीनामपि तर्पकत्वादतिशयो व्यज्यते । अत एव नात्मादिपदप्रयोगः । ये च द्वे कालं रात्रिंदिवरूपं विधत्तः कुरुतः । विपूर्वो धाञ् करणार्थे वर्तते । चन्द्रार्कावित्यर्थः । नित्यस्यापि कालस्यैतौ कारणत्वेनोक्ताविति स एव । या च श्रुतिः श्रवणेन्द्रियं तस्य विषयो गोचरो गुणः शब्दाख्यो यस्याः सा । 'श्रुतिः श्रोत्रे तथाम्नाये वार्तायां श्रोत्रकर्मणि' इति विश्वः । विश्वं जगद्व्याप्य स्थिता तेनाकाशः । अत्रापि जगद्व्यापकस्थित्या स व्यज्यते । अत एव श्रुतिविषयगुणेत्येतावन्मात्रं नोपात्तम् । तावत्युच्यमाने प्रक्रान्तातिशयव्यङ्ग्यभङ्गः स्यात् । किं च 'शब्दैकगुण

इह काव्ये वेदशास्त्रपुराणादिव्यतिरेकेण वाचिकलाक्षणिकव्यञ्जकव्यपदेशभाजस्त्रिविधा भवन्ति ॥ वाचिकलाक्षणिकश्शब्दस्सर्वेषां साधारणः । व्यञ्जकशब्दस्वीकारः पुनरसाधारणः ॥ अभिधालक्षणाव्यापारगम्ययोरर्थयोरभिधेयलक्ष्ययोरुपरि रसादिरूपः कश्चिदर्थः काव्ये समुपलभ्यते ॥ स तु व्यंग्यार्थ एव ॥ केचित् 'सृज्यत इति सृष्टिरि'ति कर्मव्युत्पत्तिं वदन्ति ॥ अत्र व्युत्पत्तौ केचिदेवं परिचोदयन्ति ॥ *'स्त्रियां क्ति'न्निति क्तिनो घञपवादस्य भावाधिकारत्वाद्भावपरत्वमेव प्रोद्गीयते सिद्धिश्शुद्धिरित्यादिवत् ॥ *'अकर्तरि च कारके संज्ञाया'मिति एतद्घञपवादत्वे क्तिनोऽपि संज्ञायामेव पर्यवसानं स्यात् ॥ यथा श्रुतिः स्मृतिरिति ॥ इह तु सृष्टिशब्देन न कस्यापि सृज्यवस्तुनस्संज्ञा गम्यत इति कर्मव्युत्पत्त्यनुपपत्तिरिति ॥ अत्रोच्यते—*'अकर्तरिति च कारक' इत्यत्र संज्ञायामित्युपाधिवचनं प्रायिकाभिप्रायम् ॥ चशब्दाच्च संज्ञायामिवासंज्ञायामपि कर्मत्वादिस्सम्पद्यत इति कैयटमुख्यैर्व्याख्यातृभिः सम्बन्धमनुवर्तिष्यत इति फणिपतिफणितौ सम्बध्यत इति सम्बन्धः ॥ कर्मणि घञिति व्याख्यायि ॥ अतस्तदपवादत्वात् क्तिनोऽपि कर्मादिव्युत्पत्तिस्सूपपादेति सृष्टिशब्देनेह सृष्टमेव वस्त्वभिधीयते ॥ तच्च सृष्टिपदं स्वाद्यपदविशेषणविशिष्टं सद्वाचकमेव जलस्येति ॥ **विधिहुतमिति ॥** विधिः प्रेरणा तद्वाचकलिङादिविशिष्टं विध्युद्देशवाक्यसवयवावयविसम्बन्धजन्यया लक्षणया विधिरित्यभिधीयते ॥ एतद्विध्युद्देशकाङ्क्षितकालदेशद्रव्यकर्मादिप्रतिपादकं दर्शपूर्णमासादिप्रकरणमपि लक्षितलक्षणया विधिरित्यभाणि ॥ अथवा वाक्यैकवाक्यन्यायेनावान्तरवाक्यभूताधिकारविधिनियोगविधिप्रयोगविधिवाक्यविशिष्टापूर्वविधिवाक्यगतलिङादिर्विधिरित्युच्यते ॥ तेन विधिना करणभूतेन हुतं प्रक्षिप्तं हविः पुरोडाशादिकं वहति प्रापयति ॥ अग्निः स्वयं हविरधिकरणं भूत्वेन्द्रादिदेवताः स्वात्मना यजमानादिहुतं प्रापयति ॥ 'अग्निमुखा वै देवा' इति श्रुतेः ॥ अनेन हविरधिकरणभूतास्संस्कृतास्त्रेताग्नय उच्यन्ते ॥ अनेन तेजोमयी तनुरुक्ता ॥ **या च होत्रीति ॥** होत्री यजमानरूपा ॥ चशब्द उक्तसमुच्चये ॥ हविरधिकरणं हवनकर्त्री चेत्यर्थः ॥ अनेन विचित्रशक्तित्वं द्योत्यते ॥ 'चान्वाचयसमाहारेतरेतरसमुच्चये' इत्यमरः॥ यद्यपि होतृशब्दऋत्विक्षु प्रयुज्यते । तथापि हवनस्य देवतोद्देशेन द्रव्यत्यागात्मकत्वेन तस्य यजमानत्वेन च स एव

आकाशः शब्दस्पर्शगुणो मरुत्' इत्यादिना सांख्यमते मरुदादीनामपि शब्दगुणत्वस्योक्तेर्विवक्षितार्थालाभश्च । पारिशेष्यात्तल्लाभ इति चेत्, आदिवाक्येन तल्लाभोऽन्तेन वेति संदेहस्य दुर्निरासत्वात्सूक्तं विश्वमित्यादि । अत एव येत्यस्य नाऽस्थानस्थपदत्वम् । यां च सर्वेषां बीजानां प्रकृतिर्योनिरित्याहुः । अनेन पृथिवी । 'प्रकृतिः सहजे योनावमात्ये परमात्मनि' इति विश्वः । अत्रापि सर्वबीजोत्पत्तिहेतुत्वेन स एव । इतिना कर्मण उक्तत्वात्प्रकृतिरिति प्रथमा । तथाच वामनः—'निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः परिगणनस्य प्रायिकत्वात्' इति । यया च प्राणिनः प्राणवन्त इत्यत्र प्राणिनो जन्मिन इति । 'प्राणी तु चेतनो जन्मी' इत्यमरः । रूढ्या सामान्यमुद्दिश्य प्राणवन्त इति विशिष्टस्य विधानम् । अन्यथा पर्यायोच्चारण एकस्य पौनरुक्त्यं स्यात् । प्राशस्त्ये चात्र मतुप् । 'भूमनिन्दाप्रशंसासु' इत्याद्युक्तेः । हृदि प्राणवायुर्जीवात्मन आश्रयस्तद्वन्तः । 'हंसः प्राणाश्रयो नित्यम्' इत्युक्तेः । तेन जीववन्तश्च बलवन्तश्चेत्यर्थः । एतेन सर्वातिशयो व्यज्यते । 'प्राणो हृन्मारुते बाले काव्ये जीवेऽनिले बले । पूरिते वाच्यवत्प्राणं प्राणाश्चासुषु कीर्तिताः' इति विश्वः । अतश्च म

मुख्यो होता। अनेन यजमानरूपा तनुरुक्ता॥ **ये द्वे कालं विधत्त इति॥** ये द्वे मूर्ती सूर्याचन्द्रमसरूपे॥ यद्यपि नित्यो विभुः कालः। तथापि लोके इयन्तं कालं सुखमस्माकमित्यादिव्यवहारेषु तपनेन्दुगतिपरिच्छिन्नस्यैव कालशब्दवाच्यत्वात्सूर्यगतिपरिच्छिन्नः कलामुहूर्ताहोरात्रादिः। चन्द्रगत्युपलक्षिताः प्रतिपदादितिथयः। एतादृशपरिच्छेदकर्तृत्वेन तयोः कालविधातृत्वं। न चेत्कालस्य नित्यत्वाद्विधानं न सङ्घटते॥ अहोरात्रलक्षणौ कालौ विधत्त इति केचन वदन्ति। न चैतच्चतुरश्रम्॥ बहुलपक्षे असत्यपि चन्द्रे रात्रेस्सम्भवात्पूर्वक्षणवर्तित्वाभावाच्च। पूर्वस्मिन् पक्षे उपाधित्वेन तिथीनां कालकर्तृत्वे पूर्वक्षणवर्तित्वनियमनैरपेक्ष्येण तिथेः सम्भवादुपाधितया कालकर्तृत्वमेव सहृदयहृदयदर्पणमध्यास्ते॥ अनेन सूर्याचन्द्रमसरूपे तनू उक्ते॥ **श्रुतिविषयगुणेति॥** श्रूयतेऽनयेति श्रुतिः श्रोत्रेन्द्रियम्। तस्य विषयश्शब्दः॥ शब्दगुणकमाकाशमिति काणादाः॥ विश्वं चराचरं व्याप्य अन्तर्बहिश्चाभिसम्बध्य स्थिता॥ न तु कदाचिद्विभक्ता॥ श्रुतिविषयगुणा या स्थितेत्येतावता आकाशप्रतिपत्तौ व्याप्य विश्वमिति पदद्वयोपादानं निरर्थकमिति नाशङ्कनीयम्। कर्णशष्कुल्यवच्छिन्नाकाशव्यावृत्त्यर्थमनवच्छिन्नाकाशप्रतीत्यर्थं च पदद्वयोपादानमित्यवगन्तव्यम्। अनेनाकाशमयी तनुरुक्ता॥ **यामाहुस्सर्वभूतप्रकृतिरिति॥** प्रकृतिमाहुरित्यर्थः॥ प्रकृतेः कर्मत्वेऽपि निपातेनेतिशब्देनाभिहितत्वान्न द्वितीया॥ तिङाद्युपसङ्ख्यानस्योपलक्षणत्वात्॥ यथाह वामनः—'निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः॥ परिगणनस्य प्रायिकत्वात्' इति॥ सर्वभूतानां समस्तपदार्थानां सर्वेषां चराचराणामिति यावत्॥ 'भूतं न्याय्ये समे प्राप्ते पदार्थातीतयोरपि' इति नानार्थरत्नमाला॥ प्रकृतिः कारणम्॥ कदाचिदुपादानं कदाचिन्निमित्तम्॥ यद्वा—किञ्चिदुपादानं किञ्चिन्निमित्तं कस्यचिदुपादानं कस्यचिन्निमित्तं वा पृथिवी पार्थिवानां साक्षादुपादानमप्याप्यादीनामुपष्टम्भकत्वेन कारणम्॥ आहुः। शास्त्रविदः इति शेषः॥ यद्वा—भूतशब्देन प्राणिनां काय उपलक्ष्यते॥ प्रकृतिः प्रधानम्। तत्प्रधानत्वात्तद्व्यपदेशः॥ 'प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारण' इति यादवः॥ अनेन पृथिवीमयी तनुरुक्ता॥ **यया प्राणिनः प्राणवन्त इति॥** प्राणिनो जन्तवः प्राणवन्तः उत्कृष्टजीवनवन्तः॥ *भूमनिन्दाप्रशंसास्वित्यादिषु मतुबादेरतिशयार्थकत्वम्; 'जीव

---

कथितपदाशङ्का। उद्देश्यविधेयार्थान्तरसंक्रमितवाच्यलाटानुप्रासान्परिहृत्यैव तस्याङ्गीकारात्। 'अपवादविषयं परिहृत्योत्सर्गस्य प्रवृत्तिः' इति न्यायात्पुनरुक्तवदाभासोऽलङ्कारः। ताभिः प्रत्यक्षाभिरष्टाभिस्तनुभिर्मूर्तिभिः प्रपन्नो युक्त ईशो वोऽवत्वित्याशीः। 'तनुर्मूर्तौ त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृशे' इति मेदिनीकारः। अत्राशिषि सभ्यानां लाभः। अत एव 'आशीर्नमस्क्रियारूपा' इति भरतेन, भासेनापि 'आशीर्नमस्क्रियावस्तु—' इत्यादावेवाशीर्निबद्धा। तेनासौ नटः किं नमस्काररूपां तत्रापि किंविधाशीरूपां नान्दीं पठिष्यतीति सोत्कण्ठानां सभ्यानां तामपनेतुं पूर्वमवत्वित्युक्तिः। अत्र च सकलाभिलषितफलवितरणप्रवणत्वमेवावनं विवक्षितम्। पालनार्थत्वाद्धातोः। तच्च तेन विना न सम्भवतीति। कानित्यपेक्षायां वो युष्मान्सभ्यानित्यर्थः। तेषामेवात्र सम्बोधनयोग्यत्वात्सम्बोधनप्रधानत्वाच्च युष्मदर्थस्य। अतश्च 'अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्। न स लब्धास्पदं किञ्चित्कुत्रचित्प्रतितिष्ठति॥' इत्युक्तनयेन 'न्यक्कारो ह्ययमेव' इतिवदनुवादविधेयव्यत्ययो नाशङ्-

प्राणधारण’ इत्युक्तत्वात्; अनेन वायुरूपा तनुरुक्ता ॥ ‘स्पर्शनः प्राणस्समीरो मारुतो जगत्’ इति शब्दार्णवः ॥ तस्य वायोरेव प्राणापानादिव्यापारेण शरीरधारकत्वात् ॥ ताभिः प्रत्यक्षाभिस्तनुभिः प्रपन्नः ईशोऽवत्विति योजना ॥ **ताभिरिति ॥** या या यथापूर्वं यच्छब्देन निर्दिष्टास्तास्तास्तथा तच्छब्देन परामृश्यन्ते ॥ **प्रत्यक्षाभिरिति ॥** प्रत्यक्षविषयैरिति यावत् । प्रत्यक्षत्वं पृथिव्यप्तेजस्सूर्याचन्द्रमसां चाक्षुषत्वेन वायोस्स्पार्शनेन्द्रियग्राह्यत्वेन आकाशस्य च नीलं नभश्शश्वोऽश्याममिति केषांचिच्छाक्षुषत्वेन यजमानरूपस्यात्मनो मानसप्रत्यक्षविषयत्वेन स्वप्रकाशत्वेन वाष्टमूर्तयः प्रत्यक्षा इति निर्दिष्टाः ॥ ईशः अणिमाद्यैश्वर्यसम्पन्नः ॥ *ईश एश्वर्य इति धातुः । प्रपन्नः प्रकर्षेण सम्बद्धः ॥ सम्बन्धप्रकर्षश्च पृथिव्याद्युत्पत्तिस्थितिभङ्गानां परमेश्वरायत्तत्वात् ॥ अथवा *सर्वे गत्यर्था ज्ञानार्था इति विद्यमानत्वात् क्षित्यादिभिः कार्यभूतैः प्रपन्नः प्रकर्षेण ज्ञात इति कवेरभिप्रायः ॥ **तनुभिरिति ॥** यतः परमेश्वरश्चेतनाचेतनमन्तः प्रविश्य व्यापारयति अतः पृथिव्यादीनां तत्तनुत्वव्यपदेशः कृतः ॥ वः युष्मान्; श्रेयस्करभक्तिश्रद्धाद्यतिशयपूर्वकं व्याख्यातृश्रोतॄनिति यावत् ॥ सम्बोधनार्थसारो हि युष्मदर्थः; तेषामेव सम्बोधनयोग्यत्वात् ॥ अवतु रक्षतात्; रक्षणं नाम हितप्रापणमहितपरिहरणं च ॥ एवंविधाभिस्तनुभिरुपेत इति रक्षणादिविशेषणाभिप्रायेण । पृथिव्यादिमध्ये यस्य यत्सुखसाधनं तत्सम्पादनं यस्य यदनिष्टं तन्निवारणं च भवत्विति व्यज्यते ॥ तेन तादृग्वस्तुनो व्यंग्यत्वेन वस्तुध्वनिः ॥ विशेषणसाभिप्रायत्वेन परिकरालङ्कारस्य व्यंग्यत्वेनालङ्कारध्वनिः ॥ उक्तं च—‘अलङ्कारः परिकरस्साभिप्राये विशेषणे’ इति ॥ कवेस्सर्वात्मकशिवविषयभक्तिभावस्य व्यंग्यत्वेनासंलक्ष्यक्रमो भावध्वनिः॥ असंलक्ष्यक्रमव्यंग्यस्तु रसादिध्वनिर्भवति ॥ तदुक्तं शृङ्गारतिलके—‘रसभावतदाभासभावशान्त्यादिरक्रमः । भिन्नो रसाद्यलङ्कारादलङ्कार्यतया स्थित’ इति ॥ एवमत्र श्लोके वस्त्वलङ्काररसभेदेन त्रिधा ध्वनिरिति ध्वनिप्रस्थानविदः कथयन्ति ॥ तथैवैतच्छ्लोके कवेर्भक्तिभावस्य शिव आलम्बनविभावः ॥ उद्दीपनविभावास्तु संसारानित्यतादर्शनं परमेश्वरमहिम-

---

नीयः । अत्र वायोर्भट्टनये गुरुनये च स्पार्शनप्रत्यक्षत्वात्प्रत्यक्षाभिरित्युक्तिः । अनेन विशेषणेन तासां सकलजनप्रतीतत्वं व्यज्यते । सकलवाक्यस्थतत्तद्विशेषणोपादानेनैकैकापि सा तादृक्फलदा । तद्युक्तस्येशस्य किं पुनर्वक्तव्यमिति भावः । अत्र ‘या सृष्टिरि’त्युक्तक्रमेणैव संख्याप्राप्तौ यदष्टाभिरिति वचनं तत्सूच्येऽर्थे उपयोगीति नार्थपुनरुक्तम् । या सृष्टिरित्यादौ यच्छब्दस्य वचनविभक्तिप्रक्रमभङ्गो न शङ्कनीयः । ‘गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यात्’ इति नयेन तेषां परमार्थत्वात्परस्परमसम्बन्धादनुवाद्यत्वात् । अनुवाद्ये च न तत्तद्दोषावकाश इति स्थितं तत्रैव । अत्र पृथिव्यादिक्रमेणाकाशादिक्रमेण वा वक्तव्ये यो व्यस्तक्रमविन्यासः स कथमिति चेत्, उच्यते । अत्र प्रथमसृष्टत्वाज्जलस्य प्रथमत उपादानम् । ततस्तदुत्पन्नस्य तेजसः । ‘अद्भ्योऽग्निः’ इति स्मृतेः । तत्रापि हुतं हविर्वहतीति प्रकारेणोक्तेः केन हुतमिति प्रसङ्गाद्यजमानस्य तेजःप्रसङ्गाद्यज्ञादौ कालस्यापेक्षणीयत्वाच्च सूर्याचन्द्रमसोः । ततः ‘तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥ नखैर्हिरण्यगर्भस्तु तदण्डमकरोद्द्विधा । ताभ्यां स शकलाभ्यां च दिवं भूमिं च निर्ममे ॥’ इति स्मरणाद्यज्ञादौ च देवतास्मारकत्वेन शब्दमयस्य मन्त्रस्थदेशस्य भूम्यादेरधिकरणत्वेन

श्रवणात्तत्कारणसकलपुमर्थदानशक्तिमत्त्वादयश्च ॥ अनुभावास्तु तदनुस्मरणसमनन्तरजनितरोमोद्गमानन्दबाष्पमुखविकासादयः । सञ्चारिणोऽपि तद्विषयदैन्यवचनचिन्तास्मरणहर्षविबोधादयः ॥ एवंविधविभावानुभावसञ्चारिपरिपुष्टो भक्तिभावः प्राधान्येन व्यज्यत इत्यस्योत्तमकाव्यता प्रकाश्यते ॥ रतिस्तु विषयभेदाद्बहुविधा भवति । दैवगुरुनृपाचार्यादिविषया भक्तिः । कान्ताविषया रतिरित्युक्तत्वात् ॥ प्रकृते दैवविषयो भक्तिभावस्सूचितः ॥ श्लिष्टमध्यमवर्णसन्दर्भलक्षणा रससहिता वैदर्भी रीतिः ॥ तदुक्तम्—'बन्धपारुष्यरहिता शब्दकाठिन्यवर्जिता । नातिदीर्घसमासा च वैदर्भी रीतिरिष्यते' इति ॥ सृष्टिस्स्रष्टुः । हुतं हविः । प्राणिनः प्राणवन्तः । प्रत्यक्षाभिः प्रपन्न इत्यादौ स्वरवैसादृश्येऽपि व्यञ्जनसाम्यलक्षणोऽनुप्रासः ॥ किञ्च ॥ सृष्टिस्स्रष्टुरित्यादौ वृत्तिलक्षणानुप्रासश्च ॥ उक्तं च—'अनेकेषां वर्णानां सकृत्पुनः श्रवणं वृत्त्यनुप्रास' इति ॥ प्राणिनः प्राणवन्तः इत्यत्र पदद्वयेऽपि प्राणिशब्दप्रतिपत्तावपि प्राणिनो जनाः प्राणवन्तो जीवनवन्तः इति तात्पर्यभेदाल्लाटानुप्रासः ॥ तदुक्तम्—'शब्दार्थयोः पौनरुक्त्यं यत्र तात्पर्यभेदवत् । स काव्यतात्पर्यविदां लाटानुप्रास इष्यते' इति ॥ अष्टमूर्तित्वलक्षणासाधारणस्वरूपवर्णनात्स्वभावोक्तिरलङ्कारः ॥ तदुक्तम्—'स्वभावोक्तिस्तु डिम्भादेस्स्वक्रियारूपवर्णनम्' इति ॥ स्वक्रियारूपवर्णनं नाम स्वासाधारणक्रियारूपवर्णनम् ॥ अष्टमूर्तीनां साक्षाद्वाचकशब्दैर्विना गुणक्रियादिद्वारा कथनेन पर्यायोक्तमलङ्कारः ॥ तदुक्तम्—'पर्यायोक्तं विना वाच्यं वाचकं यद्वचस्तु तत्' इति ॥ प्रत्यक्षाभिस्तनुभिः प्रपन्नोऽवत्विति रक्षणक्रियां प्रति प्रत्यक्षतनुसम्बन्धस्य हेतुत्वेनोपादानात्काव्यलिङ्गमलङ्कारः ॥ उक्तं च—'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' इति ॥ ताभिस्तनुभिरिति तच्छब्दस्य यच्छब्दविशिष्टसप्तवाक्यसम्बन्धित्वेन कारकदीपकालङ्कारः ॥ सर्वशरीरिभेदकस्याष्टतनुसम्बन्धस्योक्तत्वात्प्रतीयमानो व्यतिरेकालङ्कारः ॥ अवत्वित्याशीरूपत्वादाशीरलङ्कारः ॥ शिवविषयभक्तिभावस्याशीरूपवाक्यार्थाङ्गत्वेन प्रेयोऽलङ्कारः । 'अङ्गभूतो भावः प्रेयान्' इत्युक्तत्वात् ॥ एवमन्येऽपि

---

चापेक्षमाणत्वाद्द्यौभूम्योः । ततः सर्वप्राणभूतत्वात्सर्वोत्कृष्टस्य वायोः । अथ च या स्रष्टुराद्या सृष्टिः सावत्विति प्रत्येकं सम्बन्धः । यत्तदोर्नित्यसम्बन्धादर्थेन तच्छब्देन सम्बन्धः । ये द्वे इत्यत्रावतामिति विभक्तिविपरिणामः । अष्टवाक्यपरिपूर्त्यर्थमेव द्वयोरेकत्रोक्तिः । ईष्ट इति ईशः । अत एव ताभिः प्रसिद्धाभिः प्रत्यक्षाभिर्मूर्तिमतीभिरष्टाभिः । तनुशब्देनाणु तेन चाणिमा । बहुवचनमाद्यर्थम् । तेनाणिमादिभिरित्यर्थः । प्रपन्नः सेवितोऽवतु व इति । एकश्चकारः सर्वसमुच्चये । अन्त्यो दीपकालङ्कारः । अणिमादयश्च–'अणिमा महिमा चैव लघिमा गरिमा तथा । ईशित्वं च वशित्वं च प्राकाम्यं प्राप्तिरेव च ॥' इति । अनेन चात्र कविना रीतीनां मुख्यतमा सर्वगुणाश्रया वैदर्भी रीतिरुपक्षिप्ता । यदाह वामनः—'अस्पृष्टा दोषमात्राभिः समग्रगुणगुम्फिता । विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते ॥' इति । तदुक्तक्रमेण च ओजःप्रसादश्लेषसमतासमाधिमाधुर्यसौकुमार्योदारतार्थव्यक्तिकान्तयो बन्धगुणाः त एवार्थगुणा इति च । तत्र बन्धस्य गाढत्वमोजः । तत्प्रकटमेवेह शैथिल्यं प्रसादः । साम्यमुत्कर्षश्चेति । या सृष्टिः स्रष्टुराद्येति गाढत्वम् । वहति विधिहुतमिति शैथिल्यम् । एवं साम्यलक्षणः प्रसादः । मसृणत्वं श्लेषः । यथा वहति विधिहुतं येत्यादि । एवमन्येऽपि बन्धगुणा अनुसर्तव्याः । अर्थगुणाश्च । अर्थस्य प्रौढिरोजः । सा च 'पदार्थे वाक्यरचना' इत्यादिका ।

शब्दार्थालङ्कारा बुद्धिमतोह्याः ॥ तथा गुणा अपि केचन युज्यन्ते ॥ अस्पृष्टशैथिल्यरूपश्लेषगुणः ॥ परमेश्वरस्याष्टमूर्तियोगित्वस्य प्रसिद्धार्थस्य शब्दश्रवणमात्रेण प्रत्ययात्प्रसादगुणः ॥ तदुक्तं सरस्वतीकण्ठाभरणे—'यत्तु प्राकट्यमर्थस्य स प्रसादो गुणो मतः' इति ॥ पदानामन्वये दूरव्यवधानाभावात्समतागुणः ॥ तदुक्तं —'अदूरव्यवधानं तु समता परिकीर्तिता' इति ॥ वाक्ये पाठसमये सृष्टिः स्रष्टुरित्यादिपृथक्पदत्वप्रतीतेर्माधुर्यगुणः ॥ तदुक्तं—'या पृथक्पदता वाक्ये तन्माधुर्यं प्रचक्षते' इति ॥ परमेश्वरस्याष्टमूर्तित्वलक्षणार्थप्रतिपादने वाक्यस्य निराकांक्षतया परिपूर्णत्वादर्थव्यक्तिलक्षणो गुणः । तदुक्तम्—'यत्तु सम्पूर्णवाच्यत्वमर्थव्यक्तिं वदन्ति ताम्' इति ॥ प्रतिपाद्यार्थप्रतिपादकाधिकपदाभावात्सम्मितत्वगुणः ॥ तदुक्तं—'यावदर्थपदत्वं तु सम्मितत्वमुदाहृतम्' इति ॥ भक्तिभावादेर्व्यङ्ग्यत्वाद्गाम्भीर्यगुणः ॥ तदुक्तम्—'ध्वनिमत्ता तु गाम्भीर्यम्' इति ॥ प्रकृतोक्तेरीश्वरस्याष्टमूर्तित्वनिरूपणद्वारा सर्वान्तर्यामित्वाद्यनेकार्थाभिव्यञ्जकत्वात्प्रौढिगुणः ॥ तदुक्तम्—'प्रौढिरुक्तेः परीपाकः' इति ॥ परिपाकश्चोक्तेर्विलक्षणार्थाभिव्यञ्जकत्वम् ॥ दीर्घाक्षरप्रायत्वात्स्वरारोहाद्गतिर्नाम गुणः ॥ तदुक्तम्—'गतिर्नाम सुरम्यत्वं स्वरारोहावरोहयोः' इति ॥ अन्ये गुणा अपि बुद्धिमतोह्याः ॥ एवमेकस्मिन्नेव श्लोके बह्वलङ्कारगुणवत्त्वेन भूषणं नामालङ्कारः ॥ तदुक्तम्—'अलङ्कारैर्गुणैश्चैव बहुभिस्समलङ्कृतम् । भूषणैरिव चित्रार्थैस्तद्भूषणमिति स्मृतम्' इति ॥ भूषणं नाम षट्त्रिंशदलङ्कारेष्वेकम् ॥ ते उत्तरत्र षट्त्रिंशदलङ्कारास्तत्रतत्र निरूप्यन्ते ॥

सात्र प्रतिवाक्यं स्फुटैव । अर्थवैमल्यं प्रसादः । सोऽप्यत्र प्रकट एव । घटना श्लेष इति चात्र प्रतीतम् । एवमन्येऽप्यर्थगुणा अनुसन्धेयाः । भोजेन तु रीतीनां शब्दालङ्कारान्तर्भूतत्वमेवोक्तम् 'जातिर्गती रीतिवृत्ती' इति । अत्र च सृष्टिः स्रष्टुरिति वहति हुतेति प्राणिप्राणेति भिर्भिरिति छेकानुप्रासेन सह सर्ववाक्यगतस्य वृत्त्यनुप्रासस्यैकवाचकानुप्रवेशलक्षणः सङ्करः । 'अनेकस्य सकृत्पूर्व एकस्याप्यसकृत्परः' इति तल्लक्षणात् श्रुत्यनुप्रासोऽपि । अथ च, 'धराम्भोऽग्निमरुद्व्योममखेशेन्द्वर्कमूर्तिभिः' इति वक्तव्ये या स्रष्टुराद्या सृष्टिरित्यादिवचनेनातिशयितत्वं ध्वनितम् । तेन च परिकरालङ्कारो व्यज्यते । तादृगष्टमूर्तिरूपत्वादीशस्य सर्ववैलक्षण्यं सर्वातिशायित्वं च । तेन वाक्यैकदेशसर्ववाक्यवस्तुध्वन्योरङ्गाङ्गिभावः सङ्करः । सोऽपि भक्तिश्रद्धातिशयभरबन्धुरान्तःकरणस्य कवेरीश्वरविषयस्य रत्याख्यभावध्वनेरङ्गमेव । अथ च येत्यादि सर्वत्र स्त्रीलिङ्गनिर्देशात्तनुभिः कृशाभिरिति समासोक्त्याष्टनायिकायुक्तनायकव्यवहारसमारोपाच्छृङ्गाररसोऽपि व्यज्यते । तत्प्रधानत्वादस्य रूपकस्य । एवं वस्त्वलङ्काररसादिरूपस्त्रिविधोऽपि ध्वनिर्गर्भीकृतः । स्रग्धराच्छन्दः—'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इति । अनेनास्य सप्ताङ्कत्वमपि सूचितम् । नान्दीश्लोकत्वादेव । अस्यादौ मगणः । 'क्षेमं सर्वगुरुर्दत्ते मगणो भूमिदेवतः' इति भामहोक्तेः । तथा यकारोऽपि । 'यस्तु श्रीदः' इति च पाठं पठित्वा कष्टास्थानस्थपदविधेयानुवादव्यत्ययलक्षणा दोषाः परिहर्तव्याः । यद्यप्यत्र देवताविषयिण्यां रतौ कष्टत्वस्य 'शीर्णघ्राणाङ्घ्रि—' इत्यादिवन्न दोषत्वं न च गुणत्वम्, तथापि ग्रन्थादौ तत्रापि श्लोकादौ स्थितत्वात्परिहृतमिति मन्तव्यम् । न च होत्रीत्यत्र वाक्यप्रक्रमभङ्गः पदकदम्बकस्यैव तत्त्वाङ्गीकारात् । अत एवात्र चकारोपादानमित्यवधेयम् । क्वचित्पदकदम्बकात्मकं क्वचित्क्रियाकारकान्वितेति वाक्यमित्यपि तत्प्रक्रमभङ्गो न । विषमसमेषु तथैवोपनिबन्धात् । नापि

बन्धस्य पदान्तरासहिष्णुत्वाच्छय्या ॥ तदुक्तम्—'पदानां यान्योन्यमैत्री सा शय्या' इति ॥ अन्तर्बहिश्च रसप्रतीतेर्द्राक्षापाकः ॥ तदुक्तम्—'द्राक्षापाकस्स कथितो बहिरन्तस्स्फुरद्रसः' इति बन्धस्य परिवृत्तिसहिष्णुत्वाभावाच्छब्दपाकः ॥ तदुक्तम्—'यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम् । तं शब्दपाकनिष्णाताश्शब्दपाकं प्रचक्षते' इति ॥ सौरभपरिमळयोरिव शय्याशब्दपाकयोर्भेदस्सूक्ष्ममतिसमधिगम्यः ॥ अत्र श्लोके यत्र वाक्ये आख्यातपदाभावस्तत्रास्तिभवतियोगः कर्तव्यः ॥ तयोस्साकांक्षसर्वपदवाक्यसम्बन्धित्वात् ॥ तदुक्तं वामनेन—'न प्रसिद्धे क्रियाध्याहारदोषः' इति ॥ तत्रापि कालविशेषप्रतिपत्तिरौचित्येन कार्या ॥ आद्या सृष्टिरासीत् । होत्री भवति । प्राणवन्तो भवन्तीति ॥ आद्यक्षरत्रयस्य गुरुत्वाद्भूदेवताकस्य मगणस्योपादानाद्वर्णगणादिशुद्धिरस्तीति सर्वमवदातम् ॥ तदुक्तम् 'मोभूमिस्त्रिगुरुश्शुभं वितनुत' इत्यादि ॥ किञ्च प्रथमं प्रचयार्थसृष्टिपदोपादानेनैतत्प्रबन्धाध्येतॄणां प्रवक्तृत्वं प्रयोजनमिति सूचितम् ॥ यथाह भगवान्भाष्यकारः—'मङ्गळादीनि मङ्गळमध्यानि मङ्गळान्तानि हि तानि शास्त्राणि प्रथन्ते । वीरपुरुषाण्यायुष्मत्पुरुषाणि च भवन्त्यध्येतारश्च प्रवक्तारो भवन्ति' इति ॥ एष नान्दीश्लोकः ॥ 'काव्यार्थसूचनं कैश्चिन्नान्द्यामेव निरूप्यते' इति वचनात्काव्यार्थोऽपि किञ्चिद्द्योत्यते ॥ तथा हि आद्या सृष्टिरित्यनेन दुष्यन्तस्य भरतवंशादित्वं ध्वन्यते ॥ विधिहुतं हविरिति हविरिव हविः । रक्षाशुल्कषड्भागादातृत्वेन राजर्षित्वं सूच्यते ॥ होत्रीत्यनेन यज्ञमहादानादिकर्तृत्वं व्यज्यते ॥ कालं विधत्त इत्यनेन राजरक्षितप्राणिधर्मसाध्यवृष्ट्यादिसम्पन्नकालस्य राज्ञः कालकर्तृत्वं प्रतीयते । तदुक्तं महाभारते—'कालो वा कारणं राज्ञः राजा वा कालकारणम् । इति ते संशयो मा भूद्राजा कालस्य कारणम्' इति ॥ श्रुतिविषयगुणेत्यनेन श्रुतिः वेदप्रतिपादकं शास्त्रं ॥ तदुक्तमहोत्साहादिगुणवत्त्वेन शास्त्रीयराजत्वम् ॥ किञ्च श्रुतिविषयगुणेत्यनेन सकलजनश्रोत्रेन्द्रियाणि तद्गुणैकविषयाणीति पुण्यश्लोकता ख्याप्यते ॥ विश्वं व्याप्य स्थितेत्यनेन कीर्तिप्रतापयोरप्रतिहतत्वं गम्यते ॥ सर्वभूतप्रकृतिरित्यनेन सर्वेषां तत्तन्मार्गस्थापकत्वेन सर्वकारणत्वं व्यज्यते ॥ तदुक्तं रघुवंशे—'प्रजानां विनयाधानाद्रक्षणाद्भरणादपि । स पिता पितरस्तासां केवलं जन्महेतवः" इति ॥ प्राणिनः प्राणवन्त इत्यनेन निखिलवाञ्छितपूरकत्वेन प्राणिमात्रजीवनदातृत्वं गम्यते ॥ प्रत्यक्षाभिः प्रपन्नः

---

विशेषणप्रक्रमभङ्गः । सर्ववाक्येषु विशेषणोपादानाद्धोत्रीत्यपि विशेषणमेव । 'विशेषणादेव विशेष्यावगतिः' इति वामनसूत्रणात् 'निधानगर्भामिव सागराम्बराम्' इतिवत् । किं चैतद्दूषणाभावार्थमेवोत्तरवाक्ये द्विशब्दोपादानम् । अन्यथा कर्तृक्रियाभ्यामेव द्वित्वावगतेस्तस्यावकरत्वमेव स्यात् । अथ क्वचित्कर्तृविशेषणं क्वचित्कर्मविशेषणम् । पूर्वत्र कर्मविशेषणे वार्थं प्रति भेदाभावात् । अविधिहुतं भस्मीभवतीत्येतदर्थपर्यवसानात्तथैव पूर्वं व्याख्यातम् । किं च शङ्कितं यदर्थपौनरुक्त्यं व्याख्यानावसरे तदपि शङ्कनीयं न भवति । षष्ठवाक्ये कर्तुरनुपादा-

इत्यनेनाङ्गुलीयकदर्शनाद्राज्ञश्शकुन्तळास्मरणं जातमिति द्योत्यते ॥ ईश इति सर्वैश्वर्यसम्पन्नो राजा सूच्यते ॥ अष्टाभिस्तनुभिः प्रपन्न इत्यनेन दिक्पालांशप्रभवत्वं व्यज्यते ॥ 'अष्टानां लोकपालानां वपुर्धत्ते नराधिप' इति वचनात् ॥ अस्यार्थस्य वाच्यत्वासम्भवान्न श्लेषः ॥ नापि शब्दशक्तिमूल उपमालङ्कारध्वनिः ॥ सम्बन्धान्तरे सम्भवति सादृश्यमूलकत्वकल्पनानपेक्षत्वात् ॥ किन्तु सूचकत्वसम्बन्धाच्छब्दशक्तिमूलो वस्तुध्वनिः ॥ अत एवोक्तमलङ्कारसर्वस्वे—'यत्र सूचनाव्यापारोऽस्ति तत्र शब्दशक्तिमूलो वस्तुध्वनिर्बोद्धव्यः' इति ॥ अन्येऽपि नायकगुणा बुद्धिमतोह्याः ॥ तदुक्तम्—'अर्थतश्शब्दतो वापि मनाक्काव्यार्थसूचनम्' इति ॥ तथाहि—'स्रष्टुः सृष्टि'रित्यनेन विश्वामित्रस्यापत्यता व्यज्यते ॥ 'अन्यमिन्द्रं करिष्यामि' इत्यादिना तस्यापि स्रष्टृत्वात् ॥ किञ्च आद्या सृष्टिरित्यनेन निखिलकामिनीजनापेक्षया रूपलावण्याद्यतिशयो व्यज्यते ॥ तथा मेघसन्देशे—'युवतिविषये सृष्टिराद्येव धातु'रिति ॥ विधिहुतं हविर्वहतीत्यत्र हुतं हविर्वहतीत्यनेन दुष्यन्तनिहितगर्भधारणं विधिपदेन गान्धर्वविवाहस्य शास्त्रीयत्वं व्यज्यते ॥ होत्रीति यज्ञपत्नीत्वम् ॥ तेन सौशील्यभावादिकं यथौचित्यं योज्यम् ॥ ये द्वे कालं विधत्त इत्यनेनानसूयाप्रियंवदे राज्ञश्शकुन्तळासङ्गमस्य कालं कृतवत्याविति द्योत्यते ॥ अन्येऽपि नायिकागुणा ऊह्याः ॥ इयं वाग्रूपा नान्दी ॥ तदुक्तं भरतेन—'नान्दी द्विविधा क्रियारूपा वाग्रूपा च' इति ॥ आद्या एकविधा ॥ सा नाट्यारम्भे काचिदर्चना नन्दिनः ॥ तस्या नान्दीति संज्ञा ॥ तदुक्तं भरतेन—'नन्दी वृषः कोऽपि महेश्वरस्य रङ्गत्वमादौ किल खे जगाम । तद्रङ्गमुद्दिश्य कृतां तु पूजां नान्दीति तां नाट्यविदो वदन्ति' इति ॥ पूर्वरङ्गे रुद्रस्तु सर्वदा सन्निहितो विद्यते तं पूर्वरङ्गं प्रति पूजा क्रियते ॥ तदुक्तं शाण्डिल्येन—'पूर्वरङ्गेऽङ्गहारे च साक्षात्सन्निहितश्शिव' इति ॥ द्वितीया मङ्गळाशीस्समन्विता श्लोकात्मिका बहुविधा ॥ एका अष्टपदा ॥ इतरा द्वादशपदा ॥ अन्या अष्टादशपदा । द्वाविंशतिपदेत्यादि ॥ तदुक्तं कोहलेन—'माङ्गल्यशङ्खचक्राब्जकोककैरवशंसिनी । यत्राष्टभिर्द्वादशभिरष्टादशभिरेव वा । द्वाविंशतिपदैर्वापि सा नान्दीति प्रकीर्तिता' इति ॥ एवं महावीरचरिते अष्टपदा ॥ उत्तररामचरिते उन्मत्तराघवे मुरारिप्रारम्भे च द्वादशपदात्मिका ॥ वेणीसंहारे मदीये

---

नादेव न तद्विशेषणम् । अनुपादानं च प्रसिद्धावगतेस्तस्य । यदस्तु श्रूयमाणक्रियेऽस्मिन्कर्तृत्वे भवत्यादीनां प्रयोग आपद्यते । स च सामान्यानां तासां प्रयोगं विनापि ज्ञायमानत्वान्निषिद्ध आकरे । तेन विशेषणक्रियाप्रयोगार्थं यदः कर्मत्वं तत्र कर्तृप्रत्ययप्रयोगानुसार्येव । अन्यथा प्रक्रमभङ्ग आपद्येत । तथा च प्रत्येकवाक्य एकैकोपादानादेकत्र द्वयोपादाने प्रक्रमभङ्ग आशङ्कनीयः । यतोऽष्टवाक्यपरिपूर्त्यर्थमेतादृङ्निबन्ध इति तूक्तमेव । इदं च महतां दूषणोद्घाटनं स्वगुणोद्घोषणमिवात्यन्तमनुचितमपि व्युत्पित्सूनां बालानामूहापोहज्ञानेन व्युत्पत्तिमाधातुं कृतमिति ज्ञेयम् । 'श्लोकैः काव्यार्थसूचकैः' इत्युक्तत्वादस्य तत्सूचकत्व-

नैषधानन्दे चाष्टादशपदा ॥ बालरामायणे द्वाविंशतिपदात्मिका ॥ एवं लक्षणानुगुण्येन सर्वैर्नान्दी ग्रथिता ॥ प्रकृतनान्द्या अपि वाग्रूपत्वात्पदनियमेन भवितव्यम् ॥ अत्र तद्व-त्पदव्यवस्था न कृतेति चेत्पदनियमः कथ्यते ॥ सर्वे पदशब्दस्य नानार्थतामाचक्षते खलु ॥ तथा हि—केचित् सुप्तिङन्तं पदं वर्णयन्ति । अपरे तु श्लोकस्य तुरीयांशरूपः पादः पदमिति ॥ अत एव नान्दीप्रस्तावे द्वौ त्रयो वा श्लोकाः कार्या इति ब्रुवते ॥ केचित्पद्यते ज्ञायतेऽनेन पदार्थसंसर्ग इति व्युत्पत्त्या आकांक्षायोग्यतासन्निधिमत्पद-कदम्बात्मकं वाक्यमेव पदमिति वर्णयन्ति ॥ तत्र च सुप्तिङन्तपदपक्षे द्वादशभिरष्टादश-भिरेव वेत्यत्र वा शब्दो विकल्पार्थ इत्यभिनवगुप्ताचार्यादयः कथयन्ति ॥ तथाचोत्तर-रामचरिते भवभूतिना द्वादशपदा नान्दी कथिता ॥ अन्ये तु वाशब्दं समुच्चयार्थं निगदन्ति ॥ तथा च श्रीहर्षेण रत्नावल्यां विंशतिपदा नान्दी कथिता ॥ मुरारिप्रारम्भे 'निष्प्रत्यूह' मित्यादिना विकल्पपक्षमनुसृत्य द्वादशपदां नान्दीं प्रयुज्य समुच्चयपदार्थ-मप्यनुसृत्य 'विरमति महाकल्प' इत्यादि पद्यान्तरमपि विरचितम् ॥ प्रकृते वाशब्दस्य विकल्पार्थत्वमभ्युपेत्य वाक्यमेव पदमिति मतानुसारेणाष्टपदा नान्दी निर्दिष्टा ॥ तदुक्तम्—'न पदं पदमित्याहुर्वाक्यार्थः पदमुच्यते' इति ॥ प्रकृते अष्टमूर्तिनिर्देश-वाक्यानि सप्त ॥ एकस्मिन्नेव वाक्ये सूर्याचन्द्रमसोः कालविधानरूपसमानधर्मत्वेन संगृह्योपादानात् ॥ प्रतिनिर्देशवाक्यमेकं ॥ आहत्याष्टवाक्यम् ॥ अष्टवाक्यत्वादष्टपदा पदनियमः प्रदर्शितः ॥ ताभिस्तनुभिरित्यत्र तच्छब्दश्रवणादष्टमूर्तिनिरूपणद्वारा नान्दीश्लोके वक्तव्यचन्द्राभिधानमप्यकारि ॥ तदुक्तम्—'नान्दीश्लोको विधातव्यश्चन्द्रनामाङ्क एव सः । यथैव चन्द्रसम्बन्धो लक्ष्यते व्यज्यतेऽथवा ॥ नान्दीश्लोके तथा यत्नः कर्तव्यः कविभि-स्तथा' इति ॥ नान्दी पूर्वरङ्गस्याङ्गेष्वेकाङ्गं भवति ॥ पूर्वरङ्गस्वरूपमुच्यते ॥ तदुक्तम्—'पादभागाः कलायुक्ताः परिवर्ताः प्रयोक्तृभिः । पूर्वं रङ्गे क्रियन्ते यत्पूर्वरङ्गं ततो विदुः' इति ॥ भरतेनाप्युक्तम्—'सभापतिस्सभा सभ्या गायका वादका अपि । नटी नटश्च मोदन्ते यत्रान्योन्यानुरञ्जनात् ॥ अतो रङ्ग इति ज्ञेयः पूर्वं यत्सम्प्रकल्प्यते । तस्मादयं पूर्वरङ्ग इति विद्वद्भिरुच्यते ॥' अत्रायमर्थः—रङ्गस्थितो नटस्सङ्गीतानुगतैरभिनयैरनुकार्यं नायकावस्था-पन्नस्सभापतिं सभ्यांश्च प्रेक्षकान् स्वाभिप्रायमाविष्कुर्वन् रञ्जयेत् ॥ तदुक्तम्—'नटो गीतेन वाद्येन नृत्तेनाभिनयेन च । रङ्गे रामाद्यवस्थाभिरनुकार्याभिरञ्जयेत् । रामादितादात्म्यापत्तेः

---

मुच्यते । ईशः प्रभुर्दुष्यन्तो वोऽव्यादिति । ताभिः शरीरित्वात्पञ्चमहाभूतरूपाभिर्यज्ञकरणा-द्धोतृरूपाभिर्लोकपालांशत्वाद्विशिष्टतेजस्वित्वाद्राज्ञश्चन्द्रसूर्यरूपाभिरष्टाभिस्तनुभिः प्रपन्नः । तथा च भृगुः—'अग्निवायुयमार्काणामिन्द्रस्य वरुणस्य च । चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः ॥ यस्मादेषां सुरेन्द्राणां मात्राभिर्निर्मितो नृपः । तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥' इति । अथ या सृष्टिः स्रष्टुराद्येत्यनेन शकुन्तला सूचिता । एतावत्कालपर्यन्तं तादृ-शसृष्टेरजातत्वादाद्यत्वम् । या विधिना सुरतविधिना हुतं निषिक्तं हवी रेतो वहतीति तस्याः

प्रेक्षकान् रसयेन्नटः" इति ॥ पूर्वरङ्गो नाम नटकर्तव्यः प्रत्यूहपरिपन्थी कर्मविशेषः ॥ तदुक्तम्—'यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये । कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गस्स कीर्तितः ' इति ॥ पूर्वरङ्गस्य कुशीलवकर्तव्यानि प्रत्याहारप्रभृतीनि द्वाविंशतिरङ्गानि सन्ति ॥ तदुक्तं—"प्रत्याहारोऽवतरणमारम्भाश्रावणे तथा । सङ्घोटनावक्रपाणिस्तथा च परिघट्टना । मार्गासारितकं तद्वज्ज्येष्ठमध्याधमाधिकाः । आसारितक्रियागानमुत्थानं परिवर्तनं । नान्दी शुष्कापकृष्टा च रङ्गद्वारं मनोरमं । चारी रम्या महाचारी त्रिगतं च प्ररोचना ' इति ॥ 'यथावत्कृतविन्यासं प्रत्याहारं प्रचक्षते । तथावतरणं प्रोक्तं गायकीनां निवेशनं । गीतोद्यमनमारम्भो वाद्यानां रञ्जनक्रिया ॥ आश्रावणा पाणिभेदविधिसङ्घोटना स्मृता । वाद्यवृत्तिविभागार्थं वक्रपाणिर्विधीयते ॥ तन्त्र्योजस्करणार्थं तु वदेच्च परिघट्टनां । तन्त्री-भाण्डसमायोगो मार्गासारितमिष्यते ॥ कलापातविघातार्थं भवेदासारितक्रिया । कीर्तनं देवतानां च ज्ञेयो गीतिविधिस्तथा । यस्मादुत्थापयन्त्यादौ प्रयोगं नान्दिपाठकाः । पूर्वमेव तु रङ्गेऽस्मिंस्तस्मादुत्थापनं स्मृतं ॥ चतुर्दिगीशनमनं परितः परिवर्तनं । आशीर्नेतिर्वा नान्दी स्याद्देवविप्रमहीभुजाम् ॥ यत्र शुष्काक्षरैरेव व्यपकृष्टा ध्रुवा यतः । तस्माच्छुष्कापकृष्टेयं जर्झरश्लोकदर्शिका ॥ वागङ्गाभिनयो रङ्गद्वारं प्रथमतः कृतः । शृङ्गारस्य प्रचरणाच्चारी सम्परिकीर्तिता ॥ रुद्रप्रकरणौचित्यान्महाचारीति कीर्तिता । विदूषकस्सूत्रधारस्तथा वै पारिपार्श्वकः । यत्र कुर्वन्ति सल्लापं त्रिगतं तत्प्रकीर्त्यते ' इत्यादि ॥ पूर्वरङ्गस्यैतेषु द्वाविंश-त्यङ्गेषु सत्स्वप्येतेषां तुर्यत्रयात्मकक्रियारूपत्वात्प्रबन्धे प्रयोक्तुमशक्यतया पद्यरूपनान्द्या एव प्राधान्यं ॥ तदुक्तं भगवता बादरायणेन—'यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके । तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ' इति ॥

---

गर्भः । होत्रीत्यनेन कण्वः । ये द्वे इत्यनेनानसूयाप्रियंवदे सख्यौ कालं शापान्तसमयं विधत्तो बोधयतः । पातिव्रत्यादिभिर्गुणैर्विश्वं व्याप्य श्रुत्या वार्तया विषये देशे गुणैस्त्रिभिः शार्ङ्गरव-शारद्वतगौतमीभिरयत एतादृशी स्थिता । श्रुतिविषयगुणाया इत्येकं पदम् । एतेन सगर्भा-यास्तस्या दुष्यन्तद्वारदेशगमनम् । सर्वेषां बीजं मूलभूतश्चक्रवर्तित्वाद्भरतः । तस्य प्रकृति-रुत्पत्तिरिति भरतोत्पत्तिः । यया प्राणिनः प्राणवन्त इत्यनेन भरतस्य शकुन्तलया सह स्वपुरागमनम् । अष्टाभिः प्रकृत्यादिभिः प्रत्यक्षाभिः प्रपन्न इत्यनेन निर्वहणसन्धिसमासौ नटाशंसा 'प्रवर्ततां प्रकृतिहिताय पार्थिवः' इत्यादिका सूचिता । 'सूत्रधारः पठेन्नान्दीम्' इत्युक्तेः । **सूत्रधारलक्षणं** यथा मातृगुप्ताचार्यैरुक्तम्—'चतुरातोद्यनिष्णातोऽनेकभूषा-समावृतः । नानाभाषणतत्त्वज्ञो नीतिशास्त्रार्थतत्त्ववित् ॥ वेशोपचारचतुरः पौरेषणविचक्षणः । नानागतिप्रचारज्ञो रसभावविशारदः ॥ नाट्यप्रयोगनिपुणो नानाशिल्पकलान्वितः । छन्दो-विधानतत्त्वज्ञः सर्वशास्त्रविचक्षणः ॥ तत्तद्गीतानुगलयकलातालावधारणः । अवधाय प्रयोक्ता च योक्तॄणामुपदेशकः । एवंगुणगणोपेतः सूत्रधारोऽभिधीयते ॥' इति ।

(नान्द्यन्ते)

**सूत्रधारः**—(नेपथ्याभिमुखमवलोक्य) आर्ये! यदि नैपथ्यविधानमवसितं तर्हीतस्तावदागम्यताम् ॥

---

नान्द्यनन्तरं प्रस्तावनामवतारयति—**नान्द्यन्ते सूत्रधार इत्यादिना** ॥ तदुक्तं-'नान्दीश्लोकं पठित्वैव सूत्रधारस्सहेतरैः । प्रविश्य स्मेरवदनस्ततः पञ्चपदीं व्रजेत् ॥ त्रिताळान्तरमुत्क्षिप्तैर्गीतताळलयाश्रितैः । ललितैः पदविन्यासैः प्रस्तुतव्यञ्जनक्षमैः ॥ संयुक्तोत्तानसंश्लिष्टहस्तः पञ्चपदीं व्रजेत् । पश्येत्सभां सभाधीशं तदाश्चर्यविलोकितैः ॥ करणाभिनयातोद्यभाषाभेदविचक्षणाम् । नटानुयोक्त्रीं सम्बोध्य नटीं मारिषमेव वा' इत्यादिभरतवचनात् ॥ प्रकृते नटीसम्बोधनं करोति—'नान्द्यन्ते सूत्रधार' इत्यादिना 'इतस्तावदागम्यता' मित्यन्तेन ॥ नान्द्याः अन्ते अवसाने । नान्द्यां समाप्तायामित्यर्थः ॥ 'मृतावववसिते रम्ये समाप्तावन्त इष्यते' इति शब्दार्णवे ॥ नान्दीं प्रयुज्य पूर्वसूत्रधारे विनिर्गते सतीत्यर्थः सूत्रधार इति द्वितीयो नटाख्यः ॥ रङ्गं प्रविष्ट इति शेषः ॥ सूत्रं धारयतीति सूत्रधारः ॥ सूचनात्सूत्रम् ॥ 'सूत्रं तु सूचने ग्रन्थभेदे तन्तुव्यवस्थयोः' इति रत्नमाला ॥ सूचनं नाम चतुर्विधाभिनयात्मकं नाट्यमुच्यते ॥ तदुक्तम्—'सात्विकाद्यैरभिनयैः प्रेक्षकाणां यतो भवेत् । नटे नायकतादात्म्यबुद्धिस्तन्नाट्यमुच्यते' इति ॥ कोहळेनाप्युक्तं—'पदार्थाभिनयप्रायं वाक्यार्थाभिनयात्मकं । अन्यानुकरणं नाट्यं 'रसभावनिरन्तरं । चतुर्धाऽभिनयास्ते तु मुनिना परिकीर्तिताः ॥ आंगिको वाचिकाहार्यौ सात्त्विकश्चेत्यसौ पुनः । चतुर्धा कल्पितो यत्र सर्वं नाट्यं प्रतिष्ठितं ॥ तत्राङ्गिको भवेदंगैर्निर्वृत्तस्स पुनस्त्रिधा । शारीरो मुखसञ्जातश्चेष्टया मुनिनिर्मितः ॥ वागात्मा वाचिको द्वेधा संस्कृतप्राकृताश्रयः । नामाख्यातादिभिर्भेदैरयं विस्तारमश्नुते । नेपथ्यस्य विधानं स्यादाहार्यस्स चतुर्विधः । आदिमस्यान्तिमस्तत्र मध्यमो व्याजिमस्स्मृतः ॥ अन्तिमश्चेष्टिमश्चेष्टस्तथा मुनिभिरीरितः' इति ॥ एतेषां लक्षणं मदीयमाळविकाग्निमित्रीयव्याख्याने द्रष्टव्यं ॥ 'परस्य सुखदुःखादिभावैर्यद्भावनं भवेत् । तत्रान्तःकरणासक्तिरत्यन्तं सत्त्वमिष्यते ॥ सात्त्विकस्सत्त्वनिष्पन्नैर्भावैर्जातस्स चाष्टधा ॥' ते स्तम्भप्रळयाद्या उत्तरत्र निरूप्यन्ते ॥ एतादृशचतुर्विधाभिनयानां तथा तथा चेष्टया तस्य

---

**नान्द्यन्त इति ।** अत्र नान्दीलक्षणमादिभरते—'आशीर्नमस्क्रियारूपः श्लोकः काव्यार्थसूचकः । नान्दीति कथ्यते' इति । नान्दीपदव्युत्पत्तिरुक्ता नाट्यप्रदीपे—'नन्दन्ति काव्यानि कवीन्द्रवर्गाः कुशीलवाः पारिषदाश्च सन्तः । यस्मादलं सज्जनसिन्धुहंसी तस्मादियं सा कथितेह नान्दी ॥" इति । तत्र भरतः प्रथमाध्याये—'पूर्वं कृता मया नान्दी आशीर्वचनसंयुता । अष्टाङ्गपदसंयुक्ता प्रशस्ता वेदसम्मता ॥' इति । पञ्चमाध्याये च—'सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रितः । नान्दीपदैर्द्वादशभिरष्टाभिर्वाप्यलङ्कृताम् ॥' इति । इदं पद्यमभिनवगुप्तपादाचार्यैर्भरतटीकायामभिनवभारत्यां व्याख्यातम् । अनेन त्र्यस्रतालानुगता त्रिपदा षट्पदा द्वादशपदेति चतुरस्रतालानुगता चतुष्पदाष्टपदा षोडशपदेति पृथक्त्रिविधैव । नातःपरमपि भूयस्त्वादाद्दतेति पदानि श्लोकावयवभूतानि तिङन्तानि सुबन्तानि वा श्लोकतुरीयांशरूपाणि वावान्तररूपाणि वेति व्याख्याय पुनरुक्तम् ।

तस्यार्थस्य दर्शनात्सूत्रधार इत्युच्यते॥ तदुक्तं भरतेन—'आसूत्रयन्गुणान्नेतुः कवेरपि च वस्तुनः। रङ्गप्रसाधनः प्रौढस्सूत्रधार इहोदितः॥ सर्वप्रयोगकुशलस्सुरेखो विजितेन्द्रियः। प्राज्ञस्ताललयाभिज्ञः कुलीनो गतमत्सरः॥ पात्रसंक्रमणोपायकुशलो नर्तकस्स्वयम्। चार्यंगहारनिपुणः खण्डमण्डलपण्डितः॥ नानादेशसमुत्थस्य देशीनृत्तस्य वेदिता। गीतातोद्यादिभेदज्ञः सूत्रधारः स्मृतो बुधै'रिति॥ प्राक् चतुर्विधाभिनयानां लक्षणमुक्तं॥ इदानीमभिनयशब्दार्थो लिख्यते—'अभिपूर्वात्ततो धातोरधिकर्तरि योजिते। प्रयोगमाभिमुख्यं यन्नयत्यभिनयस्तु सः॥ शाखयांगैरुपांगैश्च प्रयोगेण विभावयन्। अर्थान्बहुविधानेतीत्येवं वाभिनयो मतः' सङ्गीतचूडामणावप्युक्तं—'अभिव्यञ्जन्विभावानुभावादीन्नाटकाश्रयान्। उत्पादयन्सहृदये रसज्ञानं निरन्तरम्। अनुकर्तृस्थितो बोधोऽभिनयस्सोऽभिधीयते' इति॥ अन्यैरप्युक्तम्—अभीत्युपसर्गः णीञ् प्रापणार्थो धातुः॥ तस्याभिनीत्येवं व्यवस्थितस्याच्प्रत्ययान्तस्याभिनय इति रूपं सिद्धम्। एतच्च धात्वर्थवचनेनावधार्यम्॥ अत्र श्लोकः—'अभिपूर्वस्तु णीञ् धातुराभिमुख्यार्थनिर्णये। यस्मात्प्रयोगं नयति तस्मादभिनयस्स्मृतः॥ विभावयति यस्माच्च नानार्थांश्च प्रयोगतः। शाखांगोपाङ्गसंयुक्तस्तस्मादभिनयः स्मृतः' न विद्यते भीर्यस्यासावभीः। तस्य नयोऽभिनयः॥ *'इकोह्रस्वोऽड्यो गालवस्य' इति भीशब्दस्य ह्रस्वः॥ धृष्टस्य चरितमित्यर्थः॥ यद्वा। अभिरित्युपसर्गः॥ तेन णीञ्धातोस्समासो वेति सन्देहात्प्रश्ने अभीत्युपसर्ग इति॥ नासौ भिधातोर्नञा समास इति भावः॥ णीञ् प्रापणार्थो धातुरित्यन्तर्भावितणिजर्थः॥ धातुरित्यनेकार्थधारणात्प्राप्तिज्ञप्तिविचारनिर्णयादीनामनेकेषां नीधात्वर्थत्वात्॥ तद्यथा—अजां ग्रामं नयति प्रापयतीत्यर्थः॥ नयति चार्वीति विचारयतीत्यर्थः॥ वाक्यार्थनयनं ज्ञापनं। सन्नयः पिण्डीकरणं। एवमनेकार्थत्वादत्र प्रापणार्थो ज्ञापनार्थ इत्युक्तम्॥ एवं प्रकृत्युपसर्गावभिधाय समुदायरूपं पदमाह—तस्याभिनीत्येवं व्यवस्थितस्याच्प्रत्ययान्तस्याभिनय इति रूपं सिद्धमिति॥ *'नन्दिग्रहिपचादिभ्यो ल्युणिन्यच' इति पचाद्यचि कृते। नटादिप्रयोगस्य पदार्थवाक्यार्थलक्षणकाव्यार्थज्ञापकत्वादुपचारवृत्त्या कर्तृत्वम्॥ मुख्यकर्तृत्वं

---

आचार्यैस्स्वरसस्त्ववान्तरवाक्येष्वेव पदत्वमिति। एतदभिप्रायेण नाट्यप्रदीपे—'श्लोकपादः पदं केचित्सुप्तिङन्तमथापरे। परेऽवान्तरवाक्यैकस्वरूपं पदमूचिरे॥' इति। सङ्गीतकल्पतरावपि—'हरोत्तमाङ्गस्थितवस्तुवर्णैर्वाक्यार्थभूम्नार्थपदैश्चिसंख्यैः। षड्भिश्चतुर्भिर्नृपविप्रसम्पत्समाशिषा सम्प्रवदन्ति नान्दीम्॥' इति। सूत्रमूलभरतटीकाकाराभिनवगुप्तपादाचार्यसम्मतावान्तररूपाष्टपदा। तथा च पञ्चमाध्याये भरतः—'नमोऽस्तु सर्वदेवेभ्यो द्विजातिभ्यस्ततो नमः। जितं सोमेन वै राज्ञा शिवं गोब्राह्मणाय च॥ ब्रह्मोत्तरं तथैवास्तु हता ब्रह्मद्विषस्तथा। प्रशास्त्विमां महाराजः पृथिवीं च ससागराम्॥ राज्यं प्रवर्ततां चैव रङ्गः स्वांशः समृध्यतु। प्रेक्षाकर्तुर्महान्धर्मो भवतु ब्रह्मभाषितः॥ काव्यकर्तुर्यशश्चापि धर्मश्चापि प्रवर्धताम्। इज्यया चानया नित्यं प्रीयन्तां देवता इति॥' मूलकारेण स्वयमेव द्वादशपदोदाहृता। टीकाकारैरष्टपदोदाहृता। यथा विलक्षकुरुपतौ—'आनन्दं विदधातु पञ्चवसतिः शम्भुः शिवं यच्छतु श्रीनाथः श्रियमातनोतु तनुतां सीतापतिर्वाञ्छितम्। हेरम्बः कुरुतामविघ्नमनघं वाग्ब्रह्म विद्योततां व्यासोक्तं तदुदेतु वस्तु भरतो नाट्येऽस्तु नः कौतुकी॥' इति। येषां मते श्लोकतुरीयांशः पदं तेषां मते चतुष्पदेयं नान्दी। ये द्वे कालं विधत्तः

नटादेरेव ॥ अत एव केचित् एरजित्यच्प्रत्ययं वर्णयन्ति ॥ तस्याकर्तरि च कारक इत्यनुवर्णनात्करणेऽपि विधानात् ॥ अन्ये तु प्रयोगमभिनयति व्याप्नोतीति मुख्यं कर्तृत्वमेवाहुः ॥ एवं पदस्वरूपमभिधाय तदर्थमाह—'अभिपूर्वस्तु णीञ् धातुराभिमुख्यार्थनिर्णये । यस्मात्प्रयोगं नयति तस्मादभिनयः स्मृतः' इति ॥ अभिशब्द आभिमुख्ये । नयशब्दोऽर्थनिश्चये ॥ आभिमुख्येन सन्देहादिदोषत्यागेन प्रेक्षकाणामर्थनिर्णयो येन भवति । सोऽभिनयः इति यावत् ॥

अत्र सूत्रधार इत्यनन्तरं क्रियापदं कथं न प्रयुक्तमित्युक्ते केचित् नान्दीं पठित्वा पुष्पाञ्जलिं विकीर्य स एव सूत्रधार आहेति वदन्ति ॥ अन्ये तु सूत्रधारादन्य एव वस्तुनः प्रस्तावक इति कथयन्ति ॥ तथा चोक्तं दशरूपके—'नान्दीं पठित्वा नाट्यादौ सूत्रधारे विनिर्गते । प्रविश्य तद्वदपरः काव्यमासूत्रयेन्नटः' इति ॥ तथा भोजराजेन भावप्रकाशिकायामप्युक्तं—'नान्द्यन्तेऽनुप्रविष्टेन सूत्रधारेण धीमता । प्रस्तावनाय रङ्गस्य वृत्तिर्योज्या हि भारती' इति ॥ द्वावत्र सूत्रधारौ ॥ एकः पूर्वरङ्गविधायकः इतरस्तु नटस्थापकाद्यपरपर्यायः पूर्वसूत्रधारसदृशगुणाकृतिः प्रस्तावनाप्रवर्तकः ॥ अत्र मतद्वयसाधारण्येन सूत्रधारः इत्यत्र क्रियापदं न प्रयुक्तमित्यवगन्तव्यम् ॥

**नेपथ्याभिमुखमिति ॥** नेपथ्यं नाम रङ्गस्थलव्यतिरिक्तं यवनिकान्तरितं वर्णिकापरिग्रहणयोग्यं नटवर्गस्थानम् ॥ तदुक्तं—'चतुष्षष्टिकरान्कृत्वा द्विधाभूतांस्तथा पुनः । पृष्ठतो यो भवेद्भागो द्विधाभूतस्य तस्य च ॥ तस्यार्धे द्विविभागे च रङ्गशीर्षं प्रकल्पयेत् । पश्चिमे षड्विभागे च नेपथ्यगृहमादिशेत् । कुशीलव कुटुम्बस्य स्थली नेपथ्यमिष्यते' इति ॥

---

इत्यनेन चन्द्राङ्कत्वं चोक्तम् । यदाहुः—'चन्द्रनामाङ्किता कार्या स रसानां यतो निधिः' इति । इयं च पत्रावलीसंज्ञा नान्दी । तदुक्तं नाट्यदर्पणे—'यस्यां बीजस्य विन्यासो ह्यभिधेयस्य वस्तुनः । श्लेषेण वा समासोक्त्या नान्दी पत्रावली तु सा ॥' इति । एतादृश्या नान्द्या अन्ते । सूत्रं प्रयोगानुष्ठानं धारयतीति सूत्रधारः स्थापकनामा नटः । प्रविशतीति शेषः । सङ्गीतसर्वस्वे तथोक्तेः—'वर्तनीयतया सूत्रं प्रथमं येन सूच्यते । रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते ॥' इति । तदुक्तं दशरूपके—'पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते । तद्वन्नरः प्रविश्यान्यः सूत्रधारगुणाकृतिः । सूचयेद्वस्तुबीजम्' इति । नन्वादौ पूर्वरङ्गाङ्गभूता नान्दीत्युक्तम् । अत्र 'पूर्वरङ्गं विधायादौ' इत्युच्यत इति कथं पूर्वापरसङ्गतिः, कथं वा न ग्रन्थविरोध इति चेत् । उच्यते । अत्र पूर्वरङ्गशब्दो गौणः । तथा च तत्कारिकावृत्तिः—'पूर्वं रज्यन्तेऽस्मिन्निति पूर्वरङ्गो नाट्यशाला तात्स्थ्यात्प्रथमप्रयोग उत्थापनादौ पूर्वरङ्गता' इति । तेन द्वाविंशत्यङ्गस्य पूर्वरङ्गस्य द्वादशोत्थापनादिनान्द्यन्तान्यङ्गानि पूर्वरङ्गशब्देनोक्तानीत्यर्थः । अत एवादिभरते—'त्र्यस्रं वा चतुरस्रं वा चित्रं शुक्रमथापि वा । प्रयुज्य रङ्गान्निष्क्रामेत्सूत्रधारः सहानुगः ॥ स्थापकः प्रविशेत्तत्र सूत्रधारगुणाकृतिः' इति । वस्तुतस्त्वामुखपर्यन्तं पूर्वरङ्ग एव । यतोऽस्यैव नान्दीतोऽग्रे प्ररोचनादीनि दशाङ्गान्युक्तानि । तदुक्तं **भावप्रकाशिकायाम्**—'सभापतिः सभा सभ्या गायका वादका अपि । नटी नटश्च मोदन्ते यत्रान्योन्यानुरञ्जनात् ॥ अतो रङ्ग इति

**आर्य इति ।।** नटीसूत्रधारौ परस्परमार्यशब्दवाच्यौ ॥ तदुक्तं—'आमन्त्रणे विशेषस्स्यादुत्तमादिषु शास्त्रतः । भगवन्तोऽधमैर्वाच्या विद्वद्देवर्षिलिङ्गिनः । नटामात्याग्रजा विप्रा नटी चार्यपदोचिताः' इति ॥ नेपथ्यविधानं नाम ग्रीष्मप्रस्तावनोचितसितवसनमाल्यानुलेपनमुक्तामयाभरणादिधारणं ॥ 'नेपथ्यस्यादलङ्कारे रङ्गजायां नपुंसकं' इति मेदिनी ॥ यद्वा—यवनिकान्तर्ध्रुवागानादिः । तावत्साकल्ये । नेपथ्यविधानं सर्वमित्यर्थः ॥ 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः ॥ अवसितं समाप्तं । यदि चेत् । अत्रायं यदिशब्दस्सिद्धार्थे साध्यार्थवाचकः । तथा चम्पुरामायणे—'उच्चैर्गतिर्जगति सिध्यति धर्मतश्चेत्' इत्यादौ उन्नतगतिर्धर्मतस्सिध्यत्येवेत्यसन्दिग्धे सन्दिग्धप्रयोगः ॥ तद्वदत्राप्यसन्दिग्धे सन्दिग्धप्रयोगः ॥ अन्यथाचेत् नेपथ्यविधानमवसितं चेदागच्छ न चेन्मागच्छेत्यर्थो लभ्यते ॥ तथा च सति सभ्यप्रेक्षकप्रतिपालनमुद्वेजकतया रसपोषणं न भवति ॥ तस्मादसन्दिग्धार्थवाचित्वमेव यदिशब्दस्य चतुरश्रम् ॥ नेपथ्यविधानं सर्वमवसितमेवेत्यर्थः ॥ 'यद्यवधारणेऽप्यर्थे' इति केशवः ॥ इतः रङ्गे आगम्यतां आमन्त्रणप्राप्तकाले ह्ययं लोट् ॥ तव प्रवेशकालः प्राप्त इत्यर्थः ॥ समस्तं सज्जं जातं खलु ॥ सर्वे प्रतिपालयन्ति शीघ्रमागच्छेत्यभिप्रायः ॥ यद्वा । सन्दिग्धार्थकयदिशब्देन नान्द्यनन्तरं शीघ्रं रङ्गं प्रविशामीत्युक्तवत्या भवत्या सम्यगागतमिति विपरीतलक्षणया तद्विस्मृतं किमित्युपहासगर्भं सम्बोधयतीति सूच्यते ॥ सभ्यास्सर्वे मिलित्वा नाट्यदर्शनोन्मुखाः तव प्रवेशं समीक्ष्य प्रतिपालयन्तीति भावः ॥ तेन रङ्गस्थले स्वकरणीयं सर्वं लोकपालपूजादिरङ्गमङ्गळं विहितमित्यपि ज्ञाप्यते ॥ तेन विलम्बो न युज्यत इति भावः ॥

---

ज्ञेयः पूर्वं यत्स प्रकल्प्यते । तस्मादयं पूर्वरङ्ग इति विद्वद्भिरुच्यते ॥ तस्य द्वाविंशत्यङ्गानि चोत्थापनमुखानि च ॥' इत्यादि च । अन्यत्रापि—'यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये । कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ॥ उत्थापनादिकान्यङ्गान्यस्य भूयांसि यद्यपि । तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ॥' इति । अत्र सूत्रधार एतदनन्तरं द्वितीयाङ्कलेखनमस्ति तस्यायमर्थः । पुनः सूत्रधार इति पदमुच्चारणीयम् । तदग्रिमवाक्यकर्तृत्वेन सम्बध्यते । एवमग्रेऽपि सर्वत्र प्रविष्टपात्रनामानन्तरं द्वितीयाङ्कलेखनं तदर्थोऽयमेव बोद्धव्यः । नेपथ्यं यवनिका । तदभिमुखमवलोक्येति कविवचनम् । नटेनावलोकनकर्मैव कृतं तदनुवादोऽयम् । एवमग्रेऽपि मध्ये मध्ये कविवचो बोद्धव्यम् । 'नेपथ्यं स्याज्जवनिका रङ्गभूमिः प्रसाधनम्' इत्यजयः । आर्ये इति भार्यां प्रति सम्बुद्धिः । 'पत्नी चार्येति सम्भाष्या' इति भरतवचनात् । नेपथ्यं मषीवेषश्च । तदाह **भरतः**—'रामादिव्यञ्जको वेषो नटे नेपथ्यमिष्यते' इति । तस्य विधानं करणमवसितं समाप्तं यदि, तदा तावदार्दा इत आगम्यतामिति सम्बन्धः । तत्र मषीवेषग्रहणं च नामाहार्याभिनयः । तस्यापि रस उपयोगात् । तदुक्तं **मातृगुप्ताचार्यैः**—'रसास्तु त्रिविधा वाचिकनेपथ्यस्वभावजाः ॥ रसानुरूपैरालापैः श्लोकैर्वाक्यैः पदैस्तथा । नानालङ्कारसंयुक्तैर्वाचिको रस उच्यते ॥ कर्मरूपवयोजातिदेशकालानुवर्तिभिः । माल्यभूषणवस्त्राद्यैर्नेपथ्यरस उच्यते ॥ रूपयौवनलावण्यस्थैर्यधैर्यादिभिर्गुणैः । रसः स्वाभाविको ज्ञेयः स च नाट्ये प्रशस्यते ॥' इति । तत्र मषीवेषस्वरूपं च नाट्यलोचने—'सितो नीलश्च पीतश्च चतुर्थो

**नटी**—(प्रविश्य) [1]अय्य ! इअम्हि । आणवेदु अज्जो को णिओओ अनुचिट्ठअदुत्ति ॥

**सूत्रधारः**—आर्ये ! अभिरूपभूयिष्ठा परिषदियम् ॥ अद्य खलु कालिदासग्रथितवस्तुना नवेन नाटकेनोपस्थातव्यमस्माभिः ॥ तत्प्रतिपात्रमाधीयतां यत्नः ॥

1. आर्य इयमस्मि. आज्ञापयत्वार्यः को नियोगोऽनुष्ठीयतामिति ॥

**आर्य ! इयमस्मि** । आगता भवामीति यावत् ॥ अत्रास्मीति क्रियापदस्य वर्तमानार्थप्रत्ययेन सूत्रधाराह्वानस्य नटीप्रवेशस्य चाव्यवधानं ध्वन्यते ॥ तदुक्तं—'गीत्या ताळप्रयोगेण वीणावादनया तथा । भांडाहत्या प्रवेशेन समयोऽशून्य इष्यते' इति ॥ अत्र नव्या नीचपात्रत्वात्प्राकृतभाषायां प्राप्तायां 'आर्ययोर्ज' । इति सरेफस्य यस्य जकारे प्राप्ते कथं द्विस्वयकार इति न च वाच्यं ? 'प्राकृतस्थाने शौरसेनी विधीयत' इत्यभिधानाच्छौरसेनी प्राप्तौ तत्र 'य्योर्य' इति द्वित्वयकारादेशः ॥ नव्याः नीचपात्रत्वात्प्राकृतभाषा ॥ तदुक्तम्—'उत्तमाधममध्यानां पात्राणां स्वोचितस्थले । अवस्थानं समुद्दिष्टमन्यथौचित्यहानितः ॥ भाषा तु संस्कृतं प्रोक्तमनीचानां कृतात्मनां । लिंगिनीमंत्रिदेवानां देवीनामपि कुत्रचित् । प्राकृतं शौरसेनी च नीचपात्रस्य च स्त्रियाः । पैशाचं मागधं वा स्यात्पिशाचात्यन्तनीचयोः । यद्देश्यं नीचपात्रं स्यात्तद्देश्यं तस्य भाषितम्' इति ॥ प्रकृतिस्संस्कृतं । तदागतमिति प्राकृतं ॥ तच्च तत्समं तद्भवं देशीति त्रिविधं । महाराष्ट्रादिदेशभाषा प्रकृतेस्संस्कृतादागतेत्यर्थः ॥ तत्र संस्कृतं त्रिविधं श्रौतमार्षं लौकिकं चेति ॥ श्रौतं द्विविधं मन्त्रो ब्राह्मणं चेति ॥ आर्षं द्विविधं स्मृतिः पुराणं च ॥ लौकिकं द्विविधं काव्यं शास्त्रं च ॥ तथैव प्राकृतमपि त्रिविधं सहजं लक्षितं श्लिष्टं चेति ॥ सहजं द्विविधं संस्कृतसमं देश्यं च ॥ लक्षितं द्विधा—महाराष्ट्रं शौरसेनं च ॥ श्लिष्टं च द्विधा पैशाचं मागधं च ॥ अपभ्रंशस्त्रिधा उत्तमो मध्यमः कनिष्ठश्चेति ॥

सूत्रधारस्तु सहृदयास्सर्वे मिलिताः अभिनयस्य विलम्बो न युज्यत इत्येतन्मनसि निधाय वदति—**अभिरूपभूयिष्ठेत्यादिना** ॥ अत्र रूपशब्देन नाटकादिरूपकभेदास्सूच्यंते ॥ तान्यभितो व्याप्य रसभावादिकं सर्वमभिसंबध्य यज्ज्ञानं जायते तदभिरूपमि-

रक्त एव च । एते स्वभावजा वर्णा यैः कार्यं त्वङ्गवर्तनम् ॥ संयोगजाः पुनश्चान्य उपवर्णा भवन्ति हि । सितनीलसमायोगात्कपोत इति संज्ञितः ॥' इत्यादिना । 'राजानश्चाज्यगर्भाभा गौराः श्यामास्तथैव च । ये चापि सुखिनो मर्त्या गौराः कार्यास्तु ते बुधैः ॥' इत्यादिना च । 'शुद्धो विचित्रो मलिनस्त्रिविधो वेष उच्यते ॥ देवाभिगमने चैव मङ्गले नियमस्थिते । वेषस्तत्र भवेच्छुद्धो ये चान्ये प्रयता नराः । देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् । नृपाणां कामुकानां च चित्रो वेषो विधीयते ॥ उन्मत्तानां प्रमत्तानामध्वगानां तथैव च । व्यसनोपहतानां च मलिनो वेष इष्यते ॥' इत्यादिना च । अमात्य-

त्युच्यते ॥ तेन ज्ञानेन भूयिष्ठा प्रचुरा ॥ तादृश ज्ञानातिशयवतीत्यर्थः ॥ रूपशब्देन रूपकाणि कथं सूच्यन्त इति नाशङ्कनीयं ॥ 'नाटकार्थानुकरणं नाट्यं स्याद्रूपकं च यत् । अनुकार्यानुकर्त्रोऽस्तु तादात्म्यं मुखचन्द्रवत् । तदेव दृश्यतायोगाद्रूपं शीलादिरूपवत् । नाट्यं रूपं रूपकं चेत्यस्य संज्ञात्रयं ततः' इति भरतेनोक्तत्वात् ॥ अनेन सभ्यानां नाट्यतत्त्ववेत्तृत्वकथनेन प्रकृतनाटकाभिज्ञत्वमप्येतेषामेवास्तीति नाट्यस्यावश्यं प्रयोक्तव्यता ध्वन्यते ॥ 'चत्वारो वेदधर्मज्ञाः परिषत्' इत्युक्तत्वात् । परिषत्पदेन सामाजिकानां वेदशास्त्रपरिज्ञातृत्वकथनेन पक्षपातराहित्येन गुणग्राहित्वमेवेति व्यज्यते ॥ अनेन तेषां प्रामाण्ये परा काष्ठा सूचिता ॥ तदुक्तं—'सङ्गीतशास्त्रकुशला रसिका गुणवत्सलाः । रागद्वेषविनिर्मुक्ता लक्ष्यमार्गविशारदाः । सर्वभाषासु निपुणाः प्रस्तावोचितवादिनः । नाट्यवृत्यादिभेदज्ञा विनयानम्रकन्धराः । मध्यस्थास्सावधानाश्च सभ्यास्तु कथिता बुधैः' इति ॥ यद्वा—यो यस्यां कलायां समर्थस्स तत्राभिरूप इत्युच्यते ॥ तैस्तत्तत्कलानिपुणैर्भूयिष्ठा प्रचुरा ॥ अत्र सभ्यानां सकलकलाभिज्ञत्वकथनेन सर्वाः कलाः नाट्य एव प्रयुज्यंत इति ध्वन्यते ॥ तदुक्तं भरतेन—'न तच्छास्त्रं न सा विद्या न तच्छिल्पं न ताः कलाः । नासौ योगो न तत्कर्म नाट्येऽस्मिन्यन्न वीक्ष्यत' इति ॥ अत्राभिरूपपदेन तेषां सारासारविवेचनसामग्री सूच्यते ॥ भूयिष्ठेत्यनेन दुर्मिळसकलकलाभिज्ञानामेकत्र समवायेन । स्वस्याघटनाघटकं दैवानुकूल्यं सूच्यते ॥ अभिरूपभूयिष्ठेत्यनेन । सकलकलाभिज्ञनानादिगन्तस्थविद्वज्जनानां सम्मेळनेन । प्रतिपालननैरपेक्ष्यादविलम्बेन नाट्यं प्रयोक्तव्यमिति व्यज्यते ॥ स्वविद्याभिज्ञपरिषत्सन्निधाने हि गुणिनां स्वगुणप्रकाशनोत्साहस्समुल्लसतीति भावः ॥ अत्रैषाऽभिरूपभूयिष्ठेत्यनेन प्रकृतनायिका सर्वावयवसौन्दर्याद्यतिशयवतीति काव्यार्थसूचनमपि क्रियते ॥ अत्राभिरूपपदेन परिषत्पदेन च सभ्यानां सकलशास्त्रपरिज्ञानेन भवितव्यमिति ध्वन्यते ॥ तदुक्तं—'कारणं नाटकस्यास्य करणे च विचारणे । शक्तिव्युत्पत्तिसामग्री सम्पूर्णा यस्य विद्यते ॥ केवलशक्तिमतः केवलव्युत्पत्तिमतश्च तादृशफलं काव्यकरणकौशलं न भवतीत्यर्थः ॥ "शक्तिः कवित्वबीजं हि प्राक्तनी संस्क्रिया मता ॥ यया विना न प्रसरेत्काव्यं शिक्षावतामपि ॥ शक्तिर्नाम कवित्वस्य प्रथमं कारणं बीजमिव तरोः ॥ पुरुषस्य प्राक्तनजन्मनः कश्चन संस्कारविशेषः तर्हि व्युत्पत्तिं विना कवित्वं यत्किंचित्कथंचित्प्रसरतीत्याशंक्याह—'व्युत्पत्तिगौरवबलाद्यदि किंचित्कथंचन ॥ प्रसारितं परं तत्र हास्यमेव न संशयः" इति ॥ दंडिनापि केवलव्युत्पत्तिमतः काव्यं प्रत्युक्तं—"नाकवित्वमधर्माय मृतये दंडनाय वा । कुकवित्वं पुनस्साक्षान्मृतिमाहुर्मनीषिणः ।" अनेनापि तस्य हास्यत्वमेवांगीकृतं ॥ तर्हि का सा

---

कञ्चुकिश्रेष्ठिविदूषकपुरोधसाम् । वेष्टनाबद्धपट्टानि प्रतिशीर्षाणि कारयेत् ॥' इत्यादिना च बहुना ग्रन्थसन्दर्भेणोक्तम् । अस्माभिस्तु ग्रन्थगौरवभयान्नातिप्रयोजनतया च विरम्यते । अज्जउत्त आर्यपुत्र । 'सर्वस्त्रीभिः पतिर्वाच्य आर्यपुत्रेति यौवने' इति भरतोक्तेर्नटीसम्बुद्धिः स्थापकं प्रति । इयं हि इयमस्मि । अत्र नाटके कवेः प्रायः शौरसेनी भाषैवाभिमतास्ति । उक्तं च **मातृगुप्ताचार्यैः**—'प्राक्प्रतीचीभुवोः सिन्ध्वोर्हिमवद्विन्ध्यशैलयोः । अन्तरावस्थितं देशमार्यावर्तं विदुर्बुधाः ॥ आर्यावर्तप्रसूतासु सर्वास्वेव हि जातिषु । शौरसेनीं समाश्रित्य भाषां काव्ये प्रयोजयेत् ॥' इति । 'तो दोऽनादौ शौरसेन्यामयुक्तस्य' इति

शक्तिरित्यत आह—"प्रतिभां नाम तामेतां कवयस्समुपासते। परां यां जीवितसखीं देव्या वाचस्त्रिधा तनोः॥" देव्याः प्राणसमां सखीं प्राक्तनजन्मसंस्कारविशेषरूपां तामेव प्रतिभाशक्तिं काव्यस्य सिद्धये समुपासत इत्यर्थः ॥ प्रतिभास्वरूपमाह—"स्मृतिर्व्यतीतविषया मतिरागामिगोचरा। बुद्धिस्तात्कालिकी ज्ञेया प्रज्ञा त्रैकालिकी मता ॥ प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता। तदनुप्राणनाज्जीवेद्वर्णनानिपुणः कविः। सति वक्तरि सत्यर्थे सति शब्दानुशासने । अस्ति तन्न विना येन परिस्रवति वाङ्मधु॥ कवेर्जीवनत्वेन शक्तिमुक्त्वा व्युत्पत्तिं प्रस्तौति—"व्युत्पत्तिरपि शक्त्यैव संगता ह्यनुवर्तते । सा हि तस्याः प्रियसखी नित्यमव्यभिचारिणी" इति॥ सा व्युत्पत्तिः प्राक्तनेऽपि जन्मनि तदनुवर्तनशीलया। सततमव्यभिचारिणी शक्तेः प्रियसख्येव ॥ व्युत्पत्तिरहिता शक्तिरप्युदासीनैव तूष्णीमास्त इत्याह—परिबर्हवतीं कर्तुं प्रतिभां प्रतिभानवान्। साधीयसीं तु व्युत्पत्तिं सविधे सन्निधापये"दिति ॥ व्युत्पत्तिः कीदृशीत्यत आह—"व्युत्पत्तिर्लोकचारित्रशास्त्रकाव्याद्यवेक्षणं । अभ्यास उपदेशेन काव्यज्ञानां च सम्मता" इति ॥ लोकाचारच्छंदश्शब्दचतुर्वर्गकलाखड्गगजतुरगादिलक्षणाभिधानकोशपुराणेतिहासमहाकविकाव्याद्यवेक्षणं काव्यज्ञोपदिष्टमार्गेण काव्यज्ञैस्सहाभ्यासश्च इत्येतत्सर्वं व्युत्पत्तिस्सर्वेषां सम्मता ॥ एतेषामभ्यासहेतोः काव्यकरणे फलवत्तां क्रमेण प्रतिपादयति—"चरस्थिरानेकविधलोकवृत्तानुवर्तिनः। काव्यस्य कारणं लोकज्ञानमुच्छ्वसितं कवेः ॥" इतरसामग्रीतोऽपि लोकवृत्तानभिज्ञस्य काव्यकरणकौशलं न भवतीति प्रतिपादयति—"अज्ञातलोकवृत्तो यश्शास्त्रकाव्यविदप्यसौ। ऋश्यशृंग इवाशेषैर्घुष्यते मुग्धसंसदि" इति ॥ "वृत्तसंशयविच्छित्यै छन्दश्शास्त्रनिरूपणम्॥ शब्दशुद्धिविवेकाय शब्दशास्त्रविवेचनं। चतुर्वर्गैः कलाभिश्च काव्यं निर्मीयते यतः ॥ अतस्तच्छास्त्रविदुषा भाव्यं काव्यं चिकीर्षता" चतुर्वर्गैः कलाभिश्च काव्यस्य निष्पत्तेस्तच्चिकीर्षता कविना मानवादिधर्मशास्त्रकौटिलीयकाद्यर्थशास्त्रवात्स्यायनादि कामशास्त्रसांख्ययोगादि मोक्षशास्त्र भारतीयादिकलाशास्त्रवेदिना भवितव्यमित्यर्थः॥ "नृपाणां काव्यनेतॄणां खड्गाश्च गजशिक्षणं। वर्णनीयं काव्यकृता तस्मात्तच्छास्त्रवेदनं। इतिहासपुराणानामभ्यासेनापि भूयते। राजवंशकथातीर्थलोकभेदावबुद्धये । लोकशास्त्रविशेषज्ञः काव्यनिर्माणकौतुकी । काव्यानि कालिदासादेस्सततं परिशीलयेत् । लोकशास्त्रपुराणादिज्ञानवानपि सीदति । अज्ञातकाव्यसरणिः काव्यनिर्माणकर्मणि । अन्या हि गतिरश्वस्य गतिरन्या खरोष्ट्रयोः। मदक्लिन्नकपोलस्य गतिरन्या हि दन्तिनः। वेदशास्त्रपुराणानां रीतयो हि पृथक्पृथक् । रीतिरन्यैव काव्यानां लोकोत्तरपदस्पृशां । रसभावगुणौचित्यघटनालंक्रियादयः। काव्यादन्यत्र दृश्यन्ते कुत्र वा वेदशास्त्रयोः॥ एवं लोकस्य शास्त्राणां काव्यानामपि वेदिता । प्रतिभावान्प्रवर्तेत काव्यज्ञैः काव्यकर्मणि । किमेवं

---

सूत्रेऽयुक्तस्येति पर्युदासादुत्तेति तकारे दकारो न भवति । अन्या साधनिका यथा—आर्यपुत्रपदे 'ह्रस्वः संयोगे—' इत्याकारस्य ह्रस्वता । 'द्यय्यर्यां जः' इति यस्य जकारः। 'सर्वत्र लवरामचन्द्रे' इति पुत्रशब्दे रेफस्य लोपः। 'कगचजतदपयवां प्रायो लुक्' इति यकारस्य लुक् । 'अनादौ शेषादेशयोर्द्वित्वम्' इति जकारस्य तकारस्यापि द्वित्वम् । क्वचित्पुरातनपुस्तके 'अय्यउत्त' इति पाठः। सोऽपि सांप्रदायिक एव । 'शौरसेन्याम्' इत्यनुवर्तमाने 'न वार्यो य्यः' इति यादेशविधानात्। इयमिति संस्कृतसमम्। 'अस्तेः'

बहुनोक्तेन लोके यद्यद्विभाव्यते । तत्तत्सर्वं वेदितव्यं कांक्षता काव्यनिर्मितिं । न सशब्दो न तद्वाच्यं न सा विद्या न सा कला । जायते यन्न काव्यांगमतो भारो महाकवेः ” इति ॥ अत एव लोकोत्तरवर्णननिपुणकविकर्म काव्यं प्रयोगार्हं भवति ॥ तद्विवेचकसामाजिकानामपि यद्यपि शक्तिः प्रायिकी । तथापि सर्वथा पूर्वकथितव्युत्पत्तिसामग्र्या भवितव्यमिति ॥ प्रकृतेऽभिरूपभूयिष्ठा परिषदित्युक्तं ॥ अभिरूपभूयिष्ठेत्यादिना सभ्यस्तवस्योक्तत्वात्प्ररोचना नाम भारतीवृत्त्यंगमुक्तं भवति ॥ तदुक्तं—प्ररोचना तु सा प्रोक्ता प्रकृतार्थप्रशंसया । सदस्यचित्तवृत्तीनामुन्मुखीकरणं च यत् ॥ प्रशंसा द्विविधा प्रोक्ता चेतनाचेतनाश्रया । अचेतनौ देशकालौ कालो मधुशरन्मुखः ॥ देशस्तु देवताराजतीर्थस्नानादिरुच्यते । चेतनास्तु कथानाथकविसभ्यनटाः स्मृताः ॥ सा प्ररोचना विस्ताररूपा संक्षेपरूपा चेति द्विविधा ॥ कथानायककविसभ्यनटा नामेकस्मिन् श्लोके वर्णनं यत्र सा संक्षेपप्ररोचना ॥ यत्र पृथक्पृथग्वाक्ये श्लोके वा कविनायकसभ्यादीनां वर्णनं क्रियते । सा विस्तरप्ररोचना ॥ भारतीलक्षणं भरतेनोक्तं—“इयं नाट्यक्रियाहेतोर्भारती निर्मिता बुधैः । नाट्यादौ भारतीवृत्तिं वृत्तिभेदेन योजयेत् ॥ प्रयुक्तत्वेन भरतैर्भारतीति निगद्यते ॥ प्रस्तावनोपयोगित्वात्सांगं तत्रैव युज्यते ॥ शोकविस्मयसंत्रासहासनिंदास्तवैरपि । रत्युत्साहजुगुप्साद्यैर्विशेषैरुपलक्षिता ॥ वाङ्मयी संस्कृतप्राया भारतीवृत्तिरिष्यते । अस्याश्च चत्वार्यंगानि कथितानि मनीषिभिः । प्ररोचना विधिश्चैव तथा प्रहसनामुखम् ॥ ” इति ॥ अभिरूपभूयिष्ठेत्यनेन सकलरूपकपरिज्ञानवत्वे सामाजिकानामदृष्टपूर्वं रूपकांतरं परितोषयितृकं यद्यपि नास्ति । तथापि प्रयोगसमर्थाभावादेतादृशपरिषन्मेळनाभावाच्चाप्रयुक्तं नाटकमस्तीति मनसि निधायाह—अद्य खल्वित्यादिना ॥ यद्वा । सामाजिकानामभिरूपभूयिष्ठत्वाद्भाणप्रहसनादिक्षुद्रप्रबन्धप्रयोगेण परितोषं सम्पादयितुं न शक्यमित्येतन्मनसि निधाय स्वकरणीयव्याजेनाह—अद्येत्यादि ॥ अद्य इदानीं ॥ सभायामभिरूपभूयिष्ठायां सत्यामित्यर्थः ॥ खलुशब्दो हेत्वर्थः ॥ यतो हेतोरस्माभिरुपस्थातव्यं चित्तरञ्जनं कर्तव्यम् ॥ नाट्यस्य सामाजिकप्रीतेरेव पुरुषार्थत्वादिति भावः ॥ अस्माभिरिति बहुवचनेन प्रकृतनाटकप्रयोगे तु नाट्यविद्यानिपुणैः बहुभिर्भाव्यमिति द्योत्यते ॥ नाटकस्य महाकविप्रणीततया विचित्रकथाबाहुल्यादिति भावः ॥ तथैवाह—नाटकेनेति ॥ तेन स्वेषां भरतविद्याव्रतस्नातत्वं ज्ञाप्यते ॥ अनेन सर्वरूपकप्रधानभूतनाटकेनेत्यनेन बहुपात्राभिनेयत्वं सूच्यते ॥ भाणप्रहसनादिवस्तुप्रयोगमपि न भवतीति भावः ॥ अनेन प्रयोज्यवस्तु निवेदनं कृतं ॥ तर्हि । बहुधा दृष्टवस्तुनि नाटके कस्यापि दिदृक्षा नास्तीत्यत आह—नवेनेति ॥ नवेन अपूर्वेण ॥ एतादृशसकलकलाभिज्ञपरिषन्मेळनाभावात्प्रयोगसमर्थाभावाच्च केनापि न प्रयुक्तेनेति यावत् ॥ अनेन सभ्यानां दिदृक्षा कुतूहलस्यातिशये हेतुरुक्तः ॥ नाटकस्य नवत्वविशेषणेन पूर्वप्रयोगाभावादतिसावधानेन भवितव्यमिति ज्ञाप्यते ॥ तर्हि । नवत्वेऽपि प्रसिद्धप्रौढकविरचनया भवितव्यं ॥ तत्र

---

इत्यनुवर्तमाने ‘निमोर्मैह्मिह्मोह्मा वा’ इति अस्मीत्यस्य ह्मीत्यादेशः । इत्थमग्रेऽप्यनुसर्तव्यम् । प्रतिपदं लिख्यमानं गौरवमावहतीति विरम्यते, विशेष एव क्वचित्कश्चिद्वक्ष्यते । एतदनन्तरं नवीने क्वचित्पुस्तके ‘आणवेदु अज्जो को णिओओ अणुचिट्ठीअदु त्ति’ इति पाठः पुराणपुस्तकेष्वभावात्प्रयोजनाभावाच्चोपेक्ष्यः । ‘रङ्गं प्रसाध्य मधुरैः श्लोकैः काव्यार्थसूचकैः । ऋतुं कञ्चिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥ भारतीसंस्कृतप्रायो वाग्व्यापारो जनाश्रयः । भेदैः प्ररोचनायुक्तैर्वीथीप्रहसनामुखैः ॥’ इति धनिकोक्तेर्भारतीवृत्तेः प्ररोचना-

विचित्रजगद्विलक्षणविदग्धनायिकानायकविषयसुश्लिष्टकृतिव्यापारवैचित्र्यादिसन्धान चातुर्यमस्तीत्यत आह—कालिदासग्रथितवस्तुनेति ॥ कालिदासेन महाकवीन्द्रेण ग्रथितं गुम्भितं वस्तु धीरोदात्तादिनायकचरितं। कथेति यावत् । यत्र तत्तथोक्तम् ॥ तदुक्तम्—"इतिवृत्तकथावस्तुशब्दाः पर्यायवाचिनः" इति ॥ भावप्रकाशेऽप्युक्तम्—"वस्तु तत्स्यात्प्रबन्धस्य शरीरं कविकल्पिम्। इति वृत्तं तदेवाहुर्नाट्याभिनयकोविदाः॥" इति ॥ अत्र कालिदास इति निरुपपदेन पदेन प्रसिद्धिरेव स्वस्य माहात्म्यं गमयति ॥ केवलवाग्विजृम्भणेन किं प्रयोजनम्? समस्तपाण्डित्यस्य स्वनाटकमेव प्रमाणमिति ध्वन्यते॥ स्वाभिधास्यमान ध्वन्यनुप्राणितनाटकनिर्माण प्रतिभाभाजनत्वेनैव महाकविव्यपदेशः स्फुटीभविष्यतीति भावः॥ प्रसिद्धस्य गुणवर्णनं न कर्तव्यमिति भावः ॥ यथा वा प्राक्तनालंकारिकैः कालिदासादीनामिव यश इति प्रसिद्धिरुक्ता ॥ तेनेतरकविभ्यः कालिदासस्य वैशिष्ट्यमुक्तं भवति॥ वैशिष्ट्यं च तत्प्रतिपादितानां वेदवत्प्रमाणभूतत्वम्॥ तत्र मीमांसाप्रवर्तकैर्भट्टाचार्यपादैः प्रतिपादितं यथा—कवयः कालिदासाद्याः कवयो वयमप्यमी। पर्वते परमाणौ च पदार्थत्वं व्यवस्थितम्" इति॥ "संहृत्य लोकान्पुरुषोऽधिशेते" इत्यादिकालिदासवाक्यान्यप्याचार्यपादैः प्रमाणत्वेन मीमांसायां निदर्शितानि ॥ प्राक्तनैरालंकारिकैरप्युक्तम्—"तस्मादालोचिताशेषलोकशास्त्रेण धीमता । कर्तव्यं कालिदासादेः काव्यानां परिशीलनम्॥" इति॥ एतदभिप्रायेण कालिदास इति निरुपपदं पदं प्रयुक्तमित्यवगन्तव्यम्॥ अनेन चतुर्णां कवीनां मध्ये कालिदासस्योदात्तत्वमुक्तमित्यवगम्यते ॥ तदुक्तम्—"कवयस्तु प्रबंधारस्ते भवेयुश्चतुर्विधाः। उदात्त उद्धतः प्रौढो विनीत इति भेदतः । अन्तर्गूढाभिमानोक्तिरुदात्त इति गीयते॥" प्रकृते कालिदास इति निरुपपदप्रयोगेण गुप्ताहंकारभणित्योदात्तत्वं सूचितम्॥ "परापवादात्स्वोत्कर्षवादी तूद्धत उच्यते॥" यथा वा मदीये नैषधानन्दे—'बाढं सन्ति महीतले सुकवयस्तत्राप्यसौ गण्यते मुख्यो वेंकटनाथपूजनपरश्री श्रीनिवासः कविः। ते मासाः कुसुमाकरा अपि मधुः पुष्पाकरो भण्यते ये जाता मलयेन ते मलयजाः सा तु प्रथा चन्दने॥' अत्र स्वस्य सुकवित्वपरिकल्पितनिजगर्वेण परापवादादुद्धतत्वं सूचितम् ॥ "यथोचितनिजोत्कर्षवादी प्रौढ इतीर्यते॥" यथा करुणाकन्दले—"कविर्भारद्वाजो जगदवधिजाग्रन्निजयशा" इत्यादि ॥ "युक्त्या निजोत्कर्षवादी प्रौढ इत्यपरे जगुः॥" यथा मदीये नैषधानन्दे—"वक्रोक्त्यलङ्काररसातिशायिव्यंग्योर्मिलम्" इत्यादि॥ "विनीतो विनयं जल्पन्स्वापकर्षप्रकाशकं॥" यथा राजानन्दे—"गुणो न कश्चिन्मम वाङ्निबन्धे लभ्येत यत्नेन गवेषितोऽपि" इत्यादि॥ ग्रथितवस्तुनेत्यनेन रसानुगुणोचितपरिग्रहपरित्यागाभ्यां। समुचितकथासङ्घटना प्रकारचातुरी द्योत्यते॥ न तु कालिदासकृतवस्तुनेत्युक्तम्॥ अनेन स्वकृतेः सन्निबन्धत्वं सूच्यते॥ तेनैतत्प्रबन्धकरणेन भूमौ सह-

---

लक्षणमङ्गमुपक्षिपति—'आर्ये, अभिरूपभूयिष्ठा' इत्यादिना 'रमणीयाः' इत्यन्तेन 'विस्तरादुत संक्षेपाद्विदधीत प्ररोचनाम्' इति रसार्णवसुधाकरोक्तेरियं विस्तीर्णा प्ररोचना। तल्लक्षणं दशरूपके—'उन्मुखीकरणं तत्र प्रशंसातः प्ररोचना' इति। तस्या भेदा उक्ताः सुधाकरे—'प्रशंसा तु द्विधा ज्ञेया चेतनाचेतनाश्रया । चेतनास्तु कथानाथकविसभ्यनटाः स्मृताः॥ अचेतनौ देशकालौ कालो मधुशरन्मुखः॥' इति। कथानाथः कथानायकः अभिरूपाः पण्डिता मनोज्ञाश्च। भूयिष्ठा बहवो यस्यामेतादृशी परिषत्सभा। 'अभिरूपो बुधे

दयेषु स्वस्यानश्वरी प्रतिष्ठा देवायतनादिकरणेनेव भवत्विति ध्वन्यते ॥ तदुक्तं लोचने— "उपेयुषामपि दिवं सन्निबन्धविधायिनां। आस्त एव निरातङ्कं कान्यं कान्तिमयं वपुः। धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च। करोति कीर्तिं प्रीतिं च साधुकाव्यनिबन्धनम्" ॥ इति ॥ सत्काव्यजन्यकीर्तिरेव प्रयोजयितृकर्तॄणां चिरस्थायिनीतिप्राक्तनैर्बहुधा प्रतिपादितम्। तदुक्तम् । "काव्यं नाम कवीद्राणां महतां च महीभुजां। एका कीर्तिमयी मूर्तिरेधते भुवनत्रये ॥ मूर्तयः पाञ्चभौतिक्यो न द्विलक्षणसौहृदाः । मूर्तयः कीर्तिमय्यो हि तिष्ठंत्याभूतसम्प्लवम्" इति ॥ एतदवधार्य कैश्चन महानुभावैश्चिरावस्थानहेतोर्मूर्तित्वेन कीर्तय एवाङ्गीक्रियन्ते ॥ ताश्च तेषां महाप्रळयपर्यंतस्थायिन्योऽपि भवन्ति ॥ तर्हि कवीनामेव काव्यजन्या कीर्तिरस्तु ॥ इतरेषां पुनर्बहुविधधनसम्यग्वितरणशौर्याद्यनेकोपायजनिताः कीर्तयः प्रथंते ॥ तेषां किमनेन काव्येनेत्याशंक्याह—"काव्यबन्धेन सम्बन्धाः काङ्क्षणीया यशस्विना। न कदाचन नश्यन्ति कृत्स्ननाशेऽपि कीर्तयः ॥" इति ॥ प्रतिग्रहीत्रनुसन्धात्रादीनां सर्वेषां नाशेऽपि काव्यबन्धजाः कीर्तयो न नश्यन्तीति विशदयति—"वाल्मीकी येन काव्येन वर्धते रामकीर्तनम्। बाणस्य काव्यबन्धेन श्रीहर्षः ख्याप्यतेधुना" इति ॥ एवं काव्यायत्तमेव कीर्तिस्थापनमिति बहुधा प्रतिपादितम् ॥ उक्तंच—"न रूपेण न शौर्येण नाचारेण न विद्यया। प्रतिष्ठां भजते कीर्तेः काव्येनैव यशस्विनाम् ॥" इति ॥ तर्ह्यन्येऽपि देवायतनतटाकारामाग्रहारादयो विद्यन्ते ॥ त एव कीर्तेः प्रतिष्ठापका भवन्तु ॥ किं काव्येनेत्याशङ्क्य व्यतिरेकमुखेन तदेकावलम्बनत्वं कीर्तेः प्रतिपादयति—"कल्पान्तरस्थिरं काव्यं स्यान्नचेदवलम्बनम् । कीर्तिवल्ली स्वर्गफला किमवष्टभ्य वर्धतां" इति ॥ स्वर्गो हि फलं कीर्तेः ॥ स्वर्गश्च स्वमनोरथानुरूपनिरतिशयसुखानुभवरूपः । तादृशलोकोत्तरमहाफलोद्वहनसमुचितव्याप्तिमत्याः कीर्तेरेवालम्बनत्वेन भवितुं कल्पान्तस्थिरं लोकोत्तरवर्णननिपुणकर्मतया व्याप्तिमत्काव्यमेव प्रभवतीत्यर्थः ॥ वस्तुस्वरूपमुच्यते—"धीरोदात्तादिनायकचरितं वस्तु द्विविधम् ॥ आधिकारिकं प्रासङ्गिकं चेति ॥ अधिकारः फलसम्बन्धः तद्वानधिकारी ॥ तस्य चरितमाधिकारिकम् ॥ प्रबन्धप्रधानफलभागिनो वृत्तमाधिकारिकमिति यावत् ॥ यथा प्रकृते। दुष्यन्तशकुन्तळाचरितम् ॥ एवं सर्वनाटकेषु प्रधाननायकचरितमाधिकारिकमिति द्रष्टव्यम् ॥ प्रासंगिकं तु परार्थमागतस्य परप्रयोजनवशात्स्वस्यापि फलप्राप्तिमतो वृत्तम् ॥ यथा रामायणे सुग्रीववृत्तान्तः ॥ तत्प्रासंगिकं द्विविधं—पताका प्रकरी चेति ॥ यदंगमाप्रबन्धसमापनमनुवर्तते सा पताका ॥ यदङ्गमेकदेशस्थं सा प्रकरी ॥ एतदाधिकारिकं प्रासंगिकमपि प्रत्येकं त्रिविधम् ॥ पुराणादिप्रसिद्धं कविपरिकल्पितमुभयरूपं चेति ॥ तत्राद्यं दुष्यन्तशकुन्तळाचरितम् द्वितीयं तु माळविकाग्निमित्रीयम् ॥ तृतीयं

---

रम्ये' इति शाश्वतः । अनेन सभ्यप्रशंसा । तत्र **सभ्यस्वरूपमादिभरते**—'सभ्यास्तु विबुधैर्ज्ञेया ये दिदृक्षान्विता जनाः । मध्यस्थाः सावधानाश्च वाग्मिनो न्यायवेदिनः ॥ त्रुटितात्रुटिताभिज्ञा विनयानम्रकन्धराः। अगर्वा रसभावज्ञास्तौर्यत्रितयकोविदाः ॥ असद्वादनिषेद्धारश्चतुरा मत्सरच्छिदः। अमन्दरसनिष्यन्दहृदया भूषणोज्ज्वलाः ॥ सुवेषा भोगिनो नानाभाषावादविशारदाः। स्वस्वोचितस्थानसुस्थास्तत्प्रशंसापरायणाः ॥' इति अथेत्यनन्तरमेव वक्ष्यमाणग्रीष्मसमयोपलक्षणम्। कालिदासेति कविप्रशंसा। जगद्विलक्षणस्याप्रतीतस्य नामान्तरेण सरस्वतीवत्पुरुषस्तस्य नामसङ्कीर्तनमेव स्तुतिः अभिज्ञानशाकुन्तलेति स्वरूपत

नटी—[1]सुविहिदप्पओअदाए अय्यस्स ण किं वि परिहाविस्सदि ॥

1. सुविहितप्रयोगतयाऽऽर्यस्य न किमपि परिहापयिष्यति ॥

तु वि.त्सोर्वशीयम् ॥ भरतमुनिशापजनित भूलोकवासस्य कविपरिकल्पितत्वादूर्वश्याः ॥ ननु सर्वथा इतिहासप्रसिद्धमेव वस्तु नाटकादिषु निबन्धनीयम् ॥ मिश्रत्वकल्पना कथं इति चेत् न तदुक्तम् ध्वनिकृता—"इतिवृत्तवशायातां त्यक्त्वाननुगुणां स्थितिं । उत्प्रेक्ष्याप्यन्तराभीष्टरसोचितकथोन्नयः" विधेय इति ॥ तत्रेतिवृत्ते यदि रसाऽननुगुणां स्थितिं पश्येत्तां भङ्क्त्वापि सत्कविः स्वतन्त्रतया रसानुगुणं कथान्तरमुत्पादयेत् ॥ न हि कवेरितिवृत्तमात्रनिर्वहणेन किञ्चित्प्रयोजनम् ॥ इतिहासादेव तत्सिद्धेः । कविना प्रबन्धमुपनिबध्नता सर्वात्मना रसपरतन्त्रेण भवितव्यम् ॥ श्रोतॄणां व्युत्पत्तिः प्रीतिश्च यद्यपि स्तः तथापि रसपरवशतया प्रीतिरेव प्रधानम् ॥ अन्यथा प्रभुसम्मितेभ्यो वेदेभ्यो मित्रसम्मितेभ्यश्चेतिहासादिभ्यो व्युत्पत्तिहेतुभ्यः कोऽस्य काव्यस्वरूपस्य व्युत्पत्तिहेतोर्विशेषः? जायासम्मितत्वलक्षणो विशेष इति तु प्राधान्येनानन्द एवोक्तः ॥ एवमाधिकारिकं त्रिविधम् ॥ प्रासङ्गिकमप्येवमेव त्रिविधम् ॥ एवंविधवस्तुनः फलं पुरुषार्थः ॥ तदेव कार्यमित्युच्यते ॥ तदपि प्रत्येकं वा फलं ॥ धर्मार्थविशिष्टो वा कामः । धर्मविशिष्टोऽर्थविशिष्टो वा ॥ तथाचोक्तम्—"कार्यं त्रिवर्गस्तच्छुद्धमेकमेवानुबन्धि वा" इति ॥

**तदित्यादि ॥** यस्मात्कारणात्परिषदभिरूपभूयिष्ठा ॥ नाटकं चापूर्वं कालिदासग्रथितवस्तु च तस्मादित्यर्थः ॥ प्रतिपात्रमित्यादि—पात्रे पात्रे * "अव्ययंविभक्ति" इत्यादिना वीप्सायामव्ययीभावः ॥ पात्रलक्षणमुच्यते-तन्वी रूपवती श्यामा पीनोन्नतपयोधरा । प्रगल्भा सरसा चित्रा कुशला ग्रहमोक्षयोः । चारीताललयाभिज्ञा मण्डलादिविचक्षणा । नातिस्थूला नातिकृशा नात्युच्चा नातिवामना । सुदीर्घलोचना गीतवाद्यतालानुवर्तिनी । परार्घ्यभूषासम्पन्ना प्रसन्नमुखपङ्कजा । भावहावविलासाढ्या नर्तकी स्याज्जितश्रमा । नर्तकीं पात्रमित्याहुर्गुणाधारतया बुधाः" इति ॥ आधीयतां निधीयतां यत्नः सावधानता ॥

**सुविहितेत्यादि ॥** प्रयुज्यत इति प्रयोगस्तथाविधं वस्तु ॥ तस्य सुविहितत्वं सम्यक्त्वं ॥ सम्यक्करणं नालोचितस्वीकारोऽनुचितपरित्यागः प्रयोगयोग्यतया रचना ॥ तदुक्तं—"यदत्रानुचितं किञ्चिन्नायकस्य रसस्य वा । विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत् ॥ इति ॥ यथा । उन्मत्तराघवे छद्मना वालिवधः परित्यक्तः । यथा महावीरचरिते

एवेतिवृत्तं रमणीयमित्यर्थः । तद्ग्रथितवस्तुनेति नवेनेति च रूपकप्रशंसा । उक्तं च भावप्रकाशिकायाम्—'इत्थं रङ्गविधानस्य सम्बन्धादिप्रसिद्धये । गोत्रं नाम च बध्नीयात्पूजावाक्यं सभासदाम् ॥ वाञ्छाकलापः प्रथमं कलाविधिरनन्तरः । वाञ्छाशून्या न दृश्यन्ते व्यवहाराः कथञ्चन ॥ वाञ्छाकलापस्तु कवेरभीष्टार्थप्रकाशनम् । स्वाभिधेयगतत्वेन सा द्विधा परिपठ्यते ॥ स्वगतं तु स्वगोत्रादिस्वीयकीर्तिप्रकाशनम् । अभिधेयगतं यत्तत्काव्यनाम्नाप्रकाशनम् ॥' इति । दशरूपकेषु केन रूपकेणेत्याशङ्कायामाह— **नाटकेनेति ।** तल्लक्षणमुक्तं **मातृगुप्ताचार्यैः**—'प्रख्यातवस्तुविषयं धीरोदात्तादिनायकम् । राजर्षिवंशचरितं तथा दिव्याश्रयान्वितम् ॥ युक्तं वृद्धिविलासाद्यैर्गुणैर्नानाविभूतिभिः । शृङ्गार-

वालिसौहृदेन रावणस्य रामो वधार्थमागत इत्यन्यथाकृतः ॥ उचितकरणानुचितपरित्यागवत्तया आर्यस्य सूत्रधारस्य किमपि न परिहापयिष्यति ॥ प्रयोगनिबन्धनहानिं न कारयिष्यतीत्यर्थः ॥ अनेन नाटकनिबद्धवस्तुमाहात्म्यादनौचित्यादिकमज्ञेनाप्यभिनये क्रियमाणे न भवतीति व्यज्यते ॥ यद्वा प्रयोगस्य सुविहितत्वं नाम प्रस्तावनामारभ्य भरतवाक्यावधिविच्छेदराहित्येन धाराधिरूढं प्रतीयमानस्य नायिकानायकानुरागरूपश्रृङ्गारस्य तदुद्वेगकारिमिथोविरोधी बीभत्साद्भुतादीनामपरिपोषणं ॥ तदुक्तं श्रृङ्गारतिलके—"श्रृङ्गारबीभत्सरसौ तथा वीरभयानकौ । रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः" इति ॥ प्रधानभूतश्रृङ्गारस्य यावान्परिपोषस्तदङ्गभूतानामद्भुतादीनां तावान्परिपोषो न कर्तव्य इत्यर्थः ॥ उत्कर्षसाम्येऽपि विरोधित्वप्रसङ्गात् ॥ यद्वा । प्रयुज्यत इति प्रयोगः ॥ रसभावनेतृनायिकादयः ॥ तेषां सुविहितत्वं भिन्नवेषभाषाक्रियाभिर्यथौचित्यं करणं ॥ तदुक्तं—"वेषभाषाक्रिया भिन्नतत्तद्व्यक्त्युचितान् क्रमान् । रसानुरूपं जानंति नाटकेन सचेतसः" लोके हि रसानामालम्बनभूतनायका उदात्ता उद्धता ललिताश्शांताश्चेति । दक्षिणाः अनुकूलाश्शठाः धृष्टाश्चेति । उत्तमाः मध्यमा अधमाश्चेति प्रतिरसं भिद्यन्ते ॥ नायिकाश्च ऊढाः कन्यास्साधारणाश्चेति । मुग्धाः मध्याः प्रगल्भाश्चेति । स्वाधीनपतिकाः वासकसज्जिकाः कलहान्तरिताः विप्रलब्धा प्रोषितपतिकाः अभिसारिकाश्चेति बहुधा भिद्यन्ते ॥ तेषां वेषा भाषाः क्रियाश्च भिन्ना भवन्ति ॥ नाटकेषु कविभिस्तेषां यथौचित्यमुपनिबन्धे सहृदयहृदयचमत्कारकारी रसपरिपोषस्समुन्मिषति ॥ नायकादेर्वेषभाषाक्रियादीनामयथोपनिबन्धे काव्यमेव रसभङ्गाय परिणमति ॥ तदुक्तं ध्वनिकृता—"अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् । प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा" इति ॥ उपनिषत् रहस्यमित्यर्थः ॥ तर्हि लोकसिद्धमेव रसपरिपोषकृदौचित्यं लोकादेव ज्ञायतां किमनेन काव्येन? इत्याशङ्क्याह—"न किंचिदप्यनौचित्यं नाट्यं सोढुं प्रगल्भते । तस्मादौचित्यवत्काव्यं तद्वेदयति धीमतां" ॥ वेदयति स्वामिनां वेष ईदृशः ॥ भाषाईदृशी क्रियाश्चेदृश्यः भृत्यानां पुनरेवं वेषः । एवं भाषा । एवं क्रियाश्चेति प्रतिव्यक्तिभिन्नं स्वरूपं प्रकाशयतीति ॥ अतएवोक्तं—प्रयोगस्य सुविहितत्वं ॥ प्रकृतनाटकस्य तद्वत्तयार्यस्य सूत्रधारस्य तत्प्रधानत्वादन्येषां पात्रवर्गाणां प्रधानफलसम्बन्धस्य युक्तत्वात्किमपि न परिहापयिष्यति ॥ परितस्सर्वविषये अनौचित्यादिरूपहानिर्न भविष्यतीत्यर्थः ॥ अनेन वस्तुस्तव उक्तः ॥ अस्मिन्वाक्येऽन्योऽप्यर्थो युज्यते ॥ नाटकादौ निखिलवाक्यानां प्रकृतपर्यवसायीकर्तव्यत्वात् ॥ तथा हि—आर्यस्य दुष्यंतस्य सुविहितप्रयोगतया प्रयुक्तिः प्रयोगः ॥ क्रिया गान्धर्वविवाहः ॥ तस्य सुविहितत्वं शास्त्रीयत्वं ॥ तद्वत्तया किमपि कण्वाद्यसम्मत्यादिकं न परिहापयिष्यति हानिं न कारयिष्यति ॥ गान्धर्वविवाहस्य शास्त्रीयत्वादिति शब्दशक्तिमहिम्ना सूच्यते ॥

---

वीरान्यतरप्रधानरससंश्रयम् ॥ प्रकृत्यवस्थासन्ध्यङ्गसन्ध्यन्तरविभूषणैः । पताकास्थानकैर्वृत्तं पतङ्गैश्च प्रवृत्तिभिः ॥ नाट्यालङ्करणैर्नानाभाषायुक्पात्रसञ्चयैः । अङ्कप्रवेशकैराढ्यं रसभावसमुज्ज्वलम् ॥ सुखदुःखोत्पत्तिकृतं चरितं यत्र भूभृताम् । इतिवृत्तं कथोद्भूतं किञ्चिदुत्पाद्यवस्तु च ॥ नाटकं नाम तज्ज्ञेयं रूपकं नाट्यवेदिभिः ॥' इति । सुविहिदप्पओअदाए सुविहितप्रयोगतयार्यस्य न किमपि परिहाइस्सदि परिहास्यते । आर्यस्य सुविहितप्रयोगतया सुशिक्षिताभिनयप्रयोगतया न किमपि परिहास्यते परिहीनं भविष्यतीति नटस्तुतिः । भूतार्थं सत्यार्थम् । 'भूतं क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयोः' इति विश्वः ॥

**सूत्रधारः**—[1]आर्ये! कथयामि ते भूतार्थम्

आ परितोषाद्विदुषां
न साधु मन्ये प्रयोगविज्ञानम् ।

---

अस्मिन्वाक्ये शब्दशक्तेरनेकार्थयोजनात्त्रिगतं नाम वीथ्यंगमुक्तम् ॥ तदुक्तं दशरूपके—"शब्दशक्तेरनेकार्थयोजनं त्रिगतं त्विह । नटादित्रितयालापपूर्वरङ्गे तदिष्यते" इति ॥ एतन्नटीवाक्यस्थ शब्दशक्तेरनेकार्थयोजनं त्रिगतं भवति ॥ वीथ्यंगान्युच्यन्ते—"उद्घात्यकावलिगिते प्रपञ्चत्रिगते छलम् । वाकेल्यधिबले गण्डमवस्यंदितनालिके । असत्प्रलापव्याहारो मृदवानि त्रयोदश" इति ॥

सुविहिदेत्यादिना नव्या प्रयोगस्तवे कृते नटः स्वस्यानौद्धत्यं प्रकाशयन्नाह—आर्ये कथयामीत्यादिना ॥ भूतार्थं ॥ सत्यार्थं "युक्ते क्ष्मादावृते भूते सत्यम्" इत्यमरः ॥

**आपरितोषादिति** ॥ विदुषां प्राज्ञानां निरुपपदेन सर्वज्ञता सूच्यते ॥ न तु पामराणामित्यर्थः ॥ "विनोदविंदुर्विन्दुश्च विद्वान् प्राज्ञः प्रवादुकः ॥" इत्यजयः ॥ विदुषामित्यनेन बहवः पामरप्रभृतयस्तु वाच्यमर्थमनायासादप्यवबुध्यन्ते ॥ व्यंग्यार्थसंवेदनवैदग्ध्ये तु कतिचिदेवाधिकारिण इति ध्वन्यते ॥ वाच्यार्थावगमे शब्दानुशासनवैशेषिकादिज्ञानमात्रमुपयोगि ॥ व्यंग्योपलम्भे तु प्रकरणादिसहकृतं यत्प्रतिभाया नैर्मल्यमप्युत्पत्तिकलंकशून्यत्वं । तदाधिक्येन भाव्यम् ॥ अत एवोक्तं परिच्छिद्य विदुषामिति ॥ आ परितोषात् परितोषावधि ॥ प्रयोगविज्ञानं प्रयोगविशेषजन्यसुज्ञानं साधु रम्यं ज्ञानं प्रमेत्यर्थः । "साधु त्रिषु हिते रम्ये सज्जने वार्धुषौ पुमा"निति वैजयन्ती ॥ न मन्ये न बुध्य इत्युत्प्रेक्षा ॥ उक्तं च दण्डिना—"शङ्के मन्ये ध्रुवं प्रायो नूनमित्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिव शब्दोऽपि तादश" इति ॥ विद्वत्सम्मत्यवधि साधोरपि प्रयोगस्य साधुत्वं न निश्चीयत इत्यर्थः ॥ तथैवाह—बलवदित्यादिना ॥ बलवच्छिक्षितानामपीति ॥ शिक्षाया बलवत्त्वं नाम तस्या वेदशास्त्रविषयतासम्प्रदायो बहुधाभ्यासः ॥ शास्त्रार्थतत्त्वविदां तादशानामपीत्यर्थः ॥ चेतः मनः ॥ आत्मनि स्वरूपे ॥ अप्रत्ययमस्वाधीनम् ॥ अविश्वासग्रस्तमित्यर्थः ॥ स्वविद्यावैशद्ये बुधजनसम्मतिं विना विश्वासो न विधेय इत्यभिप्रायः ॥ अत्र विदुषामिति निरुपपदेन सकलशास्त्रवत्तया सभ्यस्तवः कृतः ॥ प्रयोगविज्ञानशब्देन प्रयोगविशेषज्ञानवाचिना वस्तुस्तवउक्तः ॥ केचिदेवमपि योजयन्ति ॥ उपसर्गादियोजनाभेदेन प्रकृतोपयोगितया यद्वाच्यार्थस्य वैचित्र्यं तदपि व्यंग्येन सह समशीलतामारोहति ॥ तथा हि । विदुषां बुधानामापरितोषात् । आङीषदर्थेऽभिव्याप्तावित्युक्तत्वादापरितोषः स्फुटपरितोषः ॥ तस्मात्तमुद्दिश्य ॥ ल्यब्लोपे पञ्चमी ॥ अभिव्याप्तिः क्रोडीकारः ॥ विद्वज्जनबहुपरितोषमुद्दिश्येत्यर्थः ॥ प्रयोगविज्ञानं प्रयोगविशेषज्ञानम् ॥ साधु सुष्ठु न मन्य इति काकु-

---

**आ परीति** ॥ विदुषां परितोषादापरितोषं मर्यादीकृत्य । यावत्परितोषो भवतीत्यर्थः । 'आङ् मर्यादावचने' इति कर्मप्रवचनीयत्वे 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी । प्रयोगस्य चतुर्धाभिनयप्रयोगस्य विशिष्टं ज्ञानं साधु सम्यङ् न मन्ये । ज्ञान-

बलवदपि शिक्षितानाSANSKRIT-
मात्मन्यप्रत्ययं चेतः ॥ २

प्रश्ने ॥ किन्तु साधु तर्कयामीत्यर्थः ॥ प्रबन्धस्य निरवद्यतया प्रयोगविशेषज्ञानस्य प्रमात्वाद्बुधजनपरितोषसम्पादननिमित्तं न तर्कयामीत्यर्थः ॥ किन्तु कुकविप्रबन्धप्रयोगस्यैव विदुषां परीक्षापरितोषाभ्यां भाव्यमित्यभिप्रायः ॥ * कलौ ल्य इति धातोः काकुशब्दः प्रसिद्धः ॥ प्रकृतादर्थादर्थांतरे शब्दस्य चलस्वभावत्वात् ॥ अतएव न मन्य इत्यत्र काका तर्कयामीत्यर्थांतरम् ॥ केचिदेवं वदन्ति—ईषदर्थे कुशब्दः ॥ तस्य कादेशः कुर्भूमिः हृदयस्थवस्तुप्रतीतेरीषद्भूमिः काकुरिति यावत् ॥ प्रयोगविशेषज्ञानस्य साधुत्वे हेतुमाह—बलवच्छिक्षितानामिति । बलवद्दृढं वामनाद्युक्तप्रकारेण शिक्षितानां कवीनां नटादीनामिवेति शेषः ॥ तदुक्तं प्राधान्यं द्विविधं शाब्दमार्थंच ॥ तत्र विशेषणस्य शाब्दे गुणभावेऽप्यर्थः प्रधानम् ॥ तथा विशेष्यस्य शाब्दे प्राधान्येप्यर्थे गुणीभावः उत्कर्षापकर्षतया विधीयमानत्वादनूद्यमानत्वाच्च ये बलवच्छिक्षितास्तेषामित्यर्थः ॥ चेतः मनः ॥ आत्मन्यप्रत्ययम् ॥ अपीति प्रश्ने ? अप्रत्ययं न भवति किन्तु बलवच्छिक्षाविरहितानामेव चेतः दोलायमानमविश्वासग्रस्तमित्यर्थः ॥ " गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि " इत्यमरः ॥ अनेन स्वस्य शिक्षाबाहुल्यात्स्वप्रणीतप्रबन्धस्य निरवद्यता कविना सूच्यते ॥ अन्ये त्वेवमपि योजयन्ति ॥ विदुषां सहृदयानामापरितोषादीषत्परितोषमुद्दिश्य इतरप्रबन्धसाधारणबहुमतिं न्यूनबहुमतिं वा उद्दिश्येत्यर्थः ॥ प्रयोगविज्ञानं साधु न मन्ये ॥ किंत्वन्यथा प्रबन्धस्य लोकोत्तरचमत्कारकारित्वादितरप्रबन्धविलक्षणविद्वज्जनविशेषपरितोषमुद्दिश्यैवायं ग्रंथनिर्माणप्रयास इत्यर्थः ॥ सन्निबन्धकरणस्य सहृदयप्रीतेरेव पुरुषार्थत्वाद्विद्वज्जनबहुपरितोषमुद्दिश्य साध्वेव मन्य इत्यर्थः ॥ तदेवाह—बलवदित्यादिना ॥ शिक्षितानां गुरुकुलक्लिष्टानां बलवच्चेतः नानाप्रकारेण विस्रब्धं मनः आत्मनि अप्रत्ययमपीत्याक्षेपपरिप्रश्ने ॥ अप्रत्ययं न भवति ॥ किन्तु बहुधाभ्याससम्प्रदायादिशुद्धिमत्तया निश्शंकमेवेति यावत् ॥ वामनाद्युक्तशिक्षाप्रकारः कवेः कथ्यते—
" काव्यं कर्तुं विवेक्तुं च ये जानन्ति त एव हि । काव्यज्ञास्तैस्तदभ्यस्येदुपदिष्टेन वर्त्मना ॥"

मात्रं न साधु मन्ये, एवं विशिष्टमपि ज्ञानं न साधु मन्ये । आत्मन इत्यार्थम् । नव्याः 'अज्ञस्य' इत्युक्तेः । अन्यथा वक्ष्यमाणव्यङ्ग्यावकाशोऽपि न स्यात् । असत्यार्थे तस्मिन्विशेषे वक्तव्ये सामान्यमुक्तमित्यप्रस्तुतप्रशंसा स्यात् । तस्यां च सामान्यस्य समर्थकत्वं न घटते । न च 'मोक्षे धीर्ज्ञानमन्यत्र विज्ञानम्' इत्युक्तेर्विज्ञानशब्द एव तत्र शक्त इति वाच्यम् । प्रयोगपदवैयर्थ्यापातात् । अनेन विद्वत्परीक्षणीयं मम प्रयोगविज्ञानमिति व्यज्यते । पर्यायोक्तालङ्कारः । तल्लक्षणमुक्तं भामहेन—'पर्यायोक्तं प्रकारेण यदन्येनाभिधीयते । वाच्यवाचकशक्तिभ्यां शून्येनावगमात्मना ॥' इति । उदाहृतं च हयग्रीववधस्थं पद्यम्—'यं प्रेक्ष्य चिररूढापि निवासप्रीतिरुज्झिता । मदेनैरावणमुखे मानेन हृदये हरेः ॥' इति । अत्रैरावणशक्रौ मदमानमुक्तौ जाताविति व्यङ्ग्यमपि वाच्यायमानमेव । एवं प्रकृतेऽपि योज्यम् । तत्समर्थकमाह—बलवदिति । बलवदधिक-

तेषामुपदेशक्रमः वामनादिभिरुक्तः—"आधानोद्धरणेतावद्यावद्दोलायतेमरः । पदानां स्थापिते स्थैर्ये हन्त सिद्धा सरस्वती ॥ यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम् । तं शब्दपाकनिष्णाताः शब्दपाकं प्रचक्षते ॥ वाच्यानां वाचकानां च यदौचित्येन योजकं । रसादिविषयेणैतत्कर्म मुख्यं महाकवेः" इत्युक्तनयेन प्रतिपादितम् ॥ काव्यज्ञैरभ्यासं निगमयति—"उपदिष्टेन काव्यज्ञैरेवंरूपेण वर्त्मना । मुहुर्मुहुस्समभ्यस्येत्तैस्समं काव्यनिर्मितिम् ॥" वामनाद्युक्तप्रकारेण विविक्तदेशापररात्ररूपकालादियुक्तिमता च काव्यज्ञैरुपदिष्टेन मार्गेण तैस्सममेव काव्यनिर्माणकर्म मुहुर्मुहुरभ्यसेच्छब्दपाकार्थपदानामाधानोद्धरणस्थिरीकरणादिसिद्ध्यर्थं रसादिविषयेणेति आदिशब्देन शृङ्गारादिरसनिर्वेदादिभावमाधुर्यादिगुणग्राम्यस्पर्शराहित्यरूपौचित्यमसृणौद्धत्यादिघटनानुप्रासोपमाद्यलङ्कारभावोदयभावसन्धिभावशान्तिभावशबलतादिविषयेणौचित्येन वाच्यवाचकयोर्योजनार्थं मुहुर्मुहुरभ्यास इत्यर्थः ॥ काव्यकर्मणि कारणभूतशक्तिव्युत्पत्तिमान्कविरेव काव्यज्ञशिक्षाभ्यासात्काव्यकर्मणि परां प्रौढिमाढौकत इति प्राक्तनैः प्रतिपादितम् ॥ अत एव शिक्षितानामित्युक्तम् ॥ अत्र कविना बलवच्छिक्षितानामपीत्यनेन शिक्षाबाहुल्यात्स्वकृतेः सन्निबन्धत्वं सूच्यते ॥ तेन च शिक्षाहीनशक्तिव्युत्पत्तिशून्यकुकविविडम्बनं च सूच्यते ॥ तदुक्तं—"काव्यं सद्दृष्टादृष्टार्थं प्रीतिकीर्तिहेतुत्वादिति क्रमे । प्रतिष्ठां काव्यबन्धस्य यशसस्सरणिं विदुः ॥ अकीर्तिवर्तिनीं चैव कुकवित्वविडम्बनां । कीर्तिं स्वर्गफलामाहुरासंसारं विपश्चितः । अकीर्तिं च निरालोकनरकादेशदूतिकाम् ॥" इति ॥ अत्र श्लोके काव्यार्थोऽपि किञ्चिद्द्योत्यते ॥ तथा हि—दुष्यन्तविहितगान्धर्वविवाहो यद्यपि शास्त्रीयस्तथापि कण्वमुन्यभ्यनुज्ञावधि तस्य साधुतामनिश्चिन्वन् दुष्यन्तः शकुन्तलां स्वनगरमनीत्वा कण्वाश्रमे स्थापयामासेति शब्दशक्तिमहिम्ना द्योत्यते ॥ तथा हि—विदुषां शास्त्रार्थतत्त्वविदां दुष्यन्तादिनृपाणां प्रयोगविज्ञानं प्रयुक्तिः प्रयोगः गान्धर्वविवाहः तदाचरणं तद्विषयं ज्ञानं आपरितोषात्कण्वपरितोषावधि साधु न मन्ये हितं न विचारयामि ॥ अन्यत्सर्वं पूर्ववत् ॥ एतन्नटवाक्यस्थशब्दशक्तेरनेकार्थयोजनं विगतमित्यवगन्तव्यम् ॥

---

मपि । 'बलवत्सुष्ठु किमुत स्वल्यतीव च निर्भरे' इत्यमरः । शिक्षितानां पुरुषाणाम् । विशेषणादेव विशेष्यप्रतिपत्तेर्विशेष्यानुपादानम् । तथा च वामनः—'विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ' इति चेत् आत्मनि स्वविषयेऽप्रत्ययमविश्वासि । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । 'क्व नासि शुभप्रदः' इतिवद्धिशब्दानुपादानेऽप्यर्थमर्थान्तरन्यासः । सामान्यस्य समर्थकत्वात् । श्रुत्यनुप्रासश्च । विश्वासस्य चेतोधर्मत्वेनार्थपौनरुक्त्यम् । विश्वासाभावस्य विधेयत्वादविमृष्टविधेयांशता च । एतद्दोषपरिहाराय 'स्वस्मिन्प्रत्येति नो चेतः' इति पठनीयम् । आर्ये । इयमपि नटस्तुतिरेव । एवं णेदं एवमेव तत् । 'शौरसेन्याम्' इत्यनुवृत्तौ 'मोऽन्त्याण्णो वेदेतोः' इति णकारागमः ।

**नटी**—[1]§एव्वं एदं । अणं(त)दरकरणिज्जं दाव अज्जो आणवेदु ॥

**सूत्रधारः**—किमन्यदस्याः (परिषदः) श्रुतिप्रसादनतः ? ॥

**नटी**—[2]अज्ज । कदमं उण उदुं अधिकरिअ गाइस्सं ? ॥

**सूत्रधारः**—नन्विम (तदिद) मेव नाति (तावद) चिरप्रवृत्तमुपभोगक्षमं ग्रीष्मर्तुमधिकृत्य गीयतां तावत् ॥ सम्प्रति हि—

---

1 एवमेतत् अनंतरकरणीयं तावदार्य आज्ञापयतु ॥

2 आर्य, कतमं पुनः ऋतुमधिकृत्य गास्यामि ?

---

**एव्वमित्यादि ॥** एतदिति ॥ बलवच्छिक्षितानामपि चेतः बुधजनपरितोषावधिआत्मन्यप्रत्ययमिति यदुक्तं । तदेतदित्यर्थः ॥ एवमित्यङ्गीकारार्थे नाट्योक्तिः ॥ एवस्य एव्वेति शौरसेनीभाषायां निपातः ॥ अनन्तरकरणीयं रङ्गस्थले कर्तव्यप्रत्याहारादिभिर्लोकपालादिपूजाकरणादनन्तरकरणीयमित्यर्थः ॥ तावत् क्रमेण ॥

**किमन्यदित्यादि ॥** अस्याः परिषदः श्रुतिप्रसादनतः श्रवणेन्द्रियतर्पणतः अन्यदनन्तरकरणीयं किमिति क्षेपे ॥ गानश्रवणादन्यदनन्तरकरणीयं नास्तीत्यर्थः ॥ "किं वितर्के परिप्रश्ने क्षेपे निन्दापराधयोः" इति विश्वः ॥

**अज्ज कदममिति ॥** "रङ्गं प्रसाद्य मधुरैश्श्लोकैः काव्यार्थसूचकैः । ऋतुं कञ्चिदुपादद्याद्भारतीं वृत्तिमाश्रय" न्निति वचनार्थमभिसन्धाय नटी पृच्छति ॥

**नन्वित्यादि ॥** नन्विति सुकुमारामन्त्रणे ॥ नातिचिरप्रवृत्तमिति ग्रीष्मस्य नारम्भः ॥ नापि परिणतिः ॥ किन्तु परिपोषदशैवोक्ता ॥ आरम्भे वसन्तधर्माणां सङ्करः ॥ परिणतौ वर्षर्तुधर्माणामुपक्रमावस्था ॥ तदा ग्रीष्मधर्माः साङ्कर्येण स्फुटं न ज्ञायन्त इति परिपोषदशैवोक्ता ॥ अतएवोपभोगक्षममित्युक्तम् ॥ उपभोगस्य जलक्रीडाङ्गलेपनोद्यानविहरणादेः क्षमं हितं योग्यमिति यावत् ॥ "क्षमं शक्ते हिते त्रिषु" इत्यमरः ॥

---

अनन्तरकरणीयमार्य आज्ञापयतु । अस्याः परिषदः सभायाः । तात्स्थ्यात्तत्रत्यानां सामाजिकानां श्रुतिप्रसादनतः श्रवणप्रसादादन्यत्किं करणीयमित्यनुषज्यते । 'ऋतुं कञ्चिदुपादाय' इत्युक्तेस्तमुपादत्ते ॥ **तदिदमिति ॥** तत्तस्मात्कारणाच्छ्रुतिप्रसादननिमित्तं गीयतामिति सम्बन्धः । अचिरप्रवृत्तमित्यनेन तदुत्पन्नपुष्पादेः सौरभ्याद्यतिशयो व्यज्यते । उपभोगाय चन्दनाद्युपभोगाय क्षमः समर्थस्तम् । अनेन स्वस्य श्रमापनोदोपायबाहुल्यसूचनम् । सम्प्रति ग्रीष्मे । हि यस्मात् । अस्य श्लोकेनान्वयः ॥

---

§ अज्ज एवं णेदं
आर्य एवमेतत्

ग्रीष्मपरिपोष एव जलक्रीडानुलेपनकुसुमधारणादीनामभ्यर्हितत्वादुपभोगक्षममित्युक्तम् ॥ ग्रीष्मर्तुमुद्दिश्याधिकृत्य गीयतां सिंहमृगभृङ्गरथशकटगतिपञ्चककंचुकितस्य गीतस्य दुरधिगमत्वात्सावधानं गानं क्रियतामिति शिक्षायां लोट् तावच्छन्दः क्रमार्थकः ॥ पार्श्ववर्तिवाद्यवंशादेस्तालकालानुगुणं क्रमेण गीयतामित्यर्थः ॥ अनेन ऋतूपवर्णनकथनेन गानश्रवणमेवानन्तरकरणीयमिति बोधितं भवति ॥ अत्र समयान्तरेषु सत्सु ग्रीष्मर्तूपादानं प्रकृतनाटकस्य श्रृङ्गाराङ्गिकत्वात् ॥ तदुक्तं—"शरत्सङ्ग्रामसमये विवाहे ग्रीष्ममाधवे" इति ॥ अत्र शकुन्तलादुष्यन्तयोर्विवाहरूपश्रृङ्गारस्योक्तत्वाद्ग्रीष्मर्तूपादानं कृतम् ॥ ननु रसान्तरेषु बहुषु प्राप्तपरिपोषेषु जाग्रत्सु कथमेकस्याङ्गित्वमिति चेन्न ॥ तदुक्तं ध्वनिकृता—"प्रसिद्धेऽपि प्रबन्धानां नानारसनिबन्धने । एको रसोऽङ्गीकर्तव्यस्तेषामुत्कर्षमिच्छता" इति ॥ तथाहि—"बीभत्स भयानकयोः प्रतिनायकाश्रितत्वेन वर्णनीयत्वात् । हास्यरौद्रकरुणाद्भुतानां महाप्रबन्धरसत्वे चमत्काराभावाच्छान्तस्य निर्विकारत्वेन नाटकरसत्वाभावाच्च श्रृङ्गारस्यैवाङ्गित्वं युज्यते ॥ ननु । 'एको रसो भवेदङ्गी वीरश्रृङ्गारयोर्द्वयोः' इत्युक्तत्वाद्वीररसस्यैवाङ्गित्वं भवेदिति चेन्न ॥ श्रृङ्गारस्य हि सर्वसंसारिणां नियमेनानुभवविषयत्वात्सर्वरसेभ्यः कमनीयतया च प्राधान्यम् ॥ एवं च सति विनेयानुन्मुखीकर्तुं काव्यशोभार्थमेव वा क्रियते तदुक्तं ध्वनिकृता—"श्रृङ्गारादिरसैरुन्मुखीकृताः संतो हि विनेयास्सुखं विनेयोपदेशान्गृह्णन्ति ॥ सदाचारोपदेशरूपाभिनयनाटकादिगोष्ठीविनेयजनहितार्थमेव मुनिभिरवतारिता ॥ किञ्च । श्रृङ्गारस्य सकलजनमनोभिरामत्वात्तदङ्गिसमावेशः काव्ये शोभातिशयं पुष्णा" तीति श्रृङ्गारस्यैव प्राधान्यं विवक्षितं ॥ एतादृशश्रृङ्गाररसानुभवस्य प्रयोजनमाह—"स्वादं स्वादं रसं गाढं गाढं गाढं निमज्जिताः । परब्रह्मरसास्वादनित्यसब्रह्मचारिणि ॥ रसे निमग्ना रसिका न किञ्चिज्जानते परं । वेदितव्यान्यसंवित्तिर्नास्तीत्यत्र किमद्भुतम् ॥ स्वात्मावबोधोऽपि पुनर्नेष्यते मज्जतां रसे ॥" एवं प्रतिपादितं श्रृङ्गाररसस्य परब्रह्मरसास्वादेन साधर्म्यं व्यतिरेकेण निराकरोति—"वेदितव्यानामन्येषां वस्तुनामसंवेदनमत्र श्रृङ्गाररसे नास्तीति नाश्चर्यम् ॥ श्रृङ्गाररसे निमज्जतां सहृदयानां स्वात्मावबोधो न लक्ष्यते" इति यस्मात्तस्मात्स्वात्मावबोधलक्षणात्परब्रह्मरसास्वादाच्छृङ्गारस्याधिक्यप्रतिपादनाद्व्यतिरेकः ॥ सर्वत्र शब्दशक्तिमूलव्यक्तीनां जलभरभरितसरस्सलिलमग्नतृषितजनधर्माणामुपमानत्वमपि गर्हितम् ॥ स्वात्मावबोधस्यापि तृषितजनेषु विद्यमानत्वात् ॥ परब्रह्मरसास्वादविलक्षणत्वहेतुभूतस्वात्मावबोधत्वलक्षणसमर्थनपुरस्सरं लौकिकश्रृङ्गारादिरसानुभोगवतामप्यलौकिकत्वं प्रतिपादयति—" स्वात्मभावं परित्यज्य भावमन्यमधिश्रिताः । तदीयानखिलान्भोगान्विदग्धा भुञ्जते स्वकान् ॥" लौकिकास्तावत्परित्यक्तात्मभावाः परभावमनाश्रयन्तश्च स्वकीयानेव भोगान्भुञ्जते ॥ न तु परकीयान् ॥ विदग्धाः पुनः योगिन इव परिमितं स्वाकारमुत्सृज्य नाटकगततत्तद्रसाधारभूतनायकस्वरूपमास्थाय तत्सम्बन्धिनो भोगानशेषान्स्वसम्बन्धिन एव मन्वाना भुञ्जते ॥ * "रसो वै स" इति श्रुतेः ॥ रामादिगतसकलभोगानुभवसमये रसिकानां रामादित्वमेव ॥ न स्वात्मावबोधः ॥ अत एव महाकविप्रणीतेषु रसमास्वादयतां रसिकानां तत्तन्नायकत्वसमावेशात्तत्तद्भोगापत्तिर्भवतीत्यर्थः ॥

सुभगसलिलावगाहाः
पाटलसंसर्गसुरभिवनवाताः ।
प्रच्छायसुलभनिद्राः
दिवसाः परिणामरमणीयाः ॥ ३

---

सुभगेत्यादि ॥ सुभगाः रम्याः । सलिलावगाहाः जलप्रवेशाः जलक्रीडा इत्यर्थः ॥ येषु दिवसेषु ते तथोक्ताः ॥ अत्र सलिलशब्देन सरिद्वापीतटाकान्युच्यन्ते ॥ तेन पुलिनवेलावेतसगृहादिक्रीडाश्च सूच्यन्ते ॥ शिशिरवर्षादिसमयेषु शैत्यवशाज्जलक्रीडादीनां सुभगत्वं नास्तीति ग्रीष्मसमयस्यैव सुखप्रदत्वात्सुभगेत्युक्तम् ॥ पाटलसंसर्गसुरभिवनवाताः पाटलायाः कुसुमानि पाटलानि "पुष्पमूलेषु बहुळ" मिति बहुळग्रहणाद्विकारावयवविहितस्याणो लुक् ॥ पाटलपदं तु ग्रीष्मर्तुपुष्पितवृक्षलतादेरुपलक्षणम् ॥ ग्रीष्मर्तुसमय एव निखिलवृक्षादीनां पुष्पोत्पत्तेरिति भावः ॥ तत्संसर्गेण सुरभयस्सुगन्धयः वनवाताः मलयमारुता इति यावत् । येषु दिवसेषु ते तथोक्ताः ॥ पाटलपदेनेतरपुष्पविलक्षणपरमोद्दीपकत्वं तस्य सूचितम् ॥ वनपदेन वनेष्वेव ग्रीष्मसमयपुष्पितसकलवृक्षाणां सम्भवः सूचितः॥ अनेन पाटलपुष्पमलयमारुतकथनेन ग्रीष्मस्यासाधारणो गुण उक्तः, तेनेतरर्तुविलक्षणपुष्पमारुतकथनेन ग्रीष्मस्य परमोद्दीपकतया प्रणयकलहादिकुपितानां माननिरसने अमोघत्वं सूच्यते ॥ वनशब्देन विविधक्रीडाया विविक्तस्थलमिति ज्ञाप्यते ॥ तेन निश्शंकं निरर्गळा प्रवृत्तिः क्रीडायां कर्तव्येति ध्वन्यते ॥ वातपदेन विविक्तस्थले विविधक्रीडापरिश्रान्तानामनायासमलयमारुतस्पर्शाद्व्यजनवातनैरपेक्ष्यं व्यज्यते ॥ यद्वा । वनवातशब्देनारण्ये फलमूलादिपरिमिताहारादिक्लिष्टतपस्विनामपि विकारजनकः अन्येषां तत्संसर्गेण मदनाकुलितत्वे का कथेति व्यज्यते ॥ यद्वा । वनशब्देन वृक्षादिसमुदायवाचकत्वेनोद्यानमेवोच्यते ॥ अनेन सौभाग्योपवनवासक्रीडापुष्पापचयकिसलयनिर्मितशय्याकुसुमधारणादीनामभ्यर्हितः

---

सुभगेति ॥ स्वतिशयेन भगो यत्नो येष्वेतादृशाः सलिलावगाहा यत्रेति बहुव्रीहिगर्भो बहुव्रीहिः । 'भगशब्दो यशोज्ञानवीर्ययत्नार्ककीर्तिषु' इति धरणिः । एतेन जलक्रीडायोग्यत्वं ध्वन्यते । पाटलानां पाटलीपुष्पाणां संसर्गः सम्बन्धो येषु ते । 'पुष्पे क्लीबेऽपि पाटला' इत्यमरः । सुरभयो मनोज्ञाः । मनोज्ञत्वं च शीतलत्वेन सुखस्पर्शात् । 'सुगन्धे च मनोज्ञे च सुरभिर्वाच्यवन्मतः' इति विश्वः । एवम्भूता वनवाता येषु ते । वनशब्देन मान्द्यं ध्वनितम् । तेन संसर्गिसुरभिशब्दयोरन्यतरस्यावरकत्वं न शङ्कनीयम् । अनेन वियोगिजनसञ्चरणाक्षमत्वं ध्वन्यते । प्रकृष्टा छाया येषु प्रदेशेषु ते प्रच्छायास्तेषु

समयः इति ध्वन्यते ॥ प्रच्छायसुलभनिद्राः प्रकृष्टा छाया यत्र सौधादौ तत्स्थानं प्रच्छायम् ॥ तत्र सुलभाः शैत्यजनकाङ्गलेपकुसुमधारण मलयमारुतस्पर्शात्सर्वेकरणाना-माह्लादवत्त्वेन सुलभाः अवशेन स्वारसिका इत्यर्थः निद्राः परिश्रमविनोदा येषु ते तथोक्ताः ॥ परिणामरमणीयाः परिणामः उपरम सायङ्कालइत्यर्थः॥ तदा रमणीयाः आतपोपशमात्संचार-योग्यतया रमणीयाः॥ परस्परप्रेमवीक्षणस्वाभिप्रायव्यञ्जकविविधविलासप्रदर्शनदूतीप्रेषणा-दीनामुचितकालतया सुखप्रदा इत्यर्थः ॥ दिवसा इत्यनेन दिवसेष्वेव विहरणानामुचितत्वात्॥ तदुक्तं भावप्रकाशे.—" सरितः पुलिनं वेला कांताराराममभूधराः । लतागृहाणि चित्राणि शय्या किसलयाचिता । दिवा विहारदेशाः स्युः " इत्यादि ॥ अत्र दिवसानामुत्तरोत्त-रमुत्कर्षात्साराल्ङ्कारः । उक्तं च—" उत्तरोत्तरमुत्कर्षः सार " इति ॥ यद्वा ॥ मदनस्यो-द्दीपकः काल उज्जृम्भत इति भंग्यन्तरेणाभिधानात्पर्यायोक्तं वा ॥ अत्र काव्यार्थोऽपि किञ्चिद्द्योत्यते ॥ नातिचिरप्रवृत्तमित्यनेन प्रकृतनायिकाया यौवनदशा सूच्यते ॥ अतएवो-पभोगक्षममित्यनेनोपादेयता ध्वन्यते ॥ ग्रीष्ममित्यनेनातिसन्तापलभ्यत्वं सूच्यते ॥ सलि-लावगाह इत्यनेनांगुलीयकस्याप्सरस्तीर्थपतनं ध्वन्यते ॥ निद्रापदेन दुर्वासश्शापव्यामोहि-तत्वम् ॥ परिणामरमणीया इत्यनेनान्ते मारीचाश्रमे शकुन्तलादुष्यन्तयोः प्राप्तिस्सूच्यते ॥ अत्र कालदेशादीनां यथायोगमुपवर्णनाद्दिष्टं नामालङ्कारः ॥ तदुक्तम् ॥—"यथाकालं यथादेशं यथारूपं च वर्ण्यते । यत्प्रत्यक्षं परोक्षं वा दिष्टं तद्वर्ण्यते बुधैः " इति ॥ किञ्च । अत्र ग्रीष्मदिवसोपयोगिनां सुभगसलिलावगाहादीनामुपादानाद्विशेषणं नामालङ्कारश्च ॥ तदुक्तम्—"सिद्धान्बहून्प्रधानार्थानुक्त्वा यत्र प्रयुज्यते । विशेषयुक्तं वचनं विज्ञेयं तद्विशे-षणम् " इति ॥ प्रधानोपयोगिनां बहुविशेषणानां कथनं विशेषणं भवति ॥ एतावलङ्कारौ षट्त्रिंशदलंकारेषु भवतः ॥ षट्त्रिंशदलङ्कारा निरूप्यन्ते—"भूषणाक्षरसङ्घातौ शोभोदाहरणे तथा । हेतुसंशयदृष्टान्ताः प्राप्त्यभिप्राय एव च । निदर्शनं निरुक्तं च सिद्धं चाथ विशेषणम् ॥ गुणातिपातातिशयौ तुल्यतर्कपदोच्चयः । दिष्टं चैवापदिष्टं च विचारस्तद्विपर्ययः । भ्रंशश्चा-नुशयो माला दाक्षिण्यं गर्हणं तथा । अर्थापत्तिः प्रसिद्धिश्च पृच्छा सारूप्यमेव च । मनोरथश्च लेशश्च क्षोभश्च गुणकीर्तनम् । ज्ञेया ह्यनुक्तसिद्धिश्च प्रियावचनमेव च ॥ " एते नाट्यालङ्कारा उत्तरत्र लक्षणोदाहरणाभ्यां यथासम्भवं प्रदर्श्यन्ते ॥

---

सुलभा निद्रा येषु ते । अमुना रतश्रमहरत्वं ध्वन्यते । परिणामे दिवसावसाने रमणीयाः । सुखसञ्चरणीयाः एतेन शुभायितत्वं द्योत्यते । सर्वैर्विशेषणैः प्रकृतस्वीयपरिश्रमखेदविनोदो ध्वन्यते । परिकरालङ्कारः—'विशेषणसाभिप्रायत्वे परिकरः' इति तल्लक्षणात् । ननु विशे-षणसाभिप्रायत्वे ध्वनिविषयत्वमेव स्यान्न परिकरालङ्कारत्वमिति चेत्' प्रसन्नगम्भीरपदा-रब्धत्वेन प्रतीयमानांशस्य वाच्यमुखप्रेक्षितत्वात्परिकरालङ्कारत्वमेव ध्वनितम् । तथा च गुणीभूतव्यङ्ग्यनिरूपणे ध्वनिकारः—' प्रसन्नगम्भीरपदाः काव्यग्रन्थाः सुखावहाः । ये च तेषु प्रकारोऽयमेवं योज्यः सुमेधसा ॥' इति । स्वभावोक्तिश्च । श्रुतिवृत्त्यनुप्रासौ । इयं चाचेतन-

**नटी**—[1]तह (इति गायति)

[2]इसि (ईसीसि) चुम्बिआइ(इं) भमरेहिं सुउमारकेसरसिहाइ(इं) ।
ओदंसअन्ति दअमाणा पमदाओ सिरीसकुसुमाइ(इं) ॥ ४

1 तथा
2 ईष(ईषदीष)चुम्बितानि भ्रमरैः सुकुमारकेसरशिखानि ।
अवतंसयन्ति दयमानाः प्रमदाशिरीषकुसुमानि ॥ ४

**तहेत्यादि ॥** यथा नटेन सुभगसलिलेत्यादि श्रृङ्गाररसपरिपोषणग्रीष्मर्तुधर्माः प्रतिपादिताः तथेति तान् धर्मानेवाधिकृत्य गायतीत्यर्थः ॥ तदुक्तं—"नटोक्तार्थां ततो गायेन्नटी प्रावेशिकीं ध्रुवां" इति ॥

**इसीति ॥** अत्र भ्रमरैरीषच्चुम्बितत्वेन दरविकासित्वं द्योत्यते ॥ अतएव केसराणां सौकुमार्यम् ॥ चिरविकासे तु केसराणां म्लानता भवति ॥ यद्वा । भ्रमरैरीषच्चुम्बितत्वेन कोमलकिंजल्काग्रत्वेन च प्रत्यग्रविकस्वरत्वं द्योत्यते ॥ तेन चामोदवत्ता ॥ सौरभादिबाहुल्याद्भ्रमराणां तदोपभोग्यता ॥ यद्वा । भ्रमरैरीषच्चुम्बितानीत्यनेन शिरीषाणामितरपुष्पविलक्षणसौकुमार्यादवस्थितिदार्ढ्याभावाद्भ्रमरा उड्डीयमाना एव चुम्बन्तीति ध्वन्यते ॥ तेन ईषच्चुम्बनं लभ्यते ॥ शिरीषाणां स्वाभाविकसौकुमार्याद्दयमाना इत्युक्तम् ॥ करस्पर्शमात्रेणापि म्लानतासम्भवात्सुकुमारवस्तुनो दयाविषयतासम्भवत्वाच्च अवतंसयन्ति कर्णपूरं कुर्वन्ति ॥ "पुंस्युत्तंसावतंसौ द्वौ कर्णपूरेऽपि शेखरे" इत्यमरः ॥ कर्णाभरणत्वकथनेन केशपाशसंमर्दनासहिष्णुत्वं ध्वन्यते ॥ अत्र शिरीषकुसुमवर्णनया तदुद्भवकालो ग्रीष्मो वर्णितः ॥ तत्समानधर्मतया पात्रसूचनमपि व्यज्यते ॥ भ्रमरैरीषच्चुम्बितानीति प्रकृतनायकस्य नायिकान्तरसद्भावः ॥ यद्वा । नायिकायाः कन्यकात्वेनाप्रगल्भतया यौवनजनितविलासाल्पता ध्वन्यते ॥ किञ्चिदुत्थितकटाक्षविक्षेपादिविविधविलासत्वमित्यर्थः ॥

ग्रीष्मसमयस्तुतिः । तह तथा । गीयत इत्यर्थः । गायतीति कविवचनम् । तथाशब्दस्य तह इत्यनुवर्तमाने 'खघथधभां हः' इत्यनेन थकारस्य हकारः । 'वाव्ययोत्खातादावदातः' इत्याकारस्य अदादेशः । 'तस्मादिति च परे लुक्पदादेः' इत्यनुवर्तमाने 'इतेः स्वरात्तश्च द्विः' इत्यनेनेकारस्य लोपः । तकारस्य द्वित्वम् । 'तह इति' इति पाठे गायतीति कविवचनम् । भारत्या वृत्तेरामुखापरपर्यायं प्रस्तावनालक्षणं द्वितीयमङ्गमुपक्षिपति—'ईसीसि' इत्यादिना 'निष्क्रान्तौ' इत्यन्तेन ॥

**ईसीसि इति ॥** ईसीति ईषदीषच्चुम्बिआइं भमरेहिं चुम्बितानि भ्रमरैः सुउमारकेसरसिहाइं सुकुमारकेसरशिखानि । ओदंसयन्ति अवतंसयन्ति दअमाणा दयमानाः पमदाओ प्रमदाः सिरीसकुसुमाइं शिरीषकुसुमानि । सुकुमाराः केसराणां शिखा अग्रभागा येषु तानि । अग्रभागेष्वेव भ्रमरचुम्बनसम्भवात्तदुक्तिः । यतः कोमलकिञ्जल्काग्राण्यत एवेषच्चुम्बितानीति द्विरुक्तिः । अत एव दयमानाः सकृपाः । अकठोरं स्पृशन्त्यः

सुकुमारकेसरशिखानीत्यनेन करतलांगुलिप्रभृतितत्तदवयवानामतिसौकुमार्यं व्यज्यते ॥ शिरीषकुसुमत्वारोपेणातिशयोक्त्यलङ्कारेण वा नायिकायाः पद्मिनीजातिता सूच्यते ॥ प्रमदानामवतंसकरणेन सर्वनायिकाश्रैष्ठ्यं व्यज्यते ॥ किञ्च । अवतंसयन्तीत्यनेन नायिकानायकयोः कुलाचारादिश्रवणस्य कर्णरसायनता ध्वन्यते ॥ शिरीषकुसुमानीत्यनेन शिरीषकुसुमस्येतरकुसुमविलक्षणसौकुमार्यवत्तया प्रकृतनायिकाया इतरस्त्रीविलक्षणलोकातीतविचित्रबहुगुणयोगितया नायकस्यानुरागविषयता सूच्यते ॥ अनेन प्रकृतश्रृंगाररसोऽपि प्रदर्शितः ॥ तथाहि प्रमदा इत्यालम्बनविभावः ॥ श्रृङ्गारे नायिकानायकावालम्बनविभावौ ॥ वीररौद्रयोर्नायकप्रतिनायकौ ॥ एवं त्रयाणां रसानामुभयाश्रितत्वम् । अन्येषामेकैकालम्बनत्वमित्युक्तत्वात् ॥ शिरीषकुसुमानि भ्रमरैश्चुम्बितानीति पुष्पभ्रमरझङ्कारादय उद्दीपनविभावाः ॥ तदुक्तं—"चन्द्रोदयो घनध्वानं गीतभृङ्गरुतादयः । केळीगृहाणि ऋतवः स्रक्चन्दनविलेपने । वनादिवाप्यः कर्पूर उद्दीपक इति स्मृताः" इति ॥ दयादयः सञ्चारिणः ॥ तदुचितकटाक्षादयोऽनुभावाश्च ॥ एवंविधविभावानुभावसञ्चारिपरिपुष्टो माल्याद्युचितनैपथ्यवान्सम्भोगश्रृङ्गारो ध्वन्यते ॥ तदुक्तं भरतेन—" विभावानुभावसञ्चारिसंयोगाद्रसनिष्पत्तिः" इति ॥ एतत्किंचिद्विवृण्वते ॥ विभावा आलम्बनोद्दीपनरूपाः कारणानि ॥ अनुभावाः कटाक्षभ्रूविक्षेपादयः कार्यरूपाः ॥ स्थायिनां रसानां सञ्चारिणां चानुमापकाः सञ्चारिणो रसपरिपोषका निर्वेदादयो भावाः सहकारिरूपाः तेषां संयोगः परस्परसम्बन्धः ॥ विभावानां लौकिकसापेक्षया कार्यकारणभावः ॥ अनुभावानां गम्यगमकभावः ॥ सञ्चारिणां पोष्यपोषकभावः ॥ नाट्यतन्त्रेषु सर्वेषामेव भावानामभिव्यंजकत्वलक्षणं कारणत्वमेव ॥ तदुक्तं—भावयतीति भावो भावमनुवृत्तमेतेष्विति ॥ एवंविधात्संबन्धाद्रसनिष्पत्तिः ॥ रसस्य संविद्रूपस्यानन्दस्य निष्पत्तिरभिव्यक्तिः ॥ न तूत्पत्तिरनुमितिज्ञप्तिभावना वा ॥ तदुक्तं—"व्यक्तः स तैर्विभावाद्यैस्स्थायीभावो रसः स्मृतः" इति ॥ सात्विकभावा अपि व्यञ्जका एव ॥ कटाक्षभ्रूविक्षेपादयोऽनुभावाः ॥ विक्षिप्तचित्तैरपि नटादिभिरभिनेतुं शक्यन्ते ॥ "स्वेदरोमाञ्चादयः सात्विकभावास्तु समाहितचित्तैरेवाभिनेतुं शक्यन्त" इति अनुभावेभ्यः सात्त्विकानां भेदः ॥ स्थायिसञ्चारिणां साक्षाच्चित्तपरिणामरूपत्वात्सात्त्विकानां स्तम्भस्वेदादीनां चित्तपरिणामद्वारा शरीरपरिणामरूपत्वाच्च सात्त्विकेभ्यः स्थायिसञ्चारिणां भेदः ॥ रसस्वरूपं मदीये माळविकाग्निमित्रीयव्याख्याने द्रष्टव्यम् ॥ अत्र ईषच्चुम्बितानीत्यादिना प्रवर्तकं नाम आमुखाङ्गमुक्तम् ॥ उक्तं च—"प्रकृतोचितकालेन समानगुणवर्णनात् । प्रवर्तकं स्यात्पात्राणां सूचनं रसवत्तरम्" इति ॥ अत्र ग्रीष्मर्तुलिङ्गशिरीषकुसुमवर्णनद्वारा सकलगुण-

---

इति यावत् । प्रकृष्टो मदो रूपसौभाग्यजनितो विकारो यासां ताः । तासामेव तथाविधालङ्कारकर्तव्यतायोग्यत्वाच्छकुन्तलासूचकत्वाच्च न विशेषपरिवृत्तत्वदोषावकाशः । वृत्त्यनुप्रासः काव्यलिङ्गम् । ईषच्छब्दे 'ईषदादिष्वित्' इत्यनेन षकारस्याकारस्येकारः । 'शषोः सः' इति सत्वम् । 'अन्त्यस्य हलः' इति तकारलोपः । तेन ईसि इति सिद्धम् । पश्चाद्वीप्सायां द्वितीयेन ईसिशब्देन तत्सन्धिः । अवतंसयन्तीत्यत्र 'ओत्' इत्यनुवर्तमाने 'अवापो ते च' इत्यनेनावस्य ओआदेशः । अयं त्रिंशन्मात्रदलद्वयरूपो द्विपदीनामा लयभेदः । तदुक्तमादिभरते—'वक्ष्ये भङ्गादसम्भिन्नं नाट्यगानमतः परम् । मध्यमोत्तमपात्राणां नाटके सिद्धिदायकम् ॥' इत्यादिना द्वादशभङ्गाः षड्उपभङ्गा द्विचत्वारिंशल्लय-

**सूत्रधारः**—आर्ये! साधु गीतम् ॥ अहो रागानुबद्धचित्तवृत्तिरालिखित इव सर्वतोरङ्गः ॥ तदे(दि)दानीं कतमत्प्रकरणमाश्रित्यैना(न)माराधयामः ॥

---

विशिष्टप्रकृतनायिकापात्रसूचनं कृतम् ॥ आमुखलक्षणमुच्यते—"प्रोक्तवीथ्यंगसहितं वस्तुसूचनमामुखं। तत्र पात्रप्रवेशार्थं कथोद्घातप्रवर्तके। प्रयोगातिशयश्चेति त्रीण्यंगान्यामुखस्य तु॥" इयमान्तराभिधायिनी प्रावेशिकी ध्रुवा॥ तदुक्तं—"ध्रुवाः पञ्च प्रयोक्तव्या रसाभिनयसिद्धये" इति॥ तास्वान्तरध्रुवाया लक्षणं भावप्रकाशे कथितम्—"सर्वासामान्तरा वस्तुरसादिवशकल्पिता। आन्तरा सा ध्रुवा ज्ञेया नाट्याभिनयरञ्जनी" इति॥ प्रावेशिक्या ध्रुवाया लक्षणं भरतेनोक्तम्—"प्रवेशाक्षेपनिष्क्रामप्रसादेषु फलागमे। गानं पञ्चविधं विद्याद्ध्रुवायोगसमन्वितम्" इति॥ ध्रुवायोगस्त्रिविधः—युग्मायुग्ममिश्रभेदात् ॥ तत्रयुग्मश्चच्चत्पुटस्थः॥ अयुग्मश्चाचश्चत्पुटाक्षरस्थः॥ तयोरेव चतुरश्रत्र्यश्रसंज्ञे॥ तयोस्संयोगो मिश्रः॥" इति वृत्तार्थसम्बन्धं रसभावप्रसाधकं। पात्रप्रवेशे यद्गानं तत्प्रावेशिकमुच्यते॥"

**साधु गीतमित्यादि ॥** अत्र गीतशब्देन रागाद्याश्रयो वर्णस्वरताळादिनिबद्धसंदर्भविशेषोऽभिधीयते॥ तदुक्तं—"नादस्वराक्षराकारा त्रिविधा सा च कथ्यत" इति॥ रागादीनां लक्षणमुच्यते—"स्वरवर्णविशिष्टेन ध्वनिभेदेन चावृतः। रज्यते येन कथितस्सरागस्सम्मतः सतां" अथ वर्णः—वर्णश्चतुर्धानिरूपितः स्थायी। आरोही। अवरोही। सञ्चारी॥ "स्थित्वा स्थित्वा प्रयोगस्स्यादेकस्यैव स्वरस्य यः। स्थायी वर्णः स विज्ञेयः परावन्वर्थनामकौ॥ एतत्सम्मिश्रिताद्वर्णस्सञ्चारी परिकीर्तितः" अथ स्वरः—स्वरस्तु श्रोतृचित्तरञ्जकोऽनुरणनरूपश्रुत्याश्रितः षड्जादिः॥ तदुक्तं—"श्रुत्यनन्तरभावी यः स्निग्धोऽनुरणनात्मकः। स्वतो रञ्जयति श्रोतृचित्तं स स्वर उच्यत" इति॥ श्रुतिर्नाम स्वरारम्भकावयवशब्दविशेषः॥ तदुक्तं भरतेन—"प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः। सा श्रुतिः सम्परिज्ञेया स्वरावयवलक्षणा" इति॥ अथ ताळश्चच्चत्पुटादिः॥ "कालो लघ्वादिमितया क्रियया सम्मितो मितिं। गीतादेर्विदधत्ताळः स च द्वेधा बुधैः स्मृतः" इति॥ एतद्रागादिविशिष्टं गीतमेव ताळभेदेन ध्रुवादिसंज्ञां लभते॥ गीतस्य स्वतः

---

भेदाश्चोक्ताः। तत्र द्विपदीनामा प्रथमो लयभेदः। तल्लक्षणं तत्रैव—'विलम्बितलया यत्र गुरवो द्विपदी तु सा। शृङ्गारे करुणे हास्ये योज्या चोत्तममध्यमैः॥ अवस्थान्तरमासाद्य गातव्या साधमैरपि' इति। अत्र गुरुस्तालरूपी ज्ञेयः। ग्रामरागेण ढक्काख्येन चास्या बन्ध इति ज्ञेयम्। इयञ्च गीतिः। तल्लक्षणं शम्भौ—'चा अश्वखघअद्धेउदारस्थद्धम्मिज्ञेयम्।' तदुक्तं तत्रैव—'इह आराबिन्दुजु आए ओसुद्धाप आवसाणम्मि लहु' इति। अथ चात्र प्रमदाशब्देन शकुन्तला गृहीता। सा शिरीषकुसुमान्यवतंसयन्तीत्युक्तम्। बहुवचनं पूजार्थम्। अत एव वक्ष्यति—'बद्धं कर्णशिरीषरोधि वदने घर्माम्भसां जालकम्' इति। विमर्शसन्धिसमाप्त्यवसरे च राज्ञा 'अस्याः शकुन्तलायाः प्रसाधनमभिप्रेतं विस्मृतमस्माभिः' इत्युक्त्वा 'कृतं न कर्णार्पितबन्धनं सखे शिरीषमागण्ड-

कालक्रियामानविधायकत्वाभावादौत्पत्तिककालक्रियामानलक्षणघनं तालमुपजीव्य गीतं प्रवर्तत इति ॥ ताळशब्दमधिकृत्य प्राक्तनैर्बहुधा व्युत्पादितं ॥ तथा हि—अतः * ताळ प्रतिष्ठायामित्यस्माद्धातोरधिकरणार्थे घञि ताळशब्दस्सिद्ध्यतीति भरताचार्यः कथयति ॥ आदिनट पदस्य तलं तलमित्युच्यते ॥ तस्मात् * तत्र भव इत्यर्थेऽणि ताळ इति शैलालिः ॥ तकारश्शिवः । लकारश्शिवा ॥ * ततस्सम्बन्धार्थेऽणि ताळ इति शाण्डिल्यः ॥ आदिब्रह्म-हस्ततलं तलमित्युच्यते ॥ तस्मात् * तेन निर्वृत्तमित्यर्थेऽणि ताळ इति दत्तिलः ॥ तकार-स्सङ्गीते परिश्रमः ॥ तस्य आळः पर्याप्तिर्यस्मादसौ ताळ इति कोहळः ॥ आळ इति— * अलम्भूषणपर्याप्तिशक्तिवारणेष्वित्यतः पर्याप्त्यर्थाद्भावे घञ् ॥ सन्निपातशम्याताळानां पातभागविधौ संज्ञतेत्यादिवर्णप्रतीकग्रहणवत्ताशब्देन तान उच्यते ॥ तमलति भूषयतीति ताळ इति मतङ्गः ॥ 'तशब्देनान्त उच्यते ॥ भावरागताळानामादिवर्णसिद्धभरतनाम्नः शास्त्रस्य तं अन्तं पर्यवसानं अलति वारयतीति ताळ इति विशाखिलः ॥ तः पुच्छः । अन्तिमप्रदेश इत्यर्थः ॥ भरतस्यान्तिमप्रदेशं स्वावस्थानादलति भूषयतीति ताळ इति कम्बलः ॥ ता = शिवयोः कृपा । तां लाति दत्ते ताळविद्भथ इति ताळ इत्यौन्द्रटः । अथ च तकारश्शिवः लकारश्शक्तिः ॥ ततस्सम्भूत इत्यर्थेऽणि वा ताळः ॥ तलशब्दस्याधस्स्वरूप-वाचित्वाच्छिवस्याधोऽवयवभूतांघ्र्योर्भव इति वा ताळः ॥ ताळं = शिवयोस्स्वरूपम् ॥ * तस्मात्पूर्ववदणि वा ताळः । तड आघात इत्यस्माद्धातोरधिकरणे घञि डळयोरभेदे च रङ्गभूरोष्ठसम्पुटो वाद्यभाण्डकं च ताड्यन्तेऽस्मिन्निति वा ताळः ॥ सुब्रह्मण्यायां किल * गौरावस्कन्दिन्निति पदस्य तवल्कारब्राह्मणेन गौरावस्कान्दिन्निति वक्तव्ये गौतमदार-पदयोराद्यन्तवर्णग्रहणेन गौरावस्कन्दिन्निति यथा निरुक्तिः तथैव तशब्देनादिवर्णग्रहणा-त्तपः ळशब्देनान्तवर्णग्रहणाद्धिमलश्चन्द्रः तयोस्सम्बन्धीति वा ताळः ॥ ताशब्देन तानः । आदिवर्णग्रहणात् ॥ तथा ळशब्देन लयः तयोः सम्बन्धीति वा ताळः ॥ ताशब्देन ताण्डवम् । लशब्देन च लास्यम् ॥ आदिवर्णग्रहणात् आभ्यामुभाभ्यां * हितोऽयमिति वैशेषिकेऽणि वा ताळः ॥ ताशब्देनादिवर्णोपादानात्तान उच्यते ॥ सोऽस्मिन्नालीयत इत्यौ-णादिके डे वा ताळः ॥ ताळो विततांगुष्ठमध्यमान्तराळपरिच्छिन्नपरिमाणविशेषः ॥ ताळा-ङ्गाक्षरलघोरास्फालने ताळप्रमाणान्तराळवानित्यर्शं आद्यचि कृते वा ताळ इति च बहुधा व्युदपादयदाञ्जनेयः ॥ साधु गीतमित्यत्र गीतस्य साधुत्वं नामाव्यक्तमधुरस्वरयोगेन गीत-स्यात्यन्त श्राव्यत्वम् ॥

अहो इत्याश्चर्ये ॥ लोकोत्तराश्रुतपूर्वगानश्रवणादाश्चर्योत्पत्तिरिति भावः ॥ तदेव प्रतिपादयति—रागानुबद्धेत्यादिना ॥ रज्यत इति रागः विशिष्टविन्यासः स्वरविशेषः ॥ * रञ्ज रागे भावे घञ् ॥ * भावकरणयोरित्यनुनासिकलोपः ॥ रज्यते येन षड्जादिस्वर-सन्दर्भेण जगदिति रागः ॥ तेनानुबद्धा चित्तवृत्तिर्यस्य स तथोक्तः ॥ रङ्गस्याचेतनत्वेन चित्तवृत्तेश्चेतनधर्मत्वेन सम्बन्धानुपपत्तेर्विद्यमानत्वाद्रङ्गशब्देन रङ्गसम्बन्धिनस्सामाजिकाः

---

विलम्बि केसरम्' इत्युक्तम् । अहो इत्याश्चर्ये । रङ्गो रङ्गभूः । तात्स्थ्यात्सभ्यसमूहः । रागे गीतधातौ बद्धा चित्तवृत्तिर्यस्य सः । अतएव सर्वतः सर्वत्रालिखित इव । चित्रन्यस्त इवेत्यर्थः । द्वितीयपक्षे रज्यत इति रङ्गः । अथ रङ्गो रागो विद्यतेऽस्मिन्नित्यर्शआदित्वादचि रङ्गो राजा । रागेऽनुरागे बद्धा चित्तवृत्तिर्यस्य सः । सर्वत आलिखित इव । सर्वत्र तां

**नटी**—[1]णं अ(ज्ज)य्यमिस्सेहिं पढमं एव्व आणत्तं अहिण्णाणसाउंदलं णाम अपुव्वं णाडअं पओएण अधिकरिअदुत्ति १॥

---

1. नन्वार्यमिश्रैः प्रथममेवाज्ञप्त "मभिज्ञानशाकुन्तलं नामापूर्वं नाटकं प्रयोगेणाधिक्रियता" मिति॥

---

एव लक्ष्यन्ते॥ इयं जहत्स्वार्था लक्षणा॥ तदुक्तं—"यत्र तु परार्थसिद्ध्यै शब्दः स्वात्मानमर्पयति सैषा। शुद्धैव जहत्स्वार्था लक्षणपूर्वा च लक्षणा प्रोक्ता" इति॥ यस्यां लक्षणायां लक्षकः शब्दः परार्थसिद्ध्यै स्वात्मानमन्यत्र समर्पयति। सा जहत्स्वार्था लक्षणेति च व्यपदिश्यते॥ यथा गङ्गायां मुनिवराः प्रतिवसंतीत्यत्र गङ्गाशब्दस्य मुख्यार्थे स्रोतोरूपे मुनिवरनिवासाधिकरणता नोपपद्यत इति गङ्गाशब्दो मुख्येऽर्थे स्रोतोरूपेऽनुपपन्ने तमर्थं हित्वा तदधिकरणतासिद्ध्यर्थमतिशयितपावनत्वादिधर्मद्योतनार्थं परिसरे समर्पयति॥ सैषा शुद्धैव जहत्स्वार्थलक्षणलक्षणेति चान्वर्था॥ इयमेवाप्रस्तुतप्रशंसादेरलङ्कारस्य बीजम्॥ तथात्रापि रागानुबद्धचित्तवृत्ती रङ्ग इति वाच्यस्यासम्भवात्सामाजिका एव लक्ष्यन्ते॥ रङ्गः नृत्तभूमिः॥ "रङ्गं निवेशमभूषानृत्तभूपुरसद्मसु" इति नाममाला॥ आलिखितः आसमन्ताल्लिखितः॥ गीतस्याश्रयत्वेन रागस्यातिशयेनाभिव्यक्तौ सामाजिकानां तद्रसज्ञतया योगिन इव परिमितं स्वाकारमुत्सृज्य काव्यगततत्तद्रसाधारभूतनायकस्वरूपमास्थाय तत्सम्बन्धिभोगसमावेशात्सद्यः परनिर्वृतिर्जातेति भावः॥ वाच्यप्रतीतौ तत्प्रतीतिमात्रं फलम्॥ व्यंग्यप्रतीतौ तु सहृदयानां चमत्कारापरपर्यायो विगलितवेद्यान्तरः कश्चिदाह्लादातिशयः फलं भवति॥ तदा सर्वकरणानां स्वस्वविषयप्रवृत्तिशून्यत्वेनालिखित इवेत्युत्प्रेक्षा॥ न तु साक्षाल्लिखितः॥ तदसम्भवात्॥ ते खलु सामाजिकाः येषां मदर्पणे वर्णनीयार्थतन्मयीभवनयोग्यता॥

**तदेदानीमित्यादि॥** इदानीं गीत्यनन्तरं एनां परिषदम्॥ आश्रित्याधिकृत्य॥ आराधयामः रञ्जयामः वर्तमानसामीप्ये भविष्यदर्थे लट्प्रत्ययः अनेन वर्तमानव्यपदेशेन विलम्बो न युज्यत इति सूच्यते। हठाद्विचार्य ब्रूहीति भावः॥ कतमत्प्रकरणं किं रूपकं। अत्र प्रकरणशब्दस्तु प्रबन्धसामान्यवाची॥ न तु विशेषवाची॥

तथैव प्रबन्धसामान्यं पृच्छतः प्रबन्धविशेषमाह—**णमित्यादिना।** ननुशब्दस्सम्बोधने॥ प्रथममेवेति॥ सर्वैर्मिलित्वा किं नाटकं निरवद्यमिति सम्यग्विचार्य पूर्वमेवेत्यर्थः॥

---

पश्यतीत्यर्थः। 'रङ्गो रणे खले रागे नृत्ये रङ्गं त्रपुण्यपि" इति विश्वः। 'स्वैरङ्गैश्चापि वीथ्यङ्गैः प्रकुर्यादामुखं बुधः' इति मातृगुप्ताचार्योक्तेः, 'वीथ्यङ्गान्यामुखान्तत्वात्प्रोच्यन्तेऽत्रैव तानि तु' इति धनिकोक्तेश्चावलगितं नामाङ्गमुपक्षिप्तमनेन। तल्लक्षणं सुधाकरे—'द्विधावलगितं प्रोक्तमर्थावलगनात्मकम्। अन्यप्रसङ्गादन्यस्य संसिद्धिः प्रकृतस्य च' इति। प्रकरणं रूपकम्। नन्वार्यमिश्रैः प्रथममेवाज्ञप्तमभिज्ञानशाकुन्तलं नामापूर्वं नाटकं प्रयोगेऽधिक्रियतामिति। 'णं नन्वर्थे' इति सौरसेन्याम्। अत्र क्वचित् 'पढुमम्' इति पाठः साम्प्रदायिकः। यतः प्रथमशब्दस्य 'पढम पढुम पुढम' इति त्रय आदेशाः। 'अहिण्णाणसाउन्दलम्' इत्यत्र 'साउन्तलम्' इति पाठे पूर्ववद्दत्वाभावः। दकारपाठे 'वर्गेऽन्त्यो वा'

आर्यमिश्रैरिति ॥ ईर्यन्ति विप्रकृष्टार्थं जानन्तीत्यार्याः ॥ दूरागामिमतय इति यावत् ॥ पदपदार्थद्वारा निर्णीतरसभावपाकमयकाव्यवाचकज्ञानकौशलाय शब्दशास्त्रपदार्थानुशासनविद इत्यर्थः ॥ यस्मात्पदार्थाभिनयो नृत्तम् ॥ मिश्राः पूर्वोत्तरमीमांसापरिश्रमशालिनः तेन वाक्यार्थविचारनैपुण्यं सूच्यते ॥ यस्माद्वाक्याभिनयो नाट्यं । वाक्यप्रतिपाद्य एव हि रसः ॥ तदुक्तं—"नाट्यं नृत्यं नृत्तमिति त्रिविधं गात्रचेष्टितं । पदार्थाभिनयप्रायं वाक्यार्थाभिनयात्मकं ॥ अन्यानुकरणं नाट्यं रसभावनिरन्तरं । नृत्यं तु गात्रविक्षेपबहुलास्योपसंश्रितं ॥ पदार्थाभिनयैर्युक्तमाङ्गिकैरेव केवलैः । तदेतन्मार्गमित्याहुर्नृत्तं ताळलयाश्रितम् ॥ गात्रविक्षेपमात्रं तु नृतिधात्वर्थयोगतः । भावाश्रयं तु नृत्यं स्यान्नृत्तं ताळलयाश्रितम्" इति ॥ अत एव पदार्थवाक्यार्थसिद्धान्तज्ञानार्थमार्यमिश्रा इत्युक्तम् ॥ तैराज्ञप्तमादिष्टम् ॥ शकुन्तळामधिकृत्य कृतो ग्रन्थ इति शाकुन्तळम् ॥ नाटकविशेषणत्वान्नपुंसकम् ॥ अभिज्ञानप्राधान्यमङ्गुलीयकाभिज्ञानदर्शनाद्राज्ञः शकुन्तळास्मरणं जातमिति । अपूर्वमिति सभ्यानामादरत्वहेतुरुक्तः ॥ प्रयोगेणाधिक्रियतां प्रयुज्य भूष्यताम् ॥ अनेनेतः पूर्वं कदाप्येतत्प्रबन्धप्रयोगासामर्थ्यमेतत्परिषदलाभश्च ध्वन्यते ॥ इदानीं दैवाद्द्वयमपि मिळितमिति भावः ॥ अधिक्रियतामिति विध्यर्थेन सामाजिकानां चिरादारभ्यैतत्प्रबन्धप्रयोगदर्शनौत्सुक्यं ध्वन्यते ॥ तेन प्रकृतनायकस्येतरप्रबन्धविलक्षणरसभरितत्वेन प्रयोगार्हत्वं व्यज्यते ॥ तेन रसप्रवणतया प्रकृतनाटकस्य व्यंग्यप्राधान्यम् ॥ तेन कान्तासम्मितत्वं च व्यज्यते ॥ तदुक्तं—"वेदेतिहासकाव्यानां कार्याकार्यविनिर्णये । उपदेशप्रभुसुहृत्कान्तानामिव दृश्यते ॥" लोके वेदा इतिहासपुराणानि काव्यानि च यथाक्रमं प्रभव इव सुहृद इव कान्ता इव हिताहितं च शृण्वद्भ्य उपदिशन्ति ॥ अङ्गानां शब्दार्थयुगळमेळनेऽपि शाब्द एव भागे प्राधान्यं ॥ नार्थे ॥ वाङ्मात्रेण प्रभुरिव ॥ वेदोऽपि विधिनिषेधबलेन पुंसां प्रवर्तको निवर्तकश्च ॥ प्रभुः विक्षेपे दण्डयति ; वेदस्तु प्रत्यवायं जनयतीति शब्दप्राधान्यम् ॥ प्रत्यवायजनकत्वं च वेदस्य स्वरवर्णयोरन्यथोच्चारणेऽपि दुरितश्रवणादन्यथानुष्ठानेऽननुष्ठाने वा ॥ पुराणानामर्थवादानुप्राणनत्वादार्थ एवांशे प्राधान्यं न शाब्दे ॥ "ध्वनिप्रधानं काव्यं तु कान्तासम्मितमिष्यते । शब्दार्थौ गुणतां नीत्वा व्यञ्जनप्रवणं यतः ॥" काव्यं हि पाठस्वरनैयत्यविधायकत्वार्थवादात्मकार्थपरत्वाभावाच्छब्दप्राधान्यमर्थप्राधान्यं च परिहृत्य शब्दार्थावुभावप्युपसर्जनीकृत्य व्यंग्यभूतरसादिग्रहणोपायव्यंजनव्यापारप्रवणं ॥ तस्माद्ध्वनिप्रधानं ॥ तच्च प्रभुसम्मितत्वसुहृत्सम्मितत्वपरिहारेण कान्तासम्मितं चेष्यते ॥ क्रमेणैतत्समर्थ्यते । "आस्वादयेरत्ररसिका रसाद्यत्र प्रतिष्ठिताः, इत्थं विधिः स्वरो वात्र श्रूयते न श्रुताविव ॥ रामादिवद्वर्तितव्यं न त्वया रावणादिवत् । इत्यार्थो व्यपदेशोऽपि न पुराणेतिहासवत् ॥" काव्ये श्रुताविवोदात्तानुदात्तादिरूपाः स्वराश्च न श्रूयन्ते ॥ त्रिराचमेद्द्विः परिमृज्येतिवत् ॥

---

इति परसवर्णत्वे पक्षेऽनुस्वारे पूर्ववद्दकारः । येषां मते नित्यं परसवर्णस्तेषां मते 'अधः क्वचित्' इति सूत्रेण दकारः । एवमग्रे 'सउन्दले सउन्तले' पाठे रूपद्वयं ज्ञेयम् । 'खघथधभाम्' इति हः । 'म्रज्ज्ञोर्णः' इति ज्ञस्य णः । 'नो णः' इति णत्वम् । 'शषोः सः' इति सः । 'कगच-' इति ककारलोपः । 'अपुव्वम्' इत्यत्र 'अपुरवम्' इति पाठे 'सौरसैन्याम्'

**सूत्रधारः**—आर्ये सम्यगनुबोधितोऽस्मि अस्मिन् क्षणे विस्मृतं खलु मया तत्सर्वम् ॥

---

रसिका रसानास्वादयेयुरिति विधिरपि न श्रूयते तस्माच्छब्दप्राधान्यं प्रभुसम्मितत्वं च न भवति ॥ सद्वृत्तानुसारी रामश्चिरं जीवति स्म ॥ असद्वृत्तस्तु रावणो नष्टः । तस्माद्दीर्घं जीवितुमिच्छंस्त्वं च राम इव वर्तस्व ॥ रावण इव न वर्तस्वेति सुहृत्सम्मितेतिहासादिवदर्थवादरूपो व्यपदेशोऽपि काव्ये न श्रूयते ॥ तस्मादर्थप्राधान्यं सुहृत्सम्मितत्वं च काव्ये न स्तः ॥ उभयरूपमपि न चेत्काव्यं तर्हि किंरूपं ? इत्यत आह—'काव्यं नेतृगताखण्डतत्तद्रसनिरन्तरं ॥' काव्यं हि मानसादिकं सर इवाधारभूतनायकगताखण्डतत्तच्छृङ्गारादिरसनिरन्तरम् ॥ "तस्मात्काव्यनिबन्धानां रससम्मितलक्ष्मणां । प्रतीयमानप्राधान्यं प्राक्तनैः प्रतिपादितं" काव्योपदिष्टस्यार्थस्यामृतादिवत्स्वीकरणीयत्वेन प्रतिपादनात्कान्तासम्मितलक्ष्मणां तेषां काव्यानां रसप्रवणतया व्यंग्यप्राधान्यं प्राक्तनैरानन्दवर्धनादिभिराचार्यैः प्रतिपादितं ॥ किञ्च व्यापारप्राधान्ये व्यापारकशब्देऽभेदसिद्धिः ॥ वस्तुचिन्तायां शास्त्रादेरपि काव्यमुखप्रेक्षितया कार्यकारित्वमित्युपनिषत् ॥ यथाह—'स्वादुकाव्यरसोन्मिश्रं शास्त्रमप्युपयुञ्जते । प्रथमालीढमधवः पिबन्ति कटुभेषज'मिति ॥ अतएव प्रयोगेणाधिक्रियतामित्यनेन सामाजिकानामादरवत्तया प्रकृतनाटकस्य प्रयोगार्हत्वं । तेन व्यंग्यप्राधान्यमुक्तं भवति ॥ अनेकसभ्यानां प्रार्थकत्वमुक्तं ॥ तदुक्तं—"सभ्यास्तु विबुधैर्ज्ञेयाः ये दिदृक्षान्विता जनाः । तेऽपि द्विधाप्रार्थनीयाः प्रार्थका इति च स्फुटं । इदं प्रयोक्ष्ये युष्माभिरनुज्ञा दीयता"मिति ॥ "सम्प्रार्थ्या सूत्रधारेण प्रार्थनीया इति स्मृताः । त्वया प्रयोगः क्रियतामित्युत्कण्ठितचेतसः । ये सूत्रिणं प्रार्थयन्ते ते सभ्याः प्रार्थका इति" स्मृता इति प्रकृते प्रयोगेणाधिक्रियतामित्यनेन प्रार्थकत्वं स्फुटमेव ॥ नाटकलक्षणमुच्यते—"दश प्रबन्धा नाट्यस्य भरतेन बभाषिरे । नाटकं च प्रकरणं भाणः प्रहसनं डिमः ॥ व्यायोगसमवाकारौ वीथ्यङ्केहामृगा" इति ॥ तत्र—"शब्दार्थरचना दोषरहिता गुणशालिनी सालंक्रिया प्रयोगार्हा सरसा नाटकं मतम्" तत्र—"प्रख्यातवंशो राजर्षिर्दिव्यो वा यत्र नायकः । तत्प्रख्यातं विधातव्यं वृत्तमात्राधिकारिकम् । यदत्रानुचितं किञ्चिन्नायकस्य रसस्य वा । विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत् ॥ आद्यन्तमेव निश्चित्य पञ्चधा तद्विभज्य च । खण्डशः सन्धिसंज्ञास्तान् भागानपि च खण्डयेत् ॥ चतुष्षष्ट्यङ्गसंयुक्तान्पञ्च सन्धीन्प्रकल्पयेत् । प्रयोजनानि षट् तेषां भरतोक्तानि यानि तु ॥ ईप्सितार्थस्य रचनं गोप्यार्थस्य च गोपनं । प्रकाश्यार्थप्रकटनं वृत्तान्तस्यानुवर्तनम् ॥ रागाभिवृद्धिर्वैचित्र्यं प्रयोगस्येति तानि हि ॥" णं अय्यमिस्सेहिमित्यत्र * "णं नन्वर्थे" इति णमिति निपातः ॥ * "शोल्लुसयवरशोर्धि"रिति दैर्घ्ये प्राप्ते * "शेषादेशस्ये"ति द्वित्वं * "लवरामध"श्चेति रेफलोपः ॥

**सम्यगित्यादि**—अनुबोधस्य सम्यक्त्वं नामोचितकालस्मारकत्वम् ॥ अस्मिन् क्षणे गानश्रवणानन्तरक्षण एवेत्यर्थः ॥ 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षण' इत्यमरः ॥ तदिति—यत्पूर्वं कालिदासग्रथितवस्तुना नाटकेनोपस्थातव्यमिति सामाजिकैरुक्तं तदित्यर्थः ॥ मयेत्यनेन नाट्यप्रयोगे सावधानं प्रवृत्तेन मयेति यावत् ॥ विस्मृतं श्रुतमप्यश्रुतपूर्वमिति संवृत्तम् ॥ खलु जिज्ञासायाम् ॥ अनेन दृढचित्तस्य ममाश्रुताननुभूतपूर्वगीतरागसौन्दर्यमेव विस्मरणकारणमित्यभिप्रायः ॥

कुतः—

तवास्मि गीतरागेण हारिणा प्रसभं हृतः ।
एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा ॥ ५

(इति निष्क्रान्तौ)

प्रस्तावना

---

५ तथैवाह—तवास्मीत्यादिना ॥ हारिणा चित्ताकर्षणशीलेन गीतरागेण गीतसम्बन्धिस्वरविशेषेणानुरञ्जकेन प्रसभं हृतः हठादाकृष्टः ॥ विक्षिप्तमपि चित्तं भवद्गीतरागसौन्दर्येण बलादाकृष्यत इत्यर्थः ॥ अत्रोपमानम्—अतिरंहसा सारङ्गेणाकृष्यमाणो दुष्यन्तो राजेवेति ॥ राजन्शब्देन ग्रीष्मे राज्ञो मृगयाविनोदनमुचितमिति द्योत्यते ॥ अतिरंहस्त्वविशेषणेन दूरा दागतत्वम् ॥ तेन च तत्राभिनिवेशः । एतेन राज्यचिन्ताद्व्यापृतस्य साक्षादेव शृङ्गारिता न घटत इति मध्ये व्यवसायान्तरापेक्षा ॥ तत्प्रसङ्गेन शृङ्गारो वर्णयिष्यते ॥ तदुक्तं—"वस्तुप्रक्षेपणं कुर्यात्प्रपञ्चेनोपयोगिना" इति ॥ अत्र दुष्यन्तचरितं यद्यपि गीतरागजनितचित्ताहरणस्योपमानतया कथितम् ॥ तथापि कवेर्वर्तिष्यमाणाङ्कपात्रप्रवेशसूचने तात्पर्यम् ॥ अत्र वाक्यार्थतात्पर्यमवलम्ब्य पात्रप्रवेशसूचनात्कथोद्घातो नामामुखाङ्ग मुक्तं भवति ॥ तदुक्तं—"स्वेतिवृत्तसमं वाक्यमर्थं वा यत्र सूत्रिणः । गृहीत्वा प्रविशेत्पात्रं कथोद्घातो द्विधैव सः" इति ॥ इतिशब्दः समाप्तौ ॥ प्रस्तावनां समाप्येत्यर्थः ॥ "इति हेतुप्रकरणप्रकारादिसमाप्तिषु" इत्यमरः ॥ "संसूच्य पात्रं निर्गच्छेत्सूत्रधारः सहेतर" इति वचनात्पात्रं संसूच्य नट्या सह सूत्रधारो निष्क्रान्तः ॥

एषा प्रस्तावना ॥ प्रस्तूयते उपक्षिप्यते प्रबन्धार्थोऽनयेति प्रस्तावना ॥ लक्षणमुच्यते—"प्रस्तावना स्थापने तद्द्विधा स्यादिदमामुखं । विदूषकनटीपारिपार्श्वकैस्सह सल्लपन् ॥ स्तोकवीथ्यङ्गसहितान्यामुखाङ्गनि सूत्रकृत् । योजयेद्यत्र नाट्यज्ञैरेषा प्रस्तावना मता" इति ॥ "अङ्केनान्यतमेनैषां पात्रमाक्षिप्य सूत्रकृत् । अनन्तरं तु निर्गच्छेत्सैषा प्रस्तावना मता" एवं प्रस्तावनाया यावताङ्गकलापेन सहृदयहृदयावर्जनं भवति तावत्प्रयो-

---

इत्यनुवृत्तौ 'पूर्वस्य पुरवः' इति पूर्वशब्दस्य पुरवादेशः । प्रस्तावनाङ्गं प्रयोगातिशयमुपक्षिपति—तवेति ॥ अस्मीत्यहमर्थेऽव्ययम् । गीते गीतौ निबद्धेन रागेन श्रीरागादिना धातुना । हारिणा श्रुतिसुखदेन, हर्तुं शीलमस्येति च । मृगपक्षेऽस्यातिरंहसो हेतुत्वेन योज्यम् । उपमेयपक्षेऽपि प्रसभहरणे हेतुत्वेन योज्यम् । विशिष्टस्यैवोपमानत्वान्न विशेषणन्यूनता शङ्कनीया । प्रसभमत्यर्थं हृत आसक्तचित्तः । द्वितीयपक्षे हृतः स्वसेनाया दूरं प्रच्यावितः । उभयं भिन्नमपि साधारणधर्मप्रतिपादनार्थमतिशयोक्त्यैकत्वेनाध्यवसितम् । अतएव सर्वालङ्काराणामतिशयोक्तिगर्भत्वमाकरे दर्शितम्—'नालंकारोऽनया विना' इति । एष इति प्रयोगातिशयाङ्गार्थम् । राजेति प्रवेशानुगुणम् । दुष्यन्त इति नामग्रहणमन्यराजव्यावर्तकत्वेनेति नैकस्याप्यवकरत्वं शङ्कनीयम् । सारङ्गेण मृगेण । 'सारङ्गश्चातके भृङ्गे कुरङ्गेऽपि मतङ्गजे' इति विश्वः । कीदृशा तेन । अतिरंहसातिवेगवता । 'रंहस्तरसी तु

क्तव्यम् ॥ नाटकस्य महाकविप्रणीतत्वात् ॥ किञ्च महाकविप्रणीतनाटकस्य पदपदैकदेशरचनावर्णनादीनां विविधार्थादिव्यञ्जकत्वाच्छब्दार्थोभयशक्त्यार्थान्तरयोजनापि प्रकृतपर्यवसायिन्येव योजनीया ॥ न चेदसद्बुद्धि जनकत्वेन भ्रान्तालापत्वेन च काव्यस्य कान्तासम्मितहितोपदेशकतां विघटयति ॥ काव्यस्य कान्तासम्मितहितोपदेष्टृत्वं प्राक्तनैरुक्तम् ॥ तथाहि—"काव्यं फलति नेतृणां कीर्तिं कवयतां पुनः । तां चातिमहतश्चार्थाननर्थानां च निग्रहम् ॥ शृण्वतां राजतन्त्रृत्याद्युचिताचारशिक्षणम् । कार्याकार्योपदेशश्च कान्तासम्मितवत्तया ॥ रसिकव्यपदेशानां रसानां चर्वणादरात् । निर्वृतिं च परां तेषां प्रसूते सद्य एव तत् ॥" काव्यस्य प्रयोजयितारो रामादयः ॥ तेषां कीर्तिरेव फलम् । कर्तारः पुनर्वाल्मीकिप्रमुखाः कवयः ॥ तेषां त्रीणि फलानि ॥ कीर्तिरर्थप्राप्तिरनर्थनिवृत्तिश्चेति ॥ अनुमोदितारः पुनः सर्वेऽपि रसास्वादलम्पटतया रसिकव्यपदेशभाजः सहृदयास्तेषामपि तावन्ति फलानि व्यवहारपरिज्ञानम् । सद्यः परनिर्वृतिलाभः । कान्तासम्मितत्वेनोपदेशलाभश्च ॥ उपदेशप्रकारं प्रतिपादयति —"रसानास्वादयन्तोऽपि भावितार्थाः सचेतसः । असद्वृत्तं समुत्सृज्य वृत्तं सञ्चिन्वते सताम्" इति । सहृदयाः पुनः क्रमेण रसानास्वादयन्तोऽपि रसास्वादनोपायभूतचर्वणाधिष्ठानभूतवाच्यार्थभावनया परिमितं स्वात्मभावमेव प्रतिपद्य काव्यगतनायकवृत्तं विमृश्य स्वयमेवासद्रूपप्रतिनायकवृत्तमुत्सृज्य सद्रूपनायकवृत्तमेव सञ्चिन्वते ॥ तत्र तेषां विमर्शक्रमं स्पष्टं प्रतिपादयति । "सतां हि रावणादीनां दुर्वृत्तं नाशकारणम् । रामादीनामपि तथा साधुवृत्तं जयावहम् ॥ तस्मादस्माभिरप्यत्र त्यक्त्वा दुर्वृत्तमीदृशम् । भवितव्यं साधुवृत्तैरिति व्यासन्विमर्शिनः ॥" इति विमर्शवन्तोऽसतां वृत्तमुत्सृज्य सतां वृत्तं सञ्चिन्वत इत्यर्थः ॥ उक्तमर्थं निगमयति—"तत्कान्तयेव काव्येऽन्यसारस्यहृतचेतसां । हिताहितोपदेशोऽपि सुधियां प्रतिपाद्यते" उक्तप्रकारेण कान्तयेव काव्येन सरसतया

---

रयः स्यदः । जवः' इत्यमरः । अत्र व्यावर्तकत्वेन दुष्यन्त इत्यस्य विशेषणत्वाद्विशेष्यानन्तरमेतच्छब्दस्योचितत्वान्नाक्रमत्वम् । रसना काव्यलिङ्गं वोपमा । श्रुतिवृत्त्यनुप्रासौ । नन्वेवं बहुव्रीहौ कृते समासान्तः कप् प्राप्नोतीति चेदुच्यते । तस्यानित्यत्वात् । तथाहि—'द्वित्रिभ्यां पाद्दन्मूर्धसु' इति सूत्रे द्वित्रिभ्यामुत्तरेषु पादादिष्वन्तोदात्तत्वं विधीयते । तत्र यथा पाददन्तयोः 'संख्यासुपूर्वस्य' 'वयसि दन्तस्य दतृ' इत्येताभ्यां कृतसमासान्तयोर्ग्रहणं कृतं 'पाद्दम्' इति तद्वत् 'द्वित्रिभ्यां ष मूर्ध्नः' इति षप्रत्ययान्तस्य 'मूर्धसु' इति मूर्धशब्दस्य ग्रहणं कर्तव्यं स्यात् । एवं च क्रमाभेदोऽपि भवति । तेन प्रक्रमभेदमप्यङ्गीकृत्य यदकृतसमासान्तो निर्दिष्टस्तज्ज्ञापयति 'अनित्यः समासान्तः' इति । करणत्वेन योजने विशेषणयोरार्थत्वशाब्दत्वलक्षणः प्रक्रमभङ्गः । हारिणेत्यत्र यद्धेतुत्वेन विशिष्टोपमानत्वं तच्छब्देन घटते । प्रयोगातिशयलक्षणं दशरूपके—'एषोऽयमित्युपक्षेपात्सूत्रधारप्रयोगतः । पात्रप्रवेशो यत्रैष प्रयोगातिशयो मतः' इति ॥

**प्रस्तावनेति ॥** तल्लक्षणं तु सुधाकरे—'विधेयथैव सङ्कल्पो मुखतां प्रतिपद्यते । प्रधानस्य प्रबन्धस्य तदा प्रस्तावना मता ॥ अर्थस्य प्रतिपाद्यस्य तीर्थं प्रस्तावना मता' इति । दशरूपके च—'सूत्रधारो नटीं ब्रूते मार्षं वापि विदूषकम् । स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् । प्रस्तावना' इति । 'एषामन्यतमेनार्थं पात्रं

समाकृष्टचेतसां सुधियां हिताहितरूपार्थोपदेशोऽपि प्रतिपाद्यते ॥ इति कान्तासम्मितत्वेनोपदेष्टृत्वमुक्तंकाव्यस्य ॥ रसास्वादपरतन्त्राणां रसिकानां कथमुपदेशलाभ इत्याशङ्क्य परिहरति लौकिकदृष्टान्तप्रदर्शनेन—"यथा वेतनवित्तस्य लाभः पुण्ड्रेक्षुभक्षणं। तथोपदेशलाभोऽपि रसास्वादविधायिनाम् ॥" उपदेशलाभ इत्यलमतिमथनेन हिताहितोपदेष्टृत्वं वेदेतिहासानामिव काव्यानामप्यस्तु तेषु विद्यमानेष्वप्येतत्फलसिद्धये ॥ किमिति काव्यानि क्रियन्ते ? इत्याशङ्क्याह—"कटुकौषधवद्वेदैरुपदिष्टं कथञ्चन । काव्योपदिष्टं सेवन्ते रसबन्ध्यमृतादिवत् ॥" सर्वेषामपि हिताहितोपदेष्टृत्वं समानमेव ॥ तदपि वेदेतिहासैरुपदिष्टमर्थं कटुकमौषधमिव लौकिकाः कथञ्चित्समाचरन्ति ॥ काव्योपदिष्टमर्थं रसबन्धवत्तया अमृतमिव द्राक्षारसमिव समाचरन्तीति व्यतिरेको वेदेतिहासेभ्यः काव्यानामुपदेशकरणेऽप्युपादेयत्वमुक्तमित्यवगन्तव्यम् ॥

प्रस्तावना

वाक्षिप्य सूत्रभृत् । प्रस्तावनान्ते निर्गच्छेत्ततो वस्तु प्रपञ्चयेत्' इति । वस्तु इतिवृत्तम् । वस्तुप्रपञ्चने विशेषस्तत्रैव—'आद्यन्तमेव निश्चित्य पञ्चधा तद्विभज्य च । खण्डशः सन्धिसंज्ञांश्च भागानपि च खण्डयेत् ॥ चतुःषष्टिश्च तानि स्युरङ्गानि' इति । तत्र विभागप्रकारः । 'अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः । आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः ॥ बीजबिन्दुपताकाख्यप्रकरीकार्यलक्षणाः । अर्थप्रकृतयः पञ्चपञ्चावस्थासमन्विताः ॥ यथासङ्ख्येन जायन्ते मुखाद्याः पञ्च सन्धयः । मुखं प्रतिमुखं गर्भः सावमर्शोऽथ संहृतिः' इति ॥ सन्धिसामान्यलक्षणं तत्रैव—'अन्तरेकार्थसम्बन्धः सन्धिरेकान्वये सति' इति । अत्र 'ततः प्रविशति' इत्यारभ्य द्वितीयाङ्के 'उभौ परिक्रम्योपविष्टौ' इत्यन्तेन सार्धाङ्केन मुखसन्धिः । तल्लक्षणं तत्रैव—'मुखं बीजसमुत्पत्तिर्नानार्थरससंश्रया' इति । अस्य बीजारम्भयोः समवायादङ्गानि । तानि च—'उपक्षेपः परिकरः परिन्यासो विलोभनम् । युक्तिः प्राप्तिः समाधानं विधानं परिभावना । उद्भेदभेदकरणानि' इति । अङ्गलक्षणं व्याख्यानावसरे यथायथं वक्ष्यामः । आरम्भबीजयोर्लक्षणे आदिभरते—'औत्सुक्यमात्रबन्धस्तु यो बीजस्य निबध्यते । महतः फलयोगस्य स खल्वारम्भ इष्यते' इति । यथात्र 'राजा—भवतु तां द्रक्ष्यामि' । 'अल्पमात्रं समुद्दिष्टं बहुधा यत्प्रसर्पति । फलावसानं यच्चैव बीजं तदभिधीयते' इति । तत्र विशेषो मातृगुप्ताचार्यैरुक्तः—'क्वचित्कारणमात्रं तु क्वचिच्च फलदर्शनम् । क्वचिदारम्भमात्रं तु फलमुक्त्वा क्रिया क्वचित् । व्यापारश्च विशेषोक्तः क्वचिद्वा फलसाधकः । बहुधा रूपकेष्वेवं बीजरूपेण दृश्यते ॥ फले यस्य हि संहारः फलबीजं तु तद्भवेत् । वस्तुबीजं कथा ज्ञेया अर्थबीजं तु नायकः' ॥ यथात्र—'पुत्रमेवंगुणोपेतं चक्रवर्तिनमाप्नुहि' इति । यथा च 'वैखानसः—इदानीमेव दुहितरं शकुन्तलामतिथिसत्काराय नियुज्य' इति ॥

(ततः प्रविशति मृगानुसारी चापहस्तो राजा रथेन सूतश्च)

**सूतः**—(राजानं मृगं चावलोक्य) आयुष्मन् !

---

अथ प्रस्तावनानन्तरमङ्कः प्रस्तूयते—ततः प्रविशतीत्यादिना ॥ अङ्कलक्षणमुच्यते । "प्रत्यक्षनेतृचरितो बिन्दुव्याप्तिपुरस्कृतः । अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ॥ अनुभावविभावाभ्यां स्थायिना व्यभिचारिभिः । अङ्गमन्ये रसास्सर्वे कुर्यान्निर्वहणेऽद्भुतः ॥ दूराह्वानं वधं युद्धं राज्यदेशादिविप्लवं । संरोधं भोजनं स्नानं सम्भोगं चानुलेपनम् ॥ अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत्" आदिशब्देन शयनालिङ्गनचुम्बनादीनि गृह्यन्ते ॥ एतेषामुद्वेगकारित्वात्प्रयोगानुचिततया सूच्यत्वमित्यवगन्तव्यम् ॥ "एकैकदिवसे वृत्तमेकनेतृप्रयोजनं । बहुपात्रप्रवेशार्हमङ्कमासन्ननायकम् ॥ अन्ते तु निर्गमः कार्यः पात्राणां सूचनान्वितः । पताकास्थानकान्यत्र बिन्दुबीजयुतानि च ॥ प्रधानवस्तुनोन्यूनान्यंगैर्द्वित्रादिभिः स्फुटं । प्रधानस्याविरोधेन कल्प्यान्यङ्गानि धीमता ॥ एवमङ्काः प्रकर्तव्याः प्रवेशादिपुरस्कृताः । पञ्चादिदशपर्यन्तमङ्काः कार्या यथोचितम्" इति ततः सूत्रधारनिष्क्रमणानन्तरम् ॥ प्रविशतीति क्रियापदे वर्तमानार्थप्रत्ययेन सूत्रधारनिष्क्रमणस्य पात्रप्रवेशस्याव्यवधानं व्यज्यते ॥ मृगानुसारी हरिणानुधावी । अनेन शीलार्थकेनिप्रत्ययेन ग्रीष्मसमये राज्ञो मृगयाविनोदनमुचितमिति द्योत्यते ॥ रथेनेति करणार्थे तृतीया । आयुष्मन्निति सूतेन राजामन्त्रणप्रकारः ॥ तदुक्तं—"सूतो रथिनमायुष्मंस्तथा पूज्यो यवीयसा" इति ॥

---

**ततः प्रविशतीति ॥** अयं धीरोदात्तो नायकः । अतोऽस्य संस्कृतं पाठ्यम् । सूतस्यापि संस्कृतं पाठ्यम् । उक्तं चादिभरते—'धीरोद्धते धीरललिते धीरोदात्ते तथैव च । धीरप्रशान्ते च तथा पाठ्यं योज्यं च संस्कृतम्' इति । मातृगुप्ताचार्यैश्च—'सम्मतानां देवतानां राजन्यामात्यसैनिके । वणिङ्मागधसूतानां पाठ्यं योज्यं तु संस्कृतम्' इति । सामान्यगुणयोगित्वे 'महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः । स्थिरो निगूढाहङ्कारो धीरोदात्तो दृढव्रतः' इति । तल्लक्षणं च दशरूपके । सामान्यगुणास्तु सुधाकरे—'तद्गुणास्तु महाभाग्यमौदार्यं स्थैर्यदक्षते । औज्ज्वल्यं धार्मिकत्वं च कुलीनत्वं च वाग्मिता । कृतज्ञत्वं नयज्ञत्वं शुचिता मानशीलता । तेजस्वित्वं कलावत्त्वं प्रजारञ्जकतादयः' इति । धीरोदात्तत्वं चास्य 'स्वसुखनिरभिलाषः' इत्यादिना स्फुटमेव दर्शितम् । 'शेषा मन्त्रिस्वायत्तसिद्धयः' इत्युक्तेश्चोभयायत्तसिद्धित्वं चास्य । 'त्वन्मतिः केवला तावत्परिपालयतु प्रजाः । अधिज्यमिदमन्यस्मिन्कर्मणि व्यापृतं धनुः' इत्यनेन च दर्शितम् । रथेनेति सहार्थे तृतीया 'वृद्धो यूना' इति ज्ञापकाद्विनापि सहशब्दप्रयोगेण । ततः 'आयुष्मन्निति वाच्यस्तु रथी सूतेन सर्वदा' इति भरतोक्तेः 'आयुष्मन्' इति सम्बुद्धिः ॥

कृष्णसारे ददच्चक्षुस्त्वयि चाधिज्यकार्मुके ।
मृगानुसारिणं साक्षात्पश्यामीव पिनाकिनम् ॥ ६

राजा—सूत । वय(दूर)ममुना सारङ्गेण दूरतर(वय)माकृष्टाः ॥ अयमि(अयं पुनरि)दानीमपि ।

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टश्शरपतनभिया भूयसा पूर्वकायम् ।

---

६ **कृष्णसारे सारङ्गे**—"कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषा" इत्यमरः ॥ अनेन कृष्णसार मृगविलक्षणवेगातिशयउक्तः । तेन बहुदूराकर्षणे हेतुरुक्तः ॥ अधिज्यकार्मुके आरोपितगुणके त्वयि च चक्षुर्ददत् अर्पयन् ॥ साक्षान्मृगानुसारिणः तत्वतो हरिणानुधाविनम् न तु स्तुतिरिति भावः । पिनाकिनं वृषध्वजं पश्यामीवेत्युपमालङ्कारः ॥ रुद्रोपमानेनामानुषप्राभवं राज्ञस्सूच्यते ॥ तादृशस्त्वमल्पजन्तुना बहुदूरमाकृष्ट इति भावः ॥ पिनाकिनो हरिणानुधावनं दक्षयज्ञविघ्नसमये सिद्धमिति प्रसिद्धिः ॥

**सूतेत्यादि ॥** वयमिति बहुवचनेन मृगयाकर्मकुशला इति द्योत्यते ॥ सारङ्गेण हरिणेन । सिंहादिवन्न महासत्वेन । मृगमात्रेणेति व्यज्यते ॥ "सारङ्गश्चातके भृङ्गे कुरङ्गे च मतङ्गजे" इति विश्वः ॥ अमुना अविप्रकृष्टेन । निकटवर्तिनेति यावत् ॥ दूरमात्रं न । किन्तु दूरतरम् ॥ तर्हि आकृष्टा इति भूतार्थवाचिनेदानीं नाकर्षति किं? इत्यत आह—अयमिदानीमपीति । अद्याप्याकर्षतीत्यर्थः ॥

७ तदेवाह—**ग्रीवाभङ्गेत्यादिना ॥** ग्रीवायाः कन्धरायाः भङ्गेन विवलितेनाभिरामं रमणीयं यथा भवति तथा ॥ अनुपतति पश्चाद्धावति स्यन्दने रथे ॥ "शताङ्ग-

---

**कृष्णेति ॥** कृष्णसारे मृगविशेषेऽधिज्यकार्मुकेऽधिरूढगुणधनुषि त्वयि च चक्षुर्ददत् । अभ्यस्तत्वान्नुमभावः । चकारेण तुल्यकालता द्योत्यते । ततश्चैकस्य चक्षुषो युगपदनेकत्र वर्तमानत्वाद्विशेषालङ्कारः । मृगरूपधरयज्ञानुसारिणम् । प्रकृते तदनुसारित्वं प्रकरणलभ्यम् । साक्षात्पिनाकिनं महादेवं पश्यामीवेत्युत्प्रेक्षा । यतोऽत्र सतोः प्रकृताप्रकृतयोरसतस्तादात्म्यसम्बन्धमात्रस्य सम्भाव्यमानत्वात् । क्वचिदुभयोरसतोरपि 'कपालेनोन्मुक्तः स्फटिकधवलेनाङ्कुर इव' इति यथा । नोपमा साक्षाच्छब्दवैयर्थ्यात्क्रियानन्तरमिवशब्दप्रयोगाच्च । 'नोपमानं तिङन्तेन' इति भामहोक्तेः । ददच्चक्षुः पश्यामीति क्रियाद्वयग्रहणाच्च । उपमायां तु पिनाकिनमिव साक्षात्पश्यामीत्येवं योजने ददच्चक्षुरित्यनेन पौनरुक्त्यमेव । श्रुतिवृत्त्यनुप्रासौ । सारङ्गेण मृगेण । 'अयं पुनरिदानीमपि' इति श्लोकशेषः ॥

**ग्रीवेति ॥** पश्येति वाक्यार्थस्य कर्मत्वम् । इदानीमप्ययं पुरो दृश्यमानो मृगः पुनरुदग्रप्लुतत्वादुत्कटोत्प्लवनाद्वियत्याकाशे बहुतरमधिकं प्रयाति प्रकृष्टं यातीति । अनेन

दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥ ७

(सविस्मयम्) (तदेष) कथमनुपतत एव मे प्रयत्नप्रेक्षणीयः संवृत्तः !

---

स्यन्दनो रथः" इत्यमरः ॥ मुहुः बद्धदृष्टिः असकृद्दत्तचक्षुः ॥ अनेन रथस्य मन्दगमनं त्वरितगमनं च सूच्यते ॥ अतएव बहुशो मध्ये मध्ये दर्शनावकाश इति भावः ॥ मुहुर्दर्शनं तु रथो निकट आयाति चेत्त्वरितं गन्तव्यं ॥ नचेच्छ्रमवशान्मन्दं गन्तव्यमित्यभिप्रायेण यदा रथशब्दस्तीव्रं श्रूयते तदा त्वरितं धावयति ॥ यदा भूमेर्निम्नोन्नततया रथवेगस्य कुण्ठितत्वाद्रथध्वनिर्न श्रूयते ॥ तदा परावृत्य मुहुर्मुहुः पश्यतीति यावत् ॥ शरपतनभिया बाणपतनभयेन ॥ भूयसा अतिशयेन पूर्वकायं कायस्य पूर्वभागं पश्चार्धेनापरभागेन ॥ अर्धोत्तरपदे विनापि पूर्वपदेनापरस्य पश्चभावो वक्तव्यः ॥ प्रविष्टः प्रह्वीकृत्य संकुचित इति यावत् ॥ अर्धावलीढैः अर्धं अवलीढा आस्वादिताः तैः ॥ श्रमविवृतमुखभ्रंशिभिः आयासव्यात्तमुखच्युतैः । कीर्णवर्त्मा आस्तृतमार्गः ॥ अनेन मृगस्य कादाचित्कदर्शनं सूच्यते ॥ यदा मृगो न दृश्यते तदा भूमिपतितदर्भांकुरैस्तद्गतिर्ज्ञायत इति भावः ॥ श्रमविवृतेत्यनेन बहुदूरादागमनं सूच्यते ॥ तर्हि तद्विषये बाणो मुच्यतामित्यत आह—उदग्रप्लुतत्वादिति ॥ उच्चवल्गनत्वाद्वियत्याकाशे ॥ बहुतरं । उर्व्यां भूमौ ॥ स्तोकं अल्पं ॥ "स्तोकाल्पक्षुल्लका" इत्यमरः ॥ अनेन शरपतनविषयस्य वक्रतया अलक्ष्यत्वं सूच्यते ॥ प्रयाति प्रकृष्टं धावति ॥ अनेन सिंहादिवदभिमुखीभूय क्रौर्यं न करोति ॥ किन्तु पलायनमात्रशरण इति भावः ॥ पश्य प्रेक्षस्व ॥ आमन्त्रणे लोट् ॥ अत्र मृगजवकथनेनेतः पूर्वं मृगापेक्षया अधिकवेगवान्रथः किमर्थमिदानीं मन्दवेगो जातः इति सूतं पृच्छतीति भावः ॥ अत्र कृष्णसारवर्तिनो भयस्य स्वभावोक्त्यादिना परिपोषाद्भयानको रसः ॥

---

गमनस्य प्रकर्ष उक्तः । बहुतरमिति देशाधिक्यमुक्तम् । उर्व्यां स्तोकमल्पं प्रयातीति । अनेन न पौनरुक्त्यशङ्कावकाशः । कीदृक् । अनु पश्चात्पतति स्यन्दने रथे ग्रीवाभङ्गेनाभिरामं यथा स्यात्तथा मुहुर्वारंवारं बद्धदृष्टिर्दत्तचक्षुः । 'दृष्टिर्ज्ञानेऽक्ष्णि दर्शने' इत्यमरः । शरपतनभयाद्बाणपातत्रासेन भूयसाधिकेन पश्चार्धेन पूर्वकायं प्रविष्ट इवेति गम्योत्प्रेक्षा । गोलकीभूत इवेत्यर्थः । 'पश्चात्' इति सूत्रेण अर्धोत्तरपदस्य 'दिक्पूर्वपदस्यापरशब्दस्य पश्चभावो वक्तव्यः' इत्युक्त्वा 'अर्धं विनापि पूर्वपदेन पश्चभावो वक्तव्यः' इति वार्तिकेन पश्चार्धेति सिद्धम् । पुनः कीदृक् । अर्धावलीढैरर्धजग्धैरिति दर्भाणां मुखान्तःसत्त्वे हेतुत्वेनोपात्तम् । श्रमेण विवृतं व्यात्तं यन्मुखं तस्माद्भ्रंशिभिरधःपतद्भिर्दर्भैः कीर्णवर्त्मा व्याप्तमार्गः । भयाभूयेति यतियातीति छेकश्रुतिवृत्त्यनुप्रासाः । श्रमेणेत्यत्र रसनाकाव्यलिङ्गम् । तल्लक्षणं यथा—'प्रत्युत्तरोत्तरार्थं यत्पूर्वपूर्वार्थहेतुतः । रसनाकाव्यलिङ्गं तत्' इति । 'परं परं प्रति यदा पूर्वपूर्वस्य हेतुता । तदा कारणमाला स्यात्' इत्येतच्छङ्का न कार्या । यतस्तत्र हेतुत्वेनोपात्तः कारको हेतुर्विषयः । ज्ञापकस्योपात्तस्य हेतुत्वस्याङ्गीकारात् । नापि मालाकाव्यलिङ्गमत्र । एकं प्रति बहूनामुपात्तानां हेतुत्वेन तत्स्वीकारात् । स्वभावोक्तिश्च पदार्थहेतुके काव्यलिङ्गे हेतुश्च । अत्र प्रथमतृतीय-

सूतः—आयुष्मन् ! उत्खा(उद्घा)तिनीभूमिरिति मया रश्मिसंयमना-द्रथस्य मन्दीकृतो वेगः ॥ तेन मृग एष विप्रकृष्टांतरः संवृत्तः ॥ सम्प्रति समदेशवर्तिनस्ते न दुरासदो भविष्यति ॥

राजा—तेन हि विमुच्यन्तामभीश(ष)वः ॥

---

उत्खातिनीत्यादि ॥ उत्खातिनी निम्नोन्नतस्थलवती ॥ रश्मिसंयमनात्प्रग्रह-बन्धनात् ॥ "अभीशुः प्रग्रहे रश्मा" वित्यमरः ॥ वेगो जवः ॥ 'वेगे वेगिनि वेगस्स्या' दिति विश्वः ॥ मन्दीकृतः अस्वल्पः स्वल्पीकृतः ॥ *भावे च्विः ॥ अनेन च्विप्रत्ययेन स्वाभाविक-मान्द्यं निरस्यते ॥

तेनेति ॥ येन कारणेन भूमिर्दन्तुरेति रश्मिसंयमनं कृतं। तेन तस्मादित्यर्थः ॥ विप्रकृष्टान्तरः विप्रकृष्टं दूरं अन्तरं मध्यप्रदेशो यस्य सः तथोक्तः ॥ ते दुरासदः दुष्प्रापः ॥ ते दुरासद इति कथम्? * "न लोकाव्ययनिष्ठाखलर्थतृणा" मिति प्रतिषेधात् ॥ अत्रोच्यते अयं निषेधः *कर्तृकर्मणोः कृतीति विहितषष्ठ्या एव ॥ नतु षष्ठी शेष इति ॥ तेनेत्यादि ॥ सम्प्रति समदेशे वर्तत इति यत् तेनेत्यर्थः ॥

---

चरणयोरार्थो हेतुः । द्वितीये शाब्दो हेतुरिति प्रक्रमभङ्गो नाशङ्कनीयः । तस्य तद्व्यतिरेकेण वक्तुमशक्यत्वात् । मृगविशेषणत्वे प्रक्रमभङ्गान्तरस्यापत्तेः पश्चार्धविशेषणत्वेऽर्थासङ्गति-रित्यवधेयम् । काव्यलिङ्गद्वयरसनाकाव्यलिङ्गहेतुगम्योत्प्रेक्षाणां संसृष्टिः । स्वभावोक्त्या सह तेषामङ्गाङ्गिभावलक्षणः सङ्करः । स्वभावोक्तेरस्य च स एव । उक्तं च ध्वनिकृता—'रसभावा-दितात्पर्यमाश्रित्य विनिवेशनम् । अलंकृतीनां सर्वासामलङ्कारत्वसाधनम्' इति । स्रग्धरा-वृत्तम् । अत्र भयानको रसो व्यङ्ग्यः । तस्य मृगगतं भयं स्थायिभावः । दुष्यन्ताधिष्ठितस्यन्द-नालोकनमालम्बनविभावः । तदनुपतनशरपतनौत्सुक्यादीन्युद्दीपनविभावः । ग्रीवाभङ्गार्ध-भक्षिततृणस्खलनशुष्कौष्ठकण्ठत्वमुखवैवर्ण्यशरीरसङ्कोचाश्रुच्छलादयोऽनुभावाः । त्रासश्रम-शङ्कावेगादयो व्यभिचारिणः । कम्पादयः सात्त्विकाः । एतैरसो व्यज्यते । तदुक्तम्—'रक्षःपिशाचादिधनुष्पाण्यादेर्भीषणाकृतेः । दर्शनं श्रवणं शून्यागारारण्यप्रवेशयोः ॥ श्रवणं चानुसन्धानं बन्धूनां वधबन्धयोः । एवमाद्या विभावाः स्युरथ नेत्रकराङ्घ्रिणः ॥ मध्ये मध्ये स्तम्भकम्पौ रोमाञ्चानां चयस्तथा । शुष्कोष्ठतालुता कम्पहृदयत्वं विवर्णता ॥ मुखस्याथ परावृत्य वीक्षणं स्वाङ्गगोपनम् । पलायनं स्वरे भेदो गात्रस्तम्भो विलक्षता ॥ कान्दिशीकत्व-युग्दृष्टिरनुभावा भवन्त्यमी । स्तम्भादयोऽश्रुतत्यक्ता दैन्यमावेगचापले ॥ शङ्कामोहावपि त्रासापस्मारमरणादयः ॥ यत्र सञ्चारिणः स्थायि भयं स्यात्स भयानकः' इति ।

उद्घातिनी स्खलनयोग्या । 'उद्घातः कथ्यते पादस्खलने समुपक्रमे' इति विश्वः । रश्मीनां प्रग्रहाणां संयमनात् । 'किरणप्रग्रहौ रश्मी' इत्यमरः । मन्दीकृतोऽल्पीकृतः । विप्रकृष्टमतिदूरमन्तरं देशावकाशरूपं यस्य सः । दुरासदो दुष्प्रापः । अभीषवः प्रग्रहाः । 'अभीषुः प्रग्रहे रश्मौ' इत्यमरः । रथवेगं निरूप्य दृष्ट्वेति कविवचनम् ॥

सूतः—यदाज्ञापयत्यायुष्मान् । (रथवेगं रूपयित्वा निरूप्य) आयुष्मन् ! पश्य पश्य सम्प्रति हि—

मुक्तेषु रश्मिषु निरायतपूर्वकायाः
निष्कम्पचामरशिखानिभृतोर्ध्वकर्णाः ।
आत्मोत्थि(द्ध)तैरपि रजोभिरलङ्घनीया
धावन्त्यमी मृगजवाक्षमयेव रथ्याः ॥ ८

राजा—सत्यम् ॥ अतीत्य हरितो हरींश्च वर्तन्ते वाजिनः ! तथा हि—

---

यदाज्ञापयतीति ॥ तत्करवाणीति शेषः ॥ रूपयित्वा अभिनीय ॥

८ मुक्तेष्वित्यादि ॥ रश्मिषु अभीशुषु मुक्तेषु सत्सु ॥ निरायतपूर्वकायाः नितरां दीर्घा देहस्य पूर्वभागा येषां ते तथोक्ताः ॥ निष्कम्पाः कम्परहिताः चामराणां शिखाः अग्राणि येषां ते तथोक्ताः ॥ निभृताः निश्चलाः ऊर्ध्वा उदग्राः कर्णा येषां ते तथोक्ताः ॥ आत्मोत्थितैरपि देहोत्थितैरपि ॥ "आत्मा जीवे धृतौ बुद्धौ स्वभावे परमात्मनि" इति विश्वः ॥ रजोभिरलङ्घनीया अस्पृश्या रथ्याः रथवाहाः अश्वाइति यावत् ॥ धावन्ति त्वरितं गच्छन्ति ॥ त्वरितगमने कारणमाह—मृगजवाक्षमयेति ॥ मृगस्य जवो वेगः तस्मिन्नक्षमा ईर्ष्या तयेवेति हेतूत्प्रेक्षा ॥ अत्र निरायतपूर्वकाया इत्यनेन मृगशिरस्ताडनार्थं पूर्वपदोत्क्षेपणमश्वैः क्रियत इत्युत्प्रेक्षाध्वनिः ॥ यद्वा । सूर्याश्वसमगत्या भवितव्यमिति वाश्वानां पूर्वकायदीर्घत्वमिति व्यज्यते ॥

तथैवाह—सत्यमित्यादिना ॥ सत्यं तत्त्वतः ॥ "सत्यं शपथतत्त्वयो"रित्यमरः ॥ हरितः हरित्संज्ञकान् हरीनश्वान् ॥ सूर्याश्वानिति यावत् ॥ "हरिद्वर्णे च सूर्ये च सूर्याश्व" इति हलायुधः ॥ वाजिनः अश्वाः ॥

---

मुक्तेष्विति ॥ रश्मिषु प्रग्रहेषु मुक्तेषु संयमनान्मुक्तेषु । शिथिलितेष्विति यावत् । अमी तेजस्विनो धारापञ्चकनिपुणाः । जगत्यश्वरत्नीभूता इत्यर्थान्तरसंक्रमितवाच्यम् । रथ्या रथवाहका अश्वाः । धावन्ति द्रुततरं गच्छन्ति । 'तद्वहतिरथयुग—' इति यत् । 'रथ्यो वोढा रथस्य यः' इत्यमरः । निरायतो नितरां दीर्घः पूर्वकायः पूर्वशरीरं येषां ते । निष्कम्पा निश्चलाश्चामराणां भूषार्थं बद्धानां शिखा अग्रभागा येषु ते । निभृतौ निश्चलावूर्ध्वौ कर्णौ यस्य सः । पश्चात्कृतैकशेषाणां बहुवचनम् । आत्मोद्धतैरपीति । नेम्युत्थितैस्तु सुतरामित्यपिशब्दार्थः । मृगस्य जवो वेगस्तदक्षमया तदक्षान्त्येवेति हेतूत्प्रेक्षा । 'क्षितिक्षान्त्योः क्षमा' इत्यमरः । विशेषणचतुष्टयेन वेगातिशयो व्यज्यते । स्वभावोक्तिः । वृत्त्यनुप्रासः । वसन्ततिलकावृत्तम् । सत्यमिति सूतोद्गारभिन्नं वाक्यम् । चोऽप्यर्थे । हरितो हरिद्वर्णान् । 'पालाशो हरितो हरित्' इत्यमरः । नीलवर्णानिति यावत् । हरितोश्वानप्यतीत्यातिक्रम्य वाजिनोऽश्वा वर्तन्ते वेगेन । सूर्याश्वा अप्येभिर्जिता इत्यर्थः । 'हरिरिन्द्रे हरिर्विष्णौ हरिरश्वे हरी रवौ' इत्यनेकार्थध्वनिमञ्जरी । अन्येषां का गणनेत्यपिशब्दार्थः ॥

यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां
यदर्धे विच्छिन्नं भवति कृतसन्धानमिव तत् ।
प्रकृत्या यद्वक्रं तदपि समरेखं नयनयो-
र्न मे दूरे किंचित्क्षणमपि न पार्श्वे रथजवात् ॥ ९

सूत! पश्यैनं व्यापाद्यमानम् ॥

(इति शरसंधानं नाटयति)

---

९ यदालोक इत्यादि ॥ यद्वस्तु दूरवशात्सूक्ष्मालोके तनु पश्यामि । सहसा हठात् । अनन्तरक्षण एवेत्यर्थः ॥ तद्वस्तु विपुलतां स्थौल्यं व्रजति याति ॥ सन्निकर्षादित्यभिप्रायः ॥ यद्वा आलोके दर्शने यत्सूक्ष्मं सहसा तद्विपुलतां व्रजति ॥ "आलोको दर्शनोद्योतौ" इत्यमरः ॥ पार्श्वे यद्वस्तु अर्धे मध्ये विच्छिन्नं सान्तरं । तत्सहसा कृतसन्धानमिव कृतसंश्लेषमिव रथवेगवशादित्यभिप्रायः ॥ प्रकृत्या स्वभावतः यद्वस्तु वक्रं सर्पवत्कुटिलं तदपि समरेखं समा तुल्या रेखा आकृतिर्यस्य तत्तथोक्तं ॥ ऋजु भवतीत्यर्थः ॥ सर्वत्र रथजवएव हेतुः ॥ क्षणमपीति *कालाध्वनोरत्यन्तसंयोगे द्वितीया ॥ रथवेगवशात्क्षणमात्रमपीदं विप्रकृष्टं निकृष्टमिति वक्तुं न शक्यमित्यभिप्रायः ॥

---

यदिति ॥ आलोके दर्शने यत्सूक्ष्मम् । 'आलोकौ दर्शनोद्द्योतौ' इत्यमरः । यद्दूरेण सूक्ष्मं दृश्यत इत्यर्थः । तत्सहसाकस्मादेव । तस्मिन्नेव क्षण इति यावत् । नयनयोर्विपुलतां व्रजति । स्थूलं दृश्यत इत्यर्थः । प्रकृत्या स्वभावेन यदर्धे विच्छिन्नं तत्सहसा नयनयोः कृतसन्धानमिव कृतसन्धानवद्भवति । यत्पूर्वं छिन्नं तत्तस्मिन्नेव क्षणे दूरत एकमिव दृश्यत इत्यर्थः । प्रकृत्या यद्वक्रं तदपि नयनयोः सहसा समरेखं भवतीत्यनुषज्यते । दूरत्वात्समा रेखा आभोगो यस्य तत् । ऋज्वित्यर्थः । 'रेखा स्यादल्पके छद्मन्याभोगोल्लेखयोरपि' इति हैमः । नयनयोः समरेखं न वस्तुत इति गम्योत्प्रेक्षा । इवानुषङ्गेण समरेखमिवेति योज्यम् । स्वभावोक्तिर्विरोधाभास उत्प्रेक्षा च । अतएव यत्र स्थलद्वये उत्प्रेक्षा तत्रैवानुवाद्यांशे प्रकृत्येत्यस्य सम्बन्धः । क्रियाकारकभेदात्त्रिविधं दीपकमिति । मे मम रथस्य जवाद्वेगात्क्षणमपि न किञ्चिद्दूरे न पार्श्वे । दक्षिणवामपार्श्वयोरित्यर्थः । अथ च पार्श्वे निकटे । क्षणादेव मम दूरे दक्षिणवामपार्श्वयोरपि निकटे च किमपि नास्तीत्यर्थः । अतएव पार्श्व इत्येकवचनोपादानम् । 'पार्श्वोऽवयवभेदे स्याच्च क्षोपायसमीपयोः' इति धरणिः । तेन यथासङ्ख्यालङ्कारः । रथजवादिति हेतुश्च । यद्यपि राजानकरुचकेन यत्र पदार्थो हेतुस्तत्र हेतुत्वेनोपादाने 'नागेन्द्रहस्तास्त्वचि कर्कशत्वादेकान्तशैत्यात्कदलीविशेषाः' इत्यादाविव न कश्चिदलङ्कारः, यत्र तूपात्तस्य हेतुत्वम् 'श्रमविवृतमुखभ्रंशिभिः' इत्यादौ तत्र काव्यलिङ्गमित्युक्तम्, तथापि भोजप्रभृतिभिरस्य हेतुनाम्नोक्तत्वादत्र तथोक्तिः । तदुक्तं सरस्वतीकण्ठाभरणे—'क्रियायाः कारणं हेतुः कारको ज्ञापकश्च सः' इति । उदाहृतं च—'अस्य राज्ञः प्रभावेण तदुद्यानानि जज्ञिरे । आर्द्रांशुकप्रवालानामास्पदं सुरशाखिनाम्' इति । अत्र च कारको हेतुः । एवमग्रेऽपि ज्ञापकहेत्वादावनुस-

(नेपथ्ये)

भो भो राजन्नाश्रममृगोऽयं न हन्तव्यो न हन्तव्यः ॥

**सूतः**—(आकर्ण्यावलोक्य च) आयुष्मन्! अस्य खलु ते बाणपातवर्तिनः कृष्णसारस्य अन्तरे तपस्विनः संवृत्ताः (उपस्थिताः) ॥

**राजा**—(ससंभ्रमम्) तेन हि प्रगृह्यन्तां वाजिनः ॥

**सूतः**—'तथा' (इति रथं स्थापयति)

(ततः प्रविशत्यात्मना तृतीयो वैखानसः)

---

**अस्येत्यादि ॥** बाणः पात्यतेऽस्मिन्निति बाणपातः तत्पतनप्रदेशः *करणाधिकरणयोश्चेति घञ् ॥ अन्तरे मध्ये ॥

**तत इति ॥** आत्मना स्वेन तृतीयः त्रित्वसंख्यापूरकः । स्वयमेकश्चान्यौ द्वावित्यर्थः । वैखानसः विखनसो मतं वैखानसं तत्र परिनिष्ठिताः ॥ वानप्रस्थाश्रमिण इति

---

न्धेयम् । केचन हेतुकाव्यलिङ्गयोः पर्यायत्वमाहुः । यदायदेति वतिवतेति नयनयोरिति च्छेकानुप्रासस्य वृत्त्यनुप्रासेन सह संसृष्टिः । ताभ्यां च सह श्रुत्यनुप्रासस्यैकवाचकानुप्रवेशलक्षणः सङ्करः दकारादीनां द्वात्रिंशतोऽक्षराणां दन्त्यानां सत्त्वात् । उक्तं च काव्यादर्शे—'यया कयाचिच्छ्रुत्या यत्समानमनुभूयते । तद्रूपादिपदासक्तिः सोऽनुप्रासो रसावहः ॥ अनुप्रासादपि प्रायो वैदर्भैरिदमादृतम्' इति । सरस्वतीकण्ठाभरणेऽपि—'प्रायेण श्रुत्यनुप्रासस्तेष्वनुप्रासनामकः । सनाथेव हि वैदर्भी भाति तेन विचित्रता ॥ निवेशयति वाग्देवी प्रतिभानवतः कवेः । पुण्यैरमुमनुप्रासं समाधिमति चेतसि' इति । शिखरिणीवृत्तम् । 'कृष्णसारे' इत्यारभ्यैतदन्तेन षट्त्रिंशद्भूषणमध्य आद्यं भूषणमुपक्षिप्तम् । तल्लक्षणं मातृगुप्ताचार्यैरुक्तम्—'उपमाद्यैरलङ्कारैर्गुणैः श्लेषादिभिस्तथा । रत्नाढ्यैर्बहुभिर्युक्तं भूषणैरिव भूषणम्' इति । सुधाकरेऽपि—'गुणालङ्कारबहुलं भाषणं भूषणं मतम्' इति । ननु धनिकेन 'षट्त्रिंशद्भूषणादीनि' इत्यादिचतुर्थपरिच्छेदोपान्त्यकारिकयैषामन्तर्भाव एवोक्त इति चेत् । मैवम् । भरतादिभिर्भिन्नतयोद्देशलक्षणयोः कृतत्वात् । तथा च षोडशाध्याये भरतः—'विभूषणं चाक्षरसंहतिश्च शोभाभिमानौ गुणकीर्तनं च । प्रोत्साहनोदाहरणे नियुक्तगुणानुवादोऽतिशयश्च हेतुः ॥ सारूप्यमिथ्याध्यवसायसिद्धिपदोच्चयभ्रंशमनोरथाश्च । आख्यानयाञ्जाप्रतिषेधपृच्छादृष्टान्तनिर्भासनसंश्रयाश्च ॥ आशीः प्रियं वै कपटं क्षमा च प्राप्तिः क्षयश्चोत्तपनं तथैव । अर्थानुवृत्तिर्ह्युपपत्तियुक्ता कार्यानुभूतिः परिदेवनं च ॥ षट्त्रिंशदेतानि सलक्षणानि प्रोक्तानि निर्भूषणसम्मितानि ॥' इति । अभिनवभारत्यां भरतटीकायामभिनवगुप्ताचार्यैर्महता प्रबन्धेन भिन्नतया स्थापितानि । तथा चैकादशाध्याये नाटकलक्षणे—'षट्त्रिंशल्लक्षणोपेतमलङ्कारोपशोभितम्' इत्युक्तम् । तेन त्रयस्त्रिंशन्नाट्यालङ्कारा अपि संगृहीताः । तेन तानि ते चात्र यथासम्भवं यथावसरं वक्ष्यन्ते ॥ **नेपथ्य इति ॥** अप्रविष्ट एव यज्जवनिकान्तरे वदति तन्नेपथ्य इत्युच्यते ।

**वैखानसः**—(हस्तमुद्यम्य) राजन्! [1]आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः

[2]न खलु न खलु बाणः सन्निपात्योऽयमस्मिन्
मृदुनि मृगशरीरे पुष्पराशाविवाग्निः ।
क्व! बत! हरिणकानां जीवितं चातिलोलं
क्व च निशितनिपाताः सारपुङ्खाः शरास्ते ॥ १०

यावत् ॥ तदुक्तं मनुना—"पुष्पमूलफलैर्वापि केवलैर्वर्धयेत्सदा । कालपक्वैस्स्वयं शीर्णैर्वैखानसमते स्थितः" इति ॥ विखना इति सकारान्तोऽप्यस्ति ॥ तथाच श्रुतिः * "धेनुर्वेहानामदितिस्सुराणां ब्रह्मा ऋभूणां विखना मुनीना" मिति वैखानससूत्रएव वानप्रस्थाश्रमस्योक्तत्वात् तदाश्रमानुवर्तिनां वैखानसत्वव्यपदेश इति भावः ॥ यद्वा । श्रीमन्नामसहस्राध्याये ॥ "वैखानस्सामगायनः" इति भगवतो नारायणस्य वैखानसशब्दाभिधेयत्वात् ॥ तन्नाभीनलिनसञ्जातचतुर्मुखस्यापि वैखानसाभिधेयत्वात् ॥ यथा भागवते—"विखनसार्थितो विश्वगुप्तये" इति ॥ अत्र कार्यकारणयोरभेदोपचारस्य दृष्टत्वात्तन्मानसादिपुत्रसमस्तकाश्यपादिऋषीणामपि वैखानसशब्दव्यपदेशः सङ्गच्छते ॥

१० न खल्वित्यादि ॥ न खलु न खल्विति सम्भ्रमे द्विरुक्तिः ॥ मृदुनि कोमले मृगशरीरे बाणपातसहनाक्षम इति यावत् ॥ बाणस्सन्निपात्यो न खलु न योग्यः । तत्र दृष्टान्तमाह—पुष्पराशावग्निरिवेति ॥ यथा पुष्पराशावग्निर्नसन्निपात्यस्तथा प्रकृतमृगशरीरे बाण इत्यर्थः ॥ तूलराशाविति क्वचित्पाठः ॥ कुत इत्यत्राह—क्व बतेत्यादिना ॥ बतेत्यनुकम्पायाम् ॥ यद्वा राजानं प्रत्यामन्त्रणार्थको बतशब्दः ॥ "खेदानुकम्पासन्तोषविस्मयामन्त्रणे बत" इत्यमरः ॥ हरिणकानां मृगाणाम् ॥ बालार्थे कप्रत्ययः ॥ अनुकम्पायां वा * अनुकम्पायामिति कः ॥ अतिलोलं चञ्चलं स्वल्पोपाधिनापि निष्क्रमणशीलमिति यावत् ॥ जीवितं क्व जीवनं कुत्र? ते तव अमोघप्रहारस्येत्यर्थः ॥ निशितनिपाताः निशितास्तीक्ष्णा निपाताः फलानि येषां ते तथोक्ताः ॥ सारपुङ्खाः साराः स्थिरांशाः दृढा इत्यर्थः ॥ "सारो बले स्थिरांशे च" इत्यमरः ॥ पुङ्खाः बाणमूलप्रदेशा येषां ते तथोक्ताः ॥

अन्तरसन्धिश्चायं प्रकृतार्थसूचकत्वेनोक्तो मातृगुप्ताचार्यैः—'स्वप्नो दूतश्च लेखश्च नेपथ्योक्तिस्तथैव हि । आकाशवचनं चेति ज्ञेया ह्यन्तरसन्धयः' इति । बाणपातवर्तिन इत्यनेन नैकव्यम् । कृष्णसारस्य मृगस्यान्तरे मध्ये । 'अथान्तरेऽन्तरा । अन्तरेण तु मध्ये स्युः' इत्यमरः । ससम्भ्रमं सादरमिति वक्तिक्रियाविशेषणम् । एवमग्रेऽप्येतादृशस्थले योजनीयम् । प्रगृह्यन्तां प्रग्रहाकर्षणेन स्थिरीक्रियन्ताम् । 'इति रथं स्थापयति' इति कविवाक्यम् । आत्मना तृतीय इति द्वौ शिष्यौ स्वयं तृतीय इत्यर्थः । 'आत्मनश्च पूरणे' इति तृतीयाया अलुक् । एषामपि संस्कृतं पाठ्यम् । तदुक्तमादिभरते—'परिव्राण्मुनिशाक्येषु तापसश्रोत्रियेषु च । द्विजा ये चैव लिङ्गस्थाः संस्कृतं तेषु योजयेत्' इति । 'राजन्नित्यृषिभिर्वाच्यः' इति भरतोक्तेः 'राजन्' इति सम्बोधनम् ॥

1 अन्यत्रायमधिकपाठः 2 अयं श्लोको राघवभट्टेन न व्याख्यातः

अपि च—

तत्साधु कृतसन्धानं प्रतिसंहर सायकम् ।
आर्तत्राणाय वः शस्त्रं न प्रहर्तुमनागसि ॥ ११

राजा—एष प्रतिसंहृतः । (इति यथोक्तं करोति) ॥

वैखानसः—सदृशमेतत्पुरुवंशप्रदीपस्य भवतः ॥

जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव ।

---

वज्रसारा इति च पाठो दृश्यते ॥ "आशुगमूलप्रदेशे कर्तरि पुङ्ख" इति यादवः ॥ क्व कुत्र ? अत्रामोघपतनबाणस्याल्पजन्तुविषयस्यासम्भावितत्वात् द्वौ क्वौ प्रयुक्तौ ॥ तदुक्तं—"अत्यन्तासम्भावितार्थे द्वौ क्वौ प्रयुज्येते" इति ॥

११ पुनरपि हेत्वन्तरमाह—**तत्साध्वित्यादि ॥** यस्मात्कारणात् वः पौरवाणाम् ॥ तवैकस्यैव न भवतीत्यर्थः ॥ शस्त्रमायुधम् ॥ "शस्त्रमायुधलोहयोः" इत्यमरः ॥ आर्तत्राणाय दीनरक्षणं कर्तुम् ॥ तादर्थ्ये चतुर्थी ॥ अनागसि निरपराधविषये प्रहर्तुं प्रहारं प्रयोजयितुं न ॥ तस्मात्कारणात् साधुकृतसन्धानं सायकमुपसंहरेति योजना ॥ साधुकृतसन्धानमित्यनेन बाणस्याकर्णाकृष्टतया क्षणमपि विलम्बितुं न शक्यमिति द्योत्यते ॥ अनवधानेनावशतया वा दैवाद्धस्तशैथिल्ये सति बाणो मृगे पतिष्यतीति भावः ॥ तस्मादुपसंहरेति सम्भावनायां लोट् ॥ राज्ञश्चित्तरञ्जनस्य सम्भावनापुरस्सरत्वात् ॥ व इति बहुवचनेन कुलधर्मस्त्वयापि परिपालनीय इति व्यज्यते ॥ केचिच्छिक्षार्थतया योजयन्ति—तदिति ॥ यदाश्रममृगहननकर्म तत्साधु सम्यगित्युपहासे ॥ कृतसन्धानं सायकमुपसंहरेति विधौ लोट् ॥ अन्यत्सर्वं पूर्ववत् ॥ **सदृशमित्यादि ॥** एतच्छिष्टवचनकरणम् ॥

१२ **जन्मेति ॥** युक्तरूपं सुष्ठु युक्तम् ॥ * प्रशंसायां रूपप्प्रत्ययः ॥ यस्य तव पुरोः पुरुनाम्नः राज्ञो वंशे ॥ यस्य सार्वभौमत्वमस्ति । तस्य शिष्टवचनकरणविनयादिगुणो

---

**तत्साध्विति ॥** तत्तस्मात्तत्साधु यथा स्यादेवं कृतं सन्धानं यस्य तम् । साधुशब्देनापराद्धपृषत्काभावो व्यज्यते । सायकं बाणम् । प्रतिसंहर । प्रत्यावृत्य स्वं स्थानं प्रापयेत्यर्थः । तत्रान्वयव्यतिरेकौ हेतुत्वेनोद्दिशति—आर्तेति । वः युष्माकं शस्त्रमार्तानां पीडितानां त्राणाय रक्षणाय साधुपीडकानां दुष्टानां हिंसाया इत्यन्वयः । अनागस्यनपराधे । 'आगोऽपराधो मन्तुश्च' इत्यमरः । प्रहर्तुं नेति व्यतिरेकः । उभयविधेयं काव्यलिङ्गम् । साधुसन्धेति तेर्तुत्रास्त्रेति च्छेकश्रुत्यनुप्रासौ । इति यथोक्तं करोति शरं तूणीरे निक्षिपतीति कविवचनम् ॥

**जन्मेति ॥** यस्य तव पुरोर्वंशे जन्म तस्य तवेदमस्मदुक्तकरणं युक्तरूपमतिशयेन युक्तम् । 'प्रशंसायां रूपप्' इति रूपप् । युक्तरूपत्वे प्रथमचरणार्थहेतुत्वोपादानात्काव्यलिङ्गम् । एवंगुणोपेतं स्वगुणयुक्तम् । यस्य कस्याप्यतिथेः सत्कारः कर्तव्यः किमुत राज्ञः,

पुत्रमेवंगुणोपेतं चक्रवर्तिनमाप्नुहि ॥ १२

(इतरौ बाहू उद्यम्य सर्वथा चक्रवर्तिनं पुत्रमाप्नुहि)

राजा—(सप्रणामम्) परिगृहीतं ब्राह्मणवचनम् ॥

वैखानसः—राजन्! समिदाहरणाय प्रस्थिता वयं एष खलु कण्वस्य कुलपतेरनुमालिनीतीरमाश्रमो दृश्यते ॥ न चेदन्यकार्यातिपातः प्रविश्यात्र गृह्यता(मातिथेय)मतिथिसत्कारः ॥

अपि च—

रम्यास्तपोधनानां प्रतिहतविघ्नाः क्रियाः समवलोक्य ।

---

नास्ति ॥ पुरुवंश्यानां राज्ञां द्वयमप्यस्तीति भावः ॥ एवङ्गुणोपेतं शिष्टवचनकारिणं चक्रवर्तिनं सार्वभौमं स्वस्सदृशमित्यर्थः ॥ पुत्रमाप्नुहि लभस्व ॥ * आशिषि लोट् ॥

समिदाहरणाय समिदाहरणं कर्तुं ॥ * क्रियार्थोपपदेत्यादिना चतुर्थी ॥ प्रस्थिताः निर्गताः एष खल्विति ॥ खलु प्रसिद्धौ ॥ कुलपतेः गोत्रप्रवर्तकस्य ॥ अनुमालिनीतीरं मालिनीतीरे * यस्य चायाम इत्यव्ययीभावसमासः ॥ अन्यकार्यातिपातः अन्यस्य कृतस्यातिक्रमः ॥ उल्लङ्घनमिति यावत् ॥ न चेदित्यनेन यद्यपि कृत्यान्तरमस्ति । तथाप्याश्रमं प्रविश्यातिथिसत्कारो ग्राह्य इति व्यतिरेकेण व्यज्यते ॥

१३ आश्रमप्रवेशे प्रयोजनमाह—अपिचेत्यादि ॥ अपि च किञ्च ॥ आश्रमसम्बन्ध्येव किञ्चिदुच्यत इत्यर्थः ॥ तपोधनानां संयमधनानाम् ॥ अनेन तेषां कोपप्रसादयोस्सद्यः फलप्रदत्वं व्यज्यते ॥ तेन च तपोधनवचनोल्लङ्घने सर्वानर्थकारी शापो भवेदिति भावः ॥ क्रियाः अनुष्ठानानि ॥ कीदृश्यः क्रियाः ? प्रतिहतविघ्नाः निर्विघ्नाः ॥ अनेन यस्य राज्यमस्ति । तस्य राज्यपरिपालनसामर्थ्यं नास्तीति व्यज्यते ॥ अत एवोक्तम् ॥ निर्विघ्ना इति ॥ रम्याः निर्विघ्नतया कुत्रापि कर्मणि वैकल्याभावात्सुभगाः ॥ पुण्यप्रदा इत्यर्थः ॥

---

अतस्तदकरणेऽनौचित्यं स्यादित्यत आह—समिदाहरणायेति । ननु तद्यादृच्छिकमिदमावश्यकं तत्त्यागेनेदमेव कर्तव्यमित्यत आह—कुलपतेरिति । तेन तत्तात एव भविष्यति । अनेन स्वस्याप्राधान्यमुक्तम् । तल्लक्षणं पुराणे—'मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात् । अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः ॥' इति । अनुमालिनीतीरम् विभक्त्यर्थेऽव्ययीभावः । मालिनीनदीतीरे । कार्यातिपातः कार्यव्यासङ्गः । अतिथिषु साधुरातिथेयः । 'पथ्यतिथिवसतिस्वपतेर्ढञ्' इति ढञ् । सत्कारः पूजा । 'वैखानसः—राजन्, समिदाहरण-' इत्यादिना 'सत्कारः' इत्यन्तेन 'उल्लेखो' नाम नाट्यालङ्कार उपक्षिप्तः । तल्लक्षणम्—'कार्यदर्शक उल्लेखः' इति ॥

रम्या इति ॥ वेदबोधिताचरणत्वेन रम्यत्वम् । क्वचित् 'धर्म्याः' इति पाठः । धर्मादनपेता धर्म्याः । तेनैनोपप्रयुक्तिधन्यत्वादि राज्ञो व्यज्यते । तपोधनानामित्यनेनात्यन्त-

ज्ञास्यसि 'कियद्भुजो मे रक्षति मौर्वीकिणाङ्क' इति ॥ १३

**राजा**—अपि सन्निहितोऽत्रकुलपतिः ?

**वैखानसः**—इदानीमेव दुहितरं शकुन्तलामतिथिसत्काराय सन्दिश्य (नियुज्य) दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः ॥

**राजा**—(आत्मगतम्) भवतु तां (तामेव) द्रक्ष्यामि ॥ (प्रकाशम्) सैव (खलु) विदितभक्तिं मां महर्षेः करिष्यति (कथयिष्यति) ॥

---

समवलोक्य सम्यङ्मुहुर्मुहुर्दृष्ट्वा ॥ अनेन यस्य परिपालनसामर्थ्यमस्ति तस्य वैदिककर्मणि गुणदोषविचारं कर्तुं शास्त्रपरिज्ञानं नास्तीति ध्वन्यते ॥ मूढस्य कर्माङ्गवैकल्यावैकल्यविषये समानबुद्ध्या "अनभ्यासे विषं शास्त्र" मिति न्यायेन सम्यगवलोकनस्यासह्यत्वात् ॥ न हि सम्यगवलोकनं चक्षुषोरुन्मीलनेन दर्शनम् ॥ मौर्वीकिणाङ्कः ज्याघातकिणचिह्नः ॥ "अङ्कस्समीपे चोत्सङ्गे चिह्ने स्थानापराधयो"रिति केशवः ॥ अनेन यस्य शास्त्रपरिज्ञानं तस्य शौर्यं नास्तीति व्यज्यते ॥ कियत् किं परिमाणकं ? नेत्राप्रत्यक्षकरास्पृश्यस्थलमपीति यावत् ॥ रक्षति राजव्यतिरिक्तपुरुषस्य भुजः पुरोवर्तिनं हस्तविषयमेव रक्षति राज्ञस्तु न तथेति व्यतिरेकः ॥ ज्ञास्यसि पूर्वोक्तसमस्तगुणः त्वय्येवास्तीति ज्ञास्यसीति यावत् ॥

**अपीत्यादि ॥** अपीति प्रश्ने ॥ सन्निहितः मिलितः ॥

अतिथिसत्काराय आगन्तुकसत्कारं कर्तुम् ॥ सोमतीर्थं नाम सिद्धस्थानविशेषः ॥ प्रतिकूलं प्रतिबन्धकम् ॥ अनुरूपवरविघटकमिति यावत् ॥

आत्मगतमित्यनेन सर्वाश्राव्यमुक्तमित्यवगन्तव्यम् ॥ तदुक्तं—"नाट्यधर्मापेक्षया वस्तु त्रिविधं भवति ॥ सर्वश्राव्यं । सर्वाश्राव्यं । नियतश्राव्य" मिति ॥ तत्र सर्वश्राव्यं नाम प्रकाशमिति वदेत् ॥ सर्वाश्राव्यमात्मगतमिति ॥ नियतश्राव्यं जनान्तिकमिति ॥

---

विषयनैरपेक्ष्यम् । प्रतिहतविघ्ना इत्यनेनास्य प्रतापातिशयः । कियद्रक्षतीत्येनं प्रत्यार्थो हेतुः । क्रिया यागादिकर्मारम्भाः शिक्षा देवतादिपूजनं सम्प्रधारणमर्थानां विचारचेष्टा च । अतएव बहुवचनम् । 'आरम्भो निष्कृतिः शिक्षा पूजनं सम्प्रधारणम् । उपायः कर्म चेष्टा च चिकित्सा च नव क्रियाः ॥' इत्यमरः । सम्यगवलोक्य न वस्तुस्थित्या श्रवणेन । अपि तु स्वयं सम्यग्दृष्ट्वात्यन्तसन्तोषकारिण्य इति भावः । ज्ञास्यसि न तु ज्ञातवान्न च जानासि । मौर्वी ज्या तस्याः किणश्चिह्नं तदेवाङ्को भूषा यस्मिन्सः । 'अङ्को भूषणलक्ष्मसु' इति हैमः । अनेन तस्य सदैव जगत्त्रासापसारणोद्यम उक्तः । भुजः कियद्रक्षतीत्यन्यसहायानपेक्षत्वम् । एकवचनेन तस्मिन्नपि परानपेक्षत्वं ध्वनितम् । परिकरालङ्कारः । नन्वपुष्टार्थत्वदोषनिराकरणेन तदभावरूपस्य पुष्टार्थविशेषणत्वस्य स्वीकारेण गतार्थत्वात्परिकरस्य कथमलङ्कारत्वमिति चेत् । सत्यम् । तादृगनेकविशेषणनिबन्धे विच्छित्तिविशेषादलङ्कारत्वमस्याङ्गीकृतम् । अतः पूर्वार्धे एवायमलङ्कारो नोत्तरार्धे । वृत्त्यनुप्रासश्रुत्यनुप्रासौ । किणाङ्केति पुनरुक्तवदाभासः काव्यलिङ्गमपि । आर्या । अपि सन्निहितोऽत्रेति । अपिः प्रश्ने । 'गर्हासमु-

**वैखानसः**—साधयामस्तावत् ॥

(इति सशिष्यो निष्क्रान्तः)

**राजा**—सूत! चोदयाश्वान् ॥ पुण्याश्रमदर्शनेन तावदात्मानं पुनीमहे ॥

**सूतः**—यदाज्ञापयत्यायुष्मान् ॥ (इति भूयोऽपि रथवेगं रूपयति)

**राजा**—(समन्तादवलोक्य) सूत! अकथितोऽपि ज्ञायत एव यथाऽयमाभोगस्तपोवनस्य ॥

**सूतः**—तत् कथं(कथमिव)?

**राजा**—किं न पश्यसि भवान्? इह हि—

---

तदेवान्यपरावृत्त्यान्यस्य कथनं रहस्यम् ॥ किञ्चिदाकाशभाषितं भवति ॥ तद्यथा—"किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यः । श्रुत्वेवानुक्तमप्येकस्तस्मादाकाशभाषितम् ॥" भवत्वित्यादि ॥ भवतु सन्निहितो वा मा वेत्यङ्गीकारे ॥ विदितभक्तिं विदिता ज्ञाता भक्तिर्यस्य तं तथोक्तम् ॥ करिष्यति तवासन्निधानेऽपि राजागत्यातिथिसत्कारं प्राप्य गतः इति ऋषेश्शकुन्तला वक्ष्यतीत्यर्थः ॥ न चेत्सर्वानर्थकारी काश्यपमुनिशापो भवेदिति ॥ अत एवोक्तं महर्षेरिति ॥

साधयामः निर्वर्तयामः ॥ तावत्साकल्ये ॥ समिदाहरणादिकं सर्वमित्यर्थः ॥

चोदय प्रेरय ॥ पुनीमहे पवित्रीकुर्महे ॥ रूपयति अभिनयति ॥ तदुक्तं भरतेन—"रथस्थस्यापि कर्तव्या गतिश्चूर्णपथैरथ । समपादं तथा स्थानं कृत्वा रथगतिं व्रजेत् ॥ सूतश्चास्य भवेदेवं प्रतोदप्रग्रहाकुलः । द्रुतैश्चूर्णपथैश्चैव कर्तव्यं रङ्गमण्डले" इति ॥

आभोगः परिपूर्णता ॥ विस्तार इति यावत् ॥ 'आभोगः परिपूर्णते'त्यमरः ॥

---

च्चयप्रश्नशङ्कासम्भावनास्वपि' इत्यमरः । पुंव्यक्तिशिष्यादिसाध्ये कर्मणि यद्दुहितरमित्युक्तेस्तथाम्ययोरपि सत्त्वे शकुन्तलामित्युक्तेश्च तस्यां मुनेर्जीवितसर्वस्वत्वं ध्वन्यते । गान्धर्वादिविवाहस्यानायासेन सम्पादनं च । अतएव वक्ष्यति—'सम्प्राप्यस्या अनुरूपवरप्रदाने सङ्कल्पः' इति । अथ च प्रतिकूलं दैवं शापस्तस्योपशमनेन सपुत्रायास्तस्या राज्ञा स्वगृहानयनमपि सूचितम् । अतोऽस्य बीजवाक्यत्वमुपपन्नम् । 'जन्म यस्य' इत्यादिना 'तां द्रक्ष्यामि' इत्यन्तेन मुखसन्धेरुपक्षेप इति प्रथममङ्गमुपक्षिप्तम् । तल्लक्षणमादिभरते—'काव्यस्यार्थसमुत्पत्तिरुपक्षेप इति स्मृतः' इति ।

नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः ।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगाः
तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः ॥ १४

---

१४नीवारा इत्यादि ॥ शुकगर्भकोटरमुखभ्रष्टाः शुकाः गर्भे येषां कोटरमुखानां तानि तथोक्तानि ॥ तेभ्यो भ्रष्टाः पतिताः । अनेन शुकानां किरातादिग्रहणजनितभयनैरपेक्ष्येण निश्शङ्कावस्थानं व्यज्यते ॥ तेनेतरवनवैलक्षण्यमुक्तम् ॥ आश्रमव्यतिरिक्तवनान्तरे तरूणामधस्ताद्यदि नीवारपतनं दृश्यते । तच्चिह्नेन शुकावस्थानसम्भावनया किरातादयश्शुकान्गृह्णन्ति ॥ अत्र न तथेति व्यतिरेकः ॥ तेन चाश्रमे दुष्टजनैः प्रवेष्टुमशक्यमिति ऋषीणां प्रभावस्सूचितः ॥ *इङ्गुदीफलभिदः इङ्गुदीनां तापसतरूणां फलानि येषु भिद्यन्ते निष्पिष्यन्त इति ते तथोक्ताः ॥ प्रस्निग्धाः प्रकर्षेण स्नेहवन्तः ॥ उपला अश्मानः ॥ "उपलः प्रस्तरे मणा" विति विश्वः ॥ सूच्यन्ते ज्ञाप्यन्ते ॥ तपोवनव्यतिरिक्तारण्यस्थपाषाणानामिङ्गुदीफलादिनिष्पेषणाभावात्स्निग्धत्वं नास्ति ॥ किन्तु तपोवनोपलानामेव स्निग्धता ॥ तस्मादुपलस्निग्धतया इदमरण्यं तपोवनमिति सूच्यत इति भावः ॥ प्रस्निग्धा इति प्रोपसर्गेणोपलानामतिस्निग्धतयेदानीमेवेङ्गुदीफलानि निष्पीड्य स्नानार्थमृषयो गता इति ध्वन्यते ॥ इङ्गुदीफलानां चिराच्छेदने सत्युपलानां स्निग्धता स्फुटं न दृश्येतेति सद्यः फलभेदनद्योतनार्थं प्रोपसर्ग इति भावः ॥ तेन च निर्गतानामृषीणामागमने बहुकालावकाशस्सूच्यते ॥ विश्वासोपगमाद्विश्वासप्राप्तेः । अभिन्नगतयः यथापूर्वंगमनाः शब्दं ध्वनिं रथस्येति शेषः ॥ तोयाधारपथा इति ॥ तोयाधारा जलाशयाः तेषां पन्थानो मार्गाः ॥ वल्कलानां परिधानयोग्यतरुत्वचां शिखा अञ्चलाः तासां निष्यन्दाः जलस्रावाः तेषां रेखाश्श्रेणयः ताभिरङ्किताः लांछिताः ॥ अनेनाश्रमे काश्चन तापसस्त्रियो विद्यन्त इति ध्वन्यते ॥ स्त्रिय एव तटाकेषु स्नात्वा सार्द्रवल्कलास्स्वस्वोटजेषु प्रविशन्ति ॥ तासां स्नानानन्तरं तर्पणादिक्रियाभावात् ॥ यद्वा—वानप्रस्थानां वस्त्रनिष्पीडनं न युक्तमिति स्मृतिः ॥ अनेन पूर्वं शकुन्तलामतिथिसत्काराय सन्दिश्य काश्यपो गत इति वैखानसोक्तस्य सम्मतिरुक्ता ॥

---

नीवारा इति ॥ तरूणां वृक्षाणामधो नीवारास्तृणधान्यानि सन्तीति क्रियासामान्ययोगान्न्यूनपददोषाभावः । एवमन्यवाक्येऽपि । कीदृशाः । शुका गर्भे मध्ये येषां तानि च कोटराणि तरुविवराणि तेषां मुखानि तेभ्यो भ्रष्टाः । मुखशब्देन नीवाराणां बाहुल्यम् । सम्पूर्णविशेषणेन सुपुष्टपक्षित्वेनाश्रममनोज्ञतया भूयो रतिर्ध्वन्यते । इदं पूर्वत्रार्थे हेतुः । इङ्गुदी तापसतरुस्तत्फलानि भिन्दन्तीति भिदः । उपलाः पाषाणाः । सूच्यन्ते द्योत्यन्ते एवेति सूतशङ्कापनोदः । सूच्यन्त इति कर्मकर्तरि । कीदृशाः । प्रकर्षेण स्निग्धाः । अत्र प्रशब्दः प्रकर्षं द्योतयन्निङ्गुदीफलानां सरसत्वमाचक्षाण आश्रमस्य सौन्दर्यातिशयं द्योतयन्राज्ञस्तत्राभिरतिं ध्वनयति । विश्वासस्योपगमः प्राप्तिस्तस्मात् । उत्पन्नविश्वासा इत्यर्थः । अतएवाभिन्नगतयोऽपरित्यक्तस्वस्थितयो मृगाः शब्दं रथशब्दं सहन्ते । 'ना गतिमार्गे दशायां च' इति विश्वः । अनया स्वस्वचेष्टाविष्टमृगस्थित्याश्रममञ्जुलतया

अपि च—

([1]कुल्याम्भोभिः पवनचपलैश्शाखिनो धौतमूला
भिन्नो रागः किसलयरुचामाज्यधूमोद्गमेन ।
एते चार्वागुपवनभुवि च्छिन्नदर्भाङ्कुरायां
नष्टाशङ्का हरिणशिशवो मन्दमन्दं चरन्ति ।।) १५

सूतः—सर्वमुपपन्नम् ।।

राजा—(स्तोकमन्तरं गत्वा)—सूत ! तपोपन(नि)वासिनामुपरोधो माभूत् ।। एतावत्येव रथं स्थापय । यावदहमवतरामि ।।

सूतः—धृताः प्रग्रहाः ।। अवतरत्वायुष्मान् ।।

राजा—(अवतीर्य) विनीतवे(षेण)षप्रवेश्यानि तपोवनानि नाम ।।

---

सर्वमित्यादि ।। उपपन्नं ज्ञातं ।। उक्तार्थं सर्वमित्यर्थः ।। स्तोकमन्तरं ईषदवकाशं ।। किञ्चित्प्रविश्येत्यर्थः ।। उपरोधो बाधा माभूत् न भवतु ।। माङि लुङिति लुङ् ।। यावदवतरामि अवतरिष्यामि ।। यावत्पुरानिपातयोर्लडिति भविष्यति लट्प्रत्ययः ।।

विनीत इत्यादि ।। विनीतानामुपशमवतां वेषइव वेषो येषां ते तथोक्ताः ।। तैः प्रवेश्यानि प्रवेष्टुमर्हाणि ।। नाम प्रसिद्धौ ।। *आर्द्रपृष्ठास्सिक्तकायोपरिभागाः ।। यावत्प्र-

---

नायकस्य प्रीत्युत्कर्षो व्यज्यते । तोयाधारा देवखातादयस्तत्पथास्तन्मार्गाः । 'ऋक्पूरब्धूः—' इत्यस्याप्रत्ययः समासान्तः । वल्कलान्यर्थादार्द्राणि तेषां शिखा अग्राणि तेभ्यो निष्यन्दो जलस्रवणं तेन या रेखास्ताभिरङ्किताश्चिह्निताः । निष्यन्देति 'अनुविपर्यभिनिभ्यः—' इति विकल्पेन षत्वम् । अत्र बहुव्रीहिणैवार्थलाभे यदङ्कितपदं तेन प्रत्यग्रवत्तया सार्द्रत्वेनाश्रमस्य सुन्दरतया राज्ञः प्रीत्यतिशयो ध्वनितः । क्वचिदिति वाक्यचतुष्टये सम्बध्यते । चकारः पूर्ववाक्यत्रयसमुच्चये । स्वभावोक्तिः । क्रियासमुच्चयालङ्कारः काव्यलिङ्गं च । वृत्त्यनुप्रासः श्रुत्यनुप्रासोऽपि । तीवेति दन्त्ययोः, श्शु इति तालव्ययोः, कगेति कण्ठ्ययोः, टरेति ष्टेति मूर्धन्ययोः, स्तेति दन्त्ययोः, रूणेति मूर्धन्ययोः, सङ्गतेः । एवमुत्तरचरणेष्वप्यूह्यम् । शार्दूलविक्रीडितं छन्दः । स्तोकमल्पमन्तरं गत्वा । अवतीर्योपनीय प्रविश्येत्यादीनां कविवाक्यत्वाल्ल्यबन्तानाम् 'राजा वदति' इत्याद्यभ्यूहितकविवाक्यस्थक्रियया सम्बन्धः । एवमग्रेऽपि बोद्धव्यम् । विनीतेत्यादिना नीतिनाम्ना नाट्यालङ्कार उक्तः । तल्लक्षणम्—'नीतिः शास्त्रेण वर्तनम्' इति 'इति सूतस्य' इति कविवाक्यम् । आर्द्रपृष्ठा इत्यनेन तेषां श्रमापनोद उक्तः । निमित्तं सूचयन्निति दक्षिणबाहुस्फुरणं सूचयित्वा अङ्गस्फुरणेनेत्यर्थः । 'निमित्तं हेतुलक्षणोः' इत्यमरः ।।

---

1 द्वाभ्यामप्ययं श्लोको न व्याख्यातः

इदं तावद्गृह्यताम् (इति सूतहस्ते धनुश्चाभरणानि चोपनीय) यावदहमाश्रमवासिनः प्रत्यवेक्ष्योपावर्ते तावदार्द्रपृष्ठाः क्रियन्तां वाजिनः ॥

सूतः—तथा ॥

(इति निष्क्रान्तः)

राजा—(परिक्रम्य) [1](अवलोक्य च) इदमाश्रमद्वारं ॥ यावत्प्रविशामि ॥ (प्रवेशमभिनयन्, निमित्तं सूचयित्वा)

शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य ।
अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र ॥ १६

---

विशामि प्रवेक्ष्यामि ॥ निमित्तं शकुनं शुभाशुभादिनिवेदकं ॥ सव्यदक्षिणनेत्रबाह्वादिस्पन्दनमिति यावत् ॥ तत्स्पन्दनयोरेवेष्टानिष्टफलसूचकत्वात् ॥ अत्र निमित्तमिति सामान्यतः उक्तत्वादिष्टानिष्टफलद्वयमपि विवक्षितम् ॥

निमित्तं भवतु नाम ॥ भवितव्यं शुभाशुभफलं केन वार्यते ? इत्याशंक्याह—

१६ शान्तमिति ॥ अत्राश्रमपदपदेनाश्रमस्थाः लक्ष्यन्ते ॥ अनेन निमित्तफलस्यानुपपत्तिरुक्ता ॥ इयं जहत्स्वार्था लक्षणा ॥ एतस्या लक्षणं पूर्वमेवोक्तम् ॥ आश्रमपदं शान्तमिति ॥ रागद्वेषादेश्चेतनधर्मत्वादाश्रमपदस्य तदसम्भवादाश्रमस्था एव लक्ष्यन्ते ॥ अजहत्स्वार्था यथा—यष्ट्यः प्रविशन्तीत्यादौ ॥ यत्र शब्दः स्वस्य क्रियासिद्ध्यर्थं परमाक्षिपति । सा अजहत्स्वार्था ॥ उपादानलक्षणेति च व्यपदिश्यते ॥ 'गौरनूबन्ध्य' इत्यादौ श्रुतेः ॥ प्रभुसम्मितत्वेन तत्प्रतिपादितस्यानुबन्धनस्याभङ्गुरप्रसरत्वात्तद्विषयभूता गोत्वरूपा जातिस्सामान्याकारायां स्वस्यां तदनुष्ठानानुपपत्तेः तत्समुचितं पिण्डविशेषं सामर्थ्यादाकर्षति ॥ "विशेष्यं नाभिधागच्छेत्क्षीणशक्तिर्विशेषणे" इति न्यायेन विशेषणभूतायां जातौ संकेतस्य प्रतिपादितत्वाद्गोशब्दस्याभिधाशक्तिस्तत्रैव परिसमाप्ता ॥ समाससामर्थ्यां सती विशेष्यभूताया व्यक्तेर्वार्तामपि वेदितुं नार्हति ॥ अतिप्रसङ्गादितो जातिर्व्यक्तिरुभयमपि शब्दशक्त्या समर्प्यत इति न युक्तं वक्तुम् ॥ अतो जातिरर्थं स्वात्मना नाभिदधे किंत्वाक्षिपतीत्युपादानलक्षणेनोदाहरणीया ॥ लक्षणाप्रयोजकरूढिप्रयोजकयोरन्यतराभावात् ॥ तर्हि तत्कथमिति चेत् । यथा

---

शान्तमिति ॥ इदं परिदृश्यमानमाश्रमपदमाश्रमस्थानम् । तात्स्थ्यात्तन्निवासिजनाः । शान्तं शान्ताः शमप्रधानाः । निरीहा इत्यर्थः । अत्यन्तनिरीहत्वं द्योतयितुमचेतनस्य कर्तृत्वं कृतम् । इहाश्रमपदेऽस्य बाहुस्फुरणस्य फलं महार्हवस्तुप्राप्त्यादि कुतः साकाङ्क्षेभ्यो विश्वामित्रप्रभृतिभ्यः सम्भवत्यपि इह तु सुतरामसम्भावनीयमित्यर्थः । अथवेत्याक्षेपे । भवितव्यानामवश्यभाव्यानां द्वाराण्युपायाः सर्वत्र भवन्ति । 'द्वारं पुनर्निर्गमनेऽभ्युपाये' इति विश्वः । अर्थान्तरन्यासः । उक्ताक्षेपालङ्कारः । प्रथमयतौ वृत्त्यनुप्रासः । उत्तरत्र श्रुत्यनुप्रासः । अन्त्यदले भविभवेति वितन्वतीति छेकानुप्रासश्च । अनयार्यया

---

1 अन्यत्रायमधिकपाठः

क्रियतामिति प्रयोगे कर्तुराक्षेपः ॥ कुरुष्वेति प्रयोगे कर्माक्षेपः ॥ प्रविशेत्युक्ते गृहमिति पिण्डमित्युक्ते भक्षयेत्यस्य चाक्षेपः ॥ तथा जातिरेव व्यक्तिमाक्षिपति ॥ अविनाभावात्। पीनो देवदत्तो दिवा न भुङ्क्त इत्यत्र च देवदत्तस्य दिवाभोजनस्य प्रतिषिद्धत्वादनुपपद्यमानं पीनत्वं स्वसिद्धये रात्रिभोजनमाक्षिपतीति लक्षणाया नोपयोगः ॥ "दृष्टश्श्रुतो वार्थोऽन्यथा नोपपद्यते ॥ इत्यर्थांतरकल्पनमर्थापत्तिरिति भट्टमते। गुरुमते वेदांतिनां मते च पृथक्प्रमाणभूता ॥ अर्थापत्तेर्नैयायिकादिभिरनुमानेऽन्तर्भावितत्वादविनाभावनिमित्त एव रात्रिभोजनाक्षेपः ॥ तस्मात्सर्वत्राविनाभावसद्भावे सम्बन्धमात्रसम्भवाया लक्षणाया नोपयोगः ॥ अत्र चानुपपद्यमानस्य पीनत्वादेश्शब्दप्रमाणवेद्यत्वे श्रुतार्थापत्तिः ॥ तस्यैव प्रत्यक्षादिप्रमाणांन्तरानुग्राह्यत्वे दृष्टार्थापत्तिरिति सर्वं समंजसम् ॥ तर्ह्याश्रमे ऋषीणां कोपप्रसादयोस्सद्यः फलप्रदत्वाच्छुभाशुभं कथं न भवतीत्यत आह—शान्तमिति ॥ शान्तं निर्विकारं ॥ रागद्वेषादिरहितमित्यर्थः ॥ तस्याश्रमपदमिति सामान्यवचनेन राजर्ष्याश्रमे शुभफलमस्ति ॥ दुर्वासआद्याश्रमेष्वपराधादनिष्टफलमप्यस्तीत्याशंक्याह—इदमिति ॥ इदमिति निर्देशेन ब्रह्मर्षेः काश्यपस्याजन्मब्रह्मचारित्वं कोपाभावश्च प्रसिद्धमिति द्योत्यते ॥ तर्हि कालान्तरभाविशुभफलं कथमिदानीं तर्क्यत इत्यत आह—बाहुस्स्फुरतीति ॥ स्फुरति स्पन्दते ॥ क्रियापदे वर्तमानार्थप्रत्ययेनाद्यापि स्फुरतीति निमित्तफलप्राप्त्योरव्यवधानं सूच्यते ॥ अत्र बाहुरिति सामान्यशब्दः कृतः ॥ न तु दक्षिणस्सव्य इति विशेषः कथितः ॥ अस्थाने स्फुरणान्निमित्तसद्भावस्य वैफल्यमाह—इहेति ॥ इहाश्रमे अस्य बाहुस्पन्दनस्य फलं भोगः ॥ "फलं फले धने बीजे निष्पत्तौ भोगलाभयो" रित विश्वः ॥ प्रियालिंगनादिभोग इत्यर्थः ॥ कुतः कस्मात्कारणात्? आश्रमपदस्य शान्तत्वादित्यर्थः ॥ रागाभावात्सवर्णराजर्ष्याश्रमाभावाच्च शुभफलं प्रियालिंगनादि कथं भवति? द्वेषाभावादशुभफलं सर्वानर्थकारी शापश्च कथं भवति? इति भावः ॥ अथवेति पक्षान्तरे ॥ भवितव्यानां प्राप्तव्यानां ॥ शुभाशुभफलकार्याणामिति शेषः ॥ *भूप्राप्तावित्यस्माद्धातोरिदं रूपं सिद्धम् ॥ सर्वत्र समस्तप्रदेशेषु द्वाराणि मार्गाः भवन्ति जायन्ते ॥ आश्रमपदं शान्तमित्यादौ निर्णयान्तस्संदेहालङ्कारः ॥ निर्णयान्त आक्षेपालङ्कारो वा ॥ अर्थांतरन्यासो वा ॥

---

परिकर इति द्वितीयमङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'यदुत्पन्नार्थबाहुल्यं ज्ञेयः पकिरस्तु सः' इति। इत इतः सख्यौ। 'नायिकानां सखीनां च सौरसेनी प्रकीर्तिता' इति भरतोक्तेरासां पाठ्या सौरसेनीभाषा। 'सहीओ' इत्यत्र प्रथमम् 'द्विवचनस्य बहुवचनम्' इति सूत्रे औकारस्य जसि जाते 'जश्शसोः' इत्यनुवर्तमाने 'स्त्रियामुदोतौ वा' इति जस ओकारः। 'हः' इत्यनुवर्तमाने 'खघथध भाम्' इति खस्य हः। क्वचित् 'सहा' इति पाठः। स तु विकल्पपक्षे जसो लोपे ज्ञेयः। दक्षिणेन वृक्षवाटिकामिति 'एनपा द्वितीया' इति द्वितीया। स्वप्रमाणानुरूपैरिति स्वशब्देन प्रमाणपदसाहचर्यात्सामर्थ्यं लक्ष्यते। तस्य प्रमाणं मानं तदनुरूपैः। स्वशक्तियोग्यैरित्यर्थः। 'प्रमाणं मानशास्त्रयोः' इति धरणिः। निरूप्य दृष्ट्वा। अहो इति विस्मये। सौन्दर्यातिशयदर्शनेन विस्मयः। दृश्यते यत्तद्दर्शनं स्वरूपम्। 'कृत्यल्युटो बहुलम्' इति ल्युट्। मधुरं प्रियम्। हृदयङ्गममिति यावत्। 'मधुरं रसवत्स्वादुप्रियेषु' इति विश्वः ॥

(नेपथ्ये)

[1]इदो इदो सहिओ ॥

**राजा**—(कर्णं दत्वा) अये ! दक्षिणेन वृक्षवाटिकामालाप इव श्रूयते ॥ यावदत्र गच्छामि ॥ (परिक्रम्यावलोक्य च) एतास्तपस्विकन्यास्स्वप्रमाणानुरूपैः सेचनघटैर्बालपादपेभ्यः पयो दातुमित एवाभिवर्तन्ते ॥ (निरूप्य) अहो मधुरमासां दर्शनम् !

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य ।

---

1 इत इतः सख्यौ ॥

---

**इदो इत्यादि ॥** आगच्छतमिति शेषः ॥ सहिओ इत्यत्र द्विवचनस्थाने बहुवचनम् । प्राकृते द्विवचनस्य बहुवचनमित्युक्तत्वात् ॥ अत्र सखिशब्दस्त्वन्योन्यागोपनीयविस्रम्भालापादिसिद्ध्यर्थमिति ज्ञातव्यम् ॥ कर्णं दत्वा श्रवणं निधाय ॥

**अये इत्यादि ॥** अये इति हर्षे । वृक्षवाटिकां दक्षिणेन वृक्षवाटिकाया दक्षिणभागे ॥ *एनपा द्वितीयेति द्वितीया ॥ आलापः आभाषणम् ॥

**एता इत्यादि ॥** स्वप्रमाणानुरूपैरात्मशक्तिसदृशैः ॥ अभिवर्तन्ते अभितः पर्यटन्ति ॥ अत्र कविना शकुन्तलायाः वृक्षसेचनकल्पनं सर्वावयवदर्शनार्थमित्यवगन्तव्यम् ॥ निरूप्याभिनीय ॥ अहो इत्यादि ॥ अहो ॥ इत्याश्चर्ये ॥ मधुरं मधुवन्मधुरं ॥ मधु यथा इन्द्रियप्रीणनकरं तद्वदासां दर्शनमपीति भावः । मधुमाधुर्ये ॥ तद्योगात् *ऊषसुषिमुष्कमधोर इति रप्रत्ययः दर्शनमिति—दृश्यत इति दर्शनं रूपलावण्यादि ॥ अहो आश्चर्यविषयीभूतं ॥ लोकोत्तरचमत्कारकारित्वात् । अनेन नायिकालम्बनगुणाः मधुरादय उक्ताः ॥ तदुक्तं ॥ "मधुरास्सुकुमाराश्च रूपयौवनशालिनः । श्रृङ्गारालम्बना भावास्तरुणी तरुणादयः ॥" इति ॥ यद्वा—दृश्यतेऽनेनेति दर्शनं कटाक्षविलोकनादि ॥ मधुरं श्रृङ्गाररसाभिव्यञ्जकं ॥ अहो अकृत्रिममनोहरत्वादाश्चर्यभूतं ॥ यद्वा—दृश्यतइति दर्शनं शरीरलावण्यादिगतं ॥ मधुरमतिशयितरसवत् ॥ मधुरं रसवदित्युक्तत्वात् ॥

१७ तदेवोपपादयति—**शुद्धान्तदुर्लभमित्यादिना ॥** शुद्धान्तो राजभवनं ॥ तत्रापि दुर्लभं न लभ्यं ॥ "रत्नहारी तु पार्थिव" इति वचनाल्लोके या या रूपवत्यस्तास्सर्वाविचार्य राजभवनमानीयन्ते ॥ अतएवोक्तम्—शुद्धान्तदुर्लभमिति ॥ यद्वा—सकलसौख्यवत्त्वेन शरीरलावण्याद्यतिशयो भवति ॥ तत्राप्येतादृशवपुषो दुर्लभत्वेन रूपाद्यतिशयो

---

**शुद्धान्तेति ॥** आश्रमे वस्तुं शीलं यस्य । शीलार्थेन णिनिप्रत्ययेन तादृग्रूपासम्भवो द्योत्यते । जनस्य सामान्यजनस्य । 'लोके जगद्भेदे पृथग्जनः' इति हैमः । शुद्धान्तो राजस्त्रियः । तात्स्थ्यादिति क्षीरस्वामी । तासां दुर्लभम् । इदं प्रत्यक्षतः परिदृश्यमानं जगत्त्रयैकमोहनं वपुर्यदीति विशेषे प्रस्तुते सामान्यस्योक्तिरप्रस्तुतप्रशंसा । तदा वनल-

दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥ १७

व्यज्यते ॥ यद्यत्रापि राजगृहवत्सौख्यसद्भावो रूपाद्यतिशयः किं न स्यादित्यत आह—आश्रमवासिन इति ॥ ताच्छील्यार्थप्रत्ययेन निरन्तरवासित्वं द्योत्यते ॥ आश्रमवासित्वेऽपि राजाद्युचितहारादिमत्वे रूपादिकं न दुर्लभं किमित्यत आह—यदि जनस्येति तादृशमनोहराहारादिभोगरहितस्येत्यर्थः ॥ तादृग्रूपादिकारणाभावेपि ऋषेर्विचित्रशक्तिमत्वमहिम्नैव तादृग्रूपादेस्सद्भावमाह—

**दूरीकृता इत्यादिना** ॥ यद्वा—तादृक्कारणाभावे कथं रूपादिसद्भावः? इत्यत आह—दूरीकृता इत्यादि दृष्टान्तवचनम् ॥ अनेन दृष्टान्तबलात्तादृक्कारणं कल्पनीयमित्यर्थः ॥ तथाच—वक्ष्यत्युत्तरत्र 'सर्वथाप्सरस्सम्भवै' वेत्यादिना ॥ क्रीडार्थबहुप्रयत्नपरिकल्पितं वनमुद्यानम् ॥ तत्रैवोद्भूता लताः शाखादिकोमळावयवप्राचुर्यात् स्त्रीलिंगत्वाच्च ता एव गृहीता न तु वृक्षाः तेषां क्रीडादिकठिनावयवसम्भवात्पुल्लिङ्गत्वाच्च ॥ वनोद्भवाभिर्लताभिः ॥ यद्यपि वनशब्दो वृक्षादिसमुदायवाचकत्वेनोद्यानेऽपि वर्तते । तथाप्युपमानप्रतियोगित्वेनाभिधीयमानमरण्यमेव भवति ॥ निरुपपदस्य वनस्यारण्य एव रूढत्वात् ॥ गुणैरिति वनलतानां शब्दतो दूररूपत्वं तु सिद्धमेव ॥ किन्तु गुणैस्सौकुमार्यपुष्पफलबाहुल्यादिभिर्दूरीकृताः न्यक्कृताः ॥ वनलतानां बहुलसौरभपुष्पादिमत्त्वेनोद्यानलतानां तादृशाभावे ताभिस्तासां न्यक्कारः कल्प्यते ॥ खलु प्रसिद्धौ ॥ अनेन सर्वलोकसंवाद उक्तः ॥ केचिद्यदि जनस्येति पठन्ति तस्मिन् पक्षेप्याश्रमवासिनो जनस्य वपुश्शुद्धान्तदुर्लभं यदि । तर्ह्युद्यानलताः वनलताभिर्गुणैर्दूरीकृताः खल्विति योजना ॥ अत्रेदं वपुरिति ॥ सर्वावयवप्रत्यक्षतोक्ता ॥ शुद्धान्तदुर्लभमिति स्वाभिलाषविषयता कथिता ॥ गुणैरिति बहुवचनेन यौवनादिबहु गुणयोगिता ॥ शुद्धान्तदुर्लभमित्यादौ दृष्टान्तालङ्कारः ॥ तदुक्तं—"दृष्टान्तः पुनरेतेषां प्रतिबिम्बितानामुपमेयवाक्यस्थितानां पदार्थानामुपमानवाक्ये प्रतियोगिताकल्पन" मिति ॥ अत्र अहो मधुरमित्यादिना वनलताभिरित्यन्तेन परिभावो नाम मुखसंध्यङ्गमुक्तम् ॥ तदुक्तं दशरूपके "परिभावोऽद्भुतावेश" इति ॥ अत्र शुद्धान्तदुर्लभमिति लोकातीतविचित्रवस्तुसाक्षात्कारेणाश्चर्योत्पत्तेरद्भुतावेशः ॥ मुखसन्धिलक्षणमुच्यते ॥ "अवस्थाभिः प्रकल्प्यन्ते मुखाद्याः पञ्चसन्धयः ॥ एकप्रयोजनायत्तकथार्थानां समन्वयः ॥ तदवान्तरकार्यार्थसम्बन्धात्सन्धि-

ताभिर्गुणैः सौगन्ध्यादिभिरुद्यानलता दूरीकृताः तिरस्कृता इत्यर्थः । उद्देश्यप्रतिनिर्देश्यत्वादत्र कथितपददोषाभावः । छेकवृत्त्यनुप्रासौ निदर्शनालङ्कारश्च । नदृष्टान्तः । निरपेक्षयोर्वाक्ययोर्बिम्बप्रतिबिम्बभावे दृष्टान्तस्योक्तेः । राजानकमम्मटस्त्वत्र प्रतिवस्तूपमामाह । तन्न चतुरश्रम् । यतः शुद्धान्तदुर्लभत्वं वनलताभिर्गुणैर्दूरीकरणत्वं चैकं तत्त्वम् । यदीत्यनेन वाक्यद्वयनिरासाच्च । 'सामान्यस्य वाक्यद्वये पृथङ्निर्देशे प्रतिवस्तूपमा' इति तल्लक्षणम् । उदाहरणं च—'चकोर्य एव चतुराश्चन्द्रिकापानकर्मणि । आवन्त्य एव निपुणाः सुदृशो रतनर्मणि' इति । यत्त्वेतत्समर्थनार्थमाधुनिकेन केनचिदुक्तम्—'वाक्यार्थवशात्साधारण-

रीरितः ॥ मुखं प्रतिमुखं गर्भस्सावमर्शोपसंहृतिः" ॥ तत्र "बीजोत्पत्तिर्मुखं ज्ञेयं नानाभावरसाश्रयः । बीजारम्भार्थमुक्तानि द्वादशांगानि तस्य हि । उपक्षेपः परिकरः परिन्यासो विलोभनम् । युक्तिः प्राप्तिस्समाधानं विधानं परिभावना । उद्भेदभेदकरणान्यन्वर्थानीति सञ्ज्ञुः ॥ मुखादिसन्धिष्वंगानां क्रमश्च न विवक्षितः । क्रमस्यानादृतत्वेन भरतादिभिरादिमैः ॥ लक्ष्येण व्युत्क्रमेणापि कथनेन विलक्षणम् । वस्तुनेतृरसादीनामानुगुण्येन योजनम् । विवक्षितोऽत्र नांगानां क्रमइत्येव निर्णयः" । इति । अत्र कविना मृगयाप्रसङ्गेन नायिकानायकयोः परस्परानुरागोत्पत्तेर्दर्शनं कल्पितमित्यवगन्तव्यम् ॥ तदुक्तम्— "यात्रा पुरास्कन्दनमुत्सवो वा स्वप्नोऽथ चित्रं मृगया विनोदः । भवन्त्युपायाः प्रथमावलोके यूनोर्यतो वृद्धिमुपैति रागः" इति॥ नाटके सर्वथा पञ्चसन्धिकल्पनं सुकविना कर्तव्यम्॥ यथा वा सप्तांकपरिच्छिन्ने प्रकृतनाटके ॥ तथाहि प्रथमाङ्के किं णु खु इमं पेक्खिअ तवोवणविरोहिणो इत्यादिनानुरागबीजस्य कथनान्मुखसन्धिः ॥ तथा द्वितीयतृतीयाङ्कयोः । प्रतिमुखसन्धित्वं । तयोस्तल्लक्षणोपपन्नत्वात् ॥ तथा हि—प्रथमांकोपक्षिप्तस्यानुरागस्य द्वितीयेऽङ्के मृगयाव्यापारनिवर्तनं ॥ ऋषिप्रार्थनादिना तिरोहितस्य तृतीयांकप्रवेशकानन्तरं "ततः प्रविशति कामयमानावस्थो राजा" इत्यादिसमानरूपो बिन्दुरुक्तः तथा द्वितीयेऽङ्के विदूषकेन सह शकुन्तलाप्राप्त्युपायं विचार्य तृतीयेऽङ्के "क नु खलु संस्थिते सवनकर्मणि" इत्यादिना 'यावदेनामन्विच्छामी'त्यादिना च शकुन्तलाप्राप्त्यर्थप्रयत्नो मालिनीतीरगमनादिरूपो निबद्धः तथैव चतुर्थपञ्चमयोर्गर्भसन्धित्वं ॥ तथाहि— शकुन्तलाया दुष्यन्तनगरप्राप्त्याशा ॥ तत्र राज्ञो विस्मरणं पञ्चमाङ्के राजा शकुन्तलां "निर्वर्ण्य "इदमुपनतमेवं" त्यादिना "नैव शक्नोमि हातु" मित्यादिना च प्रकृतान्वेषणं कृतमित्युभयाङ्करूपो गर्भसन्धिः तथा ॥ षष्ठांकस्यावमर्शसन्धित्वम् ॥ तथाहि—क्रोधेन गर्भोद्भिन्नस्य बीजस्यालोचनं वीररसप्रधाने नाटके ॥ शृङ्गाररसप्रधाने तु ।" व्यसनाच्चित्तलोभाद्वा गर्भोद्भिन्नस्य बीजस्यालोचनम्॥ व्यसनमनुशयः ॥ अनुशयादालोचनं तत्रैव ॥ "प्रथमं सारंगाक्ष्या" इत्यादिना पूर्वं पञ्चमेऽङ्के अज्ञानात्तिरस्कृतशकुन्तलानुरागस्य ततो विवेकाज्जनितपश्चात्तापेनालोचनं कृतमित्यवमर्शः सन्धिः ॥ तथा । सप्तमाङ्कस्य निर्वहणसन्धित्वं ॥ तत्र सन्धेः पुनः बीजोद्भेदः कृतः ॥ यथा ॥ राजा निमित्तं सूचयित्वा मनोरथाय नाशंक इत्यादौ मनोरथादिपदैः पुनर्बीजोद्भेदः कृतः ॥ एवं नाटकेषु पञ्चसन्धिकल्पनं लक्षणानुगुण्येन द्रष्टव्यम् ॥

---

धर्मस्योभयसम्बन्धावगतिः' इति, तदपि न समीचीनम् । यतो वाक्यार्थेन साम्यमात्रं प्रतीयते । तच्च वस्तुप्रतिवस्तुरूपेण चेत्स्यात्प्रतिवस्तूपमा । बिम्बप्रतिबिम्बभावेन तस्यास्माभिरेवाङ्गीक्रियमाणत्वादित्यलं पूर्वैः सह विवादेन । प्रतिपालयामि प्रतीक्षे । यथोक्तव्यापारेति । वृक्षसेचनव्यापारवतीत्यर्थः । 'समानाभिस्तथा सख्यो हला भाष्याः परस्परम्' इति भरतोक्तेर्हलेति प्रयोगः । हला शकुन्तले, त्वत्तोऽपि तातकाश्यपस्याश्रमवृक्षकाः प्रियतरा इति तर्कयामि । कोऽल्पार्थे । येन नवमालिकाकुसुमपेलवा कोमला त्वमप्येतेषामालवालपूरणे नियुक्ता । 'सप्तला नवमालिका' इत्यमरः । त्वमपीत्यपिभिन्नक्रमः पेलवापीति योज्यः । 'पेलवं कोमले तनौ' इति शाश्वतः । आलवालं वृक्षमूलस्थितिस्थानम् । 'आलवालं विदुर्धाराधारणं द्रवतोऽम्भसः । इति । न केवलं तातनियोगएव ।

याव(दिमां)देनां तरुच्छायामाश्रित्य प्रतिपालयामि ॥

(इति विलोकयन् स्थितः)

(ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला)

**शकुन्तला**—[1]इदो इदो सहिओ ॥

**अनसूया**—[2]हळा सउंदळे । तुवत्तोवि तादकस्सवस्स अस्समरुक्खोऽपिअदरोत्ति तक्केमि ॥ जं (जेण) णोमाळिआकुसुमपे(लवा)सळा तुमंवि एदाणं आळवाळ(पूरणे) सेअणे णिउत्ता ॥

**शकुन्तला**—[3]ण केवळं तादनिओओ अत्थि मह वि खु सोदरसिणेहो एदेसु ॥

(इति वृक्षसेचनं निरूपयति)

---

1 इत इतस्सख्यौ ॥

2 सखि शकुन्तळे त्वत्तोऽपि तातकाश्यपस्य आश्रमवृक्षः प्रियतर इति तर्कयामि (येन) यन्नवमालिकाकुसुमपेशला त्वमप्येतेषामालवाल(पूरणे)सेचने नियुक्ता ॥

3 न केवलं तातनियोगः अस्ति ममापि खलु सोदरस्नेह एतेषु ॥

---

**यावदेनामित्यादि ॥** प्रतिपालनं नाम चेष्टावचनकुलाचारादिसर्वविषयज्ञानम् ॥ यथोक्तव्यापारा पूर्वोक्तवृक्षसेचनकर्मप्रवृत्ता ॥ इत इतस्सख्यौ आगच्छतमिति शेषः ॥ प्रियंवदा नाम सख्योरन्यतरा ॥ नाटके नायिकायास्सहृदयः परिच्छदः कर्तव्यः ॥ तदुक्तम्—"दूत्यो दासी सखी कारुर्धात्रेयी प्रतिवेशिनी । लिंगिनी शिल्पिनी चैव नायिकायाः परिच्छदः" ॥ इति ॥ **हळा इत्यादि ॥** पशला कोमला तादृशकर्मानर्हेति यावत् । शरीरं पेशलमिति श्रमवशात्तूष्णीं न स्थातव्यं ॥ कर्मणि नियुक्तत्वात्सम्यक् जलं देयमिति भावः ॥ अनेन नवमालिकाकुसुमपेशलेत्यनेन सौकुमार्यमुक्तम् ॥ तदुक्तम्—"या स्पर्शासहताऽङ्गेषु कोमलस्यापि वस्तुनः । तत्सौकुमार्यं त्रेधास्यान्मुख्यमध्याधम क्रमात् । अङ्गं पुष्पादिसंस्पर्शासहं येन तदुत्तमम् ॥" हळेति सख्योरामंत्रणप्रकारः ॥ तदुक्तं—"स्त्रीणां परस्परालापे प्रेष्यां चेटीं सखीं क्रमात् । हंजे हंडे हळेत्येवं ब्रूयादन्या तथा तथा" इति॥ हळाशब्दोऽव्ययः ॥ अव्ययानि सुप्तिङन्तानुकारीणि विभक्तिप्रतिरूपकाणि ॥

**ण केवळमित्यादि ॥** केवळशब्द एकार्थकः ॥ तातनियोग एकएव न भवतीति यावत् ॥ किन्तु सोदरस्नेहः ॥ "केवलः कृत्स्न एकस्यात्केवलश्चावधारण" इति

---

अस्ति मे सोदरस्नेह एतेषु । तातनियोगः पित्राज्ञा । सोदरस्नेहो भ्रातृस्नेहः । वृक्षसेचनं रूपयति । अभिनयतीत्यर्थः । तत्राभिनयः—नलिनीपद्मकोशौ कृत्वा स्कन्धप्रदेशं नीत्वावधूतेन शिरसा मनाङ्नामितया देहयष्ट्या च सहाधोमुखौ अवनीताविति । तल्लक्षणं तु—'अश्लिष्टस्वस्तिकौ सन्तौ शुकतुण्डावधोमुखौ । मिथः पराङ्मुखौ कृत्वा यौ कृतौ पद्मकोशकौ ॥ नलिनीपद्मकोशौ तौ' इति । 'यदधः सकृदानीतमवनीतं तदुच्यते' इति । सेति पूर्वं या ऋषिभिरुक्ता ॥

राजा—कथमियं सा कण्वदुहिता; असाधुदर्शी खलु तत्रभवान् काश्यपः ॥ य इमामाश्रमधर्मे नियुङ्क्ते ॥

इदं किलाव्याजमनोहरं वपु-
स्तपःक्षमं साधयितुं य इच्छति ।

---

शाश्वतः ॥ एतेषु वृक्षेषु सोदरस्नेहः सहोदरताहेतुकः पक्षपातः ॥ तदुक्तम् ॥ "अहेतुः पक्षपातो यस्तस्य नास्ति प्रतिक्रिया । स हि स्नेहात्मकस्तन्तुरन्तर्भूतानि सीव्यति" इति ॥ स्नेहस्तु द्विविधः—विकासो द्रवीभावश्चेति ॥ सूर्योदये पद्मस्य विकासः ॥ चन्द्रोदये चन्द्रकान्तस्य द्रवीभावः ॥ एवं द्विविधः ॥

**कथमियं सेत्यादि** ॥ इयमिति ॥ या पूर्वं वैखानसोक्ता सेयं कण्वदुहिता ॥ कथमिति जिज्ञासायां । यद्वा—इयमेतादृशरूपलावण्याद्यतिशयवती कण्वदुहिता ऋषिपुत्रीति । कथमाश्चर्ये ॥ तदुक्तं भावप्रकाशे—"कारणेऽपि कथं तर्के विस्मये सम्पदुद्भव" इति ॥ यद्वा—इयं लोकातीतविचित्रसौन्दर्याद्यतिशयवती वैखानसोक्ता सा कण्वदुहिता कथमिति वितर्के । 'यथा बीजं तथा प्रजा' इति विद्यमानत्वात्तपस्विकन्यकाया रूपादेरसम्भवाद्वितर्कार्थो युज्यते ॥ तपः प्रभावात्किं किं न सिद्ध्यति ॥ तथापि इमां एतादृशभावाद्यतिशयवतीं आश्रमधर्मे अयोग्यकर्मणि । नियुङ्क्ते प्रेरयतीति यत्तस्मात्र साधुदर्शी ताच्छील्ये णिनिः...खल्ववधारणे ॥ सर्वप्रकारेणोचितज्ञानवान्न भवतीत्यर्थः ॥ तत्र भवानिति पूज्यवाची ॥ "भट्टारको भट्टरको भट्टस्तत्रभवा" निति वैजयन्ती ॥ अत्र कण्व इति वक्तव्ये काश्यप इति विप्रक्षत्रियनामानि 'कुर्याद्गोत्रानुसारतः' इति वचनात् ॥

१८ असाधुदर्शित्वमेवोपपादयति—**इदं किलेत्यादिना** ॥ तर्हि विप्रकृष्टं वस्त्वरम्यमपि रम्यमिव प्रतिभातीत्यत आह—इदमिति ॥ अनेन साक्षान्निर्देशेन दर्शनीयतया सर्वावयवप्रत्यक्षता कथ्यते ॥ तर्ह्यरम्यमपि भूषितं चेद्रम्यं भवतीत्यत आह—अव्याजमनोहरमिति ॥ भूषणादिराहित्येपि चित्ताकर्षणशीलमित्यर्थः ॥ अनेन रूपं लावण्यं चोक्तम् ॥ तदुक्तं—"अङ्गान्यभूषितान्येव प्रक्षेपाद्यैर्विभूषणैः । येन भूषितवद्भान्ति तद्रूपमिति कथ्यते । मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु लावण्यं तदिहोच्यते ॥" किञ्चाव्याजमनोहरमित्यनेन शकुन्तलायास्साकूतावलोकनमन्दगमनादीनामकृत्रिमसमनोहरत्वं व्यज्यते ॥ एतादृशं वपुः शिरीषपुष्पघातैरपि यद्वपुः म्लानं भवति तत्रैव वपुश्शब्द-

---

**इदमिति** ॥ किलेत्यरुचौ । 'किल सम्भाव्यवार्तयोः । हेत्वरुच्योरलीके च' इति हैमः । य इदं पुरोदृश्यमानमनुपममव्याजमनोहरं स्वभावसुन्दरं वपुस्तपःक्षमं तपःसमर्थं साधयितुं कर्तुमिच्छति । ध्रुवं निश्चितम् । स ऋषिर्नीलोत्पलपत्रधारा पार्श्वदेशः । लक्षणया तैक्ष्ण्यसाम्याच्छिदिक्रियायोग्यत्वं फलम् । तथा समिल्लतां छेत्तुं व्यवस्यति प्रयतते । क्वचित् 'शमीलताम्' इति पाठः । तस्या अतिकाठिन्येनोपमेयेऽत्यन्तासम्भावनीयत्वं व्यज्यते । अत्र पूर्वार्धे विषमस्यैको भेदो व्यङ्ग्यः—'क्वचिद्यदतिवैधर्म्यान्न श्लेषो घटनामियात्'

ध्रुवं स नीलोत्पलपत्रधारया
समिल्लतां छेत्तु(मृषिः)मयं व्यवस्यति ॥ १८

भवतु पादपान्त(र्हित)रितएव विस्रब्धं तावदेनां पश्यामि ॥

(इति तथा करोति)

शकुन्तला—[1]अणसूए! अदअ(अदि)पिणद्धेण इमेण घणवक्कळेण पिअंवदाए णिअंतिदम्हि सिधिलेहिदाव णं ॥

---

1 अनसूये! अदय(अति)पिनद्धेनानेन स्तनवल्कलेन प्रियंवदया नियन्त्रिताऽस्मि शिथिलय तावदेनम् ॥

---

प्रयोगः क्रियते ॥ तपःक्षमं तपसः मुनिव्रतस्य चान्द्रायणादेरिति यावत् ॥ क्षमं योग्यं "तपश्चान्द्रायणादौ स्याद्धर्मे लोकान्तरेपि च" इति विश्वः ॥ साधयितुं निर्वर्तयितुम् ॥ इच्छति वाञ्छति ॥ अत्र क्रियापदे वर्तमानार्थप्रत्ययेनेच्छाकरणस्य साध्यमानत्वेन नैष्फल्यं व्यज्यते ॥ तर्हि मूढः कथं ज्ञास्यति? इत्यत आह—ऋषिरिति ॥ ऋषिः क्रान्तदर्शी ॥ "ऋषिस्तु वेदे भृग्वादौ ज्ञानवृद्धे दिगम्बरे" इति वैजयन्ती। तत्र दृष्टान्तमाह—ध्रुवमित्यादिना ॥ ध्रुवमसंशयं ॥ नीलोत्पलपत्रधारया कोमलकरणेन ॥ अल्पसाधनेनेति यावत् ॥ समिल्लतां छेत्तुं कठिनं महत्कार्यं साधयितुं व्यवस्यति उद्युङ्क्ते ॥ सम्भावनायां वर्तमानसामीप्ये लृङ् स्थाने लट्प्रत्ययः ॥ किलेति सम्भावनायाम् ॥ "वार्तासम्भाव्ययोः किल" इत्यमरः ॥ अस्मिन् श्लोके दृष्टान्तालङ्कारः ॥ तदुक्तम् ॥ "सर्वलोकमनोग्राहि वस्तुपक्षार्थसाधकं। हेतोर्निदर्शनकृतं स दृष्टान्त इति स्मृत" इति ॥ अत्र तपःक्षमत्वाभावे अव्याजमनोहरत्वं हेतुः ॥ तत्र नीलोत्पलपत्रधारया समिल्लताच्छेदनं दृष्टान्तः ॥

**भवत्वित्यादि ॥** स यादृशस्तादृशो वास्त्वित्यर्थः ॥

**अणसूए इत्यादि ॥** अदयमित्यनेन सुकुमारवस्तुनो दयाविषयत्वाच्चिरपरिचयेन मम शरीरं कोमलं स्वल्पमपि बाधासहनशीलमिति ज्ञातवत्यापि प्रियंवदया मच्छरीरसौकुमार्यानभिज्ञयेव दृढं बद्धास्मीति भावः ॥ अत्र तावद्ग्रहणेन वल्कलबन्धनस्यदार्ढ्यं न मया कृतं किन्तु प्रतिक्षणं विजृम्भमाणकूलङ्कषयौवनेन कृतमित्यभिप्रायः ॥

---

इत्युक्तेः। समस्तवाक्ये निदर्शना। 'अभवद्वस्तुसम्बन्ध उपमापरिकल्पकः। निदर्शना' इत्युक्तेः श्रुत्यनुप्रासवृत्त्यनुप्रासयोरेकवाचकानुप्रवेशरूपः सङ्करः। समिल्लतामिति रूपकोपमयोः सन्देहसङ्करः। साधकबाधकप्रमाणाभावात्। छेदस्य न समर्थकत्वमुभयोः साधारण्यात्। ध्रुवमित्युत्प्रेक्षा। वाचकत्व इति शब्दाध्याहारापत्तेः। वंशस्थं वृत्तम्। अनेनाभिप्रायरूपं भूषणमुपन्यस्तम्। तल्लक्षणं तु—'अभिप्रायस्तु सादृश्यादभूतार्थप्रकल्पना' इति। पादपान्तर्हितो वृक्षान्तर्हितः। विस्रब्धं विश्वासयुक्तम्। 'समौ विस्रम्भविश्वासौ' इत्यमरः। सखि अनसूये, अतिपिनद्धेनातिबद्धेन। 'आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत्' इत्यमरः। वल्कलेन वृक्षत्वचा प्रियंवदया नियन्त्रितासि। शिथिलय तावदेतत्। 'एतदो

**अनसूया**—[1]तह

(इति शिथिलयति)

**प्रियंवदा**—[2]एद्ध दाव पओहरवित्थारइत्तअं अत्तणो जोव्वणं उवाळंह ॥

**राजा**—काममननुरूपमस्या वयसो वल्कलं न पुनरलंकारश्रियं न पुष्यति ॥ कुतः—

**सरसिजमनुविद्धं शैवलेनापि रम्यं**
**मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।**

---

1 तथा ॥
2 अत्र तावत्पयोधरविस्तारयितृकमात्मनो यौवनमुपालभस्व ॥

---

**काममित्यादि ॥** अस्याः एतादृशरूपलावण्याद्यतिशयवत्याः ॥ वयसः यौवनस्य ॥ "वयः पक्षियौवनयो" रिति केशवः ॥ वल्कलमननुरूपमसदृशम् ॥ अलङ्कारश्रियं मण्डनशोभाम् ॥ "शोभा संपत्तिपद्मासु लक्ष्मीश्श्रीरिव दृश्यत" इति शाश्वतः ॥ कामं प्रायेण ॥ न पुष्यतीति न न वर्धयतीति न ॥ किन्तु वर्धयत्येवेत्यर्थः ॥ नञ् द्वयं सम्भाव्यनिषेधनिवर्तने द्वौ प्रतिषेधावित्याह वामनः ॥ पुष्यतीति यावत् ॥ पुनः प्रश्ने ॥ अशोभावहं वस्तु कुत्र शोभाकरमित्याशङ्क्याह—

१९ **कुत इत्यादिना ॥** सरसिजं पद्मं शैवलेनापि अरम्यपदार्थेनापि अनुविद्धं अनुषक्तं रम्यं दर्शनीयं भवति ॥ वस्तुनस्स्वाभाविकरमणीयतया निकृष्टपदार्थसंसर्गेणापि हृद्यमेव भवतीत्यर्थः ॥ अनेन पद्मोपमानेन शकुन्तलायाः पद्मिनीजातिता सूच्यते । उक्तार्थं पुनरपि दृष्टान्तेन विशदयति ॥ हिमांशोश्चन्द्रस्य लक्ष्म चिह्नं मलिनमपि अदर्शनीयमपि लक्ष्मीं तनोति दर्शनीयशोभां करोति ॥ स्वयं मलिनमिति कृत्वा स्वसंसर्गेण विच्छायतां न करोति ॥ किन्तु रमणीयतामेव तनोति ॥ अनेन चन्द्रोपमानेन कान्तिमत्ता नायिकाया व्यज्यते ॥ इयमेतादृशाखण्डरूपाद्यतिशयवती वल्कलेनापि परिधानायोग्यतरुत्व-

---

र्णः स्यादौ क्वचित्' इत्यमि परे णादेशः । ततः 'अमोऽस्य' इत्यकारलोपः । ततो णमिति । तह इति तथेति । अत्र नियन्त्रणे पयोधरयोः स्तनयोः विस्तारयितृ आत्मनो यौवनमुपालभस्व । अस्या वयसः काममत्यर्थमननुरूपं वल्कलं पुनरलङ्कारश्रियं न पुष्यतीति न अपि तु पुष्यतीत्यर्थः । अनेन शोभातिशयस्यावश्यकत्वं ध्वन्यते । वामनोऽपि 'सम्भाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ' इति । तत्र हेतुत्वेन पद्यमवतारयति—

**सरसिजमिति ॥** शैवलेन जलनील्यापि । 'जलनीली तु शैवालं शैवलः' इत्यमरः । विद्धं वेधितम् । 'विद्धः स्याद्वेधिते क्षिप्ते सदृशे' इति हैमः । प्रकृते तदर्थासम्भवात्सम्बद्धत्वं लक्ष्यते । तदतिशयो व्यङ्ग्यः । स एवात्र सातत्यवाचिना अनुनानूद्यते । अनुध्यायतीतिवत्सातत्ये तस्य प्रयोगात् । सरसिजं कमलं रम्यम् । नन्वाद्यन्तवाक्ययो-

इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥ १९

चापि अधिकमनोज्ञा पूर्वापेक्षयात्यर्थमनोहरशीला ॥ अमुमर्थमेवार्थान्तरन्यासेन दृढी-करोति—**किमिव हीत्यादिना ॥** मधुराणां मनोज्ञानाम् ॥ मधुमाधुर्ये ॥ आकृतीनां वपुषाम् ॥ "आकृतिः कथिता रूपे सामान्यवपुषोरपि" इति विश्वः ॥ किं यत्किञ्चिद्रम्या-रम्यवस्तु मण्डनं न अलङ्करणं न भवति ॥ इव प्रश्ने ॥ सर्वमलङ्करणं भवतीत्यर्थः ॥ हि प्रसिद्धौ ॥ हि हेतौ प्रसिद्धौ चेत्येकाक्षररत्नमाला ॥ केचिदेवमपि योजयन्ति ॥ अत्र एकमे-वापि पदं काकाक्षिन्यायेन वाक्यस्यादिमध्यान्तेषु युज्यते चेदर्थान्तरं जनयति ॥ तथा हि सरसिजमपि पद्ममपि ॥ अनेनापिशब्देन सरसिजस्यापकर्षः कथ्यते ॥ यथा सोऽपीत्यत्रापि शब्दस्यानादरार्थकत्वं तद्वत्प्रकृतेऽपीति यावत् ॥ अनेन सरसिजापकर्षकथनेन प्रस्तुत-तत्प्रतियोगी शकुन्तळाया उत्कर्षस्सूच्यते ॥ यथा उदितसूर्यार्घ्यनिन्दा अनुदितसूर्यार्घ्य-प्रशंसामेव कुरुते । तद्वदिति यावत् ॥ सरसिजमपि शकुन्तळामुखाह्लादकरत्वदर्शनीयत्व-सौरभवत्त्वादिगुणैः पराजितमपीति यावत् ॥ अनेन शकुन्तळामुखासन्निधान एव सरसि-जस्याह्लादकत्वसौरभवत्त्वादिप्रसिद्धिः ॥ तत्सन्निधाने तु निर्गन्धत्वप्रतीतिरदर्शनीयत्वं च भवेदिति ध्वन्यते ॥ यद्वा—सरसिजमपि दिवामात्रदर्शनीयमपीत्यर्थः । तेन शकुन्तळाया दिवारात्रदर्शनीयता सूच्यते ॥ तादृशं सरसिजमपि शैवलेनारम्यपदार्थेनानुविद्धमनुषक्तं रम्यं मनोहरं भवति ॥ पुनरपि दृष्टान्तेन विशदयति हिमांशोरपीति ॥ शकुन्तळामुख-प्रसन्नतादिगुणैः पराजितस्यापीत्यर्थः ॥ अत्राप्यपिशब्देन चन्द्रस्यापकर्षः ॥ अनेन शकुन्तळा-मुखासन्निधानएव चन्द्रस्याह्लादकत्वदर्शनीयत्वादिप्रसिद्धिः ॥ तत्सन्निधाने तु विच्छायत्व महद्यत्वं च भवेदिति ध्वन्यते ॥ यद्वा—हिमांशोरपि रात्रिमात्रदर्शनीयस्यापीति यावत् ॥

---

स्तृतीययैव गतार्थत्वान्मध्यमवाक्य आकाङ्क्षाभावादेवानुविद्धमित्यवकररूपमिति चेन्न । उपमयेति पिनद्धेत्यादिना प्रकृतं तत् । मध्यमवाक्ये त्वङ्कस्येन्दुशरीरान्तर्गतत्वं प्रसिद्धमेवेति नापेक्ष्यते तद्वचनमुभयत्र । अत्र तु सरसिजस्योद्धृतस्यानुद्धृतस्य वा शैवलेनाविनाभावात्सु-ष्ठूक्तमनुविद्धमिति । अतएव न विशेषणप्रक्रमभङ्गः । हिमांशोश्चन्द्रस्य मलिनं लक्ष्म लक्ष्मीं शोभां तनोति । अर्थाद्धिमांशोरेव । अत्रोपमानस्याकर्तृत्वात्कर्तृत्वप्रक्रमभङ्गः । अथ च कलङ्कस्योपमानत्वप्रतीतेरवाच्यवचनम् । तस्य चोपमानत्वेऽन्येन सम्बद्धत्वमनुक्तमिति वाच्यवचनम् । किं च लक्ष्मणैव मलिनत्वे प्राप्ते तद्वचनादपुष्टार्थत्वम् । हिमांशोर्लक्ष्मेति सम्बन्धे लक्ष्मीं तनोतीत्यत्र सम्बन्ध्यन्तराकाङ्क्षा । लक्ष्मीं तनोतीत्यत्र हिमांशोरिति सम्बन्धे लक्ष्मेत्येतत्साकाङ्क्षमिति सम्बन्धे कष्टत्वम् । हिमांशुपदस्यावृत्तावन्ययादेः ? कारणस्याभावात्सतोऽपि शब्दस्यान्यत्रान्वयात् वाक्यत्रयं पदकदम्बकात्मकं द्वितीयं तु क्रिया कारकान्वितेत्येतद्रूपम् । तेन वाक्यप्रक्रमभङ्गोऽपि । लक्ष्मीं तनोतीत्यत्र सामान्य-धर्मस्यार्थत्वेन प्रतीतेरर्थस्य कष्टत्वं चेत्यादिदोषपरिहाराय 'शिशिरकिरणमाली सुन्दरो लक्ष्मणापि' इति पठनीयम् । असत्सम्बद्धाश्चेन्मञ्जुलाः, सत्सम्बद्धाः किमु वक्तव्या इत्यपिशब्दार्थः । प्रकृतस्य लिङ्गनिर्देशेनोपमानव्याजेन पुंनपुंसकनिर्देशाच्च स्वभावसुन्दर-स्यैतत्त्रितयसम्बन्धहीनेनाप्यासक्तिः शोभाविनाशिका न भवतीति व्यज्यते । इयं पुरो-

अनेनापि शकुन्तळायाः दिवारात्रदर्शनीयत्वं व्यज्यते ॥ नचेत्सरसिजचन्द्रयोश्शकुन्तळां प्रति केनाकारेणापकर्षवत्त्वमिति सहृदयचित्तावर्जनं झडिति न भवति ॥ तादृशहिमांशो-रपि मलिनमदर्शनीयं लक्ष्म लक्ष्मीं तनोति दर्शनीयशोभां करोति ॥ वस्तुनस्स्वा-भाविकरमणीयतया मलिनरूपस्य संसर्गेण विच्छायतां न करोतीति यावत् ॥ इयं परिदृश्यमाना दिवारात्रदर्शनीयेत्यर्थः ॥ तन्व्यपि कृशाङ्ग्यपि युवत्यपीति यावत् ॥ अनेन तन्वीशब्देन लोकोत्तरभूषणवस्त्रादिधारणार्हता ध्वन्यते ॥ तादृश्यपीति यावत् ॥ वल्कलेन परिधानायोग्यतरुत्वचा अधिकमनोज्ञा पूर्वापेक्षयातिमात्रदर्शनीया ॥ अधिकमनोज्ञेत्यनेन । सरसिजाच्चन्द्राच्च शकुन्तळायाः सौन्दर्याधिक्यम् ॥ शैवलान्मलिनाच्च वल्कलस्यापकृष्टतरत्वं ध्वन्यते ॥ यावद्वस्तुसौन्दर्यप्राबल्यं तावत्ततो निकृष्टतरपदार्थसंसर्गेण दर्शनीयस्य प्रस्तु-तत्वात् ॥ अतएवाधिकमनोज्ञेति प्रयुक्तमित्यवगन्तव्यम् न हि सरसिजं शैवलेनाधिकरम्यं हिमांशोर्मलिनमतिलक्ष्मीं तनोतीति प्रयुक्तम् ॥ एतदेवार्थान्तरन्यासेनाह—किमिवहीत्या-दिना ॥ मधुराणां सुन्दराणामाकृतीनामाकृतिमतां किं यत्किञ्चिन्निन्दितं वस्तु ॥ "किं वितर्के परिप्रश्ने क्षेपे निन्दापराधयो" रिति विश्वः ॥ हिशब्दस्त्वेवार्थकः निन्दितस्त्वेवेत्यर्थः ॥ "हि हेताववधारण" इत्यमरः ॥ मण्डनं न अलङ्करणं न भवति ॥ इव प्रश्ने ॥ असुन्द-राणां किमपि मण्डनं न भवति ॥ सुन्दराणां निन्दितं च मण्डनं भवतीत्यर्थः ॥ अन्ये त्वेवमपि योजयन्ति ॥ सरसिजं शैवलेनानुविद्धं रम्यं अपीति प्रश्ने ॥ शैवलसंसर्गेण रम्यं न भवति ॥ किन्तु स्वोचितराजहंसादिमण्डलपरिवृतमेव सरसिजं रम्यं भवतीति यावत् ॥ एवं भूमिस्थदृष्टान्तमुक्त्वाकाशस्थं दृष्टान्तमाह—हिमांशोरिति ॥ हिमांशोर्मलिनं लक्ष्म लक्ष्मीं तनोत्यपि ॥ अपि प्रश्ने ॥ लक्ष्मीं न तनोति किन्तु चन्द्रः कळङ्कीत्यपलक्ष्मीमेव विस्तार-यतीत्यर्थः "गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि" इत्यमरः ॥ इयं तन्वी वल्कलेनाधिक-मनोज्ञा अपि अपीति प्रश्ने ॥ वल्कलेनाधिकमनोज्ञा न भवति । किन्तु स्वोचितक्षौमादि-वस्त्रेणैवाधिकमनोज्ञेत्यर्थः ॥ एतदेव सम्भावयति—किमिवेत्यादिना ॥ मधुराणामाकृतीनां

---

दृश्यमाना । 'इदमः प्रत्यक्षगतम्' इत्युक्तेः । 'मम लोचनयोः सुधारसकल्लोलिनी त्रिज-गत्कन्याललामभूता' इत्याद्यर्थान्तरसंक्रमितवाच्यम् । तन्वीत्युपमेयनिर्देशः । तेनोपमेय-निर्देशेन वाक्ये विशेषणाधिक्यं न शङ्कनीयम् । त्रिष्वपि रम्यत्वे समानेऽप्यत्र तस्या-धिक्यमितीदमेव विधेयम् । यथा 'दध्ना जुहोति' इत्यत्र दधनि विधिः सञ्चार्यते तथेहाप्याधिक्ये । तेन नायिकको ? व्यज्यते । इतश्च वक्ष्यमाणभावोदयस्याङ्कुरत्वं व्यङ्ग्यम् । मधुराणां सुन्दराणामाकृतीनां किमिव हि न मण्डनम् । अपि तु सर्वम् । हीनमहीनं स्वसम्बद्धं चेति सामान्यस्य समर्थकत्वादर्थान्तरन्यासः । मधुरशब्दो रसवाचकः प्रकृते बाधितो मुख्यार्थः सन्, सर्वविषयरञ्जकत्वतर्पकत्वैककार्यकरत्वेन सम्बन्धेन लक्षयन्स्वा-तिशयसमभिलाषविषयत्वं नात्राश्चर्यमिति ध्वनयति । अत्र पादत्रये साधारणधर्मस्य रम्यलक्ष्मीविस्तारमनोज्ञपदैरभिधानान्मालाप्रतिवस्तूपमा । वृत्त्यनुप्रासच्छेकानुप्रासयोः संसृष्टिः । अर्थालङ्कारयोरङ्गाङ्गिभावः सङ्करः । एवमग्रेऽपि सङ्करसंसृष्टी उन्नेये । ग्रन्थगौरव-भीत्या क्वचिदेव वक्तव्ये । मालिनीवृत्तम् । अनेन माधुर्यं नामायत्नजोऽलङ्कार उक्तः । तल्लक्षणम्—'सर्वावस्थाविशेषेषु माधुर्यं रमणीयता' इति । अनेन प्रसिद्धिर्नामभूषण-मुपक्षिप्तम् । तल्लक्षणं तु—'प्रसिद्धिर्लोकविख्यातैर्वाक्यैरर्थप्रसाधनम्' इति । एष वाते-रितपल्लवाङ्गुलीभिस्त्वरयतीव मां केसरवृक्षको बकुलवृक्षः । अल्पार्थे कः । इदं चैकदेश-

**शकुन्तला**—(अग्रतोऽवलोक्य) [1]एसो वादेरिदपल्लवंगुळीहिं तुवरेदि विअ मं केसररुक्खओ जाव णं संभावेमि ॥ (इति परिक्रामति)

**प्रियंवदा**—[2]हळा सउन्दळे! एत्थ एव्व दाव मुहुत्तं चिट्ठ ॥ जाव तुए उवगदाए ळदासणाहो विअ अअं केसर रुक्ख पडि(भादि)हाइ ॥

1 एष वातेरितपल्लवांगुळीभिस्त्वरयतीव मां केसरवृक्षकः यावदेनं सम्भावयामि ॥

2 सखि शकुन्तले! अत्रैव तावन्मुहूर्तं तिष्ठ यावत्त्वया उपगतया लतासनाथ इव अयं केसरवृक्षकः प्रतिभाति ॥

मण्डनमलङ्करणं किं न हि ॥ गर्हितं वस्तु मण्डनं न भवति ॥ इव सम्भावनायाम् ॥ रम्याणां सुन्दरवस्त्वेव मण्डनं भवतीत्यर्थः ॥ अपरे त्वेवमपि योजयन्ति ॥ सरसिजं शैवलेनानुविद्धमपि रम्यम् ॥ शैवलसंसर्गाभावे तस्य दर्शनीयतायां किं वदाम इति भावः ॥ हिमांशोर्मलिनं लक्ष्मापि लक्ष्मीं तनोति ॥ निर्मलिनत्वे सति तस्य कान्तिमत्तायां किं ब्रूम इति भावः ॥ इयं तन्वी वल्कलेनाप्यधिकमनोज्ञा ॥ वल्कलाभावे तस्यास्सौन्दर्यविषये किं वक्तव्यमिति भावः ॥ तथाहि ॥ मधुराणामाकृतीनां किमिव किमपि मण्डनं न शोभाकरं न भवति ॥ किन्तु तत्सौन्दर्यनिरोधकमिति यावत् ॥ असुन्दराणामेव मण्डनं कर्तव्यमिति भावः ॥ अत्र श्लोके प्रसिद्धिर्नामालङ्कारः ॥ तदुक्तम्—"प्रसिद्धिर्लोकविख्यातैर्वाक्यैरर्थप्रसाधन" मिति ॥ अत्र शैवलाद्यनुरोधेऽपि ॥ रमणीयतया प्रसिद्धानां सरसिजादीनां कथनेन शकुन्तलामनोज्ञत्वकथनं प्रसिद्धिः ॥ अत्र चाश्रमधर्मकरणस्योपरि वल्कलेनाप्यधिकमनोज्ञत्वकथनेन माधुर्यं नाम स्त्रीणां स्वाभाविकालङ्कार उक्तः । तदुक्तम्-"सर्वावस्थासु चेष्टानां माधुर्यं मृदुकारिता" इति ॥ स्त्रीणां स्वाभाविकालङ्कारा निरूप्यन्ते—"भावो हावश्च हेला च शोभा कांतिस्सदीप्तिका । प्रागल्भ्यं धैर्यमौदार्यं माधुर्यं दश सात्त्विकाः ॥ लीलाविलासो विच्छित्तिर्विभ्रमः किलिकिंचितं । मोट्टायितं कुट्टमितं बिब्बोको ललितं तथा ॥ विहृतं चेति विज्ञेयाश्शारीरा दशयोषिताम् । एवं स्त्रीणामलङ्कारास्स्वभावाद्विंशतिः स्मृताः ॥ ते चतुर्धा चित्तगात्र वाग्बुद्ध्यारम्भसम्भवाः ॥ एते उत्तरत्र यथासम्भवं लक्षणोदाहरणाभ्यां प्रदर्श्यन्ते ॥

**एसो इत्यादि ॥** वृक्षक इति बालार्थे कप्रत्ययः ॥ यावत्सम्भावयामि सम्भावयिष्यामि ॥ जलेनेति शेषः ॥

**हळेत्यादि ॥** अत्रैवेति वृक्षकनिकट एवेत्यर्थः ॥ तावच्छब्दो मानार्थकः "यावत्तावच्च साकल्येऽवधौ मानेऽवधारण" इत्यमरः ॥ तिष्ठेति प्रार्थनायां लोट् ॥

विवर्तिरूपकम् । तेन केसरवृक्षस्य वयस्यत्वमपि रूपितं भवति । तेनायमर्थः । यथा कश्चन सखात्यन्तमुत्कण्ठितोऽङ्गुलीचालनेन मित्रं त्वरयति तद्वदिति । यावदेनं सम्भावयामि । अत्रैव तावन्मुहूर्तं तिष्ठ, यावत्त्वयोपगतया लतासनाथ इवायं केसरवृक्षकः प्रतिभाति । अतः खलु प्रियंवदासि त्वम् । एताभ्यां प्रियंवदाशकुन्तलावचनाभ्यां निरुक्तमिति भूषणमुपक्षिप्तम् । तल्लक्षणम्—'निरुक्तिर्निरवद्योक्तिर्नामान्यार्थप्रसिद्धये' इति । यत्प्रियंवदया लतात्वमारोपितं तत्साधयति ॥

शकुन्तला—[1]अदो खु तुमं पिअंवदा ॥

राजा—न पुनः प्रियंवदा ॥ प्रियमपि तथ्यमाह ॥ अस्याः खलु

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमंगेषु सन्नद्धम् ॥ २०

1 अतः खलु त्वं प्रियंवदा ॥

**अदो इत्यादि ॥** अनेन निरुक्तालङ्कार उक्तः ॥ अत्र प्रियंवदायाः प्रियभाषणमिदं नामधेयमित्युक्तिर्निरुक्तिः ॥ नपुनरित्यादि ॥ प्रियमपि इष्टमपि । तथ्यं सत्यं । नाह पुनराक्षेपप्रश्ने ॥ हितमपि सत्यमेवाहेत्यर्थः तदेवोपपादयति—अस्या इत्यादिना ॥ खलुशब्दो हेत्वर्थः ॥ यतो हेतोः ॥

**२० अधर इति ॥** अधरः किसलयरागः किसलयस्य राग इव रागो लोहितं यस्य स तथोक्तः "रागोऽनुरक्ते मात्सर्ये क्लेशादौ लोहितादिषु ॥" इति शाश्वतः ॥ यद्वा किसलयरागः किसलयानां रक्तिमा अधरः निकृष्टः ॥ अस्या अधरसन्निधाने किसलयानां विच्छायत्वेनादर्शनीयता भवेदिति यावत् ॥ तेन बाल्यपरित्यागो व्यज्यते । शैशवपरित्याग एव वैदग्ध्यवचनचेष्टादेरौचित्यात् कोमलविटपानुकारिणौ मृदुविटपानुकारिणौ अनेनाकृतेर्विभक्तावयवत्वं व्यज्यते ॥ तेनांसयोर्मांसलत्वं व्यग्यं ॥ अङ्गेषु सर्वावयवेषु सन्नद्धं सज्जं यौवनं । विकासोन्मुखं कुसुममिव लोभनीयं स्पृहणीयं ॥ अत्राधरः किसलयराग इत्यनेनाधरस्य चुम्बनयोग्यत्वं व्यज्यते ॥ तेन प्रसरद्रूपत्वं च प्रतीयते ॥ प्रसरद्रूपताविशेष एव हि कामिचित्तानां सुखाद्यनुभवः ॥ कोमलविटपानुकारिणावित्यनेन बाह्वोरुचितपुरुषालिंङ्गनक्षमत्वं ध्वन्यते ॥ अङ्गेषु सन्नद्धमित्यनेन वपुषो विविधसुरतक्रियाक्षमत्वं च सूच्यते ॥ अङ्गेष्विति बहुवचनेन सर्वावयवानां सम्पूर्णमन्मथत्वेन नखक्षतादिकरणयोग्यत्वं च ध्वन्यते ॥ अधरः किसलयराग इति ॥ किसलयस्येव रागो यस्येति श्रौती समासगा लुप्तोपमा ॥ कोमलविटपानुकारिणौ बाहू इत्यसम्पूर्णोपमा ॥ कुसुममिव लोभनीयमितीवेन समासेन समासगा च भवति ॥

**अस्या इति ॥** अधरोऽधरोष्ठः । किसलय इव रागो यस्य स पल्लवाताम्रः । बाहू विटपौ स्कन्धोर्ध्वशाखे तदनुकारिणौ तत्सदृशौ । यत्कात्यः—'स्कन्धादूर्ध्वं तरोः शाखा कटप्रो विटपो मतः' इति । कोमलशब्देनाग्रजत्वं तयोर्व्यज्यते । अङ्गेषु संनद्धं प्रापितम् । अत्युत्कटमिति यावत् । अत्राङ्गेष्विति बहुवचनेन वदने कान्तिमत्ता, नयनयोस्तरलता, कण्ठे कम्बुत्रिरेखावत्त्वम्, वक्षसि स्तनोज्जृम्भणम्, नाभौ गभीरता, नितम्बे मध्यनिम्नत्वम्, उभयभागे चतुरस्रत्वम्, जघनजङ्घाजानुमण्डलोरुदेशानां मांसलत्वम्, गतौ सविलासत्वमित्यादि ध्वनितम् । संनद्धशब्दः प्रकृते बाधितमुख्यार्थः सन्, यः संनद्धो भवत्युत्साहेन प्रकटो भवतीति प्राकट्यसम्बन्धेन यौवनं लक्षयंस्तद्गतमतिशयं व्यनक्ति । यौवनं कुसुममिव लोभनीयं चित्ताकर्षकम् । कुसुममिति जात्येकवचनम् । अङ्गेषु संनद्धमित्यत्रापि योजनीयम् । लताङ्गेषु संनद्धमित्यर्थः । हस्तादिस्पृष्टस्य मलिनत्वादिसम्भवात् ।

किसलयराग इत्यत्र किसलयवद्राग इति विग्रहे तद्धितगा च भवति ॥ अनेन शकुन्तलाया द्वितीययौवनावस्थोक्ता ॥ प्रथमावस्था वा ॥ तदुक्तम् ॥ "सर्वासामपि नारीणां यौवनं स्याच्चतुर्विधं । प्रतियौवनमेतासां चेष्टितानि पृथक्पृथक् । ईषच्चपलनेत्रान्तं स्मरस्मेरमुखाम्बुजं । सगर्वजर्झरं गण्डमसमग्रारुणाधरं । लावण्योद्भेदरम्यांगं विलसद्भावसौरभं । उन्मीलितांकुरकुचमस्फुटाङ्गकरांघ्रिकं । प्रथमं यौवनं तत्र वर्तमाना मृगेक्षणा । अपेक्षेत मृदुस्पर्शं सहते नोद्धतां रतिं । सखीकेळिरता स्वाङ्गसंस्कारकलितान्तरा । न कोपहर्षौ भजते सपत्नीदर्शनादिषु । नातिरज्यति कान्तस्य सङ्गमे किन्तु रज्यति ॥ अथ द्वितीययौवनम्–"स्तनौ पीनौ तनुर्मध्यः पाणिपादस्य रक्तिमा । ऊरू करिकराकारावंगं व्यक्ताङ्गसन्धिकं, नितम्बो विपुलो नाभिर्गभीरो जघनं घनं । व्यक्ता रोमावलिः स्नैग्ध्यं लिङ्गदेशस्तथाक्षिमान् । द्वितीययौवने तेन कलिता वामलोचना । सखीषु स्वाशयज्ञासु स्निग्धाप्रायेण मानिनी । न प्रसीदत्यनुनये सपत्नीष्वभ्यसूयिनी । नापराधान्विषहते प्रणयेर्ष्याकषायिता । अतिकेळिष्वनिभृता चेष्टिते गर्विता रहः" अथ तृतीययौवनम्—"अस्निग्धता नयनयोर्गण्डे जघनकेऽपि च । सव्याजकोपमधुरा या धत्ते म्लानकान्तितां ॥ विच्छायता खरस्पर्शोऽप्यंगानां श्लथता मनाक् । अधरे मसृणो रागस्तृतीये यौवने भवेत् ॥ तत्र स्त्रीणामियं चेष्टा रतितंत्रविदग्धता । वल्लभस्यापरित्यागस्तदाकर्षणकौशलं । अनादरोऽपराधेषु सपत्नीष्वस्य मत्सरः" अथ चतुर्थयौवनम्—"जर्झरत्वं स्तनश्रोणिगण्डोरुजघनादिषु । निर्मांसता च भवति चतुर्थे यौवने स्त्रियां ॥ तत्र चेष्टारतिविधावनुत्साहोऽसमर्थता ॥ नाटकेषु प्रथमद्वितीययौवनमेव वर्ण्यते ॥ तृतीयचतुर्थयौवनं तु प्रहसनेषु वर्ण्यते ॥ एतन्मदीये रसिकानन्दाख्ये प्रहसने द्रष्टव्यम् ॥

---

एवमनुच्छिद्यौवनत्वेन कन्यात्वं ध्वनयता स्वयोग्यत्वं ध्वनितम् । ततश्च वक्ष्यमाणोद्यस्याङ्कुरत्वेन पर्यवसानम् । समासगा आर्थी समासगा गौणी पूर्णा श्रौतीत्युपमानां संसृष्टिः । 'सप्तम्युपमानपूर्वस्योत्तरपदलोपश्च' इत्यनेन वार्तिकेन समासः । नन्वत्र वार्तिक उत्तरपदलोपो विहितः । प्रकृते च नोत्तरपदलोप इति कथं समासः । उच्यते । अत्र वार्तिके महाभाष्यकारकैयटप्रमुखैः 'उष्ट्रो मुखमस्य' इत्येव विग्रहः कार्यः । अवयवधर्मेण समुदायधर्मव्यपदेशादुष्ट्रस्योपमानतेति । न च प्राणी प्राण्यन्तरस्य मुखमुपपद्यते तेन सामर्थ्यात्सदृशावयवावगतिः । तेन मुखेन मुखस्य सादृश्यं सिध्यति । तेन च मुखमिव मुखमस्येत्यर्थः सिद्धो भवति । तेनोत्तरपदलोपो न वक्तव्यः । तेन चन्द्रमुखी पुण्डरीकाक्ष इत्यादि सिद्धमिति सिद्धान्तितं बहुव्रीहेरुपमाद्योतकत्वम् । अचेतनानुकारः कर्तुं न शक्यत इति सादृश्यं लक्ष्यम् । अतो गौणी इयं च महता युक्तिसन्दर्भेणोपमाप्रपञ्चे मया निरूपिता । इवादिसद्भावात्तृतीया पूर्णा श्रौती । 'बाहू मृदुलविटपाविव प्रतनू' इति पठित्वोद्देश्यप्रतिनिर्देश्यप्रक्रमभङ्गः परिहरणीयः । अनेन पदोच्चयमिति भूषणमुपक्षिप्तम् । तल्लक्षणं तु—'सम्बद्धार्थानुरूपो यः पदौघः स पदोच्चयः' इति । इयं स्वयंवरवधूः सहकारस्य त्वया कृतनामधेया वनज्योत्स्नेति नवमालिका । एनां विस्मृतवत्यसि । तदात्मानमपि विस्मरिष्यासि । रमणीये खलु काल एतस्य लतापादपमिथुनस्य व्यतिकरः संश्लेषः संवृत्तः । नवकुसुमयौवना नवानि प्रथमोद्गतानि कुसुमानि तान्येव यौवनं यस्याः सा वनज्योत्स्ना । स्निग्धपल्लवतयोपभोगक्षमः सहकारः । नवं कुसुमं रजोदर्शनं च यस्याः सा । स्निग्धश्चासौ पल्लवो विटपश्च तत्त्वेनेति नायकव्यवहारारोपात्समासोक्तिः । इति पश्यन्ती तिष्ठतीति कविवाक्यम् । अनसूये, जानासि किं शकुन्तला वनज्योत्स्नामतिमात्रं पश्यतीति । न खलु विभावयामि । कथय ।

सतां हि सन्देहपदेषु वस्तुषु
प्रमाणमन्तः करणप्रवृत्तयः ॥ २१

हक्षमा परिगृह्यत इति परिग्रहः कळत्रं ॥ तथा च वक्ष्यति—तृतीयेङ्के "परिग्रहबहुत्वेऽपी" त्यादिना ॥ क्षत्त्रस्य क्षत्त्रजातेः। ब्रह्मादिशब्दवज्जातिपरत्वं ॥ क्षत्त्रपदं नपुंसकं ॥ तथा त्रिकाण्ड-शेषे—"मूर्धावसिक्तमूर्धाभिषिक्तौ क्षत्त्रं नपुंसक" मिति ॥ तथा नैषधेऽपि—"क्षत्त्राद्यथाऽ-भज्यत स द्विजेन्द्र" इति ॥ क्षत्त्रजातीयपरिग्रहक्षमा शक्ता। कळत्रत्वयोग्येत्यर्थः ॥ अथवा परिग्रहणं परिग्रहः ॥ कळत्रत्वेन स्वीकार इत्यर्थः ॥ परिग्रहक्षमत्वे हेतुमाह—आर्यं मे मनोऽस्यामभिलाषि ॥ यद्यस्मात् ॥ मे क्षत्त्रस्य ममेत्यर्थः ॥ आर्यं निर्दोषं ॥ अत्रार्यशब्देन शास्त्रार्थानुष्ठाननियतिर्मनस उच्यते ॥ "यमार्याः क्रियमाणं प्रशंसन्ति स धर्म" इत्याप-स्तम्बोक्तेः॥ तत्सम्बन्धि मनोऽप्यार्यमित्युच्यते ॥ अत्र मनसः आर्यत्वविशेषणेन मनस्स्वारसि-कतया न कदाप्यकार्ये प्रवर्तत इति द्योत्यते ॥ तदेवार्थान्तरन्यासेनोपपादयति—सतांही-त्यादिना ॥ सतामाप्तानां सन्देहपदेषु कर्तव्याकर्तव्याभ्यां संशयस्थानेषु ॥ "पदं व्यवसि-तत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः ॥ वस्तुषु पदार्थेषु प्रमाणं प्रमेयनिश्चायकं ॥ अन्तः करणस्य अन्तरिंद्रियस्य ॥ "करणं साधकतमक्षेत्रगात्रेंद्रियेष्वपि" इत्यमरः ॥ चित्तस्य प्रवृत्तयः ॥ प्रकृष्टावृत्तयः। निरुपाधिकाः स्वारसिकाश्चेति यावत् ॥ प्रमाणमिति वेदाः प्रमाणमित्यादिवज्जात्येकवचनं ॥ नियतलिङ्गं च ॥ धर्मनिर्णयकारणमित्यर्थः ॥ यदाह—"सम्य-क्संकल्पजः कामो धर्ममूलमिदं स्मृत" मिति ॥ केचिदात्मप्रशंसानिवारणार्थमेवमपि योजयन्ति ॥ अस्यामभिलाषि सस्पृहं मे मनः यदा यस्मिन् काले आर्यं भवति तदेयं क्षत्त्रपरि-ग्रहक्षमा स्यात् ॥ हि यस्माद्धेतोर्वस्तुषु पदार्थेषु सन्देहपदेषु सत्सु अन्तःकरणप्रवृत्तयः प्रमाणं सतामेव आदर्शो नान्ति तस्मादिति पूर्वार्धेन सम्बन्धः ॥ अमुमर्थमेवाह—तथा-पीत्यादि ॥ यद्वा महापुरुषस्यात्मप्रशंसादोषो न विद्यते ॥ यथा रामायणे—"अद्य रामस्य रामत्वं पश्यन्तु हरियूथपाः" इत्यादौ ॥ यद्वा—आत्मगतत्वेनोक्तत्वान्न दोषः ॥

विश्वः। अत्र मत्परिग्रहक्षमेति वक्तव्ये क्षत्त्रेति सामान्योक्तेरप्रस्तुतप्रशंसा तया च नायक-गतमौचित्यं ध्वनितम्। यद्यस्मादार्यं श्रेष्ठं मे मम जितेन्द्रियस्य पुरुवंशोत्पन्नस्य दुष्यन्तस्ये-त्यर्थान्तरसङ्क्रमितवाच्यम्। मनोऽस्यां स्त्रीसृष्टिरत्नभूतायामभिलाष्यभिलाषयुक्तम्। हि यस्मात्सतां सन्देहपदेषु सन्देहस्थानेष्वन्तःकरणस्य प्रवृत्तयो वर्तनानि प्रमाणम्। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः। तेन पुनरुक्तवदाभासो नामालङ्कारः। अर्थान्तरन्यासकाव्यलिङ्गानुप्रासाः। अनेन परिन्यास इत्यङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'तन्निष्पत्तेस्तु कथनं परिन्यासं प्रचक्षते' इति। नन्वङ्गोद्देशवाक्ये 'उपक्षेपः परिकरः परिन्यासो विलोभनम्' इत्युद्दिष्टम्। उदाहरणे च कथं व्यत्यय इति चेत्। नैष दोषः। यत उक्तं सुधाकरे—'मुखादिसन्धिष्वङ्गानां क्रमो नायं विवक्षितः। क्रमस्यानादृतत्वेन भरतादिभिरादिमैः॥ लक्ष्येषु व्युत्क्रमेणापि कथनेन विचक्षणैः' इति। यद्यपि मम हृदये विश्वासस्तथापि व्यवहारार्थं तत्त्वत एनामुपलप्स्ये ज्ञास्यामि। ससम्भ्रमं सभयम्। भयहे-तुश्च वक्ष्यमाणः। अम्मो आश्चर्ये। 'अव्ययम्' इत्यधिकारे 'अम्मो आश्चर्ये' इति सूत्रम्। सलिलसेकसम्भ्रमोद्गतो नवमालिकामुज्झित्वा वदनं मे मधुकरोऽभिवर्तते। वदनं लक्ष्यी-

तथापि तत्त्वत एनामुपलप्स्ये ।

**शकुन्तला**—(ससंभ्रमं) [1]हळा (अम्मो) सलिलसेअ (सम्भमुद्गदो) णसम्भन्तो णो मालिआं उज्झिअ वअणं मे महुअरो अहिवट्टइ ॥

(इति भ्रमरबाधां रूपयति)

**राजा**—(विलोक्य सस्पृहं) साधु बाधनमपि रमणीयमस्याः ॥

1 सखि ! सलिलसेचन(सम्भ्रमोद्गतो) सम्भ्रान्तो नवमालिकामुज्झित्वा वदनं मे मधुकरोऽभिवर्तते

**तथापीत्यादि् ॥** अन्तःकरणप्रवृत्तिमात्रेण निर्णयितुमशक्यत्वेऽपि । तत्त्वत एव साक्षादेव ॥ प्रत्यक्षप्रमाणैरेवेत्यर्थः उपलप्स्ये ज्ञास्यामि ॥ ज्ञातृत्वे सुकरत्वमाह—एनामित्यनादरनिर्देशेन ॥ एषा नागरिका न भवति । छलोक्त्या सर्वं ज्ञातुं शक्यत इति द्योत्यते ॥ पूर्वस्यां योजनायामपि तथाप्यनुमानेन निश्चितं यद्यपि तत्त्वत एव प्रमाणान्तरैरेव उपलप्स्य इत्यर्थः असंशयमित्यादिनैतदन्तेनारम्भो नाम प्रथमावस्थोक्ता ॥ तदुक्तं दशरूपके—"कर्तव्याध्यवसायस्यादारम्भः फलसिद्धये" इति ॥ अत्रासंशयादिपदैः कर्तव्याध्यवसाय उच्यत इत्यारम्भः अवस्थाः निरूप्यन्ते । "प्रारब्धस्य तु कार्यस्य पञ्चावस्था भवन्ति हि । आरम्भयत्नप्राप्त्याशा नियताप्तिफलागमाः" इति ॥

**हळेत्यादि् ॥** नवमालिकाभ्यो वदनस्याधिकसौरभत्वाद्वदनमनुसरतीति भावः ॥ अनेन वदनस्य सौरभवत्त्वकथनेन शकुन्तळायाः पद्मिनीजातिता सूच्यते ॥ तदुक्तं रतिरहस्ये—"कमलमुकुळमृद्वी फुल्लराजीवगन्धस्सुरतपयसि यस्याः सौरभं दिव्यमङ्गे । चकितमृगदृगाभे प्रान्तरक्ते च नेत्रे स्तनयुगळमनर्घं श्रीफलश्रीविडम्बि ॥ तिलकुसुमसमानां बिभ्रती नासिकां च द्विजगुरुसुरपूजाश्रद्धधाना सदैव । कुवलयदळकान्तिः कापि चांपेयगन्धी विकचकमलकोशाकारकामातपत्रा ॥ व्रजति मृदु सलीलं राजहंसीव तन्वी त्रिवळिललितमध्या हंसवाणी सुवेषा । मृदु शुचि लघु भुङ्क्ते मानिनी गाढलज्जा धवळकुसुमवासा वल्लभा पद्मिनी स्या" दिति ॥ रूपयतीत्यादि ॥ रूपयति अभिनयति ॥

कृत्यागच्छतीत्यर्थः । अनेन पद्मिनीत्वमुक्तमस्याः । यदाहुः—कमलमुकुलमृद्वी फुल्लराजीवगन्धा सुरतपयसि यस्याः सौरभं दिव्यमङ्गे' इति । भ्रमरबाधां रूपयति । अभिनयतीत्यर्थः । स चाभिनयो विधुतेन शिरसा, कम्पितेनाधरेण, मुखदेशस्थितेन पराङ्मुखतलेन, चञ्चलेन पताकेनेति । तल्लक्षणानि—'तिर्यग्गतं द्रुततरं विधुतं तत्प्रयुज्यते । शीतार्ते ज्वरिते भीते' इति । 'व्यथायां कम्पितोऽन्वर्थो भीतौ शीते जये रुषि' इति । 'तर्जनीमूलसंलग्नकुञ्चिताङ्गुष्ठको भवेत् । पताकः संहताकारः प्रसारिततळाङ्गुलिः' इति ।

*(यतो यतः षट्चरणोऽभिवर्तते
ततस्ततः प्रेरितलोललोचना ।
विवर्तितभ्रूरियमद्य शिक्षते
भयादकामापि हि दृष्टिविभ्रमम् ॥)

(सासूयमिव)

चलापा(ङ्गां)ङ्गं (दृष्टिं)दृष्टः स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।

---

२२ चलेति ॥ खलु यतो हेतोश्चलापाङ्गं दृष्टः चलावपाङ्गौ यस्मिन् कर्मणि तत्तथोक्तम् ॥ दृष्टस्सन् ॥ वेपथुमतीं कम्पवतीं बहुशः वारं वारं स्पृशसि ॥ रहसि भवं रहस्यं । तदाख्यायीव वदन्निवेत्युत्प्रेक्षा ॥ कर्णान्तिकचरस्सन् मृदु ललितम् ॥ नायकपक्षे सानुनयमित्यपि च ॥ यथा भवति तथा ॥ स्वनसि शब्दायसे ॥ गुप्तं भाषस इत्यपि च ॥ रतिसर्वस्वं रतेस्सुरतस्य सर्वस्वं निखिलमूलधनं सारांश इति यावत् ॥ "रतिः स्मरप्रियायां च रागे च सुरतेऽपि च" इति विश्वः ॥ पिबसि पानं करोषि निश्शङ्कं चुम्बसीति भावः ॥ वर्तमानव्यपदेशेनाद्यापि चुम्बसीत्यनायासेन तस्य भाग्यातिशयः ॥ वयमिति बहुवचनेन नागरिका इति द्योत्यते ॥ तादृशा अपीति यावत् ॥ यद्वा—अहमेक एव न भवामि; मत्सदृशा अनेके इति द्योत्यते ॥ हताः वंचिताः । तत्र हेतुमाह—तत्त्वान्वेषात् जातिनिश्चयं परामृश्य ॥ ल्यब्लोपे पञ्चमी ॥ मधुकर इत्यनेन तिर्यग्जन्तुत्वं विवक्षितम् ॥ कृती धन्यः ॥ भाग्यं तु मनुष्याणामेवेति नियमो नास्तीति भावः ॥ अनेन नायकेन मुग्धानायिका नवसङ्गमे

---

चलापाङ्गामिति ॥ हे मधुकर, वयं कथमेतदीयकटाक्षगोचरा भूयास्म, कथमेषास्मदभिप्रायव्यञ्जकं रहोवचनमाकर्णयेत्, कथं नु हठादनिच्छन्त्या अपि परिचुम्बनं विधेयास्मेति यदस्माकं मनो राज्यपदवीमधिशेते ते वयम् । बहुवचने स्वस्मिन्पूजा । अस्मच्छब्दः सकलधराधिपत्यपुरुवंशोत्पन्नत्वानेकविधाभिलाषचाटुकप्रवणत्वेत्याद्यर्थान्तर - सङ्क्रमितवाच्यः । तत्त्वान्वेषाद्वस्तुवृत्तान्वेषणया हताः । निरुद्धप्रवृत्तय इत्यर्थः । आयासमात्रपात्रीभूता इति भावः । 'मनोहतः प्रतिहतः प्रतिबद्धो हतश्च सः' इत्यमरः । त्वमित्येकवचनेनास्य निकृष्टत्वम् । युष्मच्छब्दस्तु स्फुटज्ञानराहित्याद्यर्थान्तरसंक्रमितः । अतएव मधुकरेति सम्बुद्धिः । कृती । कृतबहुकृत्य इत्यर्थः । भूमार्थे इनिः । खल्विति निपातेनायत्नसिद्धं तव चरितार्थत्वमिति ध्वन्यते । अथ हता इति विशेषणोपादानात् 'सविशेषणस्य निषेधो वक्तव्यः' इति बहुवचननिषेधाद्वयमित्यनुपपन्नमिति केचित् । तदविचारितरमणीयम् । यतो विशेषणं द्विविधम्, अनुवाद्यं विधेयं च । तत्रानुवाद्यविशेषणेऽयं निषेधो न विधेये । अत्र च तस्य विधेयत्वान्नानुपपत्तिः । तथा च वृत्तावुदाहृतम्—'पटुरहं ब्रवीमि' इति । अत्रैव पदमञ्जरीकारवचनं कथम्—'त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः'

---

*(अयं कुण्डलीकृतः श्लोकः प्रक्षिप्तः अतो न व्याख्यातः)

क(रौ)रं व्या(धु)धून्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥ २२

कुक्कुटवृत्त्या बलाद्गृहीत्वोपभोक्तुमुचितेति द्योत्यते ॥ अतएतन्न कृतमिति निर्वेदः । किञ्चात्र भ्रमरवृत्तान्तकथनेन तत्त्वान्वेषाद्वयं हता इत्यनेन प्रथमं वस्तुसौन्दर्यबलान्मदनकातर्या-सहिष्णुर्बलाच्छकुन्तला ग्राह्येति विचारितवान् ॥ ततो जातिनिश्चयाभावात्स्वविनयादि-सौशील्यगुणेन स्वचित्तं निगृह्य तूष्णीं स्थित इति भावः ॥ अत्र भ्रमरविशेषणसाम्याद-प्रस्तुतनायकप्रतीतेस्समासोक्त्यलङ्कारः ॥ तदुक्तम्—"विशेषणानां तौल्येन यत्र प्रस्तुत-वर्तिनां । अप्रस्तुतस्य गम्यत्वे सा समासोक्तिरिष्यत" इति ॥ उत्प्रेक्षासमासोक्त्योस्सं-सृष्टिः ॥ तदुक्तम्—"अलङ्कृतीनां बह्वीनां द्वयोर्वापि समाश्रयः । एकत्र निरपेक्षाणां मिथ-स्संसृष्टि रुच्यत" इति ॥ संसृष्टिसङ्करस्वरूपमुच्यते—सर्वालङ्काराणां संश्लेषसमुत्थापितो-ऽलङ्कारो द्विविधः ॥ तत्र संश्लेषस्संयोगन्यायेन समवायन्यायेन च द्विधा ॥ संयोगो यत्र भेदस्योत्कटतया स्थितिः । समवायो यत्र तस्यैवानुत्कटत्वेन वर्तमानत्वं ॥ तत्रोत्कटत्वेन स्थितौ तिलतण्डुलन्यायः । इतरत्र क्षीरनीरसादृश्यम् ॥ एतेषां मिश्रत्वे तिलतण्डुलयो-रिवोत्कटविभेदत्वे शब्दार्थोभयसंसृष्टिस्त्रिविधेति पूर्वाचार्यैरुक्ता ॥ अलङ्काराणां यथासम्भवं यदि कचिद्युगपद्घटना स्यात् । तदा ते किमपृथक्त्व एव पर्यवसिता उतालङ्कारान्तरमेव

इति । अत्रोन्नतत्वं विधीयते । 'नहि विधेयोऽर्थो विशेषणं भवति' इति । तत्कथमि-त्याह—चलेति । चलापाङ्गामित्यनुवाद्यविशेषणम् । वेपथुमतीं त्वदाशङ्काकातराम् । दृशं नीलोत्पलधिया पुनः स्पृशसि । रहस्यमाख्यातुं शीलं यस्य स इव कर्णान्तिकचरः श्रवण-समीपगो मृदु ध्वनसि श्रवणावकाशपर्यन्तत्वाच्च नीलोत्पलाशङ्कानपगमाच्च तत्रैव दन्ध्व-न्यमान आस्से । करौ व्याधुन्वत्याः सहजसौकुमार्यत्रासकातरायाश्च रतिनिधानभूतं विक-सितारविन्दकुवलयामोदमधुरबन्धूकबन्धुरमधरं पिबसीति प्राञ्चः । अधुनातनास्तु चला-पाङ्गं दृष्ट इत्यनुवाद्यविशेषणं वाक्यत्रयशेषभूतम् । एवमन्तिकचर इत्यपि । तत्र यतोऽन्तिक-चरस्ततश्चलापाङ्गं दृष्ट इति हेतुहेतुमद्भावशेषभूतत्वादेव नावृत्तिः । यतो दृष्टस्ततः स्पृशसि स्वनसीति योज्यम् । 'कर्णान्तिक—' इत्यादिपाठे 'चत्वारो वयमृत्विजः स भगवा-न्कर्मोपदेष्टा हरिः सङ्ग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता' इत्यादिवदभवन्मत-योगः स्यात् । न च स्पृशसीत्यनेनैव नैकट्ये लब्धे प्रथमवाक्यस्य नोपयोग इति वाच्यम् । एवं कर्णे इत्यत्रापि सामीप्याधिकरणेनैव गतार्थत्वात्तत्रापि । एवमुत्तरत्रापीत्यवकरतैव स्यात् । तेन तदुक्तिः स्वभावोक्तिपोषायैवेत्यवधेयम् । अतएव कर्णे इत्येकवचनम् । यदा यदपाङ्गेन पश्यति तदा तत्रेन्दीवरभ्रान्त्येष्टलाभेन स्वनति । वेपथुमतीं कम्पमानाम् । भयस्वभावात्तादृक्त्वम् । अर्थाद्दृशं दर्शनक्रियायां करणत्वेन प्रस्तुतत्वात्तस्याः स्पृशसीति दृगंशुस्पर्शनमेव वस्तुतस्तस्य उपचारात्तथोक्तिः । समासोक्तौ धर्मारोपार्थमिदम् । तेन विना तस्या उज्जीवनाभावादिति स्थितमाकरे । अतएव साक्षाद्विशेष्यानुपादानम् । हठ-कामुकत्वव्यवहारारोपार्थं च । अन्यथा सा स्त्रीजातिः तत्रापि मुग्धा तत्रापि तपस्विनी, तेन सुतरां तत्स्पर्शं सोढुमसहा । तस्यापि कीटकविशेषस्यायं भावः स्पर्शे दशत्येवेति यथाव्या-ख्यातमेव चारु । बहुश इत्यपि सत्कृतव्याख्यानुसारेणैवोपपद्यते । यथाश्रुततया बहुत्वेन हेतुं वक्ष्यामः । समारोपे तु यथा कश्चित्प्रथमसाहसां कम्पमानां काञ्चिन्नायिकां

किञ्चिदिति विचार्यते ॥ तत्र यथा बाह्यालङ्काराणां सौवर्णमणिप्रभृतीनां पृथक्चारुताहेतुत्वेपि सङ्घटनाकृतं चारुत्वान्तरं जायते । तद्वत्प्रस्तुतालङ्काराणामपि संयोजने चारुतान्तरमुपलभ्यते॥ नालङ्कारान्तरप्रादुर्भावोऽपृथक्तत्त्वपर्यवसानमिति निर्णयः॥ अलङ्कारान्तरत्वे च संयोगन्यायेन स्फुटावगमो भेदः॥ समवायन्यायेनास्फुटावगम इति द्वैधम् ॥ पूर्वत्र संसृष्टिरुत्तरत्र सङ्करः ॥ अत एव तिलतण्डुलन्यायक्षीरनीरन्यायौ तयोर्यथार्थतामवगमयतः ॥ तत्र तिलतण्डुलन्यायेन संसृष्टिस्त्रिधा ॥ शब्दालङ्कारगतत्वेनार्थालङ्कारगतत्वेनचोभयालङ्कारगतत्वेन च ॥ एवमुत्कटभेदमिश्रत्वे संसृष्टिस्त्रिधा॥ अनुत्कटभेदे सङ्करः॥ तच्च मिश्रत्वमङ्गाङ्गिभावेन संशयेनैकवाचकानुप्रवेशेन च त्रिधाऽभवत्सङ्करः॥ अनुग्राह्यानुग्राहकतया व्यवसितत्वात्त्रिप्रकारतयैव सङ्करः ॥ अङ्गमनुग्राहकमङ्ग्यनुग्राह्यं । प्रकारान्तरेण तु न शक्यो वक्तुमानन्त्यात्तत्प्रभेदभेदानामिति प्रतिपादिताश्शब्दार्थोभयगतत्वेन त्रैविध्यगता अलङ्काराः ॥ कुतः पुनरेष प्रतिनियमः ? यदेषां तुल्यत्वेऽपि काव्यशोभातिशयहेतुत्वे कश्चिदलङ्कारश्शब्दस्य कश्चिदर्थस्य कश्चिदुभयस्येति चेदुक्तमत्र यथा—काव्ये दोषगुणालङ्काराणां शब्दार्थोभयगतत्वेन व्यवस्थायामन्वयव्यतिरेकावेव प्रभवतः॥ सङ्करनिमित्तान्तरस्याभावात् ॥ ततश्च योऽलङ्कारो यदीयौ भावाभावावनुविधत्ते । स तदलङ्कारो व्यवस्थाप्यत इति सर्वं समञ्जसम् ॥

स्पृशति स्पृष्टेनालिङ्गनेन योजयति । विशेषणादेव विशेष्यप्रतिपत्तिः । कर्णे मृदु यथा स्यात्तथा स्वनसीति स्वभावोक्तिरेव । तत्र रहस्याख्यायीवेत्युत्प्रेक्षा समारोपसाधिकैव । तथा कपोले चुम्बनविशेषो व्यज्यते । कामिनोऽपि रहस्याख्यानं व्याजश्चुम्बनमेव प्रधानम् । 'करौ व्याधुन्वत्याः' इति विशेषणं पूर्वत्र समानमपि चुम्बने यत्करधूननं तत्स्फोरणार्थमौचित्येनात्र कविना निबद्धम् । अतएव विविधमासमन्तादित्युपसर्गद्वयनिबन्धः। चुम्बने तु 'करौ धुनाना नवपल्लवाकृती' इतिवत्कामशास्त्रे केवलस्यैव प्रयोग उक्तः। इदमेव बहुत्वे बीजमित्यवधेयम्। 'विशेषणादेव विशेष्यप्रतिपत्तिः' इति सम्बन्धिबोधः। तथा रतिसर्वस्वं सम्भोगनिधानम्। निधानत्वं च प्रथमतः प्राप्यत्वेन। तेनैव तन्निर्वाहात्। 'आदौ रतं बाह्यमिह प्रयोज्यं तत्रापि चालिङ्गनपूर्वमेव' इत्युक्तेरालिङ्गनचुम्बनयोः पूर्वत्वम्। अनेन नायकाभिप्रायो व्यज्यते । अधरं न तूत्तरोष्ठं पूर्वोक्तविशेषणस्य तत्रैव सम्भवात्। तत्रैवास्य कविभिरङ्गीकारात् । पिबसि सादरमवलोकयसीति भ्रमरपक्षे। अन्यथा तेन दंश एव क्रियेतेत्युक्तमेव प्राक्। आरोपपक्षे चुम्बसीति श्लेषः। वयं हतास्त्वं कृतीति व्यतिरेकः। नीलोत्पलादिभ्रान्त्या भ्रान्तिमान्। भ्रमरस्वभावोक्तिः। त्वं कृतीत्यत्र चरणत्रयं हेतुत्वेनोपात्तमिति काव्यलिङ्गम् । आद्यवाक्यद्वये रशनाकाव्यलिङ्गमपि श्रुत्यनुप्रासश्च। शिखरिणीवृत्तम् । यद्यपि हता इत्युक्तं तथाप्यभिलाषचाटुकप्रवणत्वेन तत्सुखागमस्य भावात्प्राप्तिरित्यङ्गमुपक्षिप्तम् । यतो धनिकेनोक्तम्—'साक्षात्पारंपर्येण वा विधेयानि' इति। तल्लक्षणं तु—'सुखार्थस्योपगमनं प्राप्तिरित्यभिधीयते' इति। न एष दुष्टो विरमति। अन्यतो गमिष्यामि। पदान्तरे स्थानान्तरे। कथमितोऽप्यागच्छति । परित्रायेथां मां दुर्विनीतेन दुष्टमधुकरेण परिभूयमानाम् । के आवां परित्रातुम् । दुष्यन्तमाक्रन्द । राजरक्षितव्यानि तपोवनानि नाम। नामेति प्रसिद्धौ। स्वगतमिति। 'अश्राव्यं स्वगतम्' इति तल्लक्षणात्। राजभावो राजत्वम्। कथमितोऽपि मामनुसरति ॥

**शकुन्तला**—[1]हळा ! परित्ता अह ॥ इमिणा दुव्विणीदेण महुअरेण अहिहूअमाणं मम् ॥

अनसूयाप्रियंवदे (उभे)—(सस्मितं) [2]का वअं परित्तादुं ? दुस्सन्दं अक्कंद राअरक्खि(दव्वाइं)आइ तवोवणाइ णाम ॥

**राजा**—(स्वगतं) अवसरोयमात्मानं (प्रकाशयितुम् )दर्शयितुम् ॥ कः कोऽत्रभोः (इत्यर्धोक्ते विचार्य) राजभावस्त्वभिज्ञातो भवेत् भवतु एवमभिधास्ये ॥

**शकुन्तला**—[3]ण एसो दुट्ठो विरमदि ॥ ता अण्णदो गमिस्सं ॥ (पदान्तरे स्थित्वा । सदृष्टिक्षेपं) कहं इदोवि मं अणुसरदि ?

**राजा**—(सत्वरमुपश्रुत्य)

**कः पौरवे वसुमतीं शासति शासितरि दुर्विनीतानां ।**

1. सख्यौ, परित्रायेथामनेन दुर्विनीतेन मधुकरेणाभिभूयमानां माम्
2. के आवां परित्रातुम् ? दुष्यन्तमाक्रन्द राजरक्षि(तव्या)तानि तपोवनानि नाम
3. नैष दुष्टो विरमति तस्मादन्यतो गमिष्यामि कथमितोऽपि मामनुसरति ?

**परित्ताअहेत्यादि ॥** तपोवनानि नाम ॥ नामशब्दः प्रसिद्धार्थकः ॥ अर्धोक्त-इति ॥ अर्धस्य वाक्यैकदेशस्य उक्ते कथने ॥ विचार्य विमृश्य ॥

विचारे कारणमाह ॥ राजभावस्त्वभिज्ञात इति ॥ भवत्वित्युपायस्मरणे ॥ एवमभिधास्ये इत्थं वक्ष्यामि ॥ वक्ष्यमाणप्रकारेण राजभावं प्रच्छाद्याभिधास्य इति यावत् ॥

**ण एसो इत्यादि ॥** सदृष्टिक्षेपमिति । दृष्टेर्दर्शनस्य क्षेपेण प्रेरणेन सह वर्तत इति सदृष्टिक्षेपम् ॥ क्रियाविशेषणं चैतत् ॥ प्रकृतिप्रत्ययसमुदायस्य प्रकृत्यर्थभागमुखेन भेदकं क्रियाविशेषणम् ॥ कथमिति ज्ञातव्यहेतुजिज्ञासायाम् ॥

**२३ कः पौरव इत्यादि ॥** पौरवे पुरुवंशोद्भवे दुष्यन्ते ॥ अत्र पौरव-इत्यनेन महाकुलीनत्वं सर्वलोकप्रसिद्धत्वमद्वितीयत्वं च ज्ञाप्यते ॥ तादृशस्तव कर्णपथं नागतः किमिति भावः ॥ स तु प्रसिद्धो भवतु ॥ मम किमित्यत आह—वसुमतीं शासतीति ।

**क इति ॥** दुर्विनीतानामविनीतानां दुष्टानां शासितरि दण्डादिना शिक्षके पौरवे पुरुवंशोत्पन्ने । वसुमतीं भूमिं च । अथ च वसुमतीमिति रक्षायोग्यत्वं ध्वनितम् । शासति सति । कोऽयमिति क्रोधेनोक्तिः । मुग्धास्वचतुरासु तपस्विकन्यास्वविनयमाचरति । तपस्विशब्देनात्यन्तासम्भाव्याविनयस्थानत्वं व्यज्यते । अत्र भ्रमर इति मयि दुष्यन्त इति शकुन्तलायां चेति विशेषे प्रस्तुते कोऽयमित्यादेः सामान्यस्योक्तेरप्रस्तुतप्रशंसा ।

अयमाचरत्यविनयं मुग्धासु तपस्विकन्यासु ॥ २३

अत्र वसुमतीमित्यसङ्कोचनिरुपपदेन सार्वभौमत्वं व्यज्यते । तद्राज्यवासितया तवापि तदाज्ञा परिपालनीयेति भावः ॥ तर्हि यः कश्चित्कुलक्रमागतं राज्यं परिपालयति । तस्य दुष्टशिक्षाकरणसामर्थ्यं नास्ति ॥ कथमविनयाद्यनाचाररूपतदाज्ञापरिपालनमित्यत आह—शासितरीति ॥ नियामक इत्यर्थः ॥ अनेन शौर्यादिगुणास्सूच्यन्ते ॥ न तु वैतालिकसङ्केतितारोपितकृत्रिमशौर्यादिगुणा इति भावः ॥ तर्ह्यपकर्तृषु को वा प्रातिकूल्यं नाचरेदित्यत आह—तपस्विकन्यास्विति ॥ अनेन रागाभावादरण्यवासित्वाच्च कस्याप्युपद्रवकरणाभावस्सूच्यते ॥ तर्हि प्रौढाश्चेत्पुत्तूवात्सल्यादिरागादिकमस्तीत्यत आह—कन्यास्विति ॥ अप्रगल्भास्विति यावत् ॥ तर्हि कन्यकात्वेऽपि दुष्टजनसहवासवशात्किञ्चित्कैतवं कुर्वन्तीत्यत आह—मुग्धास्विति ॥ तादृशनागरिकसहवासाभावाच्छाठ्यानभिज्ञास्विति यावत् ॥ अविनयं परकन्यकाया बलादाहरणरूपासन्मार्गम् ॥ आचरतीति वर्तमानप्रयोगेणाद्यापि मम पुरत आचरतीति मधुकरनिश्शङ्कधाष्टर्यजनिताश्चर्यं द्योत्यते ॥ क इत्याक्षेपे ॥ अयमित्यनेन तिर्यग्जन्तोः परस्त्रीग्रहणे दोषाभावादन्यायस्त्वाचरितः ॥ अस्मद्राज्ये मनुष्यः कोऽप्येव-

---

अनया चैतत्प्रतापस्य व्यापकत्वं व्यञ्जयन्त्या तस्य राजभावगोपनं ध्वनितम् । छेकवृत्त्यनुप्रासौ । अनेन दण्डलक्षणं सन्ध्यङ्गान्तरमुपक्षिप्तम् । तल्लक्षणं तु सुधाकरे—'दण्डस्त्वविनयादीनां दृष्ट्या श्रुत्या च तर्जनम्' इति । आर्य, न खलु किमप्यत्याहितम् । 'अत्याहितं महाभीतिः कर्म जीवानपेक्षि च' इत्यमरः । इयं नौ प्रियसखी मधुकरेणाभिभूयमाना कातरीभूता । साध्वसादवचना तिष्ठतीति कविवचनम् । इदानीमतिथिविशेषलाभेन त्वल्लाभेनेत्यर्थः । अनेनानुवृत्तिनामा नाट्यालङ्कार उपक्षिप्तः । तल्लक्षणं तु—'प्रश्रयादनुवर्तनम् । अनुवृत्तिः' इति । हला शकुन्तले, गच्छोटजम् । 'मुनीनां तु पर्णशालोटजोऽस्त्रियाम्' इत्यमरः । फलमिश्रमर्घमुपहर । इदं पादोदकं भविष्यति । सूनृतया सत्यया प्रियया च 'सूनृतं तु प्रिये सत्ये' इत्यमरः । तेन ह्यस्यां प्रच्छायशीतलायां सप्तपर्णवेदिकायां मुहूर्तमुपविश्य परिश्रमविनोदं परिश्रमप्रशमं करोत्वार्यः । "पुंस्त्रियोर्वा' इत्यनुवर्तमाने 'स्मिसयोरत्' इति सूत्रेण विकल्पेनाकारादेशे अस्सिं अस्स इमस्सिं इमस्सेति स्त्रीपुंसयोः समानं रूपम् । अनेन कर्मणा वृक्षसेचनेन । उचितं नः पर्युपासनमतिथीनाम् । अत्रोपविशामः । आत्मगतं स्वगतमित्यस्य पर्यायः । किं नु खल्विति जिज्ञासायाम् । 'खलु वीप्सानिषेधयोः । जिज्ञासायामनुनये वाक्यालङ्करणेऽपि च' इति हैमः । इमं प्रेक्ष्य तपोवनविरोधिनो विकारस्य गमनीया विषयभूतास्मि संवृत्ता । अनेनास्या भावो नामाङ्गजो विकार उक्तः । तल्लक्षणं यथा—'निर्विकारात्मके चित्ते भावः प्रथमविक्रिया' इति । जनान्तिकमिति । तल्लक्षणं, दशरूपके—'त्रिपताककरेणान्यानपवार्यान्तरा कथाम् । अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम् ॥' इति । त्रिपताककरलक्षणं सङ्गीतरत्नाकरे पताकलक्षणमुक्त्वा—'स एव त्रिपताकः स्याद्वक्रितानामिकाङ्गुलिः' इति । अनसूये, को नु खल्वेष चतुरा गम्भीराकृतिर्यस्य स चतुर प्रियसालपन्प्रभाववानिव लक्ष्यते । प्रभावः सामर्थ्यम् । सखि, ममाप्यस्ति कौतूहलम् । पृच्छामि तावदेनम् । प्रकाशमिति । तल्लक्षणं तु—'सर्वश्राव्यं प्रकाशं स्यात्' इति । आर्यस्य मधुरालापजनितो विश्रम्भो विश्वासो मां मन्त्रयत इति स्वौद्धत्यपरिहारः ।

मविनयमाचरितुं न शक्नोतीति भावः ॥ अत्र राज्ञा मधुकरनिवारणकथनव्याजेनानुनयेनैव कन्या वशीकर्तव्या; न तु बलादिति ज्ञाप्यते ॥ नायिका त्रिविधा मुग्धा । मध्या । प्रगल्भेति ॥ तत्र ॥ "मुग्धा नववयःकामविवेकेर्ष्यार्कषायिता ॥" "मुग्धं सौम्ये नवे मूढ" इति यादवः ॥ अत्र श्लोके प्रसिद्धिर्नामालङ्कार उक्तः ॥ यदाह—"वाक्यैस्सातिशयैर्युक्ता वाक्यार्थस्य प्रसाधकैः । लोकप्रसिद्धिबहुला प्रसिद्धिरिति कीर्तिता" इति ॥ अत्र दुर्विनीतानां शासितरि वसुमतीं शासतीति राज्ञोऽतिशयोक्तिः ॥ दुष्टशिक्षाकारित्वादेव प्रकृतभ्रमरबाधानिवर्तकत्वं । पौरव इति लोकप्रसिद्धिः ॥ अत्र पद्ये दण्डो नाम सन्ध्यन्तराङ्गमुक्तम् ॥ उक्तञ्च—"दण्डस्त्वविनयादीनां दृष्ट्वा श्रुत्वाऽथ तर्जन" मिति ॥ अत्राविनयश्रुत्या दुष्यन्तेन कृतं तर्जनं दण्डः । सन्ध्यन्तराङ्गानि निरूप्यन्ते—"मुखादिसंधिष्वङ्गानामशैथिल्यं प्रतीयते । सन्ध्यन्तरेषु योज्यानि तत्र तत्त्वैकविंशतिः ॥ सामभेदौ दानदण्डौ प्रत्युत्पन्नमतिर्वधः । मायाक्रोधे भयं प्रज्ञा गोत्रस्खलितसाहसौ । ओजस्संवरणे भ्रान्तिर्दौत्यं हेत्ववधारणं । लेखःस्वप्नश्चित्रमताविति ख्यातानि नामतः ॥ एवं सन्ध्यन्तरेऽङ्गानि प्रभवन्त्येकविंशतिः ॥"

---

कतम आर्येण राजर्षेर्वंशोऽलंक्रियते । कस्मिन्नभिजने वंशालङ्कारस्य ते जनिरजनीत्यर्थः । कतमो वा विरहेण स्ववियोगेन पर्युत्सुक उत्कण्ठितो जनो यत्र स देशः कृतः । कस्माद्देशादागतोऽसीत्यर्थः । एतद्भङ्ग्योक्तिस्तु सकलगुणानुरागं व्यनक्ति । किंनिमित्तं वा सुकुमारतरोऽपि तपोवनगमनपरिश्रमस्यात्मा पदं स्थानमुपनीतः प्रापितः । तपोवनपदेन नात्यधिकप्रयोजनत्वं सूचयति । अतएव परिश्रमपदम् । फलान्तराभावात्परिश्रममात्रमिति भावः । हृदय, मोत्ताम्य । एषा कर्त्री त्वया चिन्तितानि कर्मभूतान्यनसूया मन्त्रयते वदति । अनेन हावलक्षणोऽधिकार उक्तः—'भावादीषत्प्रकाशो यः स हाव इति कथ्यते' इति । भवति, इति सम्बुद्धिः । पौरवेण राज्ञा दुष्यन्तेन । धर्मेऽधिकारस्तत्र । अथ च पुरुवंशोत्पन्नेन राज्ञा दुष्यन्तपित्रा । धर्माधिकारे राज्ये । सनाथा इदानीं धर्मचारिणः । वयमिति विशेषे वक्तव्ये धर्मचारिण इति सामान्योक्तेरप्रस्तुतप्रशंसा । तया च सर्वेषां तपस्विनां सनाथत्वं व्यञ्जयन्त्यैकदेशगमनस्य सर्वदेशगमनव्याप्तिं सूचयन्त्याऽसम्बन्धे सम्बन्धरूपातिशयोक्तिर्ध्वनिता । शृङ्गारलज्जां रूपयतीति परावृत्तेन शिरसा लज्जितया दृशा च । तल्लक्षणं तु—'पराङ्मुखीकृतं शीर्षं परावृत्तमुदीरितम् । तत्कार्यं कोपलज्जादि कृते वक्त्रापसारणे ॥' । इति । 'मिथोऽभिगामिपक्ष्माग्राप्यधस्ताद्गततारका । पतितोर्ध्वपुटा दृष्टिर्लज्जया लज्जिता मता' इति । अनेन हेलालक्षणोऽङ्गजो विकार उक्तः । तल्लक्षणं तु—'हेलात्यन्तसमालक्ष्यविकारः स्यात्स एव तु' इति । अतएवोभयोराकारं विदित्वेति परस्परस्निग्धावलोकनेन । हला शकुन्तले, यद्यत्रार्यतातः सन्निहितो भवेत् । ततः किं भवेत् । इमं जीवितसर्वस्वेनाप्यतिथिविशेषं कृतार्थं करिस्सदि करिष्यति कुर्यादित्यर्थः । 'भविष्यति स्सिः' इति सूत्रेण स्सिरादेशः । अत्र 'व्यत्ययश्च' इति सूत्रेण त्यादेशानां व्यत्यये विध्यर्थे भविष्यत्प्रत्ययः । अत्र जीवितसर्वस्वशब्देन विषयनिगरणाच्छकुन्तलाया उक्तेः पताकास्थानकमनेनोक्तम् । तल्लक्षणमादिभरते—'सहसैवार्थसम्पत्तिर्नायकस्योपकारिका । पताकास्थानकं सन्धौ प्रथमे(?)तन्मतम्' इति । युवामपेतम् । किमपि हृदये कृत्वा मन्त्रयेथे । मन्तेधेति 'द्विवचनस्य बहुवचनम्' इत्यनेनाथामो ध्वमादेशे तस्य 'मध्यमस्येत्थाहचौ' इति हादेशः । 'एत्' इत्यनुवर्तमाने 'वर्तमाना

(सर्वा राजानं दृष्ट्वा किंचिदिव सम्भ्रान्ताः)

**अनसूया**—[1]अज्ज! ण (क्खु) किंवि अच्चाहिदं इअं णो पिअसही महुअरेण (अहिहूअमाणा) आउळीकियमाणा कादरी(भूदा)हूदा॥

(इति शकुन्तलां दर्शयति)

**राजा**—(शकुन्तलाभिमुखो भूत्वा) अपि नाम तपो वर्धते?

1 आर्य, न (खलु) किमप्यत्याहितं इयं नौ प्रियसखी मधुकरेणा(भिभूयमाना) कुलीक्रियमाणा कातरीभूता

**सर्वा इत्यादि॥** इवशब्दो वाक्यालङ्कारे॥ किञ्चिदीषत्॥ न त्वत्यर्थमिति यावत्॥ सम्भ्रान्ताः आटोपवत्यस्संवृत्ताः॥ "सम्भ्रमाटोपसंरम्भा" इति यादवः॥ सर्वास्तद्रूपसोहितदृष्ट्यो भूत्वातिथिसत्काराार्घ्यपाद्यादिकर्मणीषदेव व्यापृताः न त्वत्यर्थम्॥ अतएवोक्तं किञ्चिदिवेति॥ यद्वा—इव शब्दो भावार्थकः॥ किञ्चिदपि न सम्भ्रान्ता इति यावत्॥ लोकोत्तररूपलावण्याद्यतिशयमहापुरुषदर्शनेन विस्मयादवशा भूत्वा व्यापारान्तरे मनःपूर्वं सर्वाकारेण प्रवृत्तिर्नास्ति॥ किन्तु दृष्टिस्तु राजविषयेति भावः॥ अतः प्रयुक्तं किञ्चिदिवेति॥

**अज्जेति॥** अत्र मधुकरेणाकुलीक्रियमाणेत्यनेन शकुन्तलामुखादिविषयसौरभादिसौभाग्यातिशयप्रख्यापनं व्यज्यते॥ आवयोः प्रियसखीत्यनेन चिरसहवासाच्छकुन्तलाहृदयमर्मज्ञताऽनसूयाप्रियंवदयोस्सूच्यते॥ प्रियसखीत्वात्स्ववचनस्यानुलङ्घनीयत्वं च शकुन्तलाया ज्ञाप्यते॥ सखीत्वाद्गोपनीयं हृदि स्थितं शकुन्तलायाः किमपि नास्ति॥ अस्या हृदयमस्मदधीनमस्मद्द्वारा एतद्विषये प्रवृत्तिः कर्तव्येति राजानं प्रति ज्ञाप्यते॥ अत्याहितं महाभीतिः॥ अपि प्रश्ने॥

पञ्चमी शतृषु वा' इति विकल्पेनैत्वे 'इह हचोर्हस्य' इति विकल्पेन धत्वे मन्तेह मन्तह मन्तेध मन्तधेति चातूरूप्यम्। 'न युवयोर्वचनं श्रोष्यामि'। 'राजा—आत्मगतम्' इत्यादिनैतदन्तेनोदाहरणं नाम भूषणमुपक्षिप्तम्। तल्लक्षणं तु—'वाक्यं यद्गूढतुल्यार्थं तदुदाहरणं मतम्' इति। सखीगतं सखीसम्बद्धम्। आर्य, अनुग्रह इवेयमभ्यर्थना। शाश्वते नित्ये। प्रकाशोऽतिप्रसिद्धः। 'प्रकाशोऽतिप्रसिद्धे स्यात्' इत्यमरः। शृणोत्वार्यः। अस्ति कोऽपि कौशिक इति गोत्रेण नामधेयं यस्य स महाप्रभावो राजर्षिः। तमावयोः प्रियसख्याः प्रभवमुत्पत्तिस्थानमवगच्छ। उज्झितायाः शरीरसंवर्धनादिभिस्तातकाश्यपोऽस्याः पिता। शृणोत्वार्यः। गौतमीतीरे पुरा किल तस्य राजर्षेरुग्रे तपसि वर्तमानस्य किमपि जातशङ्कैर्देवैर्नियमविघ्नकारिणी मेनकानामाप्सराः प्रेषिता। 'आपः सुमनसो वर्षा अप्सराः सिकताः समाः। एते स्त्रियां बहुत्वे स्युरेकत्वेऽप्युत्तरत्रयम्॥' इत्युक्तेरेकवचनान्तोऽप्सरःशब्दः। तत उदारवसन्तसमये। प्राकृते पूर्वनिपातानियमः। तस्या उन्मादयितृ रूपं प्रेक्ष्य। 'राजा—परस्ताज्ज्ञायत एव' इत्यनेनानुक्तसिद्धिरिति। अह इं अथ किम्। उपपद्यते युज्यते॥

*शकुन्तला—(साध्वसादवचना तिष्ठति)

अनसूया—[1]दाणिं अदिहिविसेसळाहेण सा अदं अज्जस्स हळा सउंदळे! गच्छ उडअं फळमिस्सं अग्घं उवहर इदं दाव पादोदअं भविस्सदि ॥

राजा—भवतु भवतीनां सूनृतयैव गिरा कृतमातिथ्यम् ॥

प्रियंवदा—[2]तेण हि इमस्सिं पच्छाअसीअळाए सत्तवण्णवेदि आए अज्जो (मुहूत्तअं) उवविसि अ परिस्समविणोदणं करेदु ॥

राजा—ननु यूयमप्यनेन कर्मणा परिश्रान्ताः ॥

अनसूया—[3]हळा सउन्दळे। उइदं णो पज्जुवासणं अदिहीणं ता एद्ध उववसिह्म ॥

(सर्वे उपविशन्ति)

1. इदानीमतिथिविशेषलाभेन । स्वागतमार्यस्य? सखि शकुन्तळे! गच्छोटजम् । अर्घ्यमुपहर। इदं तावत्पादोदकं भविष्यति ॥
2. तेन ह्यस्यां प्रच्छायशीतलायां सप्तपर्णवेदिकायामार्य उपविश्य परिश्रमविनोदनं करोतु ॥
3. सखि शकुन्तले, उचितं नः पर्युपासनमतिथीनाम् । तस्मादत्रोपविशामः ॥

दाणिमिति ॥ तपो वर्धत इति शेषः ॥

भवत्वित्यादि ॥ सूनृतया प्रियसत्यया ॥ "सूनृतं प्रियसत्ययोः" इत्यमरः ॥

तेणेत्यादि ॥ करोत्विति प्रार्थनायां लोट् ॥ प्रकृष्टा छाया यत्र तत्स्थानं प्रच्छायम् ॥ "छाया त्वनातपे कान्तौ प्रतिबिम्बार्कजाययो" रिति विश्वः ॥ तेन शीतला ॥ शीतमस्यास्तीति शीतला *सिध्मादीत्यादिना अलच् ॥ "सप्तपर्णो विशालत्वक्छारदो विषमच्छद" इत्यमरः ॥ सप्तपर्ण इत्यत्र वृत्तिविषये संख्याशब्दस्य वीप्सार्थकत्वं महाभाष्ये प्रतिपादितम् ॥

नन्वित्यादि ॥ नन्विति सम्बोधने ॥ अनेन कर्मणा वृक्षसेचनव्यापारेण परिश्रान्ताः खिन्नाः ॥ युष्माभिरपि स्थातव्यमित्यर्थः ॥

हळेत्यादि ॥ उचितं न्याय्यम् ॥ "अभ्यस्तेऽप्युचितं न्याय्य" इति यादवः ॥ सविमर्शमिति ॥ अनुभूतपूर्वस्वकीयचित्तविकारोऽवमर्शः ॥

* एतत्पुटप्रभृति ८७ पुटपर्यन्तस्थमूलपङ्क्तीनां द्वितीयव्याख्यानपङ्क्तयः अतीतेषु ७८, ७९, ८० पुटेषु मुद्रिता इति वेदितव्यम्

**शकुन्तला**—(सविमर्शं)(आत्मगतं) [1]किं णु खु इमं पेक्खि अ तवोवण विरोहिणो विआरस्स गम(णीअम्हि)णज्जम्हि संवुत्ता ॥

**राजा**—(सर्वां विलोक्य) अहो! समवयोरूपरमणीयं सौहार्दं भवतीनाम् ॥

1. किं नु खल्विमं प्रेक्ष्य तपोवनविरोधिनो विकारस्य गमनीयास्मि संवृत्ता ॥

**किंण्विति** ॥ तपोवनस्यं न तु वनमात्रस्य विरोधिनः प्रतिषिद्धस्य ॥ शान्तिप्रधाने तपोवने मदनविकारस्यायोगात् ॥ विआरस्स विकारस्य विचारस्य वा ॥ गमनीया विषयभूता ॥ अनेन लोकोत्तरपुरुषदर्शनेन राजविषये शकुन्तळाया अनुरागो जात इति द्योत्यते ॥ स्वसौख्याभावे अनुरागरूपचित्तविकाराभावात् ॥ तथा स्वाभिनिवेशनं प्रकटीकरिष्यति—उत्तरत्र "हृदय! मा उत्ताम्यस्वे" त्यादिना ॥ अनेन शकुन्तळाया अनुरागबीजमुपक्षिप्तम् ॥ तस्माद्बीजस्य कथनेनोपक्षेपो नाम मुखसन्ध्यङ्गमुक्तं भवति ॥ तदुक्तम्—"बीजस्योक्तिरुपक्षेप" इति ॥ साधनत्वाद्बीजस्यादावुपक्षेपः ॥ बीजलक्षणमुच्यते—"स्तोकोद्दिष्टः कार्यहेतुः पश्चात्सुविस्तृत" इति बीजवद्बीजमुक्तम् ॥ उक्तं च—"यत्तु स्वल्पमुपक्षिप्तं बहुधा विस्तृतिं गतं । कार्यस्य कारणं प्राज्ञैः तद्बीजमिति कथ्यते ॥" यथा सुविहितं बीजं फलपर्यवसायि तद्वदिदमपीति ॥ स्तोकोद्दिष्टः स्वल्पोपक्षिप्तः ॥ अनन्तरमनेकथा मूलस्कन्धपलाशादिवदङ्कुरितपल्लवितकुसुमितादिभेदेन नायकोपनायकप्रतिनायकभेदेन च बहुधा विस्तारीकार्यस्य त्रिवर्गरूपस्य फलस्य यो हेतुस्तद्बीजम् ॥ यथा माळविकाग्निमित्रे ॥ कौमुदिका—"कहिं पत्थिरासी" त्यादिना । माळविकायामनुरागस्य चित्रदर्शनम् ॥ तत्राप्यादरातिशयश्च कारणमुक्तम् ॥ यथा वा मदीये नैषधानन्दे । नळस्य दमयन्त्यामनुरागस्य स्वप्नदर्शनम् ॥ तच्च बीजं प्रधानकार्यावान्तरकार्यहेतुभेदादनेकप्रकारम् ॥ अत्र प्रधानकार्यबीजमुक्तम् ॥ अवान्तरकार्यबीजं यथा माळविकाग्निमित्रे । विदूषकं प्रति किञ्चिदुपेयोपायदर्शनेत्यादिना—माळविकादर्शनरूपावान्तरकार्यस्य हरदत्तगणदासयोर्विवादकरणं बीजमुपन्यस्तम् ॥ यथा वा मदीये नैषधानन्दे—"अद्य स्वप्ने प्रियसख मयाऽदर्शि काचित्त्रिलोकीभूषायोषा फणितिमनसोरप्यलक्ष्यानुभावा । स्मारं स्मारं तरळनयनां तां तपत्यन्तरात्मा वारं वारं विसृजति शरान्पातकी पञ्चबाणः ॥" अत्र नळेन हंसं प्रति दमयन्त्यनुरागस्य स्वप्नदर्शनं बीजमुक्तम् ॥ ततस्तत्प्राप्त्यर्थं चित्ताश्वसञ्चारणशौर्यशुल्केत्यादिना स्वयंवरपत्रिकादर्शनमवान्तरं बीजमुपन्यस्तम् ॥

**सर्वा इत्यादि** ॥ सुहृदो भावः सौहार्दम् ॥ शुद्धाशयत्वमिति यावत् ॥ जनान्तिकमित्यनेन नियतश्राव्यमुक्तम् ॥

**प्रियंवदा**—(जनान्तिकम्) [1]अणसूए ! को णुखु एसो चउरगम्भीरा-किदि (चउरं)महुरं पिअं आळवंतो (पहावबन्दो) पहु विअ(लक्खीअदि) दीस इ ?

**अनसूया**—[2]सहि ! मह्वि अह्वि कोदूहळं पुच्छिस्सं दावणं (प्रकाशम्) अज्जस्स महुराळावजणिदो (वीसम्भो) विस्सासोमं मंता वेदि ॥ कदमो अज्जेण राएसिवंसो अळंकरिअदि ? कदमो वा विरहपज्जूसुअजणो किदो देसो ? किं णिमित्तं वा सुउमारो वि तवोवण(गमण) परिस्समस्स अत्ता प(त्त)दं उवणीदो ?

---

1 अनसूये ! को नु खल्वेष चतुरगम्भीराकृति(श्चतुरं)र्मधुरं प्रियमालपन् प्रभुरिव (प्रभावानिव लक्ष्यते) दृश्यते ?

2. सखि ! ममाप्यस्ति कौतूहलम् । प्रक्ष्यामि तावदेनम् । आर्यस्य मधुरालापजनितो (विस्रम्भो) विश्वासो मां मन्त्रापयति । कतम आर्येण राजर्षिवंशोऽलंक्रियते ? कतमो वा विरहपर्युत्सुकजनः कृतो देशः ? किं निमित्तं वा सुकुमारोऽपि तपोवन(गमन)परिश्रमस्यात्मा (पद)पात्रतामुपनीतः ?

---

**अणसूएति ॥** एष इत्यनेन रूपलावण्याद्यतिशयवानिति सूच्यते ॥ चतुरा गुप्ताभिप्राया ॥ गम्भीरा हर्षक्रोधयोर्निर्विकारा आकृतिर्यस्य स तथोक्तः ॥ यदाह मुनिः—"भीशोकक्रोधहर्षेषु गाम्भीर्यं निर्विकारते" ति ॥ दर्शनमात्रेण विलोभनीयो भवतीति भावः ॥ "अनधिगतपरिमळापि हि हरति दृशं मालतीमाले"त्यादिवद्वस्तुसौन्दर्यमुक्तम् ॥ तर्हि यस्याकारशोभा । तस्य वचनचातुरी नास्तीत्यत आह—मधुरमिति ॥ मधु राति दत्ते कर्णपुटद्वारान्तःकरणस्येति मधुरं विप्रियार्थेऽप्यनुद्वेजकभाषणं माधुर्यम् ॥ मधुरं यथा भवति तथा प्रियं हृद्यतया श्राव्यं आलपन् चाटूनि शंसन् ॥ तर्हि सर्वोऽपि जनस्स्वाधिकेषु प्रियभाषणमेव करोतीत्यत आह—प्रभुरिति ॥ इव शब्दो वितर्के ॥ दृश्यते चक्रवर्तिलक्षणैर्ज्ञायत इति यावत् ॥

**सहीति ॥** मधुरसुकुमारमूर्तेर्दुष्यन्तस्य दर्भांकुरादिकंटकबहुळे धर्मारण्ये पादसञ्चरणं कुतूहलबीजमित्यवगन्तव्यम् ॥

**अज्जस्सेति ॥** मधुरालापजनितो विश्वास इत्यनेनारण्यवासित्वादनागरिकतया परचित्तानभिज्ञतया चास्माभिः प्रियं विप्रियं वा यत्किञ्चिदुच्यमानेऽपि प्रभोर्निर्विकारत्वमिति यत्स विस्रम्भो मां निश्शङ्कं प्रेरयतीति भावः ॥ कतमो वा राजर्षिवंशोऽलंक्रियत इत्यनेन कस्मिन्वंशे उत्पत्तिरिति पृष्टं भवति ॥ राजर्षिवंश इत्यनेन त्वया प्रच्छाद्य वक्तुं न शक्यते ॥ आकार एव कथयतीति व्यज्यते ॥ किञ्च राजर्षिवंश्यस्त्वसत्यं न वदतीत्यपि राजानं प्रति सूच्यते ॥ विरहपर्युत्सुकः कृत इत्यनेन को देशः ? तद्देशपरित्यागे को वा हेतुः ? इति शङ्कितं भवति ॥ किन्निमित्तं वा सुकुमारोऽपि ? इत्यादिनात्राश्रमागमने किं

**शकुन्तला**—(आत्मगतम्) [1]हिअअ ! मा उत्तम्म । एसा तुए चिन्तिदं दाणिं अणसूआ मंतेदि ॥

**राजा**—(आत्मगतम्) कथमिदानीमात्मानं निवेदयामि? कथं वाऽत्मापहारं करोमि? भवतु एवं तावदेनां वक्ष्ये ॥ (प्रकाशम्) भवति यः पौरवेण राज्ञा धर्माधिकारे नियुक्तः । सोऽहमाश्रमिणामविघ्नक्रियोपलम्भाय धर्मारण्यमिदमायातः ॥

**अनसूया**—[2]सणाहा दाणिं धर्मचारिणो ॥

1. हृदय, मा उत्ताम्य । एषा त्वया चिन्तितमिदानीमनसूया मन्त्रयते ॥
2. सनाथा इदानीं धर्मचारिणः ॥

कारणं? इति पृष्टमित्यवगन्तव्यम् ॥ अनसूये कोनु खल्वित्यादिनैतदन्तेन पृच्छालङ्कारः ॥ उक्तं च—"यत्राकारोद्भवैर्वाक्यैरात्मानमथ वा परं । पृच्छन्नेवाभिधत्तेऽर्थं सा पृच्छेत्यभिसंज्ञिता ॥" आकारव्यञ्जितैर्वाक्यैस्स्वस्वरूपं परस्वरूपं वा व्यङ्ग्यवृत्त्या यत्राभिधीयते सा पृच्छालङ्कारः । प्रकृते वंशदेशागमनादीनि व्यङ्ग्यवृत्त्या पृष्टानीति पृच्छा भवति ॥

**हिअअ इति ॥** अत्र हृदयोत्तमनेनोत्कण्ठाकातर्यभूतचित्तादिकमुक्तम् ॥

**कथमित्यादि ॥** आत्मापहारमात्मवञ्चनम् ॥ उभयत्रापि कथमित्याक्षेपे ॥ आत्मनिवेदने सति विस्रम्भालापाद्यसिद्धेस्स्वकार्यहानिः ॥ आत्मापहारे सति मृषावादित्वदोषः ॥ भवतु यथा तथा वास्तु ॥ एवं वक्ष्यमाणप्रकारेण राजभावं प्रच्छाद्य ॥ एनामित्यनादरनिर्देशेन प्रतारणीयत्वं व्यज्यते ॥ छलोक्त्या उच्यते चेद्राजभावं न जानातीति भावः ॥

तथैवाह—**प्रकाशमित्यादिना ॥** प्रकाशमित्यनेन सर्वश्राव्यमुक्तमित्यर्थः ॥ पौरवेण पुरुवंशोद्भवेन ॥ अविघ्नक्रियोपलंभाय निर्विघ्नक्रियानुष्ठानज्ञानार्थम् ॥ तादर्थ्ये चतुर्थी ॥ धर्माधिकारे अधिकारविषये नियुक्तः ॥ नियोजितः पौरवेण राज्ञा नियुक्त इत्यनेन तासां दुष्यन्तेन नियुक्तः पुरुषइति ज्ञापितं भवति ॥ न चात्मापहारदोषः ॥ पौरवेण राज्ञा स्वपित्रा नियुक्त इति स्वस्यापि प्रतीतेः ॥

**सणाहा इति ॥** इदानीं साम्प्रतम् ॥ त्वय्यागते सतीत्यर्थः ॥ इदानीमित्यनेन राज्ञा राजभावः प्रच्छादितोऽपि तया ज्ञात इति द्योत्यते ॥ सनाथा रक्षकसहिताः ॥ इतः परमनुष्ठानं निर्विघ्नं भविष्यतीत्यर्थः ॥ शृङ्गारलज्जां अनुरागव्यञ्जकोर्वीलेखनचिन्तनमुखावनमननखकर्तनवस्त्रांगुलीयकस्पर्शादिलज्जानुभावानित्यर्थः ॥ "शृङ्गारस्सुरते नाट्ये रसे दिग्गजमण्डन" इति केशवः ॥ उभयोश्शकुन्तलादुष्यन्तयोराकारमिङ्गितम् ॥ "आकारस्त्वङ्ग इङ्गित" मित्यमरः ॥ विदित्वा अलसवलितसाकूतावलोकनादीन् सम्य-

**शकुन्तला**—(शृङ्गारलज्जां निरूपयति)

अनसूयाप्रियंवदे (सख्यौ) (उभयोराकारं विदित्वा) (जनान्तिकम्) [1]हळा सउन्दळे, जइ (एत्थ)अज्ज तादो सण्णिहिदो हवे...

**शकुन्तला**—(सरोषम्) [2]तदो किं भवे

**सख्यौ**—[3]इमं जीविदसव्वस्सेण वि अदि(हिविसेसं)हिं किद(त्थं) त्थीकरिस्सदि ॥

**शकुन्तला**—[4]हळा! अवेह ॥ किं वि हिअए करिअ मंतेह ॥ ण वोवअणं सुणिस्सम् ॥

**राजा**—वयमपि तावद्भवत्योस्सखीगतं किंचित्पृच्छामः ॥

**सख्यौ**—[5]अज्ज! अणुग्गहो खु अब्भत्थणा ॥

---

1. सखि शकुन्तले, यद्य(त्र)द्य तातः सन्निहितो भवेत् ॥
2. ततः किं भवेत्?
3. इमं जीवितसर्वस्वेनाप्यति(थिविशेषं)थिं कृता(र्थं)र्थी करिष्यति ॥
4. सख्यौ अपेतं । किमपि हृदये कृत्वा मन्त्रयेथे । न वां वचनं श्रोष्यामि ॥
5. आर्य! अनुग्रहः खल्वभ्यर्थना ॥

---

गवलोक्येति यावत् ॥ पौरवेणेत्यादिनैतदन्तेन हेलानाम स्त्रीणामलङ्कार उक्तः ॥ तदुक्तम्—"नानाप्रकारचेष्टाभिश्शृङ्गराकारसूचिका । ललिताभिनयोपेता ि‍ाया हेला प्रकीर्तिता ॥" इति ॥ अत्र शकुन्तलाशृङ्गारचेष्टायास्सखीभ्यां ज्ञातत्वेन हेलात्वम् ॥

**हळेत्यादि ॥** अद्य इदानीम् ॥ अनुरूपवरसन्निधान इत्यर्थः ॥

**तदो इति ॥** ततः काश्यपस्सन्निहितश्चेत् । स तु किं करिष्यति? इदानीं मम किं जातमिति भावः ॥ जीवितसर्वस्वं शकुन्तळा ॥ इदानीं काश्यपस्तु सन्निहितश्चेदनुरूपाय वराय दुष्यन्ताय त्वां दद्यादिति भावः ॥ उभयोरित्यादिनैतदन्तेन समाधानं नाम मुखसन्ध्यङ्गमुक्तम् ॥ यदाह—"बीजोद्भेदस्समाधान" मिति ॥ अत्र शकुन्तलादुष्यन्तयोः परस्परसाकूतावलोकनस्वेदरोमाञ्चादिना सखीभ्यामुभयानुराग उद्भेदित इति समाधानम् ॥ मन्त्रयेथे गुप्तं भाषेथे ॥ युवयोर्हृदि स्थितमहं जानामीत्यर्थः ॥

**वयमित्यादि ॥** सखीगतं शकुन्तळाश्रितं किञ्चित् जिज्ञासितम् ॥

**राजा**—भगवान् काश्यपः शाश्वते ब्रह्मणि स्थित इति प्रकाशः इयं च वः सखी तदात्मजेति कथमेतत् ?

**अनसूया**—[1]सुणोदु अज्जो अत्थि कोसि ओत्ति किदगोत्तणामहेओ महप्पहाओ राएसी ॥

**राजा**—अस्ति श्रूयते ॥ ततः ?

**अनसूया**—[2]तं णो सहीए पहवं अवगच्छ ॥ तेण उज्झिदाए शरीरसंवड्ढणादिहिं दाद कस्सवो से पिदा ॥

**राजा**—उज्झितशब्देन जनितं मे कौतूहलं ॥ आमूलाच्छ्रोतुमिच्छामि ॥

**अनसूया**—[3]सु(णा)णोदु अज्जो ॥ (गोदमीतीरे) पुरा किळ तस्स राएसिणो उग्गे तवसि वट्टमानस्स किं वि जादसंकेहिं देवेहिं मेणआ णाम अच्चरा णिअमविग्घकारिणी पेरिदा ॥

---

1. श्रृणोत्वार्यः । अस्ति कौशिक इति कृतगोत्रनामधेयो महाप्रभावो राजर्षिः ॥

2. तं नौ सख्याः प्रभवमवगच्छ । तेनोज्झितायाः शरीरसंवर्धनादिभिस्तातकाश्यपोऽस्याः पिता ॥

3 श्रृणोत्वार्यः । (गौतमीतीरे) पुरा किल तस्य राजर्षेरुग्रे तपसि वर्तमानस्य किमपि जातशङ्कैर्देवैर्मेनकानामाप्सरा नियमविघ्नकारिणी प्रेरिता ॥

---

**भगवानिति ॥** भगवान् माहात्म्यवान् ॥ "भगश्श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु" इत्युक्तत्वात् ॥ शाश्वते नित्ये ब्रह्मणि ब्रह्मचर्ये । स्थितः परिनिष्ठितः ॥ आजन्म ब्रह्मचारीत्यर्थः ॥ प्रकाशः प्रसिद्धिः ॥ इयमेतादृशरूपलावण्याद्यतिशयवती ॥ तस्य पुत्री कथमिति प्रश्नः ॥

**सुणोदु इति ॥** राजर्षिरित्यनेनेतरऋषिवैलक्षण्यमुक्तम् ॥ तेन ऋषेः रूपाद्यतिशय उक्तः ॥ न त्वष्टावक्रादिवत्कुरूपतेति भावः ॥ तत्प्रभवत्वेनापि शकुन्तळायाः रूपादिमत्तायां कारणं व्यज्यते तर्हि शरीरपोषणादिनापि दुहितृत्वव्यपदेशोऽस्तीत्यत आह—प्रभवमवगच्छेति साक्षात्पितेति यावत् । तर्हि कण्वपुत्रीति व्यपदेशः कथम् ? इत्यत आह—तेणेति ॥ प्रकृते पितेत्यनेन पातीति पितेति पोषणमात्रमुच्यते न तु जनकइति प्रयुक्तम् ॥ **सुणोदु इति ॥** किलेति प्रसिद्धौ ॥ अप्सरा इति ॥ ननु "स्त्रियां बहुष्वप्सरस" इत्यत्र बहुवचनस्योक्तत्वादेकवचनं नोपपद्यत इति चेन्न ॥ बहुत्वं हि न सर्वसम्मतम् ॥ तथा च कप्फिण्याभ्युदये । "मानिनः कुलवधूरिव रागादप्सराप्यधित पार्श्वमशून्य"मिति ॥ बह्वीनामप्सरसां मध्ये मेनकायाः प्रेषणेन सजातीयोत्कृष्टता व्यज्यते साक्षात्तत्प्रभवत्वेन ॥ शकुन्तळाया रूपलावण्याद्यतिशयः ॥ मानुषशरीरधर्मषड्भावविकाराद्यभावश्च देवैरपि प्रार्थनीयत्वं च व्यज्यते ॥

**राजा**—अस्त्येतदन्यसमाधिभीरुत्वं देवानाम् ॥ ततस्ततः ?

**अनसूया**—[1]तदो वसंदोदारसमए ताए उम्मादइत्तअं रूवं पेक्खिअ—(इत्यर्धोक्ते लज्जया विरमति)

**राजा**—परस्तादवगम्यत एव ॥ सर्वथाऽप्सरस्संभवैषा ॥

**अनसूया**—[2]अहइं ॥

**राजा**—उपपद्यते ॥

**मानुषीषु कथं वा स्यादस्य रूपस्य सम्भवः ।**

---

1. ततो वसन्तोदारसमये तस्या उन्मादयितृकं रूपं प्रेक्ष्य—(इत्यर्धोक्ते लज्जया विरमति ॥)
2. अथ किम् ॥

---

**अस्तीत्यादि ॥** देवानां सुराणाम् ॥ "देवस्सुरे धने राज्ञि देवमाख्यातमिन्द्रिय" मिति विश्वः ॥ अन्यसमाधिभीरुत्वं अन्यतपोभयशीलता ॥

**तदोइति ॥** वसन्तेनोदारसमयः वसन्तकालः ॥ वसन्तस्योदारत्वं नाम परिपोषदशा ॥ मलयमारुतमन्दानिलपिकस्वरादीनां शिशिरर्तुधर्मसाङ्कर्यदोषराहित्येन निरर्गळप्रवृत्तिः तदा तत्तद्धर्माणाममोघकार्यकारित्वं भवतीति भावः ॥ अर्धोक्ते, अर्धस्य वचनस्य उक्ते कथने ॥ लज्जया अकार्यकथनजन्यव्रीडया ॥ तदुक्तम्—"अकार्यकरणज्ञानगुर्वाज्ञादिव्यतिक्रमैः । अनिर्वाहात्प्रतिज्ञायास्त्यागे भूयोनुतापतः ॥ लज्जा तदनुभावास्स्युरुर्वीलेखनचिन्तनम् । मुखावनमनं गूढवचनं नखकृन्तनम् ॥ वस्त्राङ्गुळीयकस्पर्शो दूरादेवावकुण्ठनम् । अनिर्गमो बहिश्चापि क्वचिदप्यनवस्थितिः" इति ॥ पुरा किलेत्यादिनैतदन्तेनानुक्तसिद्धिर्नामालङ्कारः उक्तः ॥ तदुक्तम्—"प्रस्तावेनैव यस्यार्थः कृत्स्नो यत्र प्रमीयते । वचनेन विना सा तु सिद्धिस्स्यात्परिकीर्तिता" इति ॥ अत्र प्रस्तावबलात्सम्भोगादिरवचनेनैवावगत इत्यनुक्तसिद्धिः ॥ अथ किमित्यङ्गीकारे ॥ "अङ्गीकृतौ स्यादथ किं"मित्यमरः ॥ उपपद्यते ज्ञायते ॥

२४ **मानुषीष्विति ॥** मानुषीषु मनुष्यस्त्रीषु ॥ मनुष्यजातिष्वित्यसङ्कोचवाचकबहुवचनेन लोकोत्तरस्त्रीरत्नसङ्ग्रहार्थं स्वस्यानेकदेशपरामर्शनं व्यज्यते ॥ कुत्राप्येतादृशरूपस्यादृष्टत्वान्मानुषीष्विति बहुवचनप्रयोगः कृतः ॥ अस्यात्यर्थं दर्शनीयस्य रूपस्य

---

**मानुषीष्विति ॥** मनोरपत्यानि स्त्रियो मानुष्यस्तासु । 'मनोर्जातावञ्यतौ षुक् च' इत्यञ्षुकौ । ततः 'टिड्ढाणञ्—' इति ङीप् । एतेनासां पृथिव्यंशाधिक्यं ध्वनितम् । त्रिवृत्पञ्चीकरणपक्षयोरर्धषडंशानां ग्रहणात् । उक्तं च 'पृथिवी नित्यानित्या च । नित्या परमाणुरूपा, अनित्या कार्यरूपा । सापि शरीरेन्द्रियविषयरूपा । शरीरमस्मदादीनां प्रत्यक्षसिद्धम्' इति । एतच्च सम्भवः कथं वा स्याददः प्रतिहेतुत्वेन योज्यम् । अतएवोपमाने वसुधातलादिति प्रतिवस्तुत्वेनोपादानम् । प्रतिव्यक्तिजातिसमासेस्तासु रूपादीनां

न प्रभातरलं ज्योतिरुदेति वसुधातलात् ॥ २४

सौन्दर्यस्य ॥ रूपस्य लक्षणं पूर्वमेवोक्तम् ॥ सम्भवः उत्पत्तिः ॥ कथं केन हेतुना स्यादित्याक्षेपे केनापि प्रकारेण न भूयादित्यर्थः ॥ तदेव निदर्शनेन स्फुटयति—न प्रभातरळमित्यादिना प्रभया कान्त्या तरळं चञ्चलं ज्योतिस्तेजः विद्युदिति यावत् । वसुधातलान्नोदेति नाविर्भवति ॥ किंत्वाकाशे मेघादेवोदेतीत्यर्थः ॥ अनेन लोकोत्तरं वस्तु स्वेनापरित्याज्यमिति ध्वन्यते ॥ अस्मिन् श्लोके पूर्वार्धेन रूपं वर्णितम् ॥ दृष्टान्तवाक्ये प्रभातरळमिति विशेषणेन रूपादिमत्ता विशेष्येण ज्योतिश्शब्देन तमोविरोध्यर्थप्रतिपादकेन दोषरहितराजकुलसम्भवश्च प्रतिपादितः ॥ मानुषीषु कथं वा स्यादिति व्यतिरेकालङ्कारः ॥ न प्रभातरलं ज्योतिरित्यादौ साधको निदर्शनालङ्कारः ॥ "अभवद्वस्तुसम्बन्धमुपमापरिकल्पितं । निदर्शन" मित्युक्तत्वात् ॥ किं चात्र वस्तुप्रतिवस्तुन्यायेन सदृशवस्तुकीर्तनान्निदर्शनालङ्कारः ॥ तदुक्तम्— "यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्तनं । परापेक्षाव्युदासार्थं तन्निदर्शनमुच्यत" इति ॥

तारतम्यस्य प्रत्यक्षतः परिदृश्यमानस्य 'इदमः प्रत्यक्षगतम्' इत्युक्तेः । निर्जितरतिलावण्यस्य निरुपमस्य त्रिजगत्युपमानतां प्राप्तस्येत्यर्थान्तरसंक्रमितम् । रूपं विद्यतेऽस्मिन्नस्य वा मत्वर्थीयोऽर्श आदिभ्योऽच् । तेन रूपवत इत्यर्थः । अन्यथास्येत्यनेनार्थपौनरुक्त्यं स्यात् । रूपशब्दो लावण्यादीनामुपलक्षणम् । ते च 'यौवनं रूपलावण्ये सौन्दर्यमभिरूपता । मार्दवं सौकुमार्यं चेत्यालम्बनगुणा मताः' इत्युक्तिः । अतएव प्रभातरलमित्युपमानेन विशेषणाधिक्यं तन्मध्ये प्रथमं यौवनस्य प्रत्यक्षतः परिदृश्यमानत्वात्तद्वदिहापीतरेषां ग्रहणं रूपशब्देन । सम्भव उत्पत्तिः कथं वा स्यात् । अपि तु न स्यादेव । कथं वेति निपातसमुदायो निषेधे । अत्र विशेषे प्रस्तुते सामान्योक्तेरप्रस्तुतप्रशंसा । क मानुष्यः केदं रूपमिति सामान्यतः प्रतीतम् । विषमालङ्कारस्यैको भेदो व्यङ्ग्यः । कीदृगित्याह—नेति । प्रभया दीप्त्या तरलमुज्ज्वलं भासुरम् । 'तरलश्चञ्चले षिङ्गे हारमध्यमणावपि । भासुरे च' इति विश्वः । ज्योतिश्चन्द्रादि । वसुधातलाद्भूस्वरूपान्नोदेति । न प्रकटीभवतीत्यर्थः । अत्र भूस्वरूपस्य ज्योतिषश्च जन्यजनकभावाभावात्सत उत्पत्तिमङ्गीकृत्य विश्लेषमात्रे पञ्चमी प्रयुक्तेत्यवधेयम् । प्रकृते प्रत्यक्षेण दृश्यमानत्वात् सम्भावनायां लिङ् । उपमानवाक्ये प्रसिद्धत्वान्निषेधोक्तिः । श्रुतिवृत्त्यनुप्रासौ । सम्भवः कथं वा स्यान्नोदेतीति च सामान्यधर्मस्य शब्दान्तरेणोक्तेरतिशयोक्तिमूला प्रतिवस्तूपमा । रूपादीनां लक्षणानि यथा—'अङ्गान्यभूषितान्येव प्रक्षेप्याद्यैर्विभूषणैः । येन भूषितवद्भान्ति तद्रूपमिह कथ्यते ॥ मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु लावण्यं तदिहोच्यते ॥ अङ्गप्रत्यङ्गकानां यः सन्निवेशो यथोचितम् । सुश्लिष्टसन्धिबन्धो यस्तत्सौन्दर्यमितीर्यते ॥ यदात्मीयगुणोत्कर्षैस्त्वन्यच्च निकटस्थितम् । सारूप्यं नयनिष्ठाज्ञैराभिरूप्यं तदुच्यते ॥ स्पृष्टं यत्राङ्गमस्पृष्टमिव स्यान्मार्दवं हि तत् । यत्स्पर्शासहनाङ्गेषु कोमलस्यापि वस्तुनः ॥ तत्सौकुमार्यं त्रेधा स्यान्मुख्यमध्याधमक्रमात् । अङ्गं पुष्पादिसंस्पर्शासहं येन तदुत्तमम् ॥ न सहेत करस्पर्शं येनाङ्गं मध्यमं हि तत् । येनाङ्गमातपादीनामसहं तदिहाधमम् ॥' इति । अन्ये तु मानुषीणां प्रतिबिम्बत्वेन वसुधाया उपात्तत्वात्सम्भवस्य चोदयः प्रतिबिम्बत्वेनोपात्त इति दृष्टान्तमाहुः । वस्तुतस्त्वयमेवोचितः । यतः पूर्वत्रालङ्कार आद्यभागे व्यङ्ग्यवाच्ययोः प्रतिवस्तुत्वमुक्तमत्र वाच्यलक्ष्ययोरिति । अनेन निदर्शनं नाम भूषणमुप-

**शकुन्तला**—(अधोमुखी तिष्ठति)

**राजा**—(स्वगतम्) लब्धावकाशो मे मनोरथः ॥ किंतु सख्या परिहासोदाहृतां वरप्रार्थनामस्याः श्रुत्वा धृतद्वैधीभावकातरं मे मनः ॥

**प्रियंवदा**—(सस्मितं शकुन्तलां विलोक्य नायकाभिमुखीभूत्वा)

[1]किं उण वि वत्तुकामो विअ अज्जो ?

**शकुन्तला**—(सखीमङ्गुल्या तर्जयति)

**राजा**—सम्यगुपलक्षितं भवत्या ॥ अस्ति नः सच्चरित्रश्रवणलोभादन्यदपि प्रष्टव्यम् ॥

**प्रियंवदा**—[2]अळं वि आरि अ ॥ अणिअन्तणाणुओओतवस्सिजणोणाम ॥

1. किं पुनरपि वक्तुकाम इवार्यः ?
2. अलं विचार्य । अनियन्त्रणानुयोगस्तपस्विजनो नाम ॥

**लब्धावकाश इति** ॥ राजर्षिपुत्रीत्वादभिलाषस्यास्पदं । जातमिति यावत् ॥ सख्या प्रियंवदया परिहासोदाहृतां परिहासजल्पितां । वरप्रार्थनां श्रुत्वा ॥ "यथा वनज्योत्स्नानुरूपेण पादपेन सङ्गताहमप्यात्मनोऽनुरूपं वरं लभेय" मित्याद्याकर्ण्यानुरूपवरस्य दुर्लभत्वात् ॥ धृतद्वैधीभावकातरं पूर्वोक्तहेतुना शकुन्तळायाः रूपलावण्यादेरनुरूपवरस्य दुर्लभत्वात्परिहासजल्पितं न अनुरूपवराभिलाष एव निश्चितो न वेति सन्देहोऽत्र द्वैधीभावः ॥ तथा च वक्ष्यत्युत्तरत्र—"वैखानसं किमनये" त्यादिना ॥ धृतः द्वैधीभावो येन तत्तथोक्तम् ॥ कातरं विक्लबं च ॥ पूर्वमस्यावरो निर्णीतो न वेति कातरं * द्वित्र्योश्च धमुञिति धमुञ् प्रत्ययः ॥ * तदन्तादभूततद्भावइत्यदिना च्विः * अस्य च्वावितीकारादेशः ॥ तर्जयति त्रासयति ॥ तर्जने निमित्तमात्मनो व्रीळाजनकस्य स्वस्योत्पत्तिवृत्तान्तस्य पुनः पुनरुद्घाटनं करोषि ॥ ततो राजा सर्वं क्रमेण स्वाभिप्रायमपि पृच्छेदिति तर्जयतीत्यवगन्तव्यम् ॥ सम्यगुपलक्षितं अधरस्पन्दनादितन्नियतधर्मेण साधु तर्कितम् ॥

**अळमिति** ॥ अलं प्रतिषेधे * "अलंखल्वोः प्रतिषेधयोः" विचारो मास्त्वित्यर्थः ॥ विचाराभावे हेतुमाह—अनियन्त्रणः अनियमः ॥ असङ्कुचित इति यावत् अनुयोगः प्रश्नो यस्मिन् स तथोक्तः ॥ पुनः पुनः पृच्छतीति रागद्वेषादेरसम्भवादिति भावः ॥ नाम प्रसिद्धौ ॥

क्षिप्तम् । तल्लक्षणं तु—'यथार्थानां प्रसिद्धानां क्रियते परिकीर्तनम् । परापेक्षाव्युदासार्थं तन्निदर्शनमुच्यते ॥' इति । अधोमुखी तिष्ठतीति स्वस्तुत्याकर्णनेन । तेनोत्तमत्वं ध्वनितम् । अथ च श्रृङ्गारलज्जाख्यो व्यभिचारी ध्वनितः, उभयानुभावत्वादधोमुखत्वस्य । पुनरपि प्रष्टुकाम इवार्यः । अलं विचार्य । अनियन्त्रणानुयोगोऽप्रतिबन्धप्रश्नः । 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः । तपस्विजनो नाम । 'निओओ' इति पाठे नियोग आज्ञा ।

राजा—सखीं ते ज्ञातुमिच्छामि ॥

वैखानसं किमनया व्रतमाप्रदाना-
द्व्यापाररोधि मदनस्य निषेवितव्यम् ।

---

**सखीमित्यादि ॥** सखीमित्यनेन शकुन्तळायाः भावमर्मज्ञता तवास्ति सखीत्वात् ॥ शकुन्तळाहृदि स्थितं गोपनीयमिति तव नास्ति । तस्मात्त्वां पृच्छामीति भावः ॥ ज्ञातुमिच्छामीत्यनेन स्वरूपं तु ज्ञातमेव । किंत्वेषानुरूपवराभिलाषिणी वा । काश्यपस्यानुरूपवरराजादौ वा । अननुरूपमुनिषु वा कन्याप्रदानमिति ज्ञातुमिच्छामीत्यर्थः ॥

२५ तथैवाह—**वैखानसमित्यादिना ॥** मदनस्य मन्मथस्य व्यापाररोधि मन्मथव्यापारविघातकम् ॥ यस्य कस्यचिन्मुनेर्भार्या भवति चेत्तदा जीर्णपर्णफलमूलादिपरिमिताशनवत्तया मदनाजनकत्वं । मदनव्यापारास्तु जलक्रीडापुष्पापचयसौभाग्योपवनवासवीणावादनसाकूतावलोकनादयः ॥ वैखानसं तपस्विनां दुष्करो व्रतविशेषः ॥ यदाह शुकानुशासने । व्यासः—“मूलैरेके फलैरेके पुष्पैरेके दृढव्रताः । वर्तयन्ति यथान्यायं वैखानसमताश्रिता” इति ॥ व्रतं प्रतिक्षणं सावधानेन कर्तव्यकर्मविशेषः ॥ अनया शकुन्तलया ॥ कोमलाङ्गतया तादृशव्रतानुष्ठानानर्हयेति यावत् ॥ आप्रदानात् प्रदानपर्यंतम् ॥ आविवाहादित्यर्थः ॥ निषेवितव्यं नितरामनुष्ठेयम् ॥ न्युपसर्गेण क्षणमपि विश्रमाभावस्सूच्यते किमिति प्रश्ने ॥ अनेन तापसभिन्नानुरूप वरराजादौ वा प्रदानमिति पृच्छतीत्यभिप्रायः ॥ समानजातीयरूपलावण्याद्यनुरूपराजादेर्भार्यात्वे सति प्रदानानन्तरं व्रतानुष्ठानाभावादित्यर्थः ॥ पुनरपि पक्षान्तरमाह—आहो इति ॥ मदिरेक्षणवल्लभा ; शकुन्तळेति शेषः ॥ मदिरावदीक्षणं विलोकनं यस्यास्सा तथोक्ता ॥ तेन वल्लभा दयिता ॥ प्रियेति यावत् ॥ मदिरा यथा मोहजननी तद्वदेतदपाङ्गावलोकनमपि मोहजनकमिति भावः ॥ यद्वा—मदिरेक्षणानां कामिनीजनानां वल्लभा अध्यक्षा अधिदेवतेति यावत् ॥ “वल्लभोदयितेऽध्यक्षे कुलीनाश्वेऽपी”ति

---

इति सखीं ते ज्ञातुमिच्छामि । इतीति किम् ॥

**वैखानसमिति ॥** वैखानसं व्रतं तपस्विसम्बन्धि तपोवननिवासलक्षणम् । मदनस्य व्यापारः स्वविषये प्रवृत्तिर्नानाविधालिङ्गनाद्य (द्यं) तेन (?) । तदुक्तं महिमभट्टेन—‘यतः सर्वेष्वलङ्कारेष्वयमाजीवितायते । सा च प्रतीयमानैव तद्विद्वान्स्वदतेतराम्’ इति । तथा—‘वाच्यात्प्रतीयमानोऽर्थस्तद्विद्वान्स्वदतेऽधिकम् । रूपकादितरः कप्रकारा’ (?) । न तु चरमधातुविसर्गोऽत्राभिप्रेतः । तद्रोधि व्रतं नियमादि । प्रकृष्टायोत्तमप्रकृतये राज्ञे दानं तस्मात् । प्रदानादिविशिष्टमिदं मर्यादीकृत्य निषेवणीयम् । किमिति प्रश्ने । किम् । आहो अथवा । ‘आहो उताहो किमुत विकल्पे’ इत्यमरः । मदिरे सञ्जातमदे ये ईक्षणे ते च ते च तैर्वल्लभाभिः सुन्दरीभिः । ‘आत्मसदृश—’ इति पाठ आत्मनः सदृशे ईक्षणे तैर्वल्लभाभिः प्रियाभिः । हरिणाङ्गनाभिर्मृगीभिः सहात्यन्तमाजन्मैव निवत्स्यति । अर्थात्तपोवने । अयमाशयः । यदि राज्ञे देया तदा विवाहपर्यन्तमेव तपोवने स्थितिः । तदनन्तरमविरोधी कामोपभोगः । यदि कस्मैचित्तपस्विने देया तदा मृगमिथुनवत्कामोपभोगरहिता वन एव

अत्यन्तमेव मदिरेक्षणवल्लभाऽभि-
राहो नु वत्स्यति समं हरिणाङ्गनाभिः ॥ २५

प्रियंवदा—[1]अज्ज । धम्माचळणेवि परवसो अअं जणो गुरुणो उण से अणुरूववरप्पदाणे संकप्पो ॥

1. आर्य, धर्माचरणेऽपि परवशोऽयं जनः । गुरोः पुनरेतस्या अनुरूपवरप्रदाने सङ्कल्पः ॥

विश्वः ॥ यद्वा—मदिराशब्देन मनोहारिता गुणवृत्त्या लक्ष्यते ॥ तादृगीक्षणं यस्यास्सा तथोक्ता ॥ तेन हेतुना । वल्लभा स्पृहणीया शकुन्तला आभिः परिदृश्यमानाभिर्हरिणीभिस्समं अत्यन्तमेव यावजीवमेव वत्स्यति वासं करिष्यति । नु पृच्छायाम् ॥ हरिणाङ्गनाभिरित्यनेन ताभिस्सहावस्थाने स्त्रीसजातीयत्वं । दृष्टिचाञ्चल्यादिसाधर्म्यं च । हेतुरिति व्यज्यते ॥ अनेन तापस एव वरः किमिति पृच्छतीत्यभिप्रायः ॥ तापसस्य भार्यात्वे यावजीवारण्यवासस्य युक्तत्वात् ॥ हरिणाङ्गनाभिस्सममित्यनेन स्त्रीत्वमात्रसजातीयतिर्यक्स्त्रीभिस्सममरण्ये यावज्जीवं वस्तव्यं वा ॥ अथवा स्वसमानमनुष्यस्त्रीभिस्सममन्तःपुरे यावजीवं स्थातव्यमनयेत्यपि व्यतिरेकेण व्यज्यते ॥ अत्र राज्ञा शकुन्तलाया वरजिज्ञासाकथनद्वारा मदिरेक्षण वल्लभेत्यनेन स्वानुरागप्रकाशनं कृतमिति व्यज्यते ॥

अत्र पूर्वोत्तरार्धयोरसम्याकृतार्थमेव हृदि निधायोत्तरमाह—अज्जेति ॥ परवशः पराधीनः । काश्यपाधीन इति यावत् ॥ न तु स्वातन्त्र्येण व्रतानुष्ठानतत्परतया तापसभार्याभूत्वारण्य एव स्थातव्यमिति व्रतमनुतिष्ठतीत्यर्थः ॥ तर्हि । यद्यस्याधर्माचरणे वाञ्छा नास्ति तर्हि । यस्य कस्यचित्कलत्रं भवत्वित्याशङ्क्याह—धर्माचरणेऽपीति । अपिशब्देन तापसाय वा अनुरूपवराय वा प्रदानेऽपि काश्यपएव प्रभुरिति भावः ॥ तर्हि काश्यपस्यापि प्रदानेच्छा नास्ति किमित्यत आह—अनुरूपवरप्रदाने सङ्कल्पइति ॥ यद्वा—शकुन्तलायाः परवशत्वकथनेन स्वानुरूपवराभिलाषः कुत्रोपयुज्यत इत्यत आह—गुरोरित्यादि ॥ गुरोः काश्यपस्य पुनस्सन्ततमित्यर्थः ॥ "गुरुर्गीष्पतिपित्राद्यो" रिति वैजयन्ती ॥ अनुरूपस्य शकुन्तलायाः रूपलावण्यादिना सदृशवरस्य ॥ तदुक्तम्—"कन्या वरयते रूपं माता वित्तं पिता श्रुतं । बान्धवाः कुलमिच्छन्ति पक्कान्नमितरे जनाः" इति ॥ तस्मै प्रदाने । "वरो जामातृषिद्वयोः" श्रेष्ठेऽन्यव "दिति विश्वः ॥ सङ्कल्पः इदमहं कुर्यामिति मनसो व्यापारः *भावे

स्थास्यतीति । अस्यैवोत्तरमनुरूपवरप्रदान इत्यादि ॥ अत्र सहोक्तिः । औपम्यं गम्यम् । निवासः सामान्यधर्मः । समशब्दस्य तुल्यवाचित्व उपमैव । 'समं सहार्थे तुल्ये च' इत्यजयः । अनयोः पूर्वोक्तैव सहृदयहृदयहारिणी । स्नेहानलङ्कारेषु नोपमेति । वृत्त्यनुप्रासश्च । वसन्ततिलका वृत्तम् । आर्य, धर्मचरणेऽपि परवशोऽयं जनः । एतदाश्रमवासित्वेन सामान्यतः प्राप्तं यद्धर्मचरणं तत्रापि पराधीन इति यावत् । अनेन पूर्वपद्ये यत्कर्तृत्वेनोपात्तं तस्योत्तरम् । तेनास्याः कर्तृत्वं कुत्रापि नास्तीति भावः । इतःपरं किं परवशेत्येकः प्रश्नः । यत्परवशास्तस्यापि कोऽभिप्राय इति द्वितीयः । तत्राह—गुरोः पुनस्तस्या अनुरूपवरप्रदाने सङ्कल्पः । अनेनोत्तरालङ्कारः । 'उत्तरेण प्रश्नोन्नयन उत्तरम्' इति तल्लक्षणात् । 'राजा—वयमपि' इत्यादि नैतदन्तं युक्तिर्नामाङ्गमुपक्षिप्तम् । 'सम्प्रधारणमर्थानां युक्तिरित्यभिधीयते' इति ।

राजा—दुरवापेयं खलु प्रार्थना ॥ (आत्मगतम्)

भव हृदय! साभिलाषं सम्प्रति सन्देहनिर्णयो जातः ।
आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम् ॥ २६

शकुन्तला—(सरोषमिव) [1]अणसूए गमिस्सं दाव अहम् ॥

---

1. अनसूये गमिष्यामि तावदहम् ॥

---

घञ् ॥ तर्हि । अनुरूपवराय वा किमर्थमियं शकुन्तला न दत्ता? इति चेदेतावत्पर्यन्तमनुरूपवरासन्निधानमेव प्रदानाभावे हेतुरिति भावः ॥

**दुरवापेयमित्यादि ॥** इयं प्रार्थना काश्यपस्यानुरूपवरप्रदानवाञ्छा दुरवापा दुष्प्रापा ॥ शकुन्तलारूपलावण्यादिसदृशवरस्य दुर्लभत्वाद्दुरवापेत्युक्तम् ॥

**२६ भव हृदयेत्यादि ॥** सर्वैकरणेषु हृदयस्य प्रधानत्वात्तत्सहकारित्वं विना निखिलेन्द्रियाणां प्रवृत्तेरसम्भवात्तत्सम्बोधनं करोति—हृदयेति ॥ अनेन सम्बोधनेन सपरितोषं हृदयामन्त्रणं व्यज्यते ॥ हे हृदयागच्छेति भावः ॥ सम्प्रतीदानीं प्रथमं शकुन्तलायास्सवर्णत्वं ततो तापसवरायाप्रदानम् ॥ पुनः काश्यपस्यानुरूपवरप्रदानमेवाभिलषितमिति सखीद्वारा श्रुते सति साम्प्रतमित्यर्थः ॥ साभिलाषं सस्पृहं । भव स्वस्यानुरूपवरत्वाद्राजर्षिकन्यकाया राजर्षिवरगामितायाः युक्तत्वात्तत्रापि सन्निहितस्य परित्यागे कारणाभावाच्च साभिलाषं भवेति विधौ लोट् ॥ तत्र हेतुमाह—सन्देहनिर्णयो जात इति सन्देहविषयस्य निर्णयो जात इत्यर्थः ॥ तापसाय वाऽनुरूपाय राज्ञे वा । प्रदानमिति सन्देहः ॥ तद्विषयस्य निर्णयो जात इत्यर्थः ॥ यद्वस्तु अग्निमाशङ्कसे कान्तिसाधर्म्यात् ॥ रत्नस्य स्फुलिङ्गस्य च ॥ यतः प्रभासाम्यमस्ति तदिदं वस्तु स्पर्शक्षमं स्पर्शार्हं रत्नं जातं । "रत्नं श्रेष्ठे मणाविति" विश्वः ॥ स्पर्शार्हत्वेन शकुन्तलायास्समानजातितोक्ता अधिकजातित्वेऽपि स्त्रियः प्रातिलोम्यात् रत्नशब्देन रूपलावण्याद्यतिशययोगिता कथ्यते ॥ अत्र शकुन्तलाया राजर्षिकन्यकात्वेन दुष्यन्तस्य स्वाभिलाषविषययोग्यतानिश्चयस्योक्तत्वाद्युक्तिर्नाम मुखसन्ध्यङ्गमुक्तं यदाह— "अर्थानां निश्चयो युक्ति" रिति ॥

**सरोषमिति ॥** मम हृदिस्थरहस्यमनया व्यक्तीक्रियत इति रोषहेतुः ॥ वस्तुतस्तु स्वानुरागदशामनोरथोऽनयाऽवसरे प्रकटित इति सानन्दमेवेत्यर्थः ॥

---

दुरवापेति । एतत्सदृशान्यस्याभावादिति भावः ॥

**भवेति ॥** हे हृदय, साभिलाषं भव । अनेन राजगतस्वभावस्य स्थैर्यं द्योत्यते । तत्र हेतुमाह—सम्प्रतीति । मुनिकन्या क्षत्रियकन्या वेति सन्देहे निर्णय एकतरनिश्चयो जातः । तेनात्र काव्यलिङ्गम् । निर्णयमेव विवृणोति—आशङ्कस इति । यत्त्वमग्निमाशङ्कसे मन्यसे । अस्प्रष्टव्यत्वं सामान्यधर्मो गम्यः । व्यस्तरूपकम् । तत्स्पर्शक्षमं रत्नमिति व्यतिरेकरूपम् । अथ च स्पर्शक्षममुपभोग्यं रत्नम् । कन्यारत्नमित्यर्थः । 'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते' इत्युक्तेः । वृत्त्यनुप्रासश्च । नायकौत्सुक्यं ध्वनितम् । अनेन समाधाननामकमङ्गमुपक्षिप्तम् ॥ तल्लक्षणं तु—'बीजार्थस्योपगमनं तत्समाधानमुच्यते' इति । अनसूये, गमि-

**अनसूया**—[1]किं णिमित्तम् ?

**शकुन्तला**—[2]इमं असंबद्धप्पलाविणिं पिअंवदं अज्जाए गोदमीए णिवे(दयिस्सम् )देदुम् ॥

**अनसूया**—[3]सहि । ण जुत्तं अकिदसक्कारमदिहिविसेसं उज्झिअ अस्समवासिणो जणस्स सच्छंददो गमणं ॥

**शकुन्तला**—(न किंचिदुक्त्वा प्रस्थिता)

**राजा**—आः ! कथं गच्छति ? (गृहीतुमिच्छन् निगृह्यात्मानं) अहो ! चेष्टाप्रतिरूपिका कामिजनमनोवृत्तिः ॥

---

1. किं निमित्तम् ?
2. इमामसम्बद्धप्रलापिनीमार्यायै गौतम्यै निवेदयितुम् ॥
3. सखि, न युक्तं अकृतसत्कारमतिथिविशेषमुज्झित्वाश्रमवासिनो जनस्य, स्वच्छन्दतो गमनम् ॥

---

**इमामिति** ॥ गौतमी काश्यपस्य भगिनी ॥ तस्यै निवेदयितुमित्यर्थः ॥

**सहीति** ॥ अतिथिविशेषमित्यनेनासौ राजेति सूच्यते ॥ आश्रमवासिनो जनस्येत्यनेनानुरूपवरो राजा दैवादागतः ॥ असावपि गमिष्यति चेदस्मिन्नाश्रमेऽन्यः को वाऽगमिष्यति किमर्थमेनमुदास्य गच्छसीति भावः ॥ अनेन सख्या शकुन्तलायामपराधारोपस्सूच्यते ॥

**आः कथमित्यादि** ॥ कथं वितर्के ॥ एतावत्पर्यन्तमनुरागव्यञ्जकसाकूतावलोकनमुखरागादिकं मिथ्या सत्यं वा । इति वितर्कः ॥ यद्यनुरागस्स्यात्तर्हि । कथं वा गच्छति ? इत्यतिप्रायः ॥ आत्मानं चित्तम् ॥ निगृह्य निरुध्य ॥ अहो इत्याश्चर्ये ॥ चेष्टाप्रतिरूपिका चेष्टाया आङ्गिकक्रियायाः प्रतिरूपिका समानरूपा ॥ दुर्लभप्रत्यवायस्थलेऽपि सदृशाङ्गीति यावत् ॥ कामिनां न तु विरक्तानाम् ॥ मनोवृत्तिः मनोव्यापारः ॥ कामिनामित्यनेन दुर्लभवस्तुसम्भाव्यमान विकाराकुलितत्वं चित्तस्य ध्वनितम् ॥ सतां तु यत्र चित्तं शुद्धभावेन स्वारसिकतया प्रवर्तते । तत्रैवाङ्गिकप्रवृत्तिरपि ॥ कामिनां तु तद्विलक्षणमिति भावः ॥

---

ष्यास्यहम् । किंनिमित्तम् । इमामसम्बद्धप्रलापिनीं प्रियंवदामार्यायै गौतम्यै निवेदयिष्यामि । सखि, न युक्तमकृतसत्कारमतिथिविशेषमिति साभिप्रायम् । विसृज्य स्वच्छन्दतो गमनम् । अनेनोपदेश इति नाट्यालङ्कार उपक्षिप्तः—तल्लक्षणं 'शिक्षा स्यादुपदेशनम्' इति । अहो इत्याश्चर्ये । चेष्टाप्रतिरूपिका चेष्टासदृशी यादृशी शरीरचेष्टायां तादृशी तां विनापीति । अत एवाश्चर्यम् ।

अहं हि—

अनुयास्यन्मुनितनयां सहसा विनयेन वारितप्रसरः ।
स्थानादनुच्चलन्नपि गत्वेव पुनः प्रतिनिवृत्तः ॥ २७

प्रियंवदा—(शकुन्त(लां निरूप्य)लामुपरुध्य [1]हळा ! ण दे जुत्तं गन्तुम् ॥

शकुन्तला—(सभ्रूभङ्गम्) [2]किं णिमित्तम् ?

प्रियंवदा—[3]रुक्ख सेअणाइ दुवे मे धारेसि ॥ ता एहि दाव अत्ताणं

---

1. सखि ! न ते युक्तं गन्तुम् ॥
2. किं निमित्तम् ?
3. वृक्षसेचने द्वे मे धारयसि । तस्मादेहि तावदात्मानं मोचयित्वा ततो गमिष्यसि ॥

---

तदेवाह—अहं हीति ॥ अहमित्यनेनानुभवविषयता कथ्यते ॥ यद्वा—उचितानुचितप्रवृत्तिनिवृत्तिज्ञानवानपीत्यर्थः ॥ हि यस्माद्धेतोः ॥

२७ **अनुयास्यन्निति** ॥ मुनितनयामृषिपरिपोषिताम् ॥ मुन्यधीनामितियावत् ॥ अनुयास्यन् तत्सौन्दर्यबलादवशस्सन्मन्मथकातर्येण बलाद्गृहीतुमनुगमिष्यन् । बलादाहरणे सर्वानर्थकारी काश्यपमुनिशापो भवेदिति भावः ॥ सहसा हठात् ॥ तस्मिन् क्षण एवेति यावत् ॥ विनयेन सौशील्यादिगुणेन ॥ वारितप्रसरः निरुद्धत्वरितगमनः ॥ यदि मम विनयादिगुणा न सन्ति शकुन्तलाया अपि काश्यपाधीनत्वाभावे तदा तस्या बलादाहरणं घटत इति भावः ॥ अत एवोक्तं मुनितनयामिति ॥ इतरवैलक्षण्येनाश्चर्ये निमित्तमाह—स्थानात्स्वस्थितिस्थलात् ॥ अनुच्चलन्नपि पूर्वोक्तहेतुना न गच्छन्नपि ॥ गत्वा प्रतिनिवृत्त इव ॥ तस्मात्कामिमनोवृत्तिश्चेष्टाप्रतिरूपिकेति सम्बन्धः ॥ कामिनां चित्तं तु दुर्लभस्थलेऽपि प्रवर्तत इति भावः ॥ तदुक्तं साहित्यमीमांसायां—"सप्रत्यवायदुर्लभनिषेधविषयश्च यो विषयः । कामस्स्वभाववामः प्रसरति तत्रैव दुर्वारः" इति ॥

---

तदेवाह—**अनुयास्यन्निति** ॥ मुनितनयां शकुन्तलाम् । सम्बन्धमात्रविवक्षया समासः कृतः । यथारिस्त्रीणामित्यत्र । एनामिति वक्तव्य एतदुक्तिर्मुग्धत्वद्योतनाय । सहसाविचारितमनुयास्यन्ननुगमिष्यन् । 'लृटः सद्वा' इति शतृ । अहं विनयेन जितेन्द्रियतया वारितः प्रसरो वेगो यस्य सः । 'प्रसरः प्रणये वेगे' इति विश्वः । 'इन्द्रियाणां जयं प्राह विनयं भरतो मुनिः' इत्युक्तेः । अत्रानुगमनकरणे वेगस्यैव निराकरणात्तात्त्विकानुरागनिषेधाभावाद्रतेः स्थायित्वं ध्वनितम् । तेन प्रसरपदस्यावकरत्वं न शङ्कनीयम् । अन्यथानुयास्यन्नेव निवारितः । अन्यत्र सुतरां वारित इत्यर्थः स्यात् । स्थानादुपवेशनादनुच्चलन्नचञ्चलोऽपि । उत्थानं तु दूरापास्तमित्यपिशब्दार्थः । गत्वा प्रतिनिवृत्तः पर्यावर्त इवेत्युत्प्रेक्षा । अनुच्चलन्गत इति विरोधाभासः । काव्यलिङ्गमनुप्रासश्च । अनेन परिभावनेत्यङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'कुतूहलोत्तरावेशो विज्ञेया परिभावना' इति । न ते युक्तं गन्तुम् । किंनिमित्तम् । वृक्षसेचने द्वे धारयसि मे । एहि तावत् । आत्मानं मोचयित्वा ततो गमिष्यसि ॥

मोइअ तदो गमिस्ससि ॥ (इति बलादेनां निवर्तयति)

राजा—भद्रे! वृक्षसेचनादेव परिश्रान्तामत्रभवतीं लक्षये ॥ तथाहि अस्याः—

स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा-
दद्यापि स्तनवेपथुं(जनयति) न जहति श्वा(सः)साः प्रमाणाधि(कः)काः ।

---

इतीति ॥ वृक्षसेचनकथनव्याजेनेत्यर्थः ॥ बलात् बलात्कारेण ॥ निवर्तने वृक्षसेचनद्वयऋणं व्याजमिति बोद्धव्यम् ॥ भद्र इत्यादि ॥ भद्रे सखीत्वात्कारुणिके ॥ लक्षये तत्कारणभूतचिह्नैस्तर्कयामि ॥ अस्याः परिदृश्यमानायाः ॥

२८ स्रस्तेति ॥ स्रस्तांसौ श्लथस्कन्धौ ॥ "उन्नतांसः पुमान् श्रेष्ठः सन्नतांसा तु सुन्दरी" इत्युक्तत्वात् ॥ भुजौ पूर्वमेव नतौ । इदानीमतिशयेन स्रस्ताविन्यर्थः ॥ अतिमात्रलोहिततलौ अतिमात्रं प्रमाणाधिकं लोहितं जपाकुसुमाभम् ॥ यदाहभागुरिः— "बन्धुजीवजपासन्ध्याभो लोहितरक्तयोः । प्रयोगः परिकीर्तितः" इति ॥ अतिमात्रलोहितं तलं ययोस्तौ तथोक्तौ अत्र हेतुमाह—घटोत्क्षेपणादिति ॥ करतलं तु पूर्वमेवरागयुक्तं । इदानीं कलशोन्नयनादतिशयितरागमिति भावः ॥ अद्यापि वृक्षसेचने निवृत्तेऽपि ॥

---

स्रस्तांसाविति ॥ स्रस्तौ पतितावंसौ ययोस्तौ । स्वभावतस्तु नतौ । अधुना त्वतिनतावित्यर्थः । 'स्रंसु ध्वंसु अधः पतने' घटोत्क्षेपणादिति हेतुः सर्वत्र योज्यः' स्वभावत एव लोहितौ । अधुनातिमात्रमत्यर्थं लोहिततलौ रक्तकरतलौ । तलशब्द एकदेशेन 'भीमो भीमसेनः' इतिवत्करतलमाह बाहुसांनिध्यात् । इदं विशेषणद्वयमविधेयम् ॥ बाहू इति द्विवचनम् । पर्यायेण व्याप्रियमाणत्वात् । तेन न पूर्वापरविरोधः । अद्यापीति च त्रिषु स्थानेष्वन्वेति । अद्यापि स्रस्तांसौ, अद्याप्यतिमात्रलोहिततलौ अद्यापि प्रमाणाधिक इति । तेनातिशयमृदुता ध्वन्यते । प्रमाणाधिको द्वादशाङ्गुलाधिकः । उक्तं च—'देहं व्याप्य स्वनाडीभिः प्रमाणं कुरुते बहिः । द्वादशाङ्गुलमानेन तस्मात्प्राणः समीरितः' इति । श्वासो निःश्वासवायुः अतएव स्तनयोर्वेपथुं कम्पं जनयति । 'अथ वेपथुः कम्पः' इत्यमरः । यद्यपि सर्वाङ्गस्य स्वेदयुक्तत्वं तथापि तस्य संवृतत्वान्मुख (खे) पूर्वमुत्पत्तेर्मुखमर्धशरीरं तस्य । 'सर्वं वा मुखमुच्यते' इत्युक्तेश्च वदन इत्युक्तिः । तेन कपोलयोरलिके चिबुक इत्यर्थः । घर्माम्भसां स्वेदोदकानाम् । 'घर्मः स्यादातपे ग्रीष्मे उष्णस्वेदाम्भसोरपि' इति विश्वः । यज्जालकमशोकादिनवकलिकावृन्दाकारं बिन्दुकदम्बकं लक्षणयोच्यते—'क्षारको जालकं क्लीबे' इत्यमरव्याख्याने क्षीरस्वामी । जालमिव जालकम् । उद्भिन्नमात्रकलिकावृन्दमिति व्याख्यानात् । तेनाशोकादिनवकलिकावृन्दं वाच्यम् । सामान्यस्य विशेषनिष्ठत्वात् । नहि निर्विशेषं सामान्यमस्ति । तेनाकारसामान्याद्बिन्दुवृन्दं लक्ष्यते सातिशयोद्दीपकत्वं व्यङ्ग्यम् । यदि समूहमात्रं व्यङ्ग्यं स्यात्तदा 'घर्माम्भसां मण्डलम्' इत्येव ब्रूयात् । तत्स्रस्तं गलितम् । श्रमातिशयादिति भावः । ननु मुख्यार्थबाधे लक्षणा । न चात्र तद्बाधः । तेन तद्बीजाभावान्न सेति चेत् । तात्पर्यानुपपत्तेरपि लक्षणाया बीजस्योरीकृतत्वात्तामेवानु-

**बद्धं(स्रस्तं) कर्णशिरीषरोधि वदने घर्माम्भसां जालकं**
**बंधे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्धजाः ॥** २८

तदहमेनामनृणां करिष्यामि ॥ (इत्यंगुळीयकं दातुमिच्छति) ॥

(सख्यौ नाममुद्राक्षराण्यनुवाच्य परस्परमवलोकयतः)

---

प्रमाणाधिकः मात्रातिलङ्घी । बन्धे केशपाशे स्रंसिनि शिथिले सति । एकहस्तयमिताः एकेन हस्तेन बद्धाः ॥ अन्यहस्तस्य घटावलम्बनत्वादित्यर्थः ॥ इह खलु राज्ञा वृक्षसेचनकरणजनितपरिश्रमकथनव्याजेन स्वाभिलाषपरिकल्पितानि रतिविशेषजनितव्यञ्जकानि विशेषणान्युपात्तानि ॥ तथा हि ॥ अंसे स्रंसनं । करतलातिलोहितत्वं । स्तनवेपथुमत्त्वं । निरवधिकप्रवर्तमानश्वासत्वं । केशपर्याकुलत्वं च । इत्यादीनां रतिविशेषकरणानन्तरभावित्वात्तेषां व्यञ्जकत्वे सहृदयहृदयमेव प्रमाणम् ॥

**तदहमित्यादि ॥** अनृणां वृक्षसेचनद्वयरूपऋणरहिताम् ॥ नाममुद्रा नामधेयस्य चिह्नम् ॥ "मुद्रा मुकुळने बद्धे लिङ्गे चिह्नेऽङ्गुलीयके" इत्यजयः ॥ अक्षराणि दुष्यन्तनामधेयेन रत्नखचितवर्णान् ॥ परस्परमवलोकयतः ॥ असौ राजेति मत्वा अन्योन्यं संवदेते ॥

---

वाद्यविशेषणद्वारा व्यनक्ति—कर्णेति । कर्णेऽवतंसीकृतं शिरीषपुष्पं कर्णशिरीषम् । मध्यमपदलोपी समासः । तद्रोद्धुं शीलं यस्य तत् । कर्णशरीषस्य रोधो विद्यते यस्मादिति बहुव्रीहौ मत्वर्थीयस्य व्यर्थता स्यात् । बिन्दुस्तबकत्वेन विधानाद्रोधस्यासां वर्षिता सा दर्शिता(?) । अन्यस्योक्तानुक्तयोरर्थं प्रति विशेषाभावादपुष्टार्थैव पर्यवस्येत् । बन्धे केशबन्धे स्रंसिनि स्खलति सति मूर्धजाः केशा एकेन हस्तेन यमिता बन्धनं नीताः अतएव पर्याकुलाश्चञ्चलाश्च । पूर्ववाक्यसमुच्चये स्वभावोक्तिः । सर्वत्र घटोत्क्षेपणादिति हेतोरुक्तेरादिकारकदीपकालङ्कारः । अतएव नावृत्तिनिबन्धनापेक्षा । तदलङ्कारान्तरगतत्वात्तस्याः । तदुक्तम्—'सैव क्रियासु बह्वीषु कारकस्येति दीपकम् । सैवावृत्तिः' इति । 'अर्थावृत्तिः पदावृत्तिरुभयावृत्तिरित्यमी' इत्युक्तेः । स्रस्तं स्रंसिनीत्युभयावृत्तिरलंकारः काव्यलिङ्गं च । स्तनवेपथुजननेन हेतुना श्वासस्य प्रमाणाधिकत्वं साध्यमित्यनुमानालङ्कारश्च अनुप्रासः । वाक्यचतुष्टये च प्रत्येकं विशेषणद्वयोपादानान्न तत्प्रक्रमभङ्गः । अतएव प्रथमवाक्योपनिबद्धमद्यापीति पदं द्वितीयवाक्ये सम्बन्धादप्यावृत्तिनिबन्धनानपेक्षत्वेन देहलीप्रदीपन्यायेनोभयत्रान्वेतुं विशेषणप्रक्रमभङ्गनिवृत्तये च द्वितीयवाक्य उपनिबद्धमित्यवधेयम् । अद्यापि सेचनक्रियारम्भः । सम्प्रत्यनुवर्तमान इत्यर्थः । 'अद्यात्वाह्नि' इत्यमरव्याख्याने क्षीरस्वामी वर्तमानतामात्रेऽप्याहुरित्यवोचत् । यदि श्वाससामानाधिकरण्याभावाद्विशेषणत्वाभाव इत्यसन्तोषस्तर्हि 'अद्यापि स्तनवेपथोश्च जनकश्वासः प्रमाणाधिकः' इति पाठं पठित्वा सन्तोष्टव्यम् । अस्मिन्पाठे पदकदम्बकात्मकानि चत्वार्यपि वाक्यानीति न ततः प्रक्रमभङ्गः । चकारः पूर्वसमुच्चये । अथाद्य वाक्ये विशेषणद्वयमपि विधेयम् । द्वितीये द्वयमप्यनुवाद्यमितरयोरेकं विधेयमेकमनुवाद्यमित्येव क्रम इति न तत्प्रक्रमभङ्गोऽपि । पूर्वमंसौ नतौ न, बाहू रक्ततलौ न । अधुना बाहू अनूद्य स्रस्तांसत्वादेः 'सोमेन यजेत' इतिवद्विशिष्टस्य विधानात् नाविमृष्टविधेयांशता । नाप्यनुवाद्यविधेयव्यत्ययः शङ्कनीयः । यतस्तस्यामत्यन्तानुरक्तस्य राज्ञस्तत्सुकुमारतरत्व-

**राजा**—अलम(स्मान)न्यथा मां सम्भाव्य ॥ राज्ञः परिग्रहोयम् ॥

(इति राजपुरुषं मामवगच्छथ)

**प्रियंवदा**—[1]तेण हि णारुहदि एदं अंगुलीअअं अंगुलीविओअं अज्जस्स तुह वअणेण एव्व अणिरिणा णाम एसा (किंचिद्विहस्य) हळा सउन्दळे। मो इदासि अणुकम्पिणा अज्जेण अहवा महाराएण गच्छ दाणिं ॥

1 तेन हि नार्हत्येतदङ्गुलीयकमङ्गुलीवियोगमार्यस्य ॥ तव वचनेनैवानृणा नामैषा ॥ सखि शकुन्तले। मोचितास्यनुकम्पिनाऽर्येण ॥ अथवा महाराजेन ॥ गच्छेदानीम् ॥

**अलमिति** ॥ अन्यथा सम्भाव्य मां राजेति मत्वा ॥ परिगृह्यते स्वीक्रियत इति परिग्रहः ॥ इदमङ्गुलीयकं राजसम्बन्धीति मन्तव्यमिति शेषः॥ अनेन राजराजकीययोस्सामान्येन वचनेन प्रच्छादनं कृतमिति बोद्धव्यम्॥ तदहमित्यादिनैतदन्तेन दानं नाम सन्ध्यङ्गमुक्तम्॥ तदुक्तम्—"कार्यार्थं भूषणादेर्यद्दानं दानमिहोच्यत" इति ॥ अत्र राज्ञा शकुन्तलावशीकरणाय स्वाङ्गुलीयकं दत्तमिति दानं भवति ॥

**तेणेति** ॥ येन कारणेन दुष्यन्तनाममुद्राक्षराणि विद्यन्ते। तेनेत्यर्थः ॥ राज्ञः अङ्गुलीयकं राजहस्त एव स्यातुमुचितमिति भावः ॥ अनुकम्पिना मोचितासीत्यनेन व्यसनाभिभूतजनं पश्यतः उत्तमपुरुषस्य तस्मिन् दयोत्पत्तेः ॥ तेन राज्ञः आभिजात्यं सूच्यते॥ अथवा महाराजेनेत्यनेन॥ राज्ञा राजभावः प्रच्छादितोऽपि ताभ्यां ज्ञात इति द्योत्यते॥ स्वराष्ट्रे ये जना ऋणबद्धास्ते सर्वे राज्ञा स्वद्रव्यव्ययेन ऋणान्मुच्यन्ते चेद्राज्ञो महत्फलमिति स्मृतेरिति भावः॥ इदानीमित्यनेन राज्ञा वृक्षसेचनद्वयऋणात्त्वयि मोचितायां सत्यामित्यर्थः॥ गच्छ गन्तुं स्वतन्त्रा भव ॥ राज्ञा तवोपकारः कृतः खलु ॥ त्वयापि तस्य प्रत्युपकारः कर्तव्य इति भावः ॥

मालोच्याख्यामिदमत्यन्तमनुचितमिति विधेयमेव बुद्धिस्थीभूतमिति तदेव वाक्यचतुष्टये प्रथमतो निबद्धमित्यवहितैः सहृदयैर्भाव्यम्। यद्यपि घर्मोऽम्भोरूप एव। तथापि पूर्वं कर्णावतंसरोधित्वेन बिन्दुस्तबकरूपता परस्तात्स्रंसनं चाम्भःपदोपादानव्यतिरेकेण न स्फुरतीति तदुपादानम्। शार्दूलविक्रीडितं वृत्तम्। अनेन दृष्टमिति भूषणमुपक्षिप्तम्। तल्लक्षणं तु—'यथादेशं यथाकालं यथारूपं च वर्ण्यते। यत्प्रत्यक्षं परोक्षं वा तद्दृष्टं दृष्टवद्भवेत्' इति। 'प्रियंवदा—शकुन्तलां निरूप्य' इत्यादिना 'इच्छती'त्यन्तेन करणं नामाङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'प्रकृतार्थस्य चारम्भः करणं नाम तद्भवेत्' इति। अलङ्कारार्थं तु मुद्रिका नामाक्षरयुक्ता तु मुद्रेत्यनयोर्भेदः। नामस्वरूपाणि दुष्यन्तेति नामस्वरूपाणि यानि मुद्राक्षराणीति समासः। नाममुद्राया अक्षराणीति विग्रह आर्थं पौनरुक्त्यम्। मुद्रेत्येतावतैव गतार्थत्वात्। अन्यथेत्यराजत्वेन। राज्ञः परिग्रहः परिजनो मूलं चायं मल्लक्षण इति हेतोः राज्ञः पुरुषो राजा चासौ पुरुषश्च तम्। 'परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः' इति विश्वः। तेन हि नार्हत्येतदङ्गुलीयकमङ्गुलीवियोगम्। आर्यस्य वचनेनानृणेदानीमेषा। मोचितास्यनुकम्पिनार्येण, अथवा महाराजेन। गच्छेदानीम्। यद्यात्मनः प्रभविष्यामि। अनेनोद्भेदनामक-

**शकुन्तला**—(आत्मगतम्) [1]जइ अत्तणो पहविस्सं (प्रकाशं) का तुमं विसज्जिदव्वस्सवा रु(न्धि)द्धिदव्वस्स वा ?

**राजा**—(शकुन्तलां विलोकयन् । आत्मगतं) किं नु खलु यथा वयमस्यामेवमियमप्यस्मान् प्रति स्यात् ? अथवा लब्धावकाशा मे प्रार्थना ॥ कुतः ?

**वाचं न मिश्रयति यद्यपि मे वचोभिः**
**कर्णं ददात्यभिमुखं मयि भाषमाणे ।**

---

1 यद्यात्मनः प्रभविष्यामि ॥ का त्वं विसर्जितव्यस्य वा रोद्धव्यस्य वा ?

---

एतदभिप्रायं मनसि निधायाह—**जइ इत्यादि** ॥ आत्मनस्स्वस्य प्रभविष्यामि यदि स्वतन्त्रा भविष्यामि चेत् प्रत्युपकारं कर्तुं शक्यमिति भावः ॥ किन्तु काश्यपाधीनेत्यर्थः ॥ विसर्जितव्यस्य विसर्जनस्य ॥ रोद्धव्यस्यावरोधस्य ॥ वाशब्दस्समुच्चये ॥ "वाव्ययं स्यात्समुच्चये । उपमायां विकल्पे च निश्चये च निगद्यते" इत्येकाक्षररत्नमाला विसर्जनावरोधयोस्त्वं केत्याक्षेपे ॥ किन्तु महाराजेन खलु वृक्षसेचनद्वयरूपऋणं निष्कासितं स एव ममावस्थानप्रेषणयोः प्रभुरिति भावः ॥

**शकुन्तलां विलोकयन्निति** ॥ तस्या बहुविधाश्चेष्टाः विशिष्य पश्यन्निति यावत् ॥ चेष्टानामेवाभिप्रायव्यञ्जकत्वात् ॥ किं नु खल्वित्यादिना मद्दर्शनजनितमन्मथविकारप्रभवास्सात्त्विकभावादयस्तावदस्वाभाविका वञ्चका अवञ्चकाश्चेति शकुन्तलानुरागं सन्दिह्य । ततः अथवेत्यादिना निश्चायकचिह्नैर्निश्चिनोति ॥

२९ तदेव निश्चायकमाह—**वाचमित्यादि** ॥ अभिमुखे सम्मुखे भाषमाणे मयि । मे वचोभिस्स्वकीयां वाचं यद्यपि न मिश्रयति । तथापि मद्वचने कर्णं ददाति ॥ अनेन नायिकानायकयोरनुरागव्यञ्जकस्य परस्परवाङ्मिश्रणस्य लज्जावशादभावेऽपि मद्वचनश्रवणतात्पर्यात्तस्याः कर्णौ मद्वचनैकविषयाविति द्योत्यते ॥ कामं यद्यपि मदाननसम्मुखी न । कादाचित्कावस्थानमस्तीत्यर्थः ॥ तथा चास्या दृष्टिस्तु भूयिष्ठमन्यविषया न ॥ यदा परस्परदृष्टिसन्धानं तदा लज्जया नावलोकनं किन्तु व्याजेन निवर्तत इत्यर्थः ॥ अनेनानुरागव्यञ्जकपरस्परसाम्मुख्यावलोकनाभावेऽप्यस्या दृष्टिस्तु मदेकविषयेति व्यज्यते ॥

---

मङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'बीजार्थस्य प्ररोहो यः स उद्भेद इति स्मृतः' इति । दशरूपके तु—'उद्भेदो गूढभेदनम्' इति । राजभावस्य गूढस्योद्भेदनात् । का त्वं विसर्जितव्यस्य रोद्धव्यस्य वा ॥

**वाचमिति** ॥ यद्यपीयं मम वचोभिर्वाचं न मिश्रयति । मया सह न वक्तीत्यर्थः । इयमुक्तिर्ग्राम्यत्वादुपेक्षिता । अथ च वाचं वचोभिरिति स्त्रीनपुंसकलिङ्गनिर्देशेन स्वीयां सखीमपि तन्मित्रेण मेलयतीति ध्वनिः । तथापि मयि भाषमाणेऽभिमुखं कर्णं ददाति । मदुक्तं सादरं शृणोतीत्यर्थः । यद्यपि काममत्यर्थं मदाननसंमुखीना सन्मुखाभिमुखी न

कामं न तिष्ठति मदाननसंमुखी(ना) सा
भूयिष्ठमन्यविषया न तु दृष्टिरस्याः ॥ २९

(नेपथ्ये)

भो भो तपस्विनः सन्निहितास्तपोवनसत्त्वरक्षायै (भवत)भवतां प्रत्यासन्नः किल मृगयाविहारी पार्थिवो दुष्यन्तः ॥

---

अत्रैवमभिप्रायः परबुद्धेरप्रत्यक्षत्वात्तच्चेष्टाभिरेवानुरागस्य ज्ञेयतया चात्र नायिकानायकयोरनुरागद्योतकं प्रायेण वाङ्मिश्रणं लज्जया यद्यपि न कृतं। तथापि नायकसम्भाषणसमये सादरश्रवणं तदनुरागव्यञ्जकम् ॥ तथाच कन्यकात्वेन धाष्ट्यभावान्नायकसम्मुखावस्थानं यद्यपि न भवति तथापि दृष्टिस्सर्वथा तद्विषयैव ॥ समीपस्थितानामनुरागव्यक्तिर्भविष्यतीति भिया मध्ये मध्येऽन्यं विलोकयति ॥ तात्पर्यं तु नायकविलोकन एव ॥ तदुक्तं न भूयिष्ठमित्यभिप्रायः ॥ अत्र दुष्यन्तेन शकुन्तलाचेष्टाभिर्गूढानुरागस्योद्भेदितत्वादुद्भेदो नाम मुखसन्ध्यङ्गमुक्तम् ॥ तदुक्तम्—"उद्भेदो गूढभेदन" मिति ॥ अत्र श्लोके विलासो नाम गात्रारम्भ उक्तः ॥ तदुक्तम्—"प्रेम्णा कान्तस्य सविधे नेत्रभ्रूवक्त्रकर्मणां। विशेषो यस्स कथितो विलासः पूर्वसूरिभि" रिति ॥ अत्र वाचं न मिश्रयतीत्यादिना शकुन्तलाचेष्टानां स्वसन्निधौ कृतानां राज्ञा प्रेमगर्भितानां प्रकटीकरणाद्विलासः ॥

**भो भो इति ॥** ससम्भ्रमाह्वाने द्विरुक्तिः ॥ तपस्विनः हे तापसाः। सन्निहिता मिलिताः ॥ मृगयाविहारी मृगयाविहरणशीलः ॥ अनेन शीलार्थप्रत्ययेन ग्रीष्मसमये राज्ञो मृगयाविनोदमुचितमिति द्योत्यते ॥ किलेति वार्तायाम् ॥ "वार्तासम्भाव्ययोः किल" इत्यमरः ॥

---

तिष्ठति। 'यथामुखसंमुखस्य-' इति खः। तथापि भूयिष्ठमतिशयेन। बहु यथा स्यात्तथा। बहुशब्दादतिशायने 'अजादी गुणवचनादेव' इतीष्ठनि 'बहुर्लोपो भू च बहोः' 'इष्ठस्य यिट् च' इति भ्वादेश इष्ठन आदिलोपे यिडागमरूपम्। अस्या दृष्टिरन्यविषया मदाननव्यतिरिक्तविषया न तु। नैवेत्यर्थः। चरणत्रयेऽस्मदा सौभाग्यातिशयो ध्वन्यते। छेकवृत्त्यनुप्रासौ। वसन्ततिलका वृत्तम्। अनेन मुग्धाया नायिकाया गात्रजो विलास इति भाव उक्तः। तल्लक्षणं तु नागरसर्वस्वे—'योवल्लभासन्नगतो विकारो गत्यासनस्थानविलोकनादौ। नानाविधाकूतचमत्कृतिश्च पराङ्मुखं चास्यमयं विलासः॥' इति। अनुरागेङ्गितं च। तदुक्तं मदनोदये—'विकारो नेत्रवक्त्रस्य तद्वाक्यश्रवणादरः। अन्यच्याजेन तद्वीक्षा अनुरागेङ्गितं भवेत्॥' इति। पूर्वोक्तं प्राप्तिलक्षणमङ्गमनेन चोपक्षिप्तम्। प्रकृतकथाविच्छेदार्थमन्तरसंधिमुपक्षिपति—नेपथ्य इति। दुष्यन्त इति राजनामश्रवणाच्छकुन्तलायाः प्रोत्साहनाद्भेदलक्षणमङ्गमुपक्षिप्तम्। 'भेदः प्रोत्साहना मता' इति तल्लक्षणस्य धनिकेनोक्तत्वात्। प्रत्यासन्न इति यदुक्तं तत्र हेतुं श्लोकाभ्यां दर्शयति—

तुरगखुरहतस्तथाहि रेणुर्विटपविषक्तजलार्द्रवल्कलेषु ।
पतति परिणतारुणप्रकाशः शलभसमूह इवाश्रमद्रुमेषु ॥ ३०

अपि च—

तीव्राघातप्रतिहततरुस्कन्धलग्नैकदन्तः
पादाकृष्टव्रततिवलयासङ्गसञ्जातपाशः ।

---

३० राज्ञः प्रत्यासन्नत्वे हेतुमाह—**तुरगेति** ॥ जलार्द्रवल्कलेष्वित्यनेन सायंकालस्नानेन वल्कलानामार्द्रत्वमिति ज्ञेयं ॥ परिणतारुणस्य सायन्तनसूर्यस्य प्रकाशो यस्मिन् स तथोक्तः ॥ अतएव शलभसमूह इव पतङ्गनिवह इव ॥ अनेन सायङ्कालस्समागत इति सूच्यते ॥ तेनेतः परं सम्भाषणादेरवकाशो नास्तीति सूच्यते ॥ अपि चेति । आर्द्रवल्कलेषु धूळीपतनमेका बाधा ॥ इदानीं बाधान्तरमपीति भावः ॥

३१ तदेवाह—**तीव्राघातेत्यादिना** ॥ तीव्राघातेन दृढप्रहारेण प्रतिहतः भग्नश्चासौ तरुस्कन्धश्च स तथोक्तः ॥ तेन लग्नस्संसक्तः एको दन्तो यस्य स तथोक्तः ॥ एकं तरुस्कन्धमवस्कन्द्यैकस्मिन् दन्ते निक्षिप्यागच्छतीत्यर्थः ॥ स्वभावोक्तिरलङ्कारः ॥ मूर्तः मूर्तिमान् ॥ नः अस्माकम् ॥ नेपथ्य इत्यादिनैतदन्तेन चूळिकानामार्थोपक्षेपकमुक्तम् ॥ तदुक्तं कोहळेन—"अन्तर्नैपथ्यस्थैस्सूतमागधादिभिः क्रियते । अर्थस्योपक्षेपोऽनेकविधा चूळिका चेय" मिति ॥ भरतेनाप्युक्तम्—"सा द्विधा चूळिका खण्डचूळिका चेति

---

**तुरगेति** ॥ तथा हि तुरगखुरहतो रेणुराश्रमद्रुमेषु पततीति योजना । कीदृशेषु । विटपेषु शाखासु विषक्तान्यासक्तानि जलार्द्राणि वल्कलानि येषु तेषु । आर्द्रत्वं विषक्तत्वे हेतुः । अनेन विटपेभ्यो वल्कलापसारणं क्रियतामिति ध्वन्यते । तुरगेत्यनेन सेनाया बाहुल्यं ध्वनितम् । इदं च तपोवनसत्त्वरक्षावहितत्व आर्थो हेतुः । आश्रमेत्यनेन निकटत्वं द्रुमेष्विति विशेषणोपादानार्थम् । जलग्रहणं तस्मिन्समयेऽप्यशुष्कताभिधानार्थम् । कीदृग्रेणुः । परिणतः सायङ्कालीनो योऽयमरुणः सूर्यस्तद्वत्प्रकाशः अस्फुटः तद्वद्वर्ण इत्यर्थः । 'अरुणोऽस्फुटरागे च सूर्ये सूर्यस्य सारथौ' इति धरणिः । 'प्रकाशोऽतिप्रसिद्धे स्यात्प्रहासातपयोः स्फुटे' इति विश्वः । अयमेवोपमायां सामान्यधर्मो ज्ञेयः । क इव । शलभसमूहः पतङ्गनिकर इव । अनया रेणोर्बलत्वं घनत्वं च ध्वन्यते । वृत्त्यनुप्रास उपमा च अत्र पार्थिवप्रत्यासन्नत्वे कारणे प्रस्तुते तत्कार्यं रेणूद्धूलनादिकमुक्तमित्यप्रस्तुतप्रशंसा । न पर्यायोक्तम् । कार्यस्याप्रस्तुतत्वात् । यथात्र राज्ञः प्रत्यासन्नत्वमवश्यं वक्तव्यं तद्वत्कार्यस्यावश्यकत्वाभावात् । पर्यायोक्ते तु कारणवत्कार्यमपि प्रकृतमेव । तत्र कारणापेक्षया तद्वर्णनमतिचमत्कारकृदिति स्थितमाकरे । काव्यलिङ्गं च । पुष्पिताग्रावृत्तम् ॥

**तीव्रेति** ॥ स्यन्दनस्य रथस्यावलोकनाद्भीतो गजो धर्मारण्यं प्रविशतीति सम्बन्धः । कीदृग्गजः । तीव्रो य आघातः पलायनविषये स्वाभाविकः संवेगः सङ्घट्टस्तेन प्रतिहता भग्नास्तरवो येन सः । स्कन्धे स्कन्धभागे पार्श्वावलोकनेन लग्न एको दन्तो यस्य सः । तत्र स्कन्धभागो दक्षिणः । दन्तोऽपि दक्षिण इति साम्प्रदायिकाः । उक्तं च पालकाप्ये—

मूर्तो विघ्नस्तपस इव नो भिन्नसारंगयूथो
धर्मारण्यं व्रजति(प्रविशति) च गजस्स्यंदनालोकभीतः ॥ ३१

(सर्वाः कर्णं दत्वा किंचिदिव सम्भ्रान्ताः)

राजा—(आत्मगतम्) अहो धिक् ! सैनिका(पौरा) म(अस्म)दन्वेषिण-स्तपोवनमुपरुन्धन्ति ॥ भवतु गमिष्यामि (प्रतिगमिष्यामः) तावत् ॥

---

भेदतः। पात्रैर्यवनिकांतस्स्थैः केवलं या तु निर्मिता। आदावङ्कस्य मध्ये वा चूलिका नाम सा स्मृता। प्रवेशनिर्गमाभावादियमंकाद्बहिर्गता" अङ्कादौ चूलिका यथा—अनर्घराघवे सप्तमाङ्के ॥ अङ्कमध्ये यथा रत्नावल्यां द्वितीयेऽङ्के ॥ अथ खण्डचूलिका—"रङ्गे नेपथ्यसंस्थायि पात्रसल्लापविस्तरैः। आदौ केवलमङ्कस्य कल्पिता खण्डचूलिका। प्रवेशनिर्गमप्राप्तेरियमङ्काद्बहिर्गता॥" यथा—बालरामायणे सप्तमाङ्कस्यादौ॥ प्रकृते संरोधस्य नीरसत्वादनुचितत्वाच्च सूच्यत्वमनुसन्धेयम्॥

सर्वा इत्यादि ॥ अत्र सर्वशब्देन राजा शकुन्तला सख्यौ च कथ्यन्ते॥ इवशब्दो वाक्यालङ्कारे॥ सम्भ्रान्ताः धर्माचरणविघ्नभूतसैन्यदर्शनात्करचरणादिवेपथुनयनचलनपुळकमुखवैवर्ण्यस्वरभेदादिभिर्भयं प्रकाशितवत्यइत्यर्थः। अहो आश्चर्ये ॥ सुखोपरतशकुन्तळादर्शनादिरूपभाग्यविघटने स्वस्य दौर्भाग्यं प्रत्याश्चर्यम्॥ धिङ्निन्दायां शकुन्तळासम्भाषणादिविघ्नकारणभूतसैन्यं प्रति निन्दा॥ सैनिकाः * सेनायाश्चेति ठकि सैनिकाः॥ "सेनायां समवेता ये सैन्यास्ते सैनिकाश्च त" इत्यमरः॥

---

'दक्षिणे वलितुं शक्तो गजो वामे प्रयत्नतः' इति। अन्ये त्वेकपदत्वेन व्याचक्षते—तीव्रेणाघातेनाघातोद्यमेन प्रतिहतो यस्तरुस्कन्धस्तत्र लग्न एकदन्तो यस्य। यद्वा तीव्रेणोग्रेण क्वचित्कठिने वस्तुन्याघातेन प्रतिहतस्तत उच्चलितः संस्तरुस्कन्धे लग्न एको दन्तो यस्य सः। उभयमपि नातिसमञ्जसम्। अर्थासङ्गतेः। तथाहि तरुस्कन्धे भग्नत्वं लग्नत्वं वा। आद्ये भग्नैकदन्त इत्येव पठेत्। द्वितीये प्रविशतीति क्रियया विरोधस्तेन सन्दानितत्वात्। लग्नदन्तत्वं दन्ताकार आघात इति चेन्न। प्रकृतार्थपोषाभावात्। अथ तत्त्वत एकदन्त एव गजस्तत्र तीव्रेत्यादिगम्योत्प्रेक्षा। तथापि पूर्वोक्त एव दोषः। आघातप्रतिहतपदयोरन्यतरस्यावकरत्वं दुष्परिहरणीयम्। पादाभ्यामाकृष्टं यद्वततिवलयं लताजालं तस्यासङ्गेन समन्तात्सम्बन्धेन जातः पाशो ऽस्य सः। भिन्नानि सारङ्गाणां मृगाणां यूथानि कुलानि यस्मात्सः। विशेषणचतुष्टयेन वेगातिशयो व्यज्यते। नोऽस्माकम्। तपसो मूर्तः शरीरी विघ्न इवेत्युत्प्रेक्षा। पूर्वश्लोकोक्तक्रमेणाप्रस्तुतप्रशंसा च। पूर्वार्धे वृत्त्यनुप्रासश्रुत्यनुप्रासयोरेकवाचकानुप्रवेशलक्षणः सङ्करः। उत्तरार्धे श्रुत्यनुप्रास एव। परिकरालंकारश्च। मन्दाक्रान्ता-

**अनसूया**— [1]अज्ज । इमिणा अरण्णगअउत्तंदेण पज्जावुळम्ह अणुजाणीहि णो उडअगमणाअ ॥

1 आर्य ! अनेनारण्यगजवृत्तान्तेन पर्याकुलाः स्मः ॥ अनुजानीहि न उटजगमनाय ॥

**अज्जेत्यादि** ॥ उटजगमनायेत्यत्र ङेसोऽमिति षष्ठ्यास्तादर्थ्ये ङेस्विति विकल्पविधानादपवादः ॥ अनेन प्रधानश्रृङ्गाररसस्याङ्गत्वेन भयानक उक्तः भयानकलक्षणमुच्यते— "बिभेति भाययत्यन्यान् कर्मणेति भयं विदुः । अस्मिन् दुःखं भवेद्यस्माज्जायते स भयानकः" स च—"मानसाङ्गिकभेदेन द्विधा विद्वद्भिरुच्यते ॥" अत्र तीव्राघातेत्यादिनोटजगमनायेत्यन्तेन भयानकस्स्फुटएव ॥ सर्वत्र रसानां व्यंग्यत्वं कर्तव्यम् ॥ अत्र प्रस्तुतश्रृङ्गाररसस्य सेनादर्शनाद्भयानकमुत्पाद्य रसविच्छेदः कृतः ॥ उक्तं च—"निमित्तान्तरमुत्पाद्य रसं छिन्द्यात्कविः कृतौ ॥" इति ॥ यथा विक्रमोर्वशीये प्रथमाङ्के सूर्योपस्थानसन्निवृत्तस्य शान्तस्य राज्ञः श्रृङ्गारित्वसम्पादनार्थं राक्षसापहृतोर्वशी प्रत्याहरणेन वीरो रसो वर्णितः ॥ "आश्रयैक्ये विरुद्धौ यौ तौ कार्यौ भिन्नसंश्रया" वित्युक्तत्वात् ॥ शान्तश्रृङ्गारयोस्तु नैरन्तर्येण विरोध इति रसान्तरं मध्ये कृतम् ॥ यथा वा प्रकृते षष्ठाङ्कावसाने मातलिना विदूषके गृहीते राज्ञि वीरो रसः । विदूषके भयानकश्च वर्णितः ॥ प्रधानरसस्य श्रृङ्गारस्य धाराधिरूढत्वमेकवारं द्विवारं वा कर्तव्यम् ॥ न बहुधा तदा प्रारम्भदशायामेव रसपोषो न युज्यते ॥ क्रमपरिपोषेणैव चमत्कारजननात् ॥ एवं चेद्रसपरिपोषो भवति ॥ श्रृङ्गाररसवर्णने तत्प्रतिकूलानां रसानामुपनिश्रयो न कार्यः ॥ रसव्यञ्जकविभावादीनां कष्टकल्पनया व्यक्तिर्न कार्या ॥ तदुक्तम्—"व्यभिचाररसस्थायिभावानां शब्दवाच्यता । कष्टकल्पनया व्यक्तिरनुभावविभावयोः ॥ प्रतिकूलविभागादिग्रहो दीप्तिः पुनः पुनः । अकाण्डे प्रथनच्छेदावङ्गस्याप्यतिविस्मृतिः ॥ अङ्गिनोऽननुसन्धानं प्रकृतीनां विपर्ययः । अनङ्गस्याभिधानं च रसे दोषास्स्युरीदृशाः" इति ॥ एते रसभङ्गहेतवो भवन्ति ॥ तत्र दीप्तिः पुनःपुनर्यथा—कुमारसम्भवे रतिप्रलापेषु । तत्र शिवयोस्साम्मुख्ये मन्मथ दाहे अविघटिते झटिति तत्सङ्घटनसंविधानोन्मुखानां सहृदयानां व्यवधानविधायिनी रतिविलापसर्गेनात्यन्तमनादरः ॥ अकाण्डे प्रथनं यथा । वेणीसंहारे द्वितीयेऽङ्के अनेकसंक्षये वृत्ते भानुमत्या सह दुर्योधनस्य श्रृङ्गारवर्णनम् ॥ यथा—तत्र कञ्चुकी योऽयमुद्यतेषु बलवत्सु । अथवा किं बलवत्सु वासुदेवसहायेष्वरिषु । इत्यादि ॥ आशस्त्रग्रहणादकुण्ठपरशोरित्यादिना च ॥ भानुमत्या सहेति प्रमुखसन्ध्यङ्गविशेषस्य निबन्धः कवेर्निबन्धः स चानुचितः ॥ छेदो यथा—महावीरचरिते द्वितीयेऽङ्के राघवभार्गवयोर्धाराधिरूढे वीररसे कङ्कणमेव नावगच्छामीति राघवस्योक्तौ अङ्गस्याप्रधानस्यातिविस्तरेण वर्णनम् ॥ यथा—हयग्रीववियजे । प्रतिनायकस्य हयग्रीवस्यैव बहुधा विजयवर्णनं कृतम् ॥ अङ्गिनोऽननुसन्धानं यथा—रत्नावळ्यां चतुर्थेऽङ्के बाभ्रव्यादिकगमने सागरिकाया विस्मृतिः ॥ ईदृशा इति ॥ नायिकापादप्रहारादिना नायकस्य कोपादिवर्णनम् ॥ प्रकृतिविपर्ययस्तु अदिव्यानां

वृत्तम् । अत्रापि भयानको रसः । गजगतभयं स्थायिभावः । दुष्यन्तसेनारथावलोकनं विभावः । पार्श्वावलोकनपलायनादयो व्यभिचारिणः । लक्षणं पूर्वमेवोक्तम् । अहो धिगिति भिन्नं वाक्यम् । आर्य, अनेनारण्यकवृत्तान्तेन पर्याकुलाः स्मः । अनुजानीह्यनुज्ञां देहिनो

**राजा**—गच्छन्तु भवत्यः ॥ वयमप्याश्रमपीडा यथा न भविष्यति तथा प्रयतिष्यामहे ॥

(सर्वे उत्तिष्ठन्ति)

**सख्यौ**—[1]अज्ज । असम्भाविदसक्कारं भूओवि पेक्खणणिमित्तं लज्जामो अज्जं विण्णविदुम् ॥

**राजा**—मामैवं ॥ दर्शनेनैव भवतीनां सत्कृ(पुरस्कृ)तोऽस्मि ॥

**शकुन्तला**—(राजानमवलोकयन्ती) (सव्याजं विलम्ब्य सह सखीभ्यां निष्क्रान्ता

**राजा**—मंदोत्सुकोऽस्मि नगरगमनं प्रति ॥ यावदनुयात्रिकान् (समेत्य) प्रत्यवेक्ष्य तपोवनस्य नातिदूरे निवे(दयेयम्)शयामि ॥ न खलु शक्नोमि शकुन्तलाव्यापारादात्मानं निवर्तयितुम् ॥

मम हि—

1 आर्य । असम्भावितसत्कारं भूयोऽपि प्रेक्षणनिमित्तं लज्जामहे आर्यं विज्ञापयितुम् ॥

समुद्रोल्लङ्घनादिः ॥ तत्र रतिहासशोकाद्भुतानि अदिव्योत्तमप्रकृतिवद्दिव्येष्वपि वर्णनीयानि ॥ तथापि रतिस्तु सम्भोगश्शृङ्गाररूपा । उत्तमदेवताविषया न वर्णनीया ॥ तद्वर्णनं हि पित्रोस्सम्भोगवर्णनमिवात्यन्तानुचितं स्यात् ॥ अदिव्यानां यावदपदानं प्रसिद्धमुचितं तावदेव वर्णनीयम् ॥ अन्यथा असत्यबुद्धिजनकत्वेन कान्तासम्मितहितोपदेशतां विघटयत्काव्यमेव परित्याज्यं स्यात् ॥

**अज्जेत्यादि ॥** भूयोऽपीत्यनेनेतः परं पुनर्दर्शने सतीप्सितसिद्धिर्भविष्यतीति भावः ॥ मन्दोत्सुकोऽस्मि निराशो भवामि ॥ अनेन सर्वकार्यानुत्साहः उक्तः ॥ शकुन्तलाव्यापारात् शकुन्तलायाः अकृत्रिममनोहरस्वविषयकचेष्टाविशेषात् ॥ आत्मानं चित्तं निवर्तयितुं स्ववशगमपि प्रत्यावर्तयितुं न शक्नोमि ॥ अनेन चित्तस्य परवशत्वकथनेनान्तरिन्द्रियस्य पारवश्यमुक्तम् ॥ तत्सहकारितया प्रवृत्तिनिवृत्तिकराणामिन्द्रियाणां स्ववशता कुत इति भावः ॥ अनेन उपनतेषु उचितेष्वपि विषयेषु तत्तत्प्रवृत्तेरसम्भव उक्तः ॥ तदेवोपपादयति—मम हीत्यादिना ॥ मम दृढचित्तत्वेन प्रसिद्धस्य मे हि यस्माद्धेतोः ॥ यद्वा—ममेत्यनेन "रत्नहारी तु पार्थिव" इति न्यायेन स्वसम्पादित लोकोत्तर बहुस्त्रीरत्नपरिभाविनो ममेत्यर्थः ॥ तादृशस्यापि शकुन्तलानिमित्तक चित्तचाञ्चल्यकथनेन शकुन्तलारूपलावण्यादेरदृष्टाश्रुतपूर्वत्वं व्यज्यते ॥ अनेनानुरागप्रसिद्धेर्वस्तुसौन्दर्यप्राबल्यमुक्तम् ॥ हिशब्दोऽप्यर्थकः ॥ ममापीत्यर्थः ॥

ऽस्मानुटजगमनाय । असम्भाविताततिथिसत्कारमप्रापितातिथिपूजम् । प्रासौ भूः (?) भूयोऽपि प्रेक्षणनिमित्तं लज्जावहे आर्यं विज्ञापयितुम् । पुरस्कृतः पूजितः । 'पुरस्कृतः पूजितेऽरात्यभियुक्तेऽग्रतः कृते' इत्यमरः । सव्याजं विलम्ब्येत्यनेन सखीद्वयं पूर्वं निष्क्रान्तं स्वयं च पश्चात् इत्यनेन प्रतिमुखसंधावुच्यमानम् 'दर्भाङ्कुरेण' इत्यादि समर्थितं भवति । सहैवेति लज्जा ध्वनिता ॥

गच्छति पुरश्शरीरं धावति पश्चादसंस्तुतं चेतः ।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥ ३२

(इति निष्क्रान्ताः सर्वे)

इति श्रीकालिदासकृतौ शाकुन्तलनाटके प्रथमोऽङ्कः ॥

---

३२ गच्छतीति ॥ शरीरं वपुः ॥ अत्र शरीरशब्दप्रयोगेण शीर्यत इति शरीरमिति शकुन्तलालिङ्गनाद्यसम्भवाद्भाग्यहीनमिति । शरीरं प्रति जुगुप्सा व्यज्यते ॥ देहसद्भावस्य तादृशशकुन्तलालिङ्गनादिमत्त्वेन सफलत्वमिति भावः ॥ तदभावात्स्वव्यतिरिक्तमिव शरीरमिति प्रयुक्तं नत्वहमिति प्रयुक्तमिति भावः ॥ पुरः अग्रतः ॥ सेनां प्रतीत्यर्थः ॥ अत्र सेनां प्रतीति वक्तव्ये सेनाशब्दस्यानुच्चारितत्त्वात्तदागमनेन शकुन्तलासम्भाषणादेर्विघटनं जातमिति । सेनां प्रति निन्दासूया च ध्वन्यते ॥ अतस्तदभिधानं नोचितमिति राज्ञोऽवहित्था कथिता ॥ गच्छति उदासीनताविषयकस्थलगमनमिव मन्दं व्रजति ॥ सेनाजनिताश्रमबाधाया ऋषिशापभीत्या सैन्यनिवारणार्थं त्वरितं धावतीति वक्तव्ये गच्छतीति गमनमात्रार्थकशब्दप्रयोगेण बुद्धिपूर्वकं न गच्छति । किंत्ववशमेव मन्दं व्रजतीति द्योत्यते ॥ सुस्थचित्तस्यैव करचरणादेरुचितानुचितविषयेषु बुद्धिपूर्वकप्रवृत्तिनिवृत्त्योस्सम्भवादिति भावः ॥ अन्यथा बुद्धिपूर्वकगमने तु विप्रलम्भे नैश्चिन्त्यप्रसङ्गादनुचितं स्यात् ॥ तेन गमने पादयोर्वैषम्यं च व्यज्यते ॥ गच्छतीति वर्तमानव्यपदेशेन गमनोद्योगे कृतेऽपि पादौ न चलत इति द्योत्यते ॥ चेतस्सर्वकरणप्रधानभूतं मनः ॥ पश्चात्पृष्ठतः । शकुन्तलां प्रतीत्यर्थः ॥ अत्र शकुन्तलां प्रतीति वक्तव्ये तदभिधानस्याकृतत्वाद्दुर्लभा किमर्थमुच्चरितव्येति भावः ॥ तेन राज्ञा निर्वेदो मतिश्च ॥ यद्वा—अपरिमितसुकृतातिशयवतः पुंसएव शकुन्तलालाभः ॥ तेनैव सा स्मर्तुं योग्येति प्रतीयते ॥ यदि स्वस्यापि सुकृतविशेषोऽस्ति तर्हि तस्यास्सम्भाषणादेः कथं विघटना जाता ? इति भावः ॥

---

गच्छतीति ॥ शरीरं पुरोऽग्रे गच्छति । चेतः पुनः पश्चाच्छकुन्तलाभिमुखं धावति । शरीरं तु शनैर्गच्छति । सम्बन्धेऽसम्बन्धलक्षणा असम्बन्धे सम्बन्धलक्षणा च द्व्यतिशयोक्तिः । असंस्तुतं शरीरेणापरिचितमवैतीति गम्योत्प्रेक्षा । 'संस्तवः स्यात्परिचयः' इत्यमरः । प्रतिवातं वातसंमुखं नीयमानस्य केतोर्ध्वजस्य चीनदेशस्थं वस्त्रं चीनांशुकं तदिव । तस्यातिसूक्ष्मत्वादल्पेऽपि वाते वाताभिमुखे ध्वजे तत्पश्चादेव गच्छतीति वृत्त्यनुप्रास उपमा । अनया च हृदयशून्यत्वात्परेण नीयमानकाष्ठतुल्यत्वं शरीरस्य ध्वनितम् । चीनपदोपादानाच्चेतसोऽतिचाञ्चल्यं चेति ।

निष्क्रान्ताः सर्वे इति । तदुक्तं दशरूपके—'एकाहाचरितैकार्थमित्थमासन्ननायकम् ।

तेनालभ्यवस्त्वनभिधानेन राज्ञो व्रीडा व्यज्यते ॥ धावति चिरपरिचयदृढसौहार्देन विश्लेषासहमिव त्वरितं धावति ॥ परिचितस्य तत्सहवासं प्रतिगमनं सम्भाव्यमिति तदुपपत्तिमाह—असंस्तुतमिति ॥ असंस्तुतमपरिचितम् ॥ "संस्तवस्स्यात्परिचय" इत्यमरः ॥ उत्तमनायिकाया ललितविलोकनादीनां स्वाभाविकत्वेनापि सम्भवात्तेषां स्वविषयत्वेन चिरसहवासाभावात्सम्यङ्न परिचितमित्यसंस्तुतमित्युक्तम् ॥ धावतीति वर्तमानप्रयोगेण दुर्घटत्वं निश्चित्य मया निवर्त्यमानमपि तस्यास्साकूतावलोकनमन्दगमनचेष्टाविशेषाणाम् स्वाभाविक मनोहरत्वाद्वस्तुसौन्दर्यबलान्न निवर्तते ॥ किन्तु तद्विषये स्वारसिकवृत्तीति व्यज्यते ॥ किञ्च असंस्तुतं चेतो धावतीत्यनेन शकुन्तलाकृतानां चेष्टाविशेषाणां स्वविषयत्वेन चिरपरिचयं कृत्वा सम्यग्ज्ञातुं धावतीवेत्युत्प्रेक्षा ध्वन्यते ॥ अत्र शकुन्तलादुष्यन्तयोः पृथग्देशगमनेन वस्तुविच्छेदे सत्यसंस्तुतं चेतो धावतीत्यनेन स्वान्तःपुरयुवतीर्विहाय शकुन्तलां प्रति गच्छतीति ॥ चित्तासङ्गस्य पुनस्तत्प्राप्त्यर्थकयत्नकरणे हेतुत्वाद्बिन्दुरित्यनुसन्धेयम् ॥ तदुक्तम् ॥ "बीजत्वाद्बीजमादौ स्यात्फलत्वात्कार्यमन्तरः । तयोस्सन्धानहेतुत्वान्मध्ये बिन्दुं मुहुः क्षिपेत्" इति ॥ भावप्रकाशेऽप्युक्तं—"फले प्रधाने विच्छिन्ने बीजस्यावान्तरैः फलैः । तस्याविच्छेदको हेतुर्बिन्दुरित्याह कोहळः" इति ॥ शरीरस्य पुरः मन्दगमने चित्तस्य पश्चात्त्वरितगमने च दृष्टान्तमाह—चीनांशुकमित्यादिना ॥ प्रतिवातं वाताभिमुखं नीयमानस्याकृष्यमाणस्य केतोर्ध्वजस्य ॥ "केतुर्द्युतौ पताकायां गृहोत्पातादिलक्ष्मस्वि"ति विश्वः ॥ चीनांशुकमिव पट्टवस्त्रमिव ॥ पट्टवस्त्रं यथातिश्लक्ष्णं निर्मलं च तद्वत्स्वचित्तमपि कठिनं स्वच्छं च इति भावः ॥ यथा ध्वजदण्डे दृढस्यूतं वस्त्रं वातो जलादाकर्षति । तद्वत्स्वान्तःपुरयुवतिषु विक्षिप्तं चित्तं शकुन्तला स्वस्य रूपलावण्यादिबाहुल्येन तासु वैमनस्यं सम्पाद्याकर्षतीति भावः ॥ केचित्" चीनांशुकं चीनदेशोद्भवं वस्त्रमिति वदन्ति ॥

इति निष्क्रान्ताइति ॥ तेषामन्ते च निर्गमइत्युक्तत्वात् ॥ प्रथमोऽङ्कइत्यनेन ॥ प्रकृते आदावेकदिवसवृत्तं नाट्यमित्यर्थः ॥ तदुक्तम्—"एकैकदिवसे वृत्तमेकनेतृप्रयोजनं । बहुपात्रप्रवेशार्हमङ्कमासन्ननायक ॥" मिति ॥ नाटकविच्छेदस्याङ्क इत्यभिधानम् ॥ "अङ्को

पात्रैस्त्रिचतुरैरङ्कं तेषामन्तेऽस्य निर्गमः ॥' इति । अत्र च तपोवनसंरोधस्य प्राप्तत्वात्स च नाटके साक्षान्न निदर्शनीयः, अङ्कान्ते निबद्धव्य इत्यत्राङ्कसमाप्तिः । तदुक्तं दशरूपके—'दूराध्वानं वधं युद्धं राज्यदेशादिविप्लवम् । संरोधं भोजनं स्नानं सुरतं चानुलेपनम् । शस्त्रस्य ग्रहणादीनि प्रत्यक्षानि न निर्दिशेत् ॥' इति । अङ्कलक्षणं दशरूपके—'यदा तु सरसं वस्तु मूलादेव प्रवर्तते । आदावेव तदाङ्कः स्यादामुखाक्षेपसंश्रयः ॥ प्रत्यक्षनेतृचरितो बिन्दुव्याप्तिपुरस्कृतः । अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ॥' इति । आदिभरते च—'अङ्क

नाटकविच्छेदे संख्यायां युधि भूषण" इति नानार्थरत्नमाला ॥ सर्वत्र बीजानुगुणमेवाङ्कविच्छेदः कार्यः ॥ तदुक्तं भरतेन—"क्षणो मुहूर्तो यामो वा मध्याह्नो दिवसोऽपि वा । अङ्केऽङ्के संविधातव्यो बीजस्यार्थवशानुगः" इति ॥ बीजार्थानुगुण्यं तु असंस्तुतं चेतो धावतीत्यनेन तत्परिचयार्थं विचारं कर्तुमेकेन तद्घटकेन भवितव्यमिति द्वितीयेऽङ्के विदूषकेण सह आलोचनायामत्र बीजमुपक्षिप्तमिति व्यज्यते ॥

इति श्रीरमणवेङ्कटाचलेश्वरपादारविन्दसमाराधकवैखानसकुलतिलक
श्रीकौशिकगोत्र श्रीतिरुमलाचार्यपुत्त्रेण ध्वनिप्रस्थानपरमाचार्याष्ट-
भाषाचक्रवर्ति श्रीनिवासाचार्येण विरचितायां
शाकुन्तलव्याख्यायां प्रथमोऽङ्कः ॥

---

इति रूढिशब्दो भावैश्च रसैश्च रोहयत्यर्थान् । नानाविधानयुक्तो यस्मात्तस्माद्भवेदङ्कः ॥ यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः । किंचिदवलग्नबिन्दुः सोऽङ्क इति सदावगन्तव्यः ॥ ये नायका निगदितास्तेषां प्रत्यक्षचरितसंयुक्तः । नानावस्थान्तरितः कार्यस्त्वङ्को यथार्थरसः ॥' इति ॥

इति श्रीमदभिज्ञानशाकुन्तलटीकायामर्थद्योतनिकायां प्रथमोऽङ्कः समाप्तः

నం. విశ్వనాథశాస్త్రి.
ఓలంకాలశాస్త్రి

॥ श्रीरस्तु ॥

# ॥ अभिज्ञानशाकुन्तलम् ॥

## ॥ द्वितीयोऽङ्कः ॥

(ततः प्रविशति (विषण्णो) विदूषकः)

**विदूषकः**—(निःश्वस्य) [1]आ हदोम्हि(भो दिट्ठं) एदस्स मिअआसीळस्स

1. आः हतोऽस्मि (भोदृष्टं) एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन (निर्विण्णोऽस्मि)

कविरिदानीं कथान्तरमारभमाणो वस्तुसङ्घटनार्थं वृत्तवर्तिष्यमाणार्थं सूचनायैकपात्रप्रयोज्यं विदूषकं नामार्थोपक्षेपकं प्रस्तौति—ततः प्रविशतीत्यादिना ॥ तदुक्तम्—"एकाकिनी च पात्रो यो भूतभाव्यर्थसूचकः। अङ्के ह्यन्तराविष्टः प्रथमाङ्कमनाश्रितः। प्रवेशनार्थं पात्राणां कथ्यतेऽसौ प्रवेशकः" इति ॥ विदूषक इति नायकपार्श्ववर्ती हास्यकारी भवति नाटके नायकस्य सहायाः कल्पनीयाः ॥ तदुक्तं—"सहायास्ते च चत्वारः पीठमर्दो विटश्चेटो विदूषकः" इति ॥ पीठमर्दस्तु पताकानायकः ॥ "पताकानायकस्त्वन्यः पीठमर्दो विचक्षणः ॥" इति ॥ "तस्यैवानुचरो भक्तः किञ्चिदूनस्तु तद्गुणैः" यथा रामायणे लक्ष्मणः ॥ नायकाभीष्टवस्तूनामेकस्यावेदिता विटः । सन्धाननिपुणश्चेटो हास्यकारी विदूषकः ॥ मन्त्रिणा सह मन्त्रव्यापारं निश्चित्य राजा तत्तदुचितकार्येषु तदुचितजनान्नियुञ्जीत ॥ तदुक्तं—"लुब्धानर्थव्यये कुर्यात्कुशलानायकर्मणि । अन्तःपुरे वर्षशतान्किरातान्मूकवामनान् । म्लेच्छादीनधिकारादौ स्वस्वकार्योपयोगिनः । ऋत्विक्पुरोहितान् धर्मे ज्ञानिनस्तत्त्वचिन्तने । गोष्ठीषु शास्त्रसाहित्यसङ्गीतादिविचक्षणान्" इति ॥

तत इति ॥ राज्ञो निष्क्रमणानन्तरमित्यर्थः ॥

**आ इति ॥** निर्विण्णोऽस्मीत्यपि पाठः ॥ हतः वञ्चितः ॥ आः इति ज्ञाने ॥ गृहे सुखेन तिष्ठन्तं मां दुःखिनं चिकीर्षुर्मृगयाव्याजेन वञ्चितवानिति ज्ञातमित्यर्थः ॥ तदुक्तं त्रिलोचनेन—"अथ किं स्वीकृतालापे हुं क्रोधे त्वहहार्तिषु । शान्तं स्मृतमसम्भाव्ये आज्ञाने हीति विस्मय" इति ॥ अन्यस्मिन् पाठे निर्विण्णः दुःखितः ॥ आ इति पीडायां निपातः ॥ राज्ञो वयस्यभावेन सुखे ऽनुभवितव्ये स्वस्य तद्विपरीतं जातमिति यावत् ॥ किञ्च वयस्य-

**तत इति ॥** विषण्णत्वे हेतुर्वक्ष्यमाणः। विदूषकलक्षणं तु सुधाकरे—'विकृताङ्गवचोवेषैर्हास्यकारी विदूषकः' इति। अस्य प्राकृतं पाठ्यम्। उक्तं च—'विदूषकविटादीनां पाठ्यं तु प्राकृतं भवेत्' इति। भो दृष्टमिति भिन्नं वाक्यम्। वाक्यार्थस्य कर्मत्वम्। एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन स्निग्धत्वेन। 'वयस्यः स्निग्धः सवयाः' इत्यमरः। निर्वि-

रण्णोवअस्सभावेण (णिव्विण्णोम्हि) ॥ अअं मिओ अअं वराहो । अअं सद्दूलोत्ति मज्झंदिणे विगिम्हविरळपाअवच्छाआसु वणराइसु आहिंडीअदि (अडवीदो अडवीं) । पत्तसंकरकसायाइ क(टुआइं)दुण्हायि गिरिणदीजलाइ

अयं मृगोऽयं वराहोऽयं शार्दूल इति मध्यंदिनेऽपि ग्रीष्मविरळपादपच्छायासु वनराजिष्वाहिण्ड्यते (अटवीतोटवी) पत्रसङ्करकषायाणि क(टूनि)दुष्णानि गिरिनदीजलानि पीयन्ते । अनियतवेळं

भावेनेत्यनेन स्वस्य गोपनीयांशः कोऽपि राज्ञो नास्तीति व्यज्यते ॥ तेन च स्ववक्ष्यमाणराजकथितशकुन्तळावृत्तान्तहेतुरुक्तः ॥ राज्ञो विरोधेनैव दुःखम् ॥ न तु मैत्रेणेत्याशङ्क्याह—मृगयाशीलस्येति । मृगयापर्यटनजनितदुःखमेव । न हि गृहे आहारादिसङ्कोचजनितदुःखमित्यर्थः ॥ मृगयाशीलस्येत्यनेनेतःपरं मृगयां व्याजीकृत्यावस्थाने किञ्चिद्विळम्बस्सूच्यते ॥ तेन शकुन्तलाप्राप्तिपर्यन्तमाश्रमावस्थाने बीजमुक्तम् ॥ यदि मृगयागमने दुःखानुभवस्तर्हि गृह एव सुखेन स्थीयतामित्यत आह—राज्ञइति ॥ यद्यत्रागमने दुःखं निश्चित्य गृहे स्थीयते तदा बलात्कारेणाप्यानेतुं शक्तिरस्तीत्यर्थः ॥ अत्रागमने दुःखमनागमने दण्ड इति भावः ॥ राज्ञा स्वयं वञ्चितप्रकारमाह—अअं मि ओ इत्यादिना ॥ अयं मृग इत्यनेन प्रागेव क्रूरसत्त्वनामोच्चारणे सति भीत्या स्वयं नागमिष्यामीति क्षुद्रजंत्वभिधानं कृतम् ॥ तेन स्वस्य किञ्चिदरण्यप्रवेशः कारितः ॥ मृगस्यालाभे सति पुनरयं वराह इति । तदलाभे अयं शार्दूल इति ॥ तदपेक्षया सम्यगरण्यप्रवेश इति भावः ॥ एवंप्रकारेण वञ्चित इत्यर्थः ॥ ग्रीष्म इत्यनेन कालस्यातिसन्तापकरत्वं । तत्रापि मध्यंदिन इत्यनेनातपबाहुळ्यात्सञ्चारानर्हता कथ्यते ॥ वनराजिष्विति वनपदोपादानेन कण्टकातिबाहुळ्यात्स्वच्छन्दसञ्चारायोग्यत्वम् ॥ राजिष्विति बहुवचनादनेकदेशभ्रमणं । ततोऽपि विरळपादपच्छायास्विति विशेषणेनावस्थानार्हता च व्यज्यते ॥ आहिण्ड्यते पर्यट्यते ॥ परिभ्राम्यत इति यावत् ॥ ग्रीष्म इत्यनेनारण्यवासिनस्सर्वे सारङ्गादयो जन्तवस्तृषिता जलान्वेषिणो भवन्ति ॥ तत्रापि मध्यंदिन इत्यनेन जलपानार्थं सर्वत्र पर्यटन्ति ॥ तस्मात्तदा मृगया क्रियत इति भावः ॥

स्थलासौष्ठवमुक्त्वा जलासौष्ठवमाह—पत्तेति ॥ पत्रसङ्गेन कषायाणि कटूनि ॥ विरसानीति यावत् ॥ अनेन जलस्य माधुर्यगुणो निरस्तः ॥ कदुष्णानि ईषदुष्णानि ॥

ण्णोऽस्मि दुःखितोऽस्मि । अयं मओ मृगः । 'ऋतोऽत्' इति ऋकारस्याकारः । 'भिओ' इति पाठस्तु 'इत्कृपादौ वा' इति कृपादेराकृतिगणत्वात्साधुः । अयं वराहोऽयं शार्दूल इति मध्याह्नेऽपि ग्रीष्मविरलपादपच्छायासु वनराजिष्वाहिण्ड्यतेऽटवीतोऽटवी । 'अटव्यरण्यं विपिनम्' इत्यमरः । 'आहिण्डीअदि' इत्यत्र यकः 'ईअइज्जो वयस्य' इति ई अआदेशे तप्रत्ययस्य 'त्यादीनामाद्यत्रयस्याद्यस्येचेचौ' इति इचादेशे 'दिः' इत्यनुवर्तमाने 'अतो दिश्च' इति दिरादेशः । अटवीमिति 'सप्तम्या द्वितीया' इति सूत्रे 'प्रथमाया अपि' इति वार्तिकम् । तेन प्रथमार्थे द्वितीया । पत्राणां सङ्करो भिन्नजातीयानामेकत्र पतनं तेन कषायाण्यत एव कटूनि । कः स्वार्थे 'स्वार्थे कश्चवा' इति सूत्रेण । गिरिनदीजलानि पीयन्ते ।

पीअंति ।। अणिअदवेळं सुळमांसभूइ(ट्ठो)ट्ठं आहा(रो)रं अण्ही अदि ।। तुर-आणुधावणसङ्खुहिदसंधिणो मे रत्तिं वि णिआमं सयिदव्वं णत्थि ।। तदो महंते एव्व पच्चूसे दासि एपुत्तेहिं स(उणि)गणलुद्धेहिं वणग्गहणकोळाहळेण पडिबोधिदोम्हि ।। (एत्तएण दाणि) एदावंतेण वि पीडा ण णिक्कमदि । तदो गण्डस्स उवरि (पिण्डओ)पिडआ संउ(त्तो)त्ता ।। हिओ किळ अम्हेसु ओहीणेसु तत्तहोदो

शल्यमांसभूयिष्ठ आहारोऽश्यते तुरगानुधावनसंक्षुभितसन्धेर्मे रा(त्राव)त्रिमपि निकामं शयितव्यं नास्ति । ततो महत्येव प्रत्यूषे दास्याः पुत्रै(श्शकुनि)श्श्वगणलुब्धैर्वनग्रहणकोलाहलेन प्रतिबोधितोऽस्मि । (इयतेदानीमपि) एतावत्यपि पीडा न निष्क्रामति । ततो गण्डस्योपरि पिट(को)का सं-

जलासौष्ठवमुक्त्वाऽहारासौष्ठवमाह—अणि अदेति ॥ "दिवा यामद्वयादर्वाग्रात्रौ यामं न लङ्घयेत् । अतिक्रमे महाव्याधिं जनयत्येव भोजन" मित्युक्तत्वादव्यवस्थितकालमित्यर्थः ॥ "वेला काले च जलधेर्वेला तीरविकारयो" रिति विश्वः ॥ आहारमिति प्राकृते "लिङ्गमतन्त्र" मिति सूत्रान्नपुंसकप्रयोगः ॥

आहारासौष्ठवमुक्त्वा निद्राऽसौष्ठवमाह ॥ **तुरएति** ॥ रात्रिमपीति कालाध्वनोरत्यन्तसंयोगे द्वितीया ॥ वनग्रहणकोलाहलेनान्योन्यं जालादिकं बद्धुं वनसीमाग्रहणकोलाहलेनेत्यर्थः ॥ गण्डो व्रणविशेषः ॥ "गण्डो विस्फोटक" इत्यमरः ॥ पिटका व्रणस्योपरि व्रणम् ॥ केचिद्गण्डशब्देन प्रमेहमूत्रकृच्छ्रादिव्याधिं वदन्ति ॥ प्रकृते गण्डः मृगया ॥ पिटका शकुन्तलादर्शनम् ॥

तदेवाह—**हिओ इति** ॥ ह्यः पूर्वेद्युरित्यर्थः ॥ अस्मास्विति बहुवचनेन स्वयमतीवोहापोहकुशलः स्वयं चेत्तदानीं वर्तेत ॥ तदा सर्वमुपायेन विघटयितुं शक्यमिति द्योत्यते ॥ स्वस्यासन्निधानमेव राज्ञश्शकुन्तळादर्शनादौ हेतुरिति भावः ॥ यद्वा—अस्मास्विति

'पीअन्ति' इत्यत्र 'बहुष्वाद्यस्य न्ति न्ते इरे' न्त्यादेशः । अन्यत्समम् । 'कदुह्णइं' इति पाठे कदुष्णानि । ईषदुष्णानीत्यर्थः । अनियतवेलं विषमसमयम् । सुह्लमंसभूइट्ठो सूल्यमांसभूयिष्ठः । लोहशलाकया मांसं संग्रथ्य यत्पच्यते तच्छूल्यमांसम् । 'शूलाकृतं भटित्रं स्याच्छूल्यम्' इत्यमरः । आहारः । आण्हीअदि भुज्यते । 'अण्हीअदि भुज्यते । 'अण्हीअदि' इत्यत्र 'भुजो भुञ्जजिमजेमकम्माणण्हसमाण' इत्यण्हादेशः । शेषं समानम् । तुरगानुधावनेन कण्डितसन्धेः कुट्टिताङ्गसन्धेः रात्रावपि निकाममत्यर्थं मे शयितव्यं नास्ति । ततो महत्येव प्रत्यूषेऽतिप्रातर्दास्याः पुत्रैः । तस्योद्वेगदायित्वाद्गालिप्रदानम् । शकुनिलुब्धकैः पक्षिव्याधैः । 'व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः' इत्यमरः । वनग्रहणेऽरण्यवेष्टने यः कोलाहलस्तेन प्रतिबोधितोऽस्मि । एतावता कालेनेदानीमधुना पीडा न निष्क्रामति नापगच्छति । ततो गण्डस्योपरि पिटकः संवृत्तः । अयमाभाणकः । स्फोटस्योपरि स्फोट इत्यर्थः । प्रकृते त्वेकस्मिन्दुःखकारणे सत्येव द्वितीयं दुःखकारणमित्यर्थः । तदेवाह—ह्यः पूर्वदिने किल । 'ह्यो गतेऽह्नि' इत्यमरः । अस्मास्ववहीनेषु पश्चात्स्थितेषु तत्तहोदो तत्रभवतो

मिआणुसारेण अस्समपदं पविट्ठस्स तावस कण्णआ सउन्दळा णाम मह अधण्णदाए दंसिदा ॥ संपदं णअरगमणस्स कहं विणकरेदि ॥ अज्ज (वि)तं एव्व स विसेसं चिन्तयन्तस्समे अच्छीणं पहादं आसि ॥ का गई ? जाव

वृ(त्तः)त्ता । ह्यः किलास्माखवहीनेषु तत्रभवतो मृगयानुसारेणाश्रमपदं प्रविष्टस्य, तापसकन्यका शकुन्तला नाम ममाधन्यतया दर्शिता । सांप्रतं नगरगमनस्य कथामपि न करोति । अद्य त(ता)मेव सविशेषं चिन्तयतो मेऽक्ष्णोः प्रभातमासीत् । कागतिः ? यावदिमं कृताचारपरि(क्रमं)

बहुवचनं निर्वेदे ॥ तथाऽमरुकेऽपि "वयमपि हताशाः प्रियतमा" इति ॥ तत्र भवतः इत्यनेन राज्ञः प्रातिलोम्यादि परस्त्रीषु मनो न वर्तत इति द्योत्यते अनेनेतः पूर्वं राज्ञः परस्त्री-निमित्तकचित्तव्यसनं नास्ति ॥ यद्यस्ति तर्हीदानीमपि तस्य साहसिकमिति दुःखं सोढुं शक्यत इति भावः ॥ तर्हि परबुद्धेरप्रत्यक्षत्वादैश्वर्ययौवनादिबाहुल्ये नवीना काचिद्विक्रिया भवतीत्यत आह—मिआणुसारेणेति ॥ मृगयायां वरयुवति दर्शनसम्भावना कथं तर्क्यते ? यदि तत्पूर्वमेव सम्भावितं स्यात् तर्हि स्वयं नागच्छामीति भावः ॥ तर्हि पुराणेतिहासादौ मृगयागमनसमय एव केषांचिद्राज्ञां वरयुवतिप्राप्तिश्श्रूयत इत्यत आह—आश्रमपदं प्रविष्टस्येति ॥ शान्तिप्रधाने तपोवने वरयुवतिदर्शनं कथं प्राक्तर्क्यत इति भावः ॥ एव-मनुपपत्तिमुक्त्वा दर्शनसद्भावस्य कारणमाह—अधन्यतयेति ॥ असम्भाव्यस्थले राज्ञो युवतिदर्शने स्वस्याधन्यतैव हेतुरिति भावः ॥ एवं शकुन्तलावृत्तान्तकथनेन पूर्वेद्युरावौ विदूषकस्याग्रतश्शकुन्तलावृत्तान्तादिकं राज्ञा किंचित्प्रसञ्जितमित्यवगन्तव्यम् ॥ तथैव वदिष्यत्युत्तरत्र—तामेवाश्रमललामभूतामित्यादि ॥

अधन्यताफलमाह—**सम्पदमित्यादिना** ॥ साम्प्रतमिति राज्ञा शकुन्तलायां दृष्टायामित्यर्थः ॥ अक्ष्णोः प्रभातमासीदित्यनेनातिदुःखानुभवेनाक्षिनिमीलनाभावो द्योत्यते ॥ अक्ष्णोरुन्मीलतोस्सतोः प्रभातमासीदित्यर्थः ॥ कागतिः कावामतिः इतः परं यथा मृगया-गमनमत्रावस्थानं च न सम्भवेत्तादृशतात्कालिकमतिः ॥ केत्याक्षेपे ॥ अतिदुःखानुभवेन बुद्धिक्षोभो जात इति भावः ॥ "गतिः परायणे गीतिमार्गे च गमने मता" विति विश्वः ॥

मृगानुसारेणाश्रमपदमाश्रमस्थानं प्रविष्टस्य तापसकन्यका शकुन्तला ममाधन्यतया दर्शिता । 'तत्रभवतः' इत्यत्र 'सर्वत्र लवराम्–' इति रलोपे 'अनादौ शेष–' इति द्वित्वे तत्तेति सिद्धम् । 'भुवेर्होहुवहवाः' इति भुवतेर्होआदेशः । 'अतो डो विसर्गस्य' इति डोकारे टिलोपे 'होतो' इति' । ततः कगच–इति तलोपे प्राप्ते सौरसेनीत्वात् 'तोदोऽनादौ सौरसेन्याम्' इति तस्य दः । तेन 'तत्तहोदो' इति सिद्धम् । सांप्रतं नगरगमनस्य नगर-गमनाय । 'चतुर्थ्याः षष्ठी' इति षष्ठी । मनः कथमपि न करोति । अद्यापि तस्य तामेव चिन्तयतोऽक्ष्णोः प्रभातमासीत् । चिन्तनेन सुखम्, निद्राच्छेदेन दुःखमिति । अनेन विधानं नामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतम्' इति । का

(णं)इमं किदाचारपडिकम्मणं वअस्सं पेक्खामि ॥ (परिक्रम्यावलोक्य च) एसो खु बाणासणहत्ताहिं वणपुप्फमाळाधारिणीहिं जवणीहिं परिउदो इदो एव्व आअच्छइ वअस्सो ॥ होदु ॥ अङ्गभङ्गविअळो विअ भविअ चिट्ठिस्सं ॥ जइ एव्वं णाम विस्समं ळहेअं ॥ (इति दण्डकाष्ठमवलम्ब्य स्थितः)

(प्रवेशकः)

---

कर्माणं वयस्यं पश्यामि । एष खलु बाणासनहस्ताभिर्वनपुष्पमालाधारिणीभिर्यवनीभिः परिवृत इत एवागच्छति वयस्यः । भवतु । अङ्गभङ्गविकल इव भूत्वा स्थास्यामि । यद्येवं नाम विश्रमं लभे(य)यम् ॥

---

इतएवागच्छतीत्यनेनैवकारेण विदूषकस्य पुनरपि मृगयागमनदुःखं द्योत्यते ॥ यवनीशब्देन राज्ञश्शस्त्रधारिण्य उच्यन्ते ॥ तदुक्तं शब्दार्णवे—"किराती चामरधरा यवनी शस्त्रधारिणी" ति ॥

होदु इत्यादि ॥ भवत्वित्युपायस्मरणे ॥ अवलम्ब्याधारं कृत्वा ॥ अनेन वेषहासो नाम कैशिकीवृत्त्यङ्गमुक्तम् ॥ अत्र दण्डकाष्ठावलम्बनादि विकृतवेषदर्शनाद्वेषहास्यं भवति ॥ तदुक्तम्—"कैशिक्यारभटी चैव सात्त्वती भारती तथा । चतस्रो वृत्तयः प्रोक्ता रसावस्थानसूचिकाः ॥" तत्र—"गीतनृत्तविलासादियुक्तश्शृङ्गारसंभृतः । व्यापारो नेतृनिष्ठो यः कैशिकी वृत्तिरीरिता ॥ अस्यास्तु चत्वार्यङ्गानि कथितानि मनीषिभिः । नर्मतत्स्पन्दतत्स्फोटगर्भैश्च चतुरङ्गिके"ति ॥ तत्राग्राम्येष्टजनावज्ञानुरूपपरिहासो नर्म ॥ तच्च त्रिविधम्—"शुद्धहास्यजं । शृङ्गारहास्यजं । सभयहास्यजं च" इति ॥ शुद्धहास्यजमेकविधम् । शृङ्गारहास्यजं तु त्रिविधम्—"स्वानुरागनिवेदनं । सम्भोगेच्छाप्रकाशनं । सापराधप्रियस्य प्रियभेदन" मिति ॥ सभयहास्यजं तु द्विविधम्—"शुद्धं । रसन्तराङ्गमिति" ॥ एवं षड्विधं नर्म तच्च प्रत्येकं वाग्वेषचेष्टाभेदेन त्रैविध्यादष्टादशभेदम् ॥ कैशिक्यदीनां वृत्तीनां मध्ये शब्दवृत्तिर्भारती । तिस्रोऽर्थवृत्तयः ॥ "अन्येऽपि मिश्रणादासां मिश्रां वृत्तिं तु पञ्चमीं । अशेषरससामान्यं मन्यन्ते लक्षयन्ति च" यथा—"तत्रारभट्यादिगुणास्समस्तामिश्रत्वमाश्रित्य मिथः प्रथन्ते । मिश्रेति तां वृत्तिमुशन्ति धीरास्साधारणीमर्थचतुष्टयस्य" इति तन्नविचारक्षमम् ॥ कुतः ॥ तत्किंवृत्तिधर्माणां मिश्रणमैकरूप्येण? न्यूनाधिकभावेन वा? न प्रथमः । अवैषम्येण मिश्रणाभावात् ॥ तथा मिश्रणे तु मिश्रवृत्तिव्यंग्यो रसोऽपि

---

गदी का गतिः । यावत्तं कृताचारपरिक्रमं कृत आचारस्यस्नानादेः परितः क्रमो येन तं पश्यामि । एष बाणासनं धनुर्हस्ते यासां ताभिर्वनपुष्पमालाधारिणीभिरिति मृगयावेषसूचनम् । यवनीभिः परिवृत इत एवागच्छति प्रियवयस्यः प्रियसखः । 'वक्रादावन्तः' इति सूत्रेणानुस्वारागमे 'वयंस' इति रूपम् । बहुलाधिकाराद्यलोपद्वित्वयोः 'वअस्स' इत्यापि । भवतु । अङ्गभङ्गविकल इव भूत्वा स्थास्यामि । यद्येवमपि नाम विश्रामं लभेय । अत्र यवन्यो नाम सञ्चारिकापर्यायः । तल्लक्षणं मातृगुप्ताचार्यैरुक्तम्—'गृहकक्षविचारिण्यस्तथोपवनसञ्चराः । यामेषु च नियुक्तानां यामशुद्धिविशारदाः ॥ सञ्चारिकास्तु ता ज्ञेया यवन्योऽपि मताः क्वचित्' इति । यथा निर्दिष्टपरिवारः । यवनीकृत इत्यर्थः ॥

(ततः प्रविशति यथोद्दिष्टपरिवारो राजा)

**राजा**—(आत्मगतम्)

**कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनायासि ।**

---

मिश्रो नानाधिकः प्रसज्येत ॥ वृत्तीनां रसविशेषनियमत्वात् ॥ ननु मिश्रा वृत्तिस्सर्वरससाधारणीति चेन्न ॥ भारत्या प्रस्तुतविषयत्वान्मूलप्रमाणाभावेनाप्तोक्तिमात्रत्वाच्च ॥ नापि द्वितीयः वैषम्येण वृत्तिगुणानां मिश्रणे यत्र वृत्तिप्रत्यभिज्ञाहेतुभूता बहवो गुणा लक्ष्यन्ते । तत्र सैव वृत्तिरिति निश्चयात् ॥ ननु तत्र प्रकरणादिवशेन रसविशेषव्यक्तिरिति चेत् । तर्हि प्रस्तुतरसानुरोधेनैव वृत्तिविशेषनिर्धारणमित्यङ्गीकर्तव्यमेव तथाच भरतः—"भावो वापि रसो वापि प्रवृत्तिर्वृत्तिरेव वा । सर्वेषां समवेतानां यस्य रूपं भवेद्बहु । मन्तव्यो रसस्स्थायी शेषास्सञ्चारिणो मताः" इति ॥ एतद्विवृण्वते—प्रवृत्तिस्तु अभिनयप्रवर्तना बहुविधा भवति ॥ शृङ्गारे कदाचिन्नायिकारब्धत्वं । कदाचिन्नायकारब्धत्वम् ॥ यद्वा—वृत्त्यन्तर्भूतं कुळकरूपकादि ॥ वृत्तिस्सात्त्वत्यादिरूपा ॥ यस्य रूपं बहु भवेदिति ॥ उद्भूतं चिरकालावस्थायि च भवति स स्थायो रसो मन्तव्यः ॥ रसस्य स्थायिपरिणामरूपत्वाद्यथा क्षीरपरिणामस्य दध्नोऽम्लद्रव्यं सहकारि । एवं विभावानुभावाश्च सहकारिण इति यावत् ॥ प्रवृत्तिर्वृत्तिरेववेत्यादिना ॥ कविनटयोश्शिक्षाप्रकारस्तु भरतेन प्रदर्शितः ॥ तत इत्यादि ॥ यथोद्दिष्टपरिवारः विदूषकनिर्दिष्टपरिजनः ॥

**काममित्यादि** ॥ प्रिया स्वाभिलाषविषयभूता नायिका कामं प्रायेण सुलभा न । सुखेनोपलब्धुमशक्या ॥ यद्यपि । राजर्षिकन्यका । अथ तु ब्रह्मर्षिणा सुतात्वेन स्वीकारादाश्रमोचितधर्मैकरणवत्त्वेन च दुर्लभत्वम् ॥ एवं दुर्लभत्वज्ञानेऽपि तद्विषयाभिलाषवत्त्वे कारणमुक्तम्—प्रियेति ॥ काममसुलभेत्यनेन पाक्षिकप्राप्तिसम्भावना द्योत्यते ॥ राजर्षिकन्यकाया राजर्षिवरगामितायाः युक्तत्वात्तत्रासन्निहितस्य परित्यागे कारणाभावाच्च ॥ एवं दुर्लभत्वे किमर्थं तद्विषयाभिलाष इत्यत आह—मनस्त्विति ॥ तद्भावदर्शनायासि तस्या भावदर्शनेन स्वविषयाभिलाषज्ञानेन आयासि प्रयासयुक्तम् ॥ कदा घटते? कथं वा घटते? इति बहुवितर्कपर्याकुलमित्यर्थः ॥ स्वविषयाभिलाषज्ञानं स्वयमेव प्रकटयिष्यति—सर्वं तत्किल मत्परायणमहो इति ॥ मनस्तु तद्भावदर्शनायासीत्यनेन यद्यपि स्वयं विचारवत्त्वे न कार्यस्याघटमानतां निरीक्ष्य तद्व्यापारान्निवर्तते । तथापि मनस्तु तद्विषये स्वारसिकवृत्तीत्यर्थः ॥ यद्वा—तद्भावदर्शनायासि तद्भावदर्शने आयासवत् ॥ साकूतावलोकन-

---

**काममिति** ॥ सा काममत्यर्थं प्रिया प्रियतमेत्यर्थः । तर्हि सम्यगेव । न सम्यगित्याह—यतो न सुलभा प्राप्या, किंतु सुखेन न लभ्या । तर्हि दुष्प्रापे वस्तुनि प्रयत्नेनापि किमित्याशङ्कायामाह—मन इति । तु इति शङ्कोच्छेदे । मनस्तस्या नायिकाया भावाश्चेष्टास्तासां दर्शन आयासि सखेदं । प्रयत्नपूर्वकं लालसमित्यर्थः स्यात्त्वदुक्तं यदि पूर्वमभिलाषो न जातः स्यादित्याशयः । अकृतेति । मनसिजेऽकृतार्थेऽप्युभयप्रार्थना स्वस्याभिलाषो रतिरागं यतः कुरुते प्रीतिमुत्पादयति । अहं तत्र गमिष्यामि, तामेवं वक्ष्य इत्यात्माभिलाषः । एवं मां प्रति तस्या अप्यभिलाषो मनसिजेऽकृतार्थे सम्भवति । जातरत्योः सम्भवतीत्यर्थः । अत्राकृतार्थेऽप्यजातरत्योरपीत्यपिशब्दार्थः । तेनैतदुक्तं भवति । यथा मन्मनसस्तद्भावदर्शन-

अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥ १

मन्दगमनादीनां स्वाभाविकत्वेनापि सम्भवात् ॥ *तथा* च वदिष्यति—एवमात्माभिप्रायसम्भावितेष्टजनचित्तवृत्तिः प्रार्थयिता विडंब्यत इति ॥ यस्य यत्राभिलाषातिशयः स तत्कृतचेष्टस्सर्वाअपि स्वकीयत्वेन मनुते ॥ स्वाशयास्ताद्दक्परिकल्पितत्वात् ॥ अतएव ताद्दक्साधारणचेष्टानां स्वैकताननिश्चायकप्रमाणविषये आयासीत्यर्थः ॥ प्रयासकारिणी मनोवृत्तिः प्रेक्षावता प्रयत्नान्निरोद्धव्येत्यतआह—अकृतार्थेऽपीत्यादि ॥ मनसिजः कामः ॥ तस्याकृतार्थत्वमालिङ्गनाद्यभावः ॥ ताद्दक्परस्परालिङ्गनाद्यभावेऽपि नायिकानायकयोः परस्परप्रार्थनैव रतिं प्रीतिं कुरुते ॥ नायकस्योत्तमनायिकाविषयानुरागेण स्वसङ्कल्पमात्रपरिकल्पितप्रेमचेष्टाभिरपि परानन्दो जायत एव ॥ तदुक्तं मालतीमाधवे—"यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणादाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रोलय" इति ॥ अतस्सङ्कल्पमात्रेणापि रतिसिद्धेः प्रेक्षावता मनोवृत्तिर्ननिरोद्धव्येत्यर्थः ॥ यद्वा—भावज्ञानार्थं मन आयासीत्युक्तम् ॥ किं तेन भावज्ञानेन? इत्यत आह—अकृतार्थेऽपीत्यादि ॥ उभयप्रार्थना ज्ञातपरस्पराभिलाषः ॥ यद्वा—उभयप्रार्थनाशब्देन सम्भोगविषयेच्छाविशेषः स्पृहापरपर्यायः ॥ "प्रमोदात्मा मनोवृत्तिविशेषो रतिरुच्यते ॥" सैव श्रृङ्गाररसस्थायी भवति ॥ तदुक्तं भावप्रकाशे—"सम्पन्नैश्वर्यसुखयोरशेषगुणयुक्तयोः । नवयौवनयोः श्लाघ्यप्रकृत्योश्श्रेष्ठरूपयोः ॥ नारीपुरुषयोस्तुल्या परस्परविभाविका । स्पृहाह्वया चित्तवृत्ती रतिःरित्यभिधीयत" इति ॥ ताद्दग्योभयप्रार्थना मदने अकृतार्थेऽपि साक्षादालिङ्गनाद्यभावेऽपि रतिं कुरुते प्रीतिमुत्पादयति स्वविषयोत्तमनायिकानुरागज्ञानेन सुखोत्पत्तेस्सर्वलोकसिद्धत्वात् अत्र चाभिलाषविप्रलम्भश्रृङ्गारः प्राधान्येन व्यज्यत इत्यभिधामूलोऽसंलक्ष्यक्रमव्यङ्ग्यो रसध्वनिः ॥ अत्र शमो नाम प्रतिमुखसंध्यङ्गमुक्तं भवति ॥ तदुक्तम्—"शमस्यादरतेश्शान्ति" रिति ॥ अत्र सङ्कल्पजनिततात्कालिकसुखवत्त्वादरतेश्शान्तिर्भवति ॥ प्रतिमुखसन्धिरुच्यते ॥ "ईषत्प्रकारो बीजस्य सन्धिः प्रतिमुखं भवेत् । बिन्दुप्रयत्नसम्बन्धादङ्गान्यस्य त्रयोदश । विलासः परिसर्पश्च विधूतं शमनर्मणी । नर्मद्युतिप्रगमनं निरोधः पर्युपासनं । पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि ॥"

---

लालसत्वं कार्यं समर्थ्यते तेनार्थान्तरन्यासः । उक्तं च राजानकरुचकेन—'सामान्यविशेषकार्यकारणभावाभ्यां निर्दिष्टं प्रकृतसमर्थनमर्थान्तरन्यासः' इति । स च हिशब्दोपादानानुपादानाभ्यां द्विधेत्युक्तः । अत्र च हिशब्दानुपादाने बोद्धव्यः । उद्भटादिमते सामान्यविशेषभाव एवार्थान्तरन्यासाङ्गीकारादत्र काव्यलिङ्गमेव । येषां मते कार्यकारणभावेऽर्थान्तरन्यासस्तेषां मत एतद्व्यतिरिक्तविषयत्वं काव्यलिङ्गस्येत्यवधेयम् । अथ च मनसिजः कन्दर्पोऽकृतार्थः । रतिः कामभार्या चेति विरोधः । व्याख्यातप्रीतिपर्यायत्वेन विरोधाभासः । 'रतिः कामस्त्रियां रागे सुरतेपि रतिः स्मृता' इति धरणिः । श्रुत्यनुप्रासश्च । अनेन पूर्वानुरागविप्रलम्भाद्यभिलाषो नामावस्थोक्ता । तल्लक्षणं तु सुधाकरे—'सङ्गमोपायरचिता प्रारब्धाध्यवसायतः । सङ्कल्पेच्छासमुद्भूतिरभिलाष इतीरितः ॥' इति 'अद्यापि तस्य तामेव चिन्तयतः' इति विदूषकवचसा चिन्तोपनिबद्धा । तल्लक्षणं तु—'केनोपायेन संसिध्येत्कदा कुत्र समागमः । का चेयं किंस्वभावा च चिन्तनं तदुदीरितम् ॥' इति । न च पूर्वापरविपर्ययः

(स्मितं कृत्वा) एवमात्माभिप्रायसम्भावितेष्टजनचित्तवृत्तिः प्रार्थयिता जनो विडंब्यते ॥

तथा हि—

स्निग्धं वीक्षितमन्यतोऽपि नयने यत्प्रे(ष)रयन्त्या तया
यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव ।

---

स्मितमित्यादि ॥ स्मितं कृत्वा किञ्चिद्विहस्य ॥ तदुक्तम् ॥ "ईषद्विकसितैर्गण्डैः कटाक्षैस्सौष्ठवान्वितैः । अलक्षितद्विजं धीरमुत्तमानां स्मितं भवे" दिति ॥ एवं उक्तप्रकारेण प्रार्थयिता कामी ॥ आत्मेति ॥ परबुद्धेरप्रत्यक्षत्वात्तच्चेष्टाभिरेव ज्ञेयत्वेनोत्तमनायिकाया ललितविलोकनादीनां स्वाभाविकत्वेनापि सम्भवात्तेषां स्वविषयत्वकल्पनं स्वाभिप्रायमात्रेण यः करोति । स कामी विडम्ब्यते परिहास्यते ॥ लोकैरिति शेषः ॥ एवं सामान्येनोक्त्वा विशेषनिष्ठत्वेनाह तथाहीत्यादिना ॥

२ स्निग्धमिति ॥ अत्र शब्दशक्त्या विलोकितादीनां स्वविषयत्वनिश्चयावगमेऽपि स्वगर्वपरिहाराय स्वविषयत्वस्यापरमार्थतामाह—मत्परायणं किलेति ॥ अन्यत्र स्वाभिलषितप्रियजनादन्यत्र नयने प्रेषयन्त्या तया यत्स्निग्धं वीक्षितं स्वानुरागप्रकाशकं सुकुमारं वीक्षितम् ॥ नायिकाया नायकविषय एव स्निग्धा दृष्टिरनुरागव्यञ्जिका ॥ तदुक्तं भरतेन—शृङ्गारे रसदृष्टिस्तु कान्ता भवति ॥ स्थायिभावदृष्टिस्तु स्निग्धा भवति ॥ एतयोर्लक्षणं तु ॥ "हर्षप्रसादजनिता कान्तात्यर्थं समुन्नता । सभ्रूक्षेपकटाक्षा च शृङ्गारे दृष्टिरिष्यते । व्याकोचमध्या मधुरा स्थितताराभिलाषिणी । सा नतभ्रूकृता दृष्टिस्स्निग्धेयं रतिभावजा ॥" एतयोरभिप्रायस्तु लिख्यते—हर्षप्रसादजनितेति ॥ विकासितातिनिर्मलशुक्लमण्डला दृश्यमापिबन्तीव या सा कान्तेति लक्ष्यपदनिर्देशः ॥ सभ्रूक्षेपकटाक्षेति ॥ भ्रुवोरुन्नतिरुत्क्षेपः ॥ तारकाख्यस्य दृष्टिमण्डलस्य विचलितया गतागतेन विश्रान्त्यनुवर्तने

---

शङ्कनीयः । वाक्यद्वयस्याप्यनुवाद्यत्वात् । स्मितं कृत्वेति । अलीकेऽपि सत्यबुद्धिः कामिनामिति भावः । तदेव प्रकटयति—एवमिति । आत्माभिप्रायेण स्वाभिप्रायेण सम्भाविता सम्भावनया नीता । कल्पितेति यावत् । इष्टजनस्य प्रार्थ्यजनस्य चित्तवृत्तिर्येन स प्रार्थयिता कामी विडम्ब्यत इति कर्मकर्तरि । उपहासास्पदं भवतीत्यर्थः । विशेषे प्रस्तुते सामान्योक्तेरप्रस्तुतप्रशंसा । तेन पूर्वोक्तोऽभिलाषो मन्मनस्य एव, मत्कल्पितस्तु तस्यां प्रतिभातीति प्रकृते पर्यवसानम् । तदेव विशिष्य दर्शयति—

स्निग्धमिति ॥ अन्यतोऽपि निर्लक्ष्यमेव । अत एव नयने प्रेषयन्त्या तया यद्विलासादिव स्निग्धं वीक्षितं स्निग्धदृष्ट्यावलोकितमिति विशिष्टं विधेयम् । साभिलाषं व्याजावलोकनं कृतमिति भावः । स्निग्धदृष्टिलक्षणं यथा—'विकासिस्निग्धमधुरा चतुरे बिभ्रती भ्रुवौ । कटाक्षिणी साभिलाषा दृष्टिः स्निग्धाभिधीयते ॥' इति । नितम्बयोर्गुरुतया विलासादिव यच्च मन्दं यातम् । विलम्बो भवत्विति भावः । नितम्बयोरिति द्विवचनेन मध्यनि-

मागा इत्युपरुद्धया यदपि सा सासूयमुक्ता सखी
सर्वं तत्किल मत्परायणमहो कामी स्वतां पश्यति ॥ २

कटाक्षः ॥ स्निग्धायां रतिभावदृष्टावप्ययमेव प्रकारः ॥ किन्तु अनुल्बणत्वं तत्र विशेषः ॥ अत्यर्थसम्मतेति वा पाठः ॥ इयं रसदृष्टिरन्तर्गतचित्तवृत्तिव्यञ्जिका ॥ अन्यथा परबुद्धेरप्रत्यक्षत्वेनानुरागस्य दुरधिगमत्वात् ॥ व्याकोचमध्या स्नेहमधुरतया किञ्चित्फुल्ला ॥ मधुरा मनोहरा स्थिततारा किञ्चित्कटाक्षान्विता ॥ अभिलाषिणी साभिलाषा ॥ सा नतभ्रूकृतेति ॥ एकस्या भ्रुव उत्क्षेपवती ॥ तदुक्तं—"कोपस्वभावाभावेषु लीलायां विभ्रमेषु च। दर्शने श्रवणे चैव भ्रुवमेकां विनिक्षिपेत्" इति ॥ भावावस्थायां स्निग्धा दृष्टिः ॥ अतएव माधुर्यमस्यास्सिद्धम् ॥ कान्ताद्या ह्यष्टौ रसदृष्टयः ॥ स्निग्धाद्यास्स्थायिभावदृष्टयोऽप्यष्टौ ॥ शून्याद्या-व्यभिचारिदृष्टयो विंशतिः ॥ आहत्य षट्त्रिंशद्दृष्टयः ॥ दृष्टीनामनन्तत्वान्नाट्यप्रयोगानुगुण्येन मुनिना स्वेतावत्यो लक्षिताः ॥ लक्ष्मीमते नाट्यशास्त्रे तु दृष्टीनां शतद्वयमुक्तम् ॥ कोहलादिभिस्सञ्चारिदृष्टयस्त्रयस्त्रिंशदभिहिताः ॥ तन्मते यथाक्रमं विनियोगस्सिध्यति ॥ भरतमुनिमते तु सञ्चारिदृष्टीनां विंशतित्वाद्विशेषतो विनियोग उक्तः ॥ केचित्तु दृष्टीनामानन्त्यात्सर्वासां कथनस्याशक्यत्वात्तारापुटभ्रूकर्मनिरूपणद्वारा अनुक्ता अपि दृष्टयोऽनुमन्तव्या इति मुनेरभिप्राय इति वदन्ति ॥ श्रीशङ्कुकस्तु दर्शनशून्यावसरे तारादिकर्मदर्शनक्रियायां दृष्टय इति विभागं चकार ॥ तदयुक्तम् ॥ तारादिकर्मणां दृष्ट्यविनाभूतत्वात् ॥ अत एव भट्टलोल्लटादयो बहुविधदृष्टिशिक्षार्थं तारादिकर्मोपदेश इत्यूचिरे ॥ कीर्तिधराचार्यमतं यथा—"लक्ष्मीमते हि दृष्टीनां शतद्वयमुदाहृतं। तच्च नाट्ये यथायोगं नियमेन निरीक्ष्यते। या तु षट्त्रिंशदित्युक्तिर्मुनेस्तदुपलक्षण"मिति ॥ अभिनवगुप्ताचार्यमतं यथा—"कोहलाद्यैस्त्रयस्त्रिंशत्प्रोक्तास्सञ्चारदृष्टयः। किंतु दुर्लक्षभेदत्वात्तावत्यो न मुनेर्मताः। यतष्षट्त्रिंशता सिद्धिर्दर्शनाद्यस्य दृश्यत" इति ॥ ग्रन्थगौरवभिया षट्त्रिंशद्दृष्टीनां लक्षणमत्र न लिखितम् ॥ अथ प्रकृतमनुसरामः ॥ यातमित्यादि ॥ इवशब्दो भिन्नक्रमो

स्तनगौरवाद्याधिक्यं यौवनोज्जृम्भणं च ध्वनितम्। मा गा इत्युपरुद्धया तया सातिप्रियतरा हृदयरूपा सखी विलासादिव यदपि सासूयं सेर्ष्यमुक्ता। तत्र स्थित्यर्थमिति भावः। अपिः समुच्चयार्थे। सर्वं स्निग्धवीक्षणमन्दगमनसेर्ष्यवचनादि मत्परायणम्। व्याख्यातप्रकारेणार्थान्तरन्यासमाह—अहो आश्चर्ये। कामी स्वतामात्मीयतां सर्वत्र स्वाभिप्रायरूपतां पश्यतीत्यर्थः: 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमरः। विलासादिवेत्युत्प्रेक्षा। तेन सम्भाव्यमानत्वात्: विलासलक्षणं तु—'यो वल्लभासङ्गतो विकारो गत्यासनस्थानविलोकनादौ" इत्यादि पूर्वोक्तमेव। मध्यकारकदीपकालङ्कारः। हेतुस्वभावोक्ती च नयनेयेति यन्त्यायातमिति तथा तयेति छेकानुप्रासः नयनेयेति यतोयदिति यातंयेति तस्यैवैकवाचकानुप्रवेशलक्षणः सङ्करः। स एव वृत्त्यनुप्रासेनापि पूर्वार्धे। उत्तरार्धे तु वृत्त्यनु-

**विदूषकः**—(तथास्थित एव) [1]भो वअस्स ! ण मे हत्थपादा पसरन्ति वाआमेत्तेण (जीआवइस्सं) विअ ई होहि ॥

**दुष्यन्तः**—(सस्मितम्) कुतोऽयं गात्रोपघातः ?

**विदूषकः**—[2]कुदो विकिळ सअं एव्व अच्छी आउळीकरिअ अस्सु काळणं पुच्छसि ॥

**दुष्यन्तः**—न खल्वहमवगच्छामि ॥

1 भो वयस्य ! न मे हस्तपादौ प्रसरतः । वाङ्मात्रेण (जापयिष्यामि) विजयी भव ॥
2 कुतोऽपि किल स्वयमेव अक्षिणी आकुलीकृत्याश्रुकारणं पृच्छसि ॥

गुरुतयेति ॥ विलासात् साभिप्रायव्यञ्जकचेष्टाविशेषात् ॥ यन्मन्दं यातं मन्दगमनं नितम्बयोर्गुरुतयेव आदौ स्वानुरागगोपनस्य विधेयत्वात् मा गा इत्यादि ॥ अन्योन्यचेष्टाभिरन्योन्यानुरागे सखीभ्यां ज्ञाते शकुन्तलया स्वाभिप्रायक्रियाभ्यां ज्ञात इति व्याजकोपेनोटजगमने क्रियमाणे तदपि ज्ञातवत्या सख्या वृक्षसेचनकरणव्याजेनोपरोधे कृते नायके स्वानुरागं प्रकाशयन्ती सखीं सासूयमवादीत् ॥ यथा प्रियंवदा किञ्चिद्विहस्य हळा सउन्दळे मोइदासीत्यादिना । का तुमं रुद्धिदव्वस्स वा विसज्जिदव्वस्सवेत्यन्तेन सर्वमित्यादि । पूर्वं यद्यत्स्वानुभूतमुक्तमनुक्तं च ॥ तत्सर्वं मत्परायणं मदेकनियतं सर्वस्यापि स्वविषयतावस्तु प्रथमाङ्क एव कृतं "वाचं न मिश्रयती"त्यादौ स्वविषयानुरागनिश्चायकप्रमाणस्योक्तत्वेन पूर्वोक्तव्याघातपरिहारायास्मिन् श्लोकेऽपि स्वविषयतानिश्चय एव युक्तः ॥ अहो कामी स्वतां पश्यतीत्यर्थान्तरन्यासस्तु स्वगर्वपरिहारायेति योज्यम् ॥

**विदूषक इत्यादि** ॥ तथा स्थितः ॥ अङ्गभङ्गविकल इवेति यावत् ॥ अनेनाङ्गिकहास्यमुक्तं भवति ॥ यथाहुराचार्याः ॥ नाटकप्रधानश्शृङ्गाररसानन्तरमन्ये रसा यथौचित्यं योज्या इति ॥ तत्र हास्यम्—"विकृताङ्गवयोद्रव्यभाषाकारादिकर्मभिः । अन्यान् हासयतीत्येवं हासो विद्वद्भिरुच्यते" अयं त्रिविधः । वाचिकनैपथ्याङ्गिकभेदात् ॥ "यद्यत्प्रहसनं वाक्यं तद्धासो वाचिकस्स्मृतः । विपर्यासेन विक्षेपो माल्याभरणवाससां ॥ यस्स नैपथ्यजो हास्य इति निर्णीयते बुधैः । विकटाभिनयत्वं यदङ्गानामवलोक्यते । स्वभावाद्वा तु कपटात्सहास्यश्चाङ्गिको भवेत्" अत्रायं पुनरपि पञ्चभेदः—"स्मितहसितमुपहसितं विहसितमपहसितमतिहसित"मिति ॥ अत्रोत्तममध्यमाधमभेदाद्व्यवस्था स्मितहसितं ज्येष्ठानां मध्यानां विहसितोपहसिते च । अधमानामपहसितं तथातिहसितं च विज्ञेयम् ॥" प्रकृते विकृतवेषदर्शनादाङ्गिकहास्यं स्फुटमेव ॥

**सस्मितमित्यादि** ॥ गात्रोपघातः अङ्गवैकल्यम् ॥ कुतः कस्माज्जात इतिशेषः ॥ अत्र सस्मितमित्यनेन विलासो नाम नायकस्य पौरुषसात्त्विक गुणउक्तः ॥ तदुक्तम्—

प्रासः । शार्दूलविक्रीडितं वृत्तम् । 'विदूषकेण वक्तव्यो वयस्येति च भूपतिः' इत्युक्तेर्वयस्येति सम्बुद्धिः । न मे हस्तपादं प्रसरति । वाङ्मात्रेण जापयिष्यामि । जय इति शब्दमुच्चरिष्यामी-

विदूषकः—[1]भो वयस्स जं वेदसो कु(खु)ज्जलीलं विडं बेदि । तं किं अत्तणो पहावेण उद(णं)णईवेअस्स ?

दुष्यन्तः—नदीवेगस्तत्र कारणम् ;

विदूषकः—[2]तहैव महवि भवं ॥

दुष्यन्तः—कथमिव ?

विदूषकः—[3]एव्वं तुए राअकज्जाइ उज्झिअ(तारिसे) एआरिसेसु आउळप्पदे(से)शेसु वणअरउत्तिणा होदव्वं ॥ अहं उण सच्चं पचहं सापद-

1 भो वयस्य, यद्वेतसः कुब्जलीलां विडम्बयति । तत्किमात्मनः प्रभावेण उत नदीवेगस्य ?

2 तथैव ममापि भवान् ॥

3 एवं त्वया राजकार्याण्युज्झित्वा एतादृशेष्वाकुलप्रदेशेषु वनचरवृत्तिना भवितव्यम् । अहं पुनरसत्यं प्रत्यहं श्वापदसमुत्सारणैस्संक्षुभितसन्धिबन्धानां मे गात्राणामनीशोऽस्मि संवृत्तः ।

"वृषभस्येव गम्भीरा गतिर्धीरं च दर्शनं । सस्मितं वचनं चैव स विलास इतीरितः" इति ॥ पौरुषगुणाः कथ्यन्ते—"शोभा विलासो माधुर्यं गाम्भीर्यं स्थैर्यतेजसी । ललितौदार्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः" न खल्विति ॥ खलु जिज्ञासायाम् ॥ भो इति सकोपप्रश्ने ॥ उतेति पक्षान्तरे अत्रापि प्रभावेणेत्यनुवर्तनीयम् ॥ स्वस्यानिष्टं स्वयं कथं सम्पादयेत् ॥ किंतु त्वन्निमित्तकएव स्वस्य दुःखानुभव इति भावः ॥ कथमिवेति प्रश्ने ॥ मन्निमित्तको दुःखानुभवः कथमिवेति यावत् ॥

त्यर्थः । वाङ्मात्रेणेति हस्तोत्क्षेपणासामर्थ्यमुक्तम् । कुतः किल स्वयमक्ष्याकुलीकृत्याश्रुकारणं पृच्छसि । कुतः पृच्छसीति सम्बन्धः । अवगच्छामि जानामि । यद्वेतसो वृक्षविशेषः कुब्जलीलां विडम्बयत्यनुकरोति तत्किमात्मनः प्रभावेण सामर्थ्येन । किमिति प्रश्ने । णं ननु परमताक्षेपे । नदीवेगस्य । प्रभावेणेत्यनुषज्यते । 'नन्विति परमताक्षेपानुज्ञैषणा पृष्टप्रतिवचनेषु' इति दण्डनाथः । एतेन त्वयैवेदं कृतमिति भावः । दृष्टान्तालङ्कारः । प्रकृते निगमयति—एवमिति । एवं राजकार्याण्युज्झित्वा तादृशे मनुष्यदुःसञ्चार आकुलप्रदेशे श्वापदाकुलस्थाने वनचरवृत्तिना त्वया भवितव्यम् । अद्याप्याखेटापरित्यागादिति भावः । यत्सत्यं प्रत्यहं श्वापदसमुत्सारणैः संक्षोभितसन्धिबन्धानां मम गात्राणामहमनीशः संवृत्तोऽस्मि । मम गात्राणि ममैव न भवन्तीत्यर्थः। यद्यस्मात्सत्यं संवृत्तोऽस्मीति सम्बन्धः । ता तस्मात् । 'शौरसेन्याम्' इत्यनुवृत्तौ 'तस्मात्ता' इति सूत्रेण ताआदेशः । प्रसादयिष्यामि विसर्जितुं मामेकाहमपि तावद्विश्रमितुम् । काश्यपसुतां शकुन्तलाम् । अनेन किमप्याभिजात्यं ध्वनयति । तथा तामित्येव ब्रूयात् ।

मुस्सारणेहिं स(ङ्खो)ङ्कुहिदसंधिबंधाणं म गत्ताणं अणीसोम्हि संवुत्तो ताप(सादरस्सं)सीददु भवं ॥ विसज्जेदुमं एक्काहं दावं विस्समिदुं ॥

**राजा**—(आत्मगतम्) वयस्यश्चैवमाह ॥ ममापि काश्यपसुतामनुस्मृत्य मृगयाविक्लबं चेतः ॥ कुतः

न नमयितुमधिज्यमस्मि शक्तो
धनुरिदमाहितसायकं मृगेषु ।
सह वसतिमुपेत्य यैः प्रियायाः
कृत इव मुग्धविलोकितोपदेशः ॥ २

---

तस्मात्प्र(सादयिष्यामि)सीदतु भवान् । विसर्जयतु मामेकाहमपि तावद्विश्रमितुं ॥

---

**वयस्य इत्यादि** ॥ मृगयाविक्लबं मृगयाविमुखम् ॥ अनुस्मृत्य तस्या दीर्घापाङ्गकटाक्षविशेषादीन् सदृशवस्तुदर्शनान्मुहुस्स्मृत्वा ॥ कुतः कस्मात्कारणात् ॥

इत्याशङ्क्याह—**न नमयितुमित्यादि** ॥ अधिज्यमिदं धनुः ॥ मृगेषु मृगविषये आहितसायकं कृत्वा नमयितुं न शक्तोऽस्मीति विशिष्टनिषेधः अन्यथा आहितसायकत्वेनैव नमनसिद्धेर्नमनमात्रनिषेधो विरुद्धस्स्यात् ॥ यैर्मृगैः प्रियायाः मुग्धमनोहरविलोकितोपदेशः कृतः ॥ उपदेशकरणे कारणं सहवसतिमुपेत्येति ॥ अन्यथा वनवृत्तिभिर्मृगैर्नगरावस्थिताया युवत्या उपदेशासम्भवात् ॥ कृत इवेति न तु साक्षात्कृतः तदसम्भवात्स्वाभाविकानामेव तादृग्विधानमुपदेश उत्प्रेक्ष्यते ॥

---

मृगयायां विक्लवं विह्वलम् । विरक्तमिति यावत् । अथ च मृगयेति स्त्रीलिङ्गनिर्देशादन्याङ्गनासक्तौ पूर्वाङ्गनायां विरक्तत्वमुचितमिति दर्शितम् ॥

**न नमयितुमिति** ॥ तेषु मृगेषु मृगविषयेऽधिज्यमारोपितज्यमाहितसायकं संहितबाणमिदं प्रत्यक्षेण परिदृश्यमानं धनुर्नमयितुं कर्णान्तमाक्रष्टुं न शक्तोऽस्मि । त्रयमपि विधेयम् । अतएव नार्थपौनरुक्त्यम् । यैर्मृगैः सहवसतिमेकत्र वासमुपेत्य प्राप्य प्रियायाः शकुन्तलाया मुग्धानि स्वभावसुन्दराणि । अथ च बालत्वाद्ब्रह्मचारित्वाच्चानधिगतहावभावानि विलोकितानि विलोकनानि तेषामुपदेशः कृत इवेत्युत्प्रेक्षा । अज्ञातज्ञापनमुपदेशः । सामान्यविशेषणसम्बन्धेन विशेषं लक्षयन्ननायासेन तत्प्रतिपत्तिं ध्वनयति । उत्तरार्धार्थस्य शक्त्यभावे हेतुत्वेनोपात्तत्वात्काव्यलिङ्गम् । एतयोरङ्गाङ्गिभावः सङ्करः । अत्र चेतोविक्लबत्वे कारणे प्रस्तुते तत्कार्यस्य धनुरानमनादेरुक्तत्वात्पर्यायेणोक्तम् । नाप्रस्तुतप्रशंसा । यतोऽत्र कारणवत्कार्यमपि प्रकृतमेव । तद्वर्णनमात्रत्वेनाप्रस्तुतस्यैव कार्यस्य वर्णनमिति महान्भेदः । वृत्त्यनुप्रासेन सह श्रुत्यनुप्रासस्य संसृष्टिः । नकारादीनां षोडशवर्णानां दन्त्यानां सत्त्वाच्छ्रुत्यनुप्रासः । पुष्पिताग्रा वृत्तम् । 'एवमात्माभिप्राय-' इत्यादिनैतदन्तेनानुस्मृतिस्तृतीयावस्था सूचिता । तल्लक्षणं तु—'अर्थानामनुभूतानां देशकालानुवर्तिनाम् । सातत्येन परामर्शो मानसः स्यादनुस्मृतिः ॥ तत्रानुभावा निःश्वासः कृत्यनुत्साहचिन्तने ॥' इति ।

**विदूषकः**—(राज्ञो मुखमवलोक्य) [1]अत्तभवं किं वि हिअए करिअ मन्तेदि ॥ अरण्णे खु मए रुदिअं ॥ (आसि)

**दुष्यन्तः**—(सस्मितम्) किमन्यत् ? अनतिक्रमणीयं (मे) सुहृ (द्वाक्य) द्वचनमिति स्थितोऽस्मि ॥

**विदूषकः**—[2]चिरं जीव ॥ (इति गन्तुमिच्छति)

**दुष्यन्तः**—वयस्य! तिष्ठ । सावशेषं मम वचः ॥

**विदूषकः**—[3]आणवेदु भवम् ॥

**दुष्यन्तः**—विश्रान्तेन भवता ममान्यस्मिन्ननायासे कर्मणि सहायेन भवितव्यम् ॥

**विदूषकः**—[4]किं मोदअ(खण्डिआए)खादणे ?

**दुष्यन्तः**—यत्र वक्ष्यामि ।

**विदूषकः**—[5](तेण हि अअं) गहीदो खणो ।

---

1 अत्रभवान् किमपि हृदये कृत्वा मन्त्रयते । अरण्ये खलु मया रुदितम् (आसीत्) ।

2 चिरं जीव ॥

3 आज्ञापयतु भवान् ॥

4 किं मोदक(खण्डिकायाम्)खादने ?

5 (तेन ह्ययं) गृहीतः क्षणः ।

---

**अत्तभवमित्यादि ॥** मन्त्रयते गुप्तं भाषते॥ किमपीत्यनेन त्वच्चित्तं परवशं दृश्यते॥ तस्मादस्मदुक्तोऽर्थस्त्वया नावगत इति भावः॥ रोदने सति चिरमनेन अरण्यरोदनं कृतमिति निवारकोऽपि श्रोता च कोऽपि नास्ति तद्वदितः परमपि स्वेन बहुजल्पितं चेत्तदपि न ज्ञास्यतीति भावः॥ अनतिक्रमणीयमनुल्लङ्घ्यं॥ अनेन संवरणं नाम सन्ध्यङ्गमुक्तं भवति ॥ तदुक्तं—"संवरणं तु तत् । संवृतिः कार्यदोषादेरि"ति । अत्र राज्ञा स्वाभिलाषविषयीभूतशकुन्तलावृत्तान्तगोपनं कृतमिति संवरणं ॥ क्षण इति ॥ निर्व्यापार स्थितिरित्यर्थः ॥

---

अत्रभवान्किमपि हृदये कृत्वा मन्त्रयते । अन्तः करण एव किमपि जल्पतीत्यर्थः । अरण्ये मए मया रुदितमासीत् । रुदितमिति भावे निष्ठा । त्वयि मद्विज्ञापनमरण्यरुदितवद्व्यर्थमित्यर्थः । त्वच्चित्तानुवर्तनं मया क्रियत इति विदूषकं प्रति ज्ञापनात्सस्मितमिति । किमन्यदिति भिन्नं वाक्यम् । आज्ञापयतु भवान् । किं मोदकखण्डिकायाम् । खण्डिका खण्डः । मोदकखण्ड इत्यर्थः । तेन ह्ययं सुगृहीतक्षणः । मोदकभक्षणं चेदमङ्गीकृतमित्यर्थः । 'नीचेषु प्राकृतं भवेत्' इत्युक्तेर्दौवारिकस्य प्राकृतं पाठ्यम् ।

**दुष्यन्तः**—(कः कोऽत्र भोः) (प्रविश्य दौवारिकः)

**दौवारिकः**—[1]आणवेदु भट्टा ।

**दुष्यन्तः**—रैवतक ! सेनापतिस्तावदाहूयताम् ।

**दौवारिकः**—[2]तह (इति निष्क्रम्य सेनापतिना सह प्रविश्य) [3]एसो अण्णाव-अणुक्कण्ठो भट्टा इदो दिण्णदिट्ठी चिट्ठ(दि)इ उव सप्पदु अज्जो ।

**सेनापतिः**—(राजानमालोक्य) *अदृष्टदोषेऽपि (दृष्टदोषापि) स्वामिनि मृगया केवलं (गुणएव) गुणायैव संवृत्ता । तथा हि देवः—

**अनवरतधनुर्ज्यास्फालनक्रूरपूर्वं**
**रविकिरणसहिष्णु स्वेदलेशैरभिन्नम् ।**

---

1 आज्ञापयतु भर्ता ।
2 तथा ।
3 एषआज्ञावचनोत्कण्ठो भर्ता इतो दत्तदृष्टिस्तिष्ठति । उपसर्पत्वार्यः ॥

---

**अदृष्टेत्यादि ॥** अदृष्टा अलक्षिता दोषाः कार्श्यादयो यस्मिन् स तथोक्तः ॥ गुणायैव गुणोत्पादनार्थमेव ॥ तदेवोपपादयति—

४ **तथाहीत्यादिना ॥** अनवरतधनुर्ज्याया आस्फालनेनाकर्षणेन क्रूरः कठिनः पूर्वः गात्रस्य पूर्वभागो यस्य स तथोक्तः ॥ अनेन सन्ततचापमौर्व्याकर्षणेन मृगयाकर्मणि राज्ञैव सर्वे मृगा निहता इति ध्वन्यते ॥ न तु राजप्रीत्यर्थमुपसर्पकभटैर्निहता इति यावत् ॥ तथा चेद्राज्ञोऽनवरतधनुर्ज्यास्फालनाभावात् ॥ तथैवाह—रविकिरणसहिष्ण्वति ॥ सूर्यातपसहनशीलम् ॥ अनेन राज्ञ एकाकितया बहुदेशभ्रमणं व्यज्यते ॥ छत्रधारकोऽपि नास्तीत्यर्थः ॥ छत्रधारणसद्भावे रविकिरणस्पर्शाभावात् ॥ स्वेदलेशैरभिन्नं असक्तं अपचितमपि कृशमपि व्यायतत्वाद्दृढत्वात् ॥ "व्यायतो दीर्घदृढयो"रिति वैजयन्ती ॥ अलक्ष्यं

---

आज्ञापयतु भर्ता । 'भट्टेति चाधमैः' इत्युक्तेः । रैवतकेति दौवारिकनाम । सेनापतिलक्षणमुक्तं मातृगुप्ताचार्यैः—'शीलवान्सत्त्वसम्पन्नस्त्यक्तालस्यः प्रियंवदः । पररन्ध्रान्तराभिज्ञो यात्राकालविशेषवित् ॥ अस्त्रशास्त्रादितत्त्वज्ञो लोके चाक्रम (वक्र) तां गतः । देशवित्कालविच्चैव भवेत्सेनापतिर्गुणैः' इति । आज्ञाया वचने दान उत्कठा यस्य सः । आज्ञाया वचनायोन्नतकण्ठ उन्नमिता ग्रीवा यस्य सः । भर्तेतो दत्तदृष्टिरेव तिष्ठति । उपसर्पत्वार्यः । अस्यापि संस्कृतं पाठ्यम् । तथा पूर्वमुक्तेः' गुण एवेति व्यस्तरूपकम् । 'देवः स्वामीति नृपतिर्भृत्यैः' इत्युक्तेर्देवेत्युक्तिः ॥

**अनवरतेति ॥** गिरिचरः पर्वतचरो नागो हस्तीव देवो राजा । प्रकरणाद्देवशब्दो राजवाचकः । प्राणो बलमेव सारः स्थिरांशो यत्र तत् । 'प्राणोऽनिले बले' इति हैमः ।

अपचितमपि गात्रं व्यायतत्वादलक्ष्यं
गिरिचर इव नागः प्राणसारं बिभर्ति ॥ ४

(उपेत्य) जयतु स्वामी, निगृहीतश्वापदप्रचारमरण्यमिदं किम(न्यत्राव) द्यापि स्थीयते ?

---

लघु प्राणसारं प्राणस्य शक्तेस्सारं स्थिरांशम् ॥ "सारो बले स्थिरांशे च न्याय्ये क्लीबे वरे त्रिषु" इत्यमरः ॥ नागो गजः । देवो बिभर्तीति सम्बन्धः ॥ मृगयाकर्मणि परिश्रान्तस्य देवस्येदानीमत्रावस्थानं युक्तमिति भावः ॥

निगृहीतेत्यादि ॥ निगृहीतश्वापदं निरुद्धशरभादिसञ्चारम् ॥

---

'सारो बले स्थिरांशे च' इत्यमरः । गात्रं वपुर्बिभर्ति । 'गात्रं वपुः संहननम्' इत्यमरः । गिरिचरपदेन स्वातन्त्र्यं सूचितम् । कीदृक् । अनवरतं निरन्तरं यद्धनुर्ज्यायाः आस्फालनं तेन क्रूरः कठिनः पूर्वः पूर्वभागो यस्य तत् । 'क्रूरं भयङ्करं ज्ञेयं क्रूरौ कठिननिर्दयौ' इति धरणिः । अनेन दनुजास्त्रप्रहारक्षमं बलं ध्वन्यते । रविकिरणसहिष्णु । आतपेऽप्यक्लान्तमि-त्यर्थः । अनेन दुःखसहिष्णुत्वमुक्तम् । स्वेदलेशैरभिन्नम् । स्वेदैस्तु न मिश्रं तल्लेशैरपि न सम्बद्ध-मित्यर्थः । अनेन श्रमजयित्वम् । अपचितं कृशमपि व्यायतत्वात्प्रकाण्डत्वादलक्ष्यम् । कृशत्वेन न लक्ष्यत इत्यर्थः । अनेन महापुरुषचिह्नं शालप्रांशुत्वादि । हस्तिगात्रपक्षेऽपि विशेषणानि योज्यानि । अनवरतं धनुर्ज्यायाः प्रियालद्रुमभूमौ यदास्फालनमर्थात्प्रियालद्रुमाणामेव तेन कठिनपूर्वभागम् । 'धनुः संज्ञा प्रियालद्रौ राशिभेदे शरासने' इति विश्वः । 'ज्या मौर्वी च वसुन्धरा' इति धरणिः । अन्यानि विशेषणानि स्पष्टानि । वररवि णसणसेति छेकवृत्ति-श्रुत्यनुप्रासाः । परिकरालङ्कारः श्लेष उपमा च । मालिनीवृत्तम् । ननु धनुर्ज्याशब्देनैव गतार्थत्वादर्थपौनरुक्त्यमिति चेन्न । 'धनुर्ज्याध्वनौ धनुः प्रतीतिरारूढेः प्रतिपत्त्यै' इति वामनोक्तेः । आरूढप्रतीतिरास्फालनशब्देनैव जातेति दोषस्तदवस्थ एवेति चेन्न । भिन्नपदेन व्याख्यानात् । कीदृग्गात्रम् । न नवमनवं रतं सम्बद्धं धनुर्यत्र तत् । सर्वदासन्नधनुरित्यर्थः । द्वितीयेऽनवं च तत्सम्बद्धप्रियालु चेति योज्यम् । 'शिखरिचरकरीव प्राणसारम्' इति पठित्वा प्रयोगनियमभङ्गः परिहर्तव्यः । यतस्त इवादयो यत्पुरः श्रूयन्ते तस्यैवोपमानत्वं कल्पयन्ति । अथवा विशेषणात्प्रयुक्ता नोपमानबुद्धिं तत्र जनयन्त्यसम्भवात् ततो विशेष्य एव पर्यवसानादिति यथास्थितमेव चारु । एतच्चोपमानप्रपञ्चे मया सुनिरूपितम् । अनेन पद्येनाग्रिमेण 'मेदः' इत्यादिना च वीथ्यङ्गं मृदवं नामोपक्षिप्तम् । तल्लक्षणम्—'दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत्' इति । यद्यप्येषामानुरथा (न्युरवा) नुषङ्गत्वमुक्तं तथाप्य-भिनवभारत्यामाचार्याभिनवगुप्तपादैः प्रथमसन्ध्युपलक्षणत्वं द्वादशानामुक्तम् । तथैवोदाहृतं धनिकेन अतएव च त्रिगतलक्षणे धनिकः—'नटादित्रितयालापः पूर्वरङ्गे तदिष्यते' इति योज्यम् । क्वचित् 'किमत्रावस्थीयते' इति पाठः । क्वचित् 'किमन्यदवस्थीयते' इति पाठः । तदैकवाक्यम् । अद्य किमवसन्नं कर्तव्यम् । किमप्यस्तीत्यर्थः ।

**दुष्यन्तः**—सेनापते ! भग्नो(मन्दो)त्साहः कृतोऽस्मि मृगयापवादिना माढव्येन ।

**सेनापति**—(जनान्तिकम्) सखे विदूषक, स्थिर(प्रतिबन्धो)प्रतिज्ञो भव । अहंतावत्स्वामिनश्चित्तवृत्तिमनुवर्तिष्ये । (प्रकाशम्) प्रलपत्वेष वै(धवेयः) धेयः । ननु प्रभुरेवात्र निदर्शनम् ।

**मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः**
**सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।**

---

मृगयापवादिना मृगयामपवदते दोषानुक्त्वा दूषयतीति स तथोक्तः ॥ शीलार्थप्रत्ययेन सार्वकालिकमृगयानिन्दा व्यज्यते । माढव्य इति विदूषकस्य नाम ॥ प्रलपतु गुणानभिज्ञतया यद्वा तद्वा जल्पतु वैधेयः वैधेयः अज्ञः ॥ "अज्ञे मूढयथाजातमूर्खवैधेयबालिशा" इत्यमरः ॥ नन्विति सम्बोधने ॥ निदर्शनं दृष्टान्तः ॥

**५ मेद इत्यादि ॥** मेदसः स्थौल्यजनकधातुविशेषस्य छेदेन नाशेन कृशं उदरं यस्य तथोक्तम् ॥ उत्थानयोग्यम् ॥ उत्साहयोग्यमिति वा पाठः ॥ अश्वाद्यारोहणव्यवहारार्हमिति यावत् ॥ सत्त्वानां जन्तूनाम् ॥ "सत्त्वोऽस्त्री जन्तुषु क्लीबे व्यवसाये पराक्रम" इति वैजयन्ती ॥ भयक्रोधयोस्सतोर्विकृतिमद्विकारवत् भीतं क्रुद्धमिति ज्ञायत इत्यर्थः ॥ चले चञ्चले लक्ष्ये शरव्ये इषवः बाणाः ॥ बहुवचनेन यादृच्छिकैकलक्ष्यवेधो निरस्यते ॥ किन्तु सर्वे इषवश्चञ्चलशरव्यवेधका इति यावत् ॥ सिध्यन्ति फलन्ति ॥ उत्कर्षोऽतिशयः ॥ मिथ्या मृषैव व्यसनं विपत्करं वदन्ति ॥ गुणानभिज्ञा लोका इति शेषः ॥ ईदृग्विनोदः एवंविधक्रीडा कुतः कस्मात् ॥ नान्यस्माद्भवतीत्यर्थः ॥ यस्तु स्थूलदेही न भवति स्वयं

---

मन्दोत्साह इति । अर्थान्मृगयायाम् । मृगयापवादिना आखेटकनिन्दकेन । 'अपवादो तु निन्दाज्ञे' इत्यमरः । माढव्येन विदूषकेण । स्थिरः प्रतिबन्धो मृगयाप्रतिबन्धो यस्य सः । क्वचित् 'वैधेयः । इति पाठः । स श्रेयान् । मूर्ख । इत्यर्थः । 'अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः' इत्यमरः ॥ तेनायमर्थः असौ मूर्खः प्रलपतु । मृगयापवादं वदत्वित्यर्थः । ननु प्रभुरेव निदर्शनम् । मृगयागुणवत्त्वे 'अनवरत-' इति पूर्वमुक्तेस्तमेवार्थमप्रस्तुतप्रशंसया समर्थयते ॥

**मेद इति ॥** मेदसो वसायाश्छेदेनाल्पीभावेन कृशमुदरं यस्य तत् । अतो लघु । तत एवोत्थानयोग्यमुद्योगयोग्यम् । 'उद्योगे च तथोत्थानम्' इति धरणिः । सत्त्वानां जन्तूनाम् । 'सत्त्वमस्त्री तु जन्तुषु' इत्यमरः । भयक्रोधयोर्निमित्तयोर्विकृतिमद्विकारयुक्तं चित्तं लक्ष्यते । अपिः पूर्ववाक्यसमुच्चये । भये जन्तोरीदृशं चित्तम्, क्रोधे चेदृगिति ज्ञायत इत्यर्थः । स च धन्विनां धानुष्काणामुत्कर्षः । यच्चले चञ्चते लक्ष्य इषवो बाणाः सिध्यन्ति चञ्चललक्ष्यवेधका भवन्ति चेति । चः समुच्चये । तेन क्रियासमुच्चयालङ्कारः । ईदृग्विनोदः कौतुकं कुतः कुत्र । न कुत्रापीत्यर्थः । अथ चेदृग्विनोदः । कुतः । क इत्यर्थः । सार्वविभक्तिक-

उत्कर्षः स च धन्विनां यदिषवस्सिद्ध्यन्ति लक्ष्ये चले
मि(थ्यैव)थ्या हि व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥ ५

**विदूषकः**—[1]अत्तभवं पकिदिं आवण्णो तुमं दाव अडवीदो अडवीं आहिंडंतो (णर) णासिआमिअलोलुवस्स कस्स वि जिण्णरिच्छस्स मुहे णिप दि(डि)स्ससि ॥

**दुष्यन्तः**—भद्र सेनापते! किं बहुना? आश्रमसन्निकृष्टे स्थिताः स्मः॥ अत(स्ते वचो)स्त्वद्वचनं नाभिनन्दामि ॥ अद्यतावत्—

---

1 अत्रभवान् प्रकृतिमापन्नस्त्वं तावदटवीतोऽटवीमाहिंडन् (नर) नासिकामिषलोलुपस्य कस्यापि जीर्णऋक्षस्य मुखे निपतिष्यसि ॥

---

पर्यटनं कर्तुं समर्थः यदीयबाणाश्चञ्चललक्ष्यं वेधयन्ति । तस्यैव मृगया विनोदाय भवति ॥ यस्तु एतादृशो न भवति तस्यैव विपत्करीति भावः ॥ "व्यसनं विपदि भ्रंशे दोषे कामजकोपज" इत्यमरः ॥ अत्र श्लोके गुणातिपातो नामालङ्कारः ॥ तदुक्तम्—"गुणाभिधानैर्विविधैर्विपरीतार्थयोजितैः । गुणातिपातो मधुरो निष्ठुरार्थो भवेदथ" इति ॥ अत्र दुष्यन्तस्य मृगयाव्यसनस्य विरुद्धगुणत्वेन विदूषकस्यानभिमतत्वान्निष्ठुरेणापि मधुरवचनेनोपन्यासेन मृगया गुणो वर्णित इति गुणातिपातः ॥ किञ्चानेन श्लोकेन छलं नाम वीथ्यङ्गमुक्तम्—"प्रियाथैरप्रियैर्वाक्यैर्विलोभ्य च्छलनं छलम्" अत्र राज्ञश्शकुन्तळाव्यापारहृतचित्तत्वेन सेनापतेरपि प्रयासबाहुळ्येन विदूषकेण सह जनान्तिकवचने सखे स्थिरप्रतिज्ञो भवाहं तावदित्यादिना मृगयानिश्चयस्य द्योतितत्वेनोभयोरपि मृगयेच्छां विलोभ्य मृगयास्तवनं छलम् ॥

**अत्तभवमित्यादि** ॥ प्रकृतिं स्वभावं मृगयाविमुखतामिति यावत् ॥ जीर्णऋक्षस्य वृद्धभल्लूकस्य ॥ वृद्धभल्लूकस्तु सर्वगात्राणां मांसलतया लम्बमानपक्षरुद्धनेत्रस्सन्गमनाशक्तिस्तिष्ठति ॥ यदि किञ्चिद्दैवात्स्वस्मिन्पतितं न परित्यजतीति भावः ॥

**भद्रेत्यादि** ॥ भद्र सुमुख ॥ कोपरहितेति यावत् ॥ अनेन विदूषकेण यत्किञ्चित्पारुष्यमुक्तं मनसि न कर्तव्यमिति भावः ॥ स तु मूर्खस्त्वमुपशान्त इति व्यज्यते ॥ अद्येत्यादि ॥ अद्य अत्राह्नि तावत् साकल्ये ॥

---

स्तसिल् । मृगयाया व्यसनत्वाभावे पूर्ववाक्यं हेतुत्वेनोपात्तमिति काव्यलिङ्गम् । वृत्त्यनुप्रासश्च । शार्दूलविक्रीडितं वृत्तम् । 'जयति स्वामी' इत्यादिनैतदन्तेन दाक्षिण्यं नाम भूषणमुपक्षिप्तम् । तल्लक्षणम्—'चित्तानुवर्तनं यत्र तद्दाक्षिण्यमितीरितम्' इति । अत्रभवान्प्रकृतिं स्वभावमापन्नः प्राप्तः । त्वं तावदटवीतोऽटवीमाहिण्डमानो नरनासिकालोलुपस्येति स्वभावोक्तिः । जीर्णऋक्षस्य वृद्धभल्लूकस्य कस्यापि मुखे पडिस्ससि पतिष्यसि । 'आशंसायां भूतवच्च' इति चकाराद्वर्तमानवच्चेत्याशंसायां वर्तमानवत्प्रत्ययः । अद्य तावदिति श्लोकशेषः ॥

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विस्रब्धं क्रियतां वराह(प)ततिभिर्मुस्ताक्षतिः पल्वले
विश्रा(न्तिं)मं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥ ६

६ **गाहन्तामिति ॥** महिषा निपानसलिलं आहावजलम् ॥ "आहावस्तु निपानं स्यादुपकूपजलाशये" इत्यमरः ॥ शृङ्गैर्विषाणैः मुहुर्बहुशः ताडितं यथा तथा गाहन्तां विलोलयन्तु ॥ यथेच्छं क्रीडन्त्वित्यर्थः ॥ छायासु वृक्षच्छायासु बद्धकदम्बकं कृतयूथम् ॥ रोमन्थं हनुचलनं अभ्यस्यतु निश्शङ्कतया मुहुरावर्तयतु वराहततिभिर्वराहसमूहैः विस्रब्धं यथेच्छं यथा तथा ॥ मुस्ताक्षतिः ॥ पल्वले "पल्वलं चाल्पसर" इत्यमरः ॥ वराहास्तु बहुजले न प्रविशन्ति । किंतु पङ्कप्राये जलएवेति भावः ॥ आश्रमे ऋषीणां

**गाहन्तामिति ॥** महिषाः शृङ्गैर्मुहुर्वारंवारं ताडितमुत्फालितं निपानसलिलमाहावजलं गाहन्तामालोडयन्तु । अनेन त्रासाभावाद्प्रकृतिप्रत्यासत्तौ शृङ्गाभ्यां पर्यायेण जलताडनं महिषजातिरुक्ता । एवमग्रिमयोरपि जातिकथनमुन्नेयम् । 'आहावस्तु निपानं स्यादुपकूपजलाशये' इत्यमरः । छायायां बद्धं कदम्बकं समूहो येन तन्मृगकुलं रोमन्थमुद्गिलितकबलचर्वणमभ्यस्यत्वित्यनेन परस्परवार्तानभिज्ञानां पलायनपरायणानां रोमन्थोऽपरिचितचर इवासीत्तस्येदानीं शिक्षाक्रमेण परिचयदार्ढ्यं भवत्वित्युक्तं भवति । कदम्बानां बहुत्वात्कुलमत्रान्यपदार्थः । वराहपतिभिः सूकरश्रेष्ठैरित्यनेन तादृशानामस्मन्मृगयासंरम्भगोचरत्वमिति प्रकाश्यते । आपातशौण्डाः परिणतिभीरवो महिषाः, स्वभावभीता मृगाः, वराहास्तु परावृत्तिचतुराः प्रकारकोविदाश्चेति श्रेष्ठत्वम् । विश्रब्धं साश्वासं पल्वले । 'वेशन्तः पल्वलं चाल्पसरः' इत्यमरः । मुस्ताक्षतिः मुस्तोत्खननं क्रियताम् । पूर्ववाक्ययोर्विश्वासमन्तरेण तादृशं विशिष्टं कर्म कर्तुमेव न शक्यत इति तत्र विश्वासोऽर्थायातः । अत्र तुरगवदाद्यन्त (दात्त) घासग्रासन्यायेनापि मुस्ताक्षतिः सम्भवतीति विस्रब्धमित्युपात्तम् । इदं नानाविधदानवसेनाविनाशित्वाद्यर्थान्तरसंक्रमितवाच्यम् । अस्मद्धनुश्च शिथिलज्याबन्धमवरोपितज्याबन्धं विश्रामं लभताम् । अव्यापारं तिष्ठत्वित्यर्थः । अत्र राजवचनेनैव धनुषः स्वसम्बन्धे ज्ञाते पुनरस्मादित्यवकररूपमिति ये मन्यन्ते तैः पञ्चमीबहुवचनतया भिन्नपदत्वेन व्याख्येयम् । अस्मत्सकाशाद्विरतं भवत्वित्यर्थः । विश्रान्तेर्व्यापारविरामत्वादवधौ पञ्चमी । चकारेण चेदमस्मद्धनुरारूढमवतीर्णं वा तदैव संरम्भगोचराणां भयविस्रम्भाविति कोऽपि प्रकर्षो व्यज्यते । अतएवास्मदिति बहुवचनमपि सबीजम् । अन्ये तु राज्ञो नायिकावियोगेन दुःखितस्यान्येषां तद्वियोगाद्दुःखं मा भवत्वित्यभिप्रायेणोक्तिरिति वदन्ति तेषां महिष्यश्च महिषाश्चेत्येकशेषेण, मृग्यश्च मृगाश्चेत्येकशेषेण, अथवा 'कुलं जनपदे गृहे' इति कोशान्मृगमिथुनाक्षेपकेण कुलशब्देन मुस्ताविश्रान्तिज्यानां नायिकात्वारोपवशेन क्षतौ नखदन्तक्षतारोपेण । 'आबन्धो दृढबन्धे स्यात्प्रेमालङ्कारयोरपि' इति कोशादाबन्धशब्दस्य स्नेहार्थत्वेनेति व्याख्येयम् । श्रुतिवृत्त्यनुप्रासो । स्वभावोक्तिः । पादत्रये क्रियासमुच्चयः सर्वस्मिन्स्वस्याक्रियत्वादन्येषां नानाक्रियाजननाद्विरोधः ।

प्रभावादकालेऽपि जन्तूनां यदपेक्षितं तत्सर्वमस्तीति भावः॥ शिथिलज्याबन्धसवरोपितगुणकं आश्रमनिकटे मृगया न क्रियत इत्यर्थः ॥ अत्र प्रथमान्तत्वेनोपक्रान्तस्य प्रक्रमस्य वराहततिभिरिति तृतीयान्तत्वेनोपादानात्कारकस्य च प्रक्रमभङ्गदोषं वदन्ति ॥ अत्र तु कविप्रयुज्यमानकर्तृभेदप्रक्रम इति कर्तृव्यत्यासो नाम चमत्कारकारी गुणः न दोषः॥ यद्वा— कवेस्तु रसपरवशतया न दोषः॥ उक्तं च—"पदविह्वलता क्वापि स्पृहणीया भवति रसकवींद्राणां। घनजघनस्तनमण्डलभारालसगामिनीनां" चेति ।

---

वस्तुस्वाभाव्यादाभासत्वं काव्यलिङ्गं व्यङ्ग्यम् । कार्यकारणयोः समकालत्वेनोक्तेरतिशयोक्तिश्च। वृत्तमनन्तरोक्तम्। अत्र केचन कारकप्रक्रमभङ्गभिया 'कुर्वन्त्वस्तभियो वराहपतयो मुस्ताक्षतिम्' इति पाठमपठन्। ननु कारकप्रक्रमभङ्गे परिहृते सति प्रक्रमभङ्गो नैव परिहृत इति चेन्मैवं वोचः। अनेन पाठेन सोऽपि परिहृत एव। यतः पूर्वमात्मनेपदं पश्चात्परस्मैपदं पुनः परस्मैपदं पुनरात्मनेपदमित्यारोहावरोहरूपः क्रमोऽस्तु। किञ्च महिषादिविषयतया आशंसालक्षणोऽर्थोऽभिप्रेतः कवेः। स च निर्व्यूढ एव कविनेति नायं प्रक्रमभङ्गदोषस्य विषयः। यथा—'पृथ्वि स्थिरा भव भुजङ्गम धारयैनां त्वं कूर्मराज तदिदं द्वितयं दधीथाः। दिक्कुञ्जराः कुरुत तत्त्रितये दिधीर्षां देवः करोति हरकार्मुकमाततज्यम्॥' इत्यत्र। एवं वचनप्रक्रमभङ्गोऽपि परिहृतो भवति। पूर्वं बहुवचनं पुनरेकवचनं पुनर्बहुवचनं पुनरेकवचनमित्येव क्रमः। विशेषणप्रक्रमभङ्गोऽपि 'घ्नन्तो विषाणैर्मुहुः' इति परिहृतो भवति। एवं पुंनपुंसककर्तृनिर्देशाल्लिङ्गप्रक्रमभङ्गोऽपि परिहृतः। न चात्र द्वितीयचरण इव कर्तृविशेषणकर्तृकर्मक्रियाक्रमेण निबन्धाभावात्क्रमप्रक्रमभङ्ग इति वाच्यम्। कर्त्रादिव्यस्तत्वस्य विधिवाक्य एव दुष्टत्वान्नानुवादवाक्ये। प्रकृतस्य चानुवादवाक्यत्वात्। विशेषणव्यस्तत्वस्यापि न दूषकत्वम्। तद्धि द्विविधम्। अन्तरङ्गं बहिरङ्गं च। तत्रोपसर्गनिपातरूपमन्तरङ्गम्। तेषां धातुनाम्नोः पूर्वं पश्चाच्च क्रमेण प्रयोगस्य नियतत्वात्। तत्र निपातरूपाणि विशेषणानि येष्वनन्तरं प्रयुज्यन्ते तेष्वेव विशेषमाधातुमलं नान्यत्र। तेनायथास्थाननिवेशिनो हि तेऽर्थान्तरमनभिमतमेव स्वोपरागेण रञ्जयेयुः। ततश्च प्रस्तुतार्थस्यासामञ्जस्यप्रसङ्गात्तद्दूषकत्वम्। बहिरङ्गं तु व्यवहितमपि स्वां शक्तिं विशेष्योपदधात्येवेति। तदुक्तं महिमभट्टेन—'विशेषणं हि द्विविधमान्तरं बाह्यमेव च। तत्राव्यवहितं सद्यदर्थकारि तदान्तरम्॥ स्फटिकस्येव लाक्षादि द्वितीयमुभयात्मकम्। अयस्येव त्वयस्कान्तं तदपि द्विविधं मतम्॥ असमानसमानाधिकरणत्वविभेदतः। विशेषोऽपि द्विधा ज्ञेयो धातूनामर्थभेदतः॥ साध्यत्वार्थत्वभेदेन नाम्नोऽर्थोऽपि द्विधा मतः। तत्रोपसर्गाणां प्रायो धात्वर्थो विषयो मतः॥ चादीनां तु निपातानामुभयं परिकीर्तितम्। केवलं हि विशेष्यात्स्युः पूर्वं पश्चाच्च ते क्रमात्॥ विशेषणानामन्येषां पौर्वापर्यमयन्त्रितम्। अतएव व्यवहितैर्बुधा नेच्छन्ति चादिभिः॥ सम्बन्धं ते हि शक्तिं स्वामुपदध्युरनन्तराः। सान्तरत्वे तु तां शक्तिमन्यत्रोपदधत्यमी। ततश्चार्थासामञ्जस्यादनौचित्यं प्रसज्यते॥' इति। किञ्च। रसप्रतीतिव्याहतिकृत्त्वं दोषत्वम्। न चात्र तदस्ति। सहृदयहृदयानां तत्प्रतीतेरव्याहतत्वात्। तथाह्यत्राभिलाषविप्रलम्भ एतत्प्रकरणव्यङ्ग्यस्तत्तृतीयानुस्मृत्यवस्थायाः कार्योत्साहलक्षणस्यानुभव-

सेनापतिः—यत्प्रभविष्णवे रोचते ॥

दुष्यन्तः—तेन हि निवर्तय पूर्वगतान् वनग्राहिणः यथा च (न) मे सैनिकास्तपोवनं (उपरुन्धन्ति) दूरात्परिहरिष्यन्ति । तथा निषेद्धव्याः ॥

पश्य—

शमप्रधानेषु तपोधनेषु
गूढं हि दाहात्मकमस्ति तेजः ।
स्पर्शानुकूला इव सूर्यकान्ता-
स्तदन्यतेजोऽभिभवाद्वमन्ति ॥ ७

यदित्यादि ॥ वनग्राहिणः वनावरोधकान् ॥ वागुरिकानित्यर्थः ॥ निवर्तय प्रत्यावर्तय निषेद्धव्या निवारणीयाः निषेधे कारणमाह ॥

७ पश्य इत्यादिना ॥ शमश्शान्तिः प्रधानं मुख्यो गुणो येषां ते तथोक्ताः ॥ तेषु गूढमप्रकाशं दाहात्मकं दहनशीलम् ॥ न तु परोक्षानर्थकारि किंतु सद्यः प्रत्यक्षत एव नाशकरमिति भावः ॥ अस्ति विद्यते ॥ वर्तमानव्यपदेशेन क्रियाकरणे सामग्र्यन्तरापेक्षा तपोधनानां नास्तीति व्यज्यते ॥ तेजः प्रभावः ॥ महान्तस्तु डाम्भिका न भवंतीति भावः ॥ अत्र दृष्टान्तमाह—स्पर्शानुकूला इति ॥ स्पर्शानुकूला स्पर्शे अनुगुणाः सुस्पर्शा इति यावत् ॥ सूर्यकान्ताश्शिलाविशेषाः ॥ अन्यतेजोऽभिभवात्तेजोऽन्तरतिरस्कारात् ॥ तपो-

स्यातिस्फुटत्वात् । 'विश्रामम्' इत्यपाणिनीयः पाठः । 'विश्रान्तिम्' इति पठनीयम् । प्रभवति तच्छीलः प्रभविष्णुस्तस्मै राज्ञे । 'भुवश्च-' इतीष्णुच् ॥

शमेति ॥ शमः शान्तिरेव प्रधानं येषां तेष्वतएव तप एव धनं येषां तेषु । दाहजनकं लक्षणया दाहस्वभावं शीघ्रकार्यकारित्वफलम् । गूढं गुप्तम् । अन्यजनादृश्यं तेजोऽस्ति । हि यस्मात्स्पर्शोऽनुकूलो येषां पदादिनाशकत्वात्ते सूर्यवत्कान्ता मनोहरास्ते तपस्विनः । अन्यस्य राजादेस्तेजसाभिभवः पराभवस्तस्मात्तत्स्वीयं तेजो वमन्ति प्रकटयन्ति । क इव । स्पर्शे सत्यदाहकाः सूर्यकान्ताः पाषाणविशेषा यथान्यस्य सूर्यस्य तेजसोऽभितो भवो भवनं प्राप्तिः । सम्बन्ध इति यावत् । तेन स्वकीयं तेजः प्रकटयन्ति तथेत्यर्थः । श्लेषोपमा अनुमानं काव्यलिङ्गं च । धावनेऽस्ति तेजस्तेज इति छेकश्रुत्यनुप्रासौ । इन्द्रवज्रोपेन्द्रवज्रयोर्भवमुपजातिवृत्तम् । अत्र वमन्तीत्यश्लीलशङ्का न कार्या । यत्र स्ववाच्ये वान्तशब्दः प्रयुज्यते तत्र दोषः । 'तेऽन्यैर्वान्ते समश्नन्ति' इत्यत्रोद्गिरणसम्बन्धात्प्राकट्यं लक्षयंस्तस्यावश्यकत्वं, प्राकट्ये चोपायसहस्रैरप्यप्रतीकार्यत्वमन्यविलक्षणत्वादिधर्मसहस्रं ध्वनयति यथा 'वमद्भिरिवेक्षणैः' इत्यादिषु । तदुक्तं काव्यादर्शे—'निष्ठ्यूतोद्गीर्णवान्तादिगौणवृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ॥' इत्यत्रापि तथैवोक्तेः ।

**सेनापतिः**—यदाज्ञापयति स्वामी ॥

**विदूषकः**—[1]धं(सदु)सिदो दे उ(च्छा)स्साहउत्तन्तो गच्छ दासीएउत्त

(निष्क्रान्तः सेनापतिः)

**दुष्यन्तः**—(परिजनं विलोक्य) अपनयन्तु भवत्यो मृगयावे(शं)षं रैवतक! त्वमपि (स्वं) नियोगमशून्यं कुरु ॥

(परिजनः) **प्रतीहरी**—[2]जं देवो आणवेदि ॥

(इति निष्क्रान्तः)

**विदूषकः**—[3]किदं भवदा दाणिं निम्म(च्छि)क्खिअम् ॥ सम्पदं एदस्सिंपा(द)अवच्छाआए अविरळळदाविदाणसणाहे आसणे णिसीददु भवम् ॥ अहं वि दाव सुहासीणो होम्हि ॥

**दुष्यन्तः**—गच्छाग्रतः ॥

---

1 (ध्वंसतां त) ध्वंसितस्त उत्साहवृत्तान्तः। गच्छ दास्याः पुत्र!

2 यद्देव आज्ञापयति ॥

3 कृतं भवतेदानीं निर्मक्षिकम्। साम्प्रतमेतस्यां पादपच्छायायामविरळलतावितानसनाथे आसने निषीदतु भवान्। अहमपि तावत्सुखासीनो भवामि ॥

---

धनपक्षे अन्येषां तेजोबलम् ॥ सूर्यकान्तपक्षे सूर्यातपतिरस्कारः ॥ यत्तेजो दाहात्मकं तत्तेज इति यावत् ॥ वमन्ति उद्गिरन्ति ॥ तथाहि ॥ द्विविधो यत्तदोरुपक्रमोपसंहारक्रमः शाब्द आर्थश्चेति तत्र द्वयोरुपादाने शाब्दः ॥ एकतरोपादाने आर्थः ॥ द्वयोरनुपादानेऽप्यार्थ इति चतुर्थः ॥ अत्र तपोधनमाहात्म्यवर्णनव्याजेन राज्ञा शकुन्तलाया बलादाहरणं न कार्यमिति विचारितमिति भावः ॥ बलादाहरणे सद्य एव सर्वानर्थकारी शापो भवेदिति व्यज्यते ॥ अत्र दृष्टान्तालङ्कारः ॥ तदुक्तम्—"सपक्षे दर्शनं हेतोः दृष्टान्तस्साध्यसिद्धय" इति ॥ अत्र तपोधनेषु गूढदाहात्मकतेजस्सद्भावे साध्ये तत्साधकस्यान्यतेजस्तिरस्कारजनिततेजस्समुद्गाररूपस्य हेतो स्सूर्यकान्तेषु दर्शितत्वाद्दृष्टान्तः ॥

**यदित्यादि ॥** यदाज्ञापयति। तत्करवाणीति शेषः ॥ **अपनयन्त्विति ॥** भवत्य इति परिसरवर्तिन्यो यवनिका उच्यन्ते मृगयावेषं मृगयार्थं कल्पितं हरितकंचुकादिकम् ॥

**किदमिति ॥** कृतं भवतेदानीं निर्मक्षिकम् ॥ विविक्तं कृतमित्यर्थः ॥

---

ध्वंसतां त उत्साहवृत्तान्तः। स्वं नियोगं द्वारस्थितिरूपम्। यद्देव आज्ञापयति। कृतं भवता निर्मक्षिकम्। जनराहित्यमित्यर्थः। साम्प्रतमेतस्यां पादपच्छायायां विरोचितेन लतावितानेन वल्लीचन्द्रातपेन दर्शनीयायां रमणीयायामासने निषीदतु भवान्, यावदहमपि सुखासीनो भवामि। अहं तु कण्डितासंधित्वेन क्षणमप्युपवेशनं विना स्थातुं न शक्नोमि। तवोपवेशनेन विना मम तदत्यन्तमनुचित-

**विदूषकः**—[1]एदु एदु भवम् ॥

(उभौ परिक्रम्योपविष्टौ)

**दुष्यन्तः**—माढव्य अनवाप्तचक्षुःफलोऽसि ॥ येन त्वया दर्शनीयं न दृष्टम् ॥

**विदूषकः**—[2]णं भवं अग्गदो मे वट्टदि ॥

**दुष्यन्तः**—सर्वः (खलु) कान्तमात्मीयं पश्यति ॥ अहं तु तामेवाश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि ॥

1 एत्वेतु भवान् ॥
2 ननु भवानग्रतो मे वर्तते ?

**माढव्येत्यादि ॥** अनवाप्तमलब्धं चक्षुःफलं दर्शनीयवस्तु येन स तथोक्तः ॥ नयनसद्भावस्य तादृग्विषयविलोकनेनैव साफल्यमिति भावः ॥

**णं इत्यादि ॥** दर्शनीयस्त्वं पुरोवर्तसे खलु ॥ तस्मादवाप्त चक्षुःफलो भवामीति यावत् ॥ सर्वः सकलो जनः आत्मीयं स्वकीयं कान्तं मनोहरम् ॥ स्वकीयमरम्यमपि स्नेहवशाद्रम्यमेव दृश्यत इति भावः ॥ आश्रमललामभूतामाश्रमालङ्कारभूतां तामेव पूर्वप्रसञ्जितामेवाधिकृत्य विषयीकृत्य ॥

मिति शीघ्रमुपविशेति भावः । एतु भवान् । 'राजा—माढव्य, अनवाप्तचक्षुःफलोऽसि' इत्यारभ्य तृतीयाङ्कसमाप्तिपर्यन्तं प्रतिमुखसंधिः । तल्लक्षणं तु सुधाकरे—'बीजप्रकाशनं यत्र दृश्यादृश्यतया भवेत् । तत्स्यात्प्रतिमुखम्' इति । तत्र 'अज्जवि से तं एव्व चिन्तअन्तस्स अक्खीसु पभादं आसी' । 'विश्रान्तेन भवता ममाप्यनायासे कर्मणि सहायेन भवितव्यम्' इत्यनेन च विदूषकेण दृश्यस्य तत्सखीभ्यामदृश्यस्य च । दशरूपके—'बिन्दुप्रयत्नानुगमादङ्गान्यस्य त्रयोदश । विलासः परिसर्पश्च विधूतं शर्मनर्मणी । नर्मद्युतिः प्रगमनं निरोधः पर्युपासनम् । वज्रं पुष्पमुपन्यासो वर्णसंहार इत्यपि ॥' इति । अङ्गलक्षणं तत्र तत्र व्याख्यानावसरे वक्ष्यामः । बिन्दुप्रयत्नयोर्लक्षणे यथादिभरते—प्रयोजनानां विच्छेदे यदविच्छेदकारणम् । यावत्समाप्तिं बन्धस्य स बिन्दुरिति संज्ञितः ॥' इति । यथात्र मृगयावृत्तान्तेन विच्छेदे सति । 'राजा—माढव्य, अनवाप्तचक्षुःफलोऽसि' । तामाश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि' इत्यादिना । 'अपश्यतः फलप्राप्तिं यो व्यापारः फलं प्रति । परं चौत्सुक्यगमनं प्रयत्नः स प्रकीर्तितः ॥' इति । यथात्र 'राजा—तपस्विभिः कैश्चित्परिज्ञातोऽस्मि । चिन्तय तावत्केनापदेशेन सकृदप्याश्रमे वसामः' इति । दर्शनीयं मनोरमम् । ननु भवानग्रतो मे वर्तते । भवन्तं मुक्त्वान्यः कः सुन्दर इत्यर्थः । किंत्वाश्रमललामभूतामधिकृत्येति योजनीयम् । ललामं प्रधानम् । 'ललामं पुच्छपुण्ड्राश्व भूषाप्राधान्यकेतुषु' इत्यमरः । तत्र क्षीरस्वामी प्रधानेऽपि प्राधान्येन व्याख्यातवान् ।

**विदूषकः**—(स्वगतम्) [1]होदु ॥ ण से अवसरं दाइस्सम् ॥ (प्रकाशम्) भो वअस्स अज्ज तावसकण्णआ वि अब्भत्थणीआ दीस(दि)इ ॥

**दुष्यन्तः**—सखे! न परिहार्ये वस्तुनि पौरवाणां मनः प्रवर्तते ॥

**विदूषकः**—[2]ताकहं एदं?

**दुष्यन्तः**—

**सुरयुवतिसम्भवं किल मुनेरपत्यं तदुज्झिताधिगतम् ।**
**अर्कस्योपरि (शिथिलं) पतितं च्युतमिव नवमालिकाकुसुमम् ॥ ८**

1 भवतु । नास्मै अवसरं दास्यामि । भो वयस्य अद्य तापसकन्यकाऽप्यभ्यर्थनीया दृश्यते ।

2 तस्मात्कथमेतत् ।

**सखइत्यादि** ॥ परिहार्ये हेयवस्तुविषये पौरवाणां पुरुवंशोद्भवानां ममैकस्यैव न भवतीति भावः ॥

८ तापसकन्यकेत्यनेन रूपाद्यभावोऽपि परिणयायोग्यत्वं च विदूषकेणोक्तमिति तदुपपत्तिमाह—**सुरयुवतीत्यादि** ॥ सुरयुवतिसम्भवं मेनकासम्भूतम् ॥ अनेन रूपाद्यतिशय उक्तः ॥ मुनेर्विश्वामित्रस्यापत्यम् ॥ जन्यजनकभावसम्बन्धे षष्ठी ॥ अनेन राजर्षिविश्वामित्रपुत्रीत्वकथनेन शकुन्तलायास्सवर्णक्षेत्रतया परिणययोग्यत्वमुक्तम् ॥ तर्हि कण्वपुत्रीति व्यपदेशः कथम्? इत्यत आह—तदुज्झिताधिगतमिति ॥ तया मेनकया उज्झितं परित्यक्तं अधिगतं प्राप्तम् ॥ कण्वेनेति शेषः ॥ अनेन काश्यपाधीनत्वकथनेन बलादाहरणमपि कर्तुं न शक्यमिति ज्ञाप्यते ॥ किलेति सम्भावनायाम् । शकुन्तलाया लोकोत्तररूपविशेषचेष्टादिभिरपि सुरयुवतिसम्भवत्वमनुमीयत इत्यर्थः ॥ "वार्तासम्भाव्ययोः किल" इत्यमरः ॥ तत्र दृष्टान्तमाह—अर्कस्येत्यादिना । अर्कस्य वृक्षविशेषस्योपरि च्युतं शिथिलं

अनेन सौन्दर्यातिशयो ध्वन्यते । भवतु । अस्यावसरं वर्णनावसरं न दास्ये । हे वयस्य, ते तापसकन्यकाभ्यर्थनीया दृश्यते ॥

**सुरेति** ॥ किलेति प्रसिद्धौ । सुरयुवतिर्मेनका तत्सम्भवम् । मुन्यपत्यता तर्हि कथमित्याह—मुनेरिति । तयोज्झितं त्यक्तं सत्ततोऽधिगतं प्राप्तं मुनेरपत्यम् । तत्रोपमामाह—नवमालिकाकुसुममिवेति । अनयातिशयपेलवत्वं ध्वन्यते । कीदृक् । अर्कस्योपरि च्युतम् । अर्कस्येत्यनेन मुन्युपमानेन तदीयत्वस्यात्यन्तासम्भावनीयत्वं व्यज्यते । उपरीत्यनेन शङ्काबीजम् । अधःपतितस्य शङ्कापि नायाति । स्थापनं हि सन्निवेशविशेषेण भवतीति च्युतमित्युक्तम् । कदाचित्काकतालीयन्यायेन—च्युतस्यापि सन्निवेशविशेषः स्यादित्यत आह—शिथिलम् । एतेन तवापि चक्षुर्मात्रगोचरत्व एव तदीयत्वभ्रमोऽपि न भविष्यतीत्युक्तम् । श्रुतिवृत्त्यनुप्रासौ । 'च्युतमभिनवमालिकाप्रसूनमिव' इति पठित्वा

**विदूषकः**—(विहस्य) [1]भो वअस्स जह कस्स वि पिण्डखज्जूरेहिं उव्वेजिदस्स तिंतिणीए अहिलासो भवे । तह इत्थिअरअणपरिभाविणो भवदो इअं अब्भत्थणा ॥

**दुष्यन्तः**—न तावदेनां पश्यसि ॥ येन त्वमेवमवादीः ॥

**विदूषकः**—[2]तं खु रमणिज्जं एव्व ॥ जं भवदो वि विम्हअं उप्पादे(दि)इ ॥

**दुष्यन्तः**—वयस्य! किं बहुना ?

---

1 भो वयस्य यथा कस्यापि पिण्डखर्जूरैरुद्वेजितस्य तिन्त्रिण्यामभिलाषो भवेत्तथा स्त्रीरत्नपरिभाविनो भवत इयमभ्यर्थना ॥

2 तत्खलु रमणीयमेव । यद्भवतोऽपि विस्मयमुत्पादयति ।

---

नवमालिकाकुसुममिव अनेन पुष्पोपमानेन शकुन्तलायाः पद्मिनीजातिता सूच्यते ॥ नवमालिकाकुसुमस्य यथार्कवृक्षस्योपरि दैवात्पतनं तद्वच्छकुन्तलाया अपि मेनकाविश्वामित्रसम्भवत्वेऽपि काश्यपनिकटावस्थानमिति यावत् ॥ "माढव्य ! अनवाप्तचक्षुःफलोऽसि" इत्यादिनैतदन्तेन बीजस्य पुनरविच्छेदायोद्भेदाद्बिन्दुरुक्तः ॥ तदुक्तम्—"अवान्तरप्रयोजनवशात्कार्यविच्छेदे सति पुनः प्रकृतकार्यसूचनं बिन्दु" रिति ॥ अत्र प्रथमांकान्ते मत्तगजागमनभीत्या द्वितीयाङ्कादौ मृगयाविषयसेनापतिवाक्यादिभिर्विच्छिन्नस्यानुरागस्य पुनरविच्छेदायोपक्षेपः कृत इत्यस्मिन्नाटके बिन्दुरित्यवगन्तव्यम् ॥

**भो इत्यादि ॥** पिण्डखर्जूरं नाम पिण्डीकृतखर्जूरविशेषः ॥ तैरुद्वेजितस्य बहुलमधुररसभक्षणेन वैमनस्यं प्रापितस्य ॥ तिंतिण्यां अम्लवस्तुनि ॥ यथापुनरपि मधुररसबुभुक्षयाम्लवस्तुविषये इच्छा तद्वल्लोकोत्तरस्त्रीश्रेष्ठक्रीडाभिरुद्वेजितस्य तव शकुन्तलायां प्रार्थनेति भावः ॥

**तं खु इत्यादि ॥** भवतोऽपीत्यनेन रत्नहारी तु पार्थिव इति न्यायेन लोकोत्तरस्त्रियः राज्ञ एव विद्यन्ते । तासु क्रीडितस्य भवतोऽपीति यावत् ॥ वयस्येति ॥ बहुना ॥ तस्यास्सौन्दर्यादिविषये उक्तेनेति शेषः ॥ किमित्याक्षेपे ॥ किन्तु तद्रूपादिकमधिकृत्य संक्षिप्य कथयामीत्यर्थः ॥

---

प्रयोगप्रक्रमभङ्गः परिहरणीयः । मुनिसङ्गादनुत्कृष्टत्वं मन्यमानस्य विहस्येत्युक्तिः । यथा कस्यापि पिण्डखर्जूराः खर्जूरविशेषास्तैरुद्वेजितस्य तिन्त्रिण्यां चिञ्चायामभिलाषो भवेत्तथा स्त्रीरत्नानि परिभवितुं तिरस्कर्तुं शीलं यस्य तस्य भवत इयमभ्यर्थना । पुनःपुनरुच्यमानराजवचनेन यथार्थंप्रतीत्याह—तत्खलु निश्चितं रमणीयं यद्भवतोऽपि विस्मयमुत्पादयति । अपिशब्देनास्मदादीनां विस्मयोत्पादने किं वक्तव्यमिति सूचितम् । किंबहुनेत्यनेन प्रत्यङ्गवर्णना कर्तुं न शक्येत्युक्तम् ॥

चित्रे निवेश्य परिकल्पितसत्त्वयोगा
रूपोच्चयेन विधिना मनसा कृता नु ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ ९

९ तथैवाह—चित्र इत्यादिना ॥ विधिना ब्रह्मणा ॥ विधिरिति निरुपपदेन-विधेः कर्तुमकर्तुमन्यथा कर्तुं सामर्थ्यं सूच्यते ॥ तेन विधिना कर्त्रा ॥ चित्रे आलेख्ये-निवेश्य निरवद्यं सम्यक् लिखित्वा चित्ररूपाकृतेर्यत्रावयवसौकुमार्यवर्णौज्ज्वल्यरूपादि-विशेषविषये चित्रकारस्यापरितोषः । पुनरपि परिमृज्य स्वपरितोषावधि लिखितुं शक्यते ॥ मांसपिण्डाकृतिसृष्टौ न तथा पुनः पुनः कर्तुं शक्यत इति चित्र इत्युक्तम् ॥ अनेन सर्वाव-यवानां कान्त्यौज्ज्वल्यं ज्ञाप्यते ॥ तेन शैशवपरित्यागेन विभक्तावयवतया प्रसरद्रूपत्वं व्यज्यते ॥ तेन च यौवनपरिपोषदशा ध्वन्यते ॥ परिकल्पितसत्त्वयोगा सम्पादितप्राण-संयोगा ॥ अनेन वाक्येनोपभोगार्हत्वं व्यज्यते ॥ नु वितर्के ॥ चित्रनिर्माणस्य करान्तःकरण-बहिरिन्द्रियादि बहुसाधनपारतन्त्र्येण परिमितसौन्दर्यवत्त्वात्पूर्वानुशयात्पक्षान्तरमाह—रूपोच्चयेनेत्यादि ॥ विधिना रूपोच्चयेन चन्द्रसरोजाद्युपमागतकान्तिसमूहेन ॥ रूपोच्चयेने-त्यनेन लोकोत्तरप्रकृष्टकान्तिसमूहानामेकत्र सर्जनदिदृक्षा चिराज्जाता विधेरिति ध्वन्यते ॥ अन्यथा कथमेतादृशः कान्त्यतिशय इति भावः ॥ विधिपदेन तादृशदुष्करकरणे सामर्थ्य-मुक्तम् ॥ मनसा ध्यानेन ॥ हस्तस्पर्शे सति म्लानता भवतीति मनसेत्युक्तम् ॥ तेन सर्वा-वयवानामतिमार्दवं व्यज्यते ॥ अत्र हि निर्माणे सृष्टेः मनोमात्रपारतन्त्र्येण मनसश्शक्या-शक्यबहुविषयत्वात्पूर्वपक्षापेक्षया सौन्दर्याधिक्यं सौकुमार्यं च लभ्यते ॥ हस्तस्तु सन्निहितं परिमितमेव गृह्णाति ॥ मनस्तु दुर्लभं बहुक्रोडीकरोतीति भावः ॥ कृता नु सृष्टा किं? लोकोत्तरवस्तु कथं मया परित्याज्यं? स्वजन्मसाफल्यासाफल्ययोस्तस्या लाभालाभावेव हेतू इति भावः ॥ एवं विधिनिर्माणयोः कारणमाह—धातुरिति । धातुर्ब्रह्मणः विभुत्वं नानाविधसृष्टावकुण्ठितस्वातंत्र्यम् ॥ तस्याश्शकुन्तलायाः वपुश्च अनुचिन्त्य मुहुर्मुहुरालोच्य स्थितवतो ममेत्यर्थः ॥ सा अनुभूता । स्त्री युवतिः ॥ अपरा पूर्वकथितविलक्षणा रत्नसृष्टि-रुत्कर्षसृष्टिः ॥ "रत्नं श्रेष्ठे मणा" विति विश्वः ॥ प्रतिभाति सर्वप्रकारेण भासते ॥ यदा

चित्र इति ॥ विधिना ब्रह्मणा चित्ते आलेख्ये निवेश्य परिकल्पितसत्त्वयोगा कृतप्राणयोगा नु । 'द्रव्यासुव्यवसायेषु सत्त्वम्' इत्यमरः । यावद्रुचिमार्जनलेखनयोस्तत्र सम्भवादित्याशयः । रूपाणामुच्चयः समुदायस्त्रिभुवनवर्तिरूपसमुदायः तेनोपादानकारणेन । मनसा करणेन । कृता नु । अतएव करस्पर्शाद्यभावात्तादृशं कान्तिमत्त्वमेतादृग्लक्षणत्वा-दिकमिति भावः । अनेन 'यत्स्पर्शासहताङ्गेषु कोमलस्यापि वस्तुनः । तत्सौकुमार्यम्' इति सौकुमार्यं ध्वनितम् । सन्देहालङ्कारः । केचन नुशब्दस्य वितर्कवाचित्वादुत्प्रेक्षां मन्यन्ते । असम्बन्धे सम्बन्धरूपोभयत्रातिशयोक्तिश्च । क्वचित् 'रूपोच्चयेन घटिता मनसा कृता नु' इति पाठः । तत्र मनसा कृता ध्याता । रूपोच्चयेन घटिता योजिता नु इति योजनीयम् । मनसि ध्यातायां रूपनिवेशनेन श्लक्ष्णत्वं तादृशकान्तिमत्त्वादि व्यज्यते ।

तस्याश्शकुन्तलाया वपुश्च लोकोत्तरचमत्कारकारिसौन्दर्याद्यतिशयवदवयवादिकं च धातुस्सर्वप्रपञ्चसृष्टिकर्तुर्विभुत्वमूर्वशीप्रभृति सृष्टिसामर्थ्यं चानुचिन्त्य स्थितवतो मे सा स्त्री अपरा रत्नसृष्टिर्वर्तमानविधातृव्यतिरिक्तस्य यस्य कस्यचिन्नूतनब्रह्मणः निपुणा सृष्टिः प्रतिभाति ॥ विद्यमानविधातृसृष्टिसामर्थ्यस्य रम्भामेनकादियुवतिषु परिसमाप्ततया दृष्टत्वाच्छकुन्तलायास्ततोऽतिशयितसौन्दर्यादिमत्तया स्वस्य यस्य कस्यचिद्ब्रह्मणस्सृष्टिरिति भासत इति यावत् ॥ अतएवोक्तम्—अपरा रत्नसृष्टिरिति ॥ केचिदेवमपि योजयन्ति ॥ चित्रे आश्चर्ये ॥ आश्चर्यविषय इति यावत् ॥ "न पुंसि चित्रमालेख्ये त्रिष्वाश्चर्यप्रसिद्धयो"रिति भागुरिः ॥ सर्वेषामाश्चर्योत्पादनार्थं लोकोत्तरमितरविलक्षणमेकं स्त्रीरत्नं स्रष्टव्यमित्याश्चर्ये प्रस्तुते सतीत्यर्थः ॥ विधिना कर्त्रा रूपोच्चयेन चन्द्रादिननावस्तुवर्तिकान्तिसमूहेन निवेश्य विन्यस्य ॥ अत्र विन्यासक्रियायास्स्वाधारापेक्षितत्वात्तदनभिधानाद्यस्य कस्यचित्स्पर्शे सति म्लानत्वं काठिन्यं च भवेदित्यमूर्तद्रव्याकाश एवाधार इति युज्यते ॥ मनसा कृता निर्मिता परिकल्पितसत्त्वयोगा ॥ नु उत्प्रेक्षायां ॥ धातुर्विभुत्वं सृष्टिसामर्थ्यं तस्या वपुश्चानुचिन्त्य स्थितवतो मे सा स्त्रीरत्नसृष्टिर्युवतीपूत्कर्षसृष्टिः ॥ "जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यत" इत्युक्तत्वात् । अपरा पूर्वकथितलोकविलक्षणा प्रतिभाति । अत्र श्लोके शकुन्तलासृष्टेः पाञ्चभौतिकत्वेऽपि कविना सौन्दर्याद्यतिशयद्योतनार्थं चित्रसृष्टिरूपोच्चयसृष्टि लक्षणकथनाद्ब्रह्मसृष्टेः कविसृष्टिरप्यन्या चमत्कारावहेति ॥ कवीनां शिक्षाप्रकारः प्रदर्शितः । तदुक्तं—"अपारे काव्यसंसारे कविरेकः प्रजापतिः । यथास्मै रोचते विश्वं तथेदं परिवर्तत" इति । संसारे प्रपञ्चसर्गविधौ प्रजापतयो बहवो भवन्ति । तेषां नियामकतयेश्वरनियन्त्रितत्वात्स्वेच्छया किमपि कर्तुं न प्रभुत्वं ॥ तत्सृष्टेस्सुखदुःखमोहात्मकत्वं परमाण्वाद्युपादान कर्मादिसहकारिकारणपरतन्त्रत्वं प्रलयावधिकत्वं च । अपारे काव्यसंसारे कविरेव स्रष्टा भवति नियतिनियन्त्रणातिक्रान्तत्वात् स्वतन्त्रवृत्तेः कवेर्येन प्रकारेण स्रष्टुमिच्छा भवति । ब्रह्मसृष्टमिदं विश्वं नियतरूपं । तेनैव प्रकारेण परिवृत्तं भवति सत्त्वरजस्तमोभिरारब्धत्वात्सुखैकरूपमपि न भवति ॥ पारतन्त्र्यवार्ताविधेयमपि न भवति ॥ अत्र सकलस्त्रीजनसृष्टिसाधारणपाञ्चभौतिकलक्षणाया ब्रह्मसृष्टेश्शकुन्तलाया लोकातीतवस्तुसौन्दर्यप्राबल्यप्रकाशनार्थं चित्रसृष्टिरूपोच्चयसृष्टिकथनाद्ब्रह्मसृष्टेः कविसृष्टं चमत्कारावहं भवति । ब्रह्मसृष्टमेवमिच्छाधीनमपि न भवति ॥ नियतस्वभावतया चमत्कारावहमपि न भवति । तस्माद्ब्रह्मसृष्टेः कविसृष्टिर्व्यतिरिक्तेत्युक्तं भवति ॥

---

सा स्त्रीरत्नसृष्टिरुत्कृष्टा स्त्रीसृष्टिः । 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः । अपरा जगत्स्त्रीसृष्टिविलक्षणेत्यभेदे भेदरूपातिशयोक्तिः । धातुर्विभुत्वं सामर्थ्यं तस्या वपुश्चानुचिन्त्येत्यपरार्धं हेतुत्वेन योज्यम् । तृतीयचतुर्थचरणयोर्व्यत्ययपाठेन समाप्तपुनरात्तदोषः परिहर्तव्यः । केचनापरेत्यतिशयोक्तावस्युत्कृष्टस्य हेतोः 'अण्णं लडहत्तणम्' इवेत्यादावर्थस्य गम्यमानत्वाच्चतुर्थचरणस्य छन्दःपूरणमात्रप्रयोजनत्वेनावकरत्वं मन्यमाना दूरान्वयेनेतिपदाध्याहारेण च सा स्त्रीरत्नसृष्टिर्मे इति प्रतिभाति । इतीति किम् । विधिना चित्रे निवेश्येत्याद्युत्प्रेक्षाद्वयं संयोज्यम् । तत्रोभयोरत्यन्तासम्भावनीयतया व्यवन्तद्वयं यथाक्रमं प्रत्येकं वा सम्बध्य तदुत्थापितामपरेवेति गम्याद्युत्प्रेक्षामाहुः । अन्ये त्वेवं व्याचक्षते । परस्य वितर्कं स्वयमेवानुवदति चित्रे निवेश्येत्यादि कश्चित् । अन्यस्तु रूपोच्चयेनेत्यादि मन्यते । मम तु सा स्त्रीसृष्टिरपरा एतद्द्वयविलक्षणा प्रतिभाति । प्रसिद्धसृष्टेस्ताभ्यामेव

**विदूषकः**—[1]जयि एव्वं पच्चादेसो दाणिं रु(व)पवदीणम् ॥

**दुष्यन्तः**—इदं च मे मनसि वर्तते ॥

**अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-**
**रनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।**

---

1 यद्येवं प्रत्यादेश इदानीं रूपवतीनां ।

---

**जइ इत्यादि ॥** अद्यारभ्य शकुन्तलया रूपवत्यस्सर्वा निराकृता इति भावः॥ इदमित्यादि॥ इदं वक्ष्यमाणं तद्रूपादिविषये अवशिष्टं वक्तव्यमस्तीति यावत्॥

**१० अनाघ्रातमित्यादि ॥** अनाघ्रातमित्यनेन पुष्पस्य सद्यो विकसितत्व-मुच्यते ॥ तेन सौरभबाहुल्यं सूच्यते ॥ किञ्च अनाघ्रातमित्यनेन पङ्कजादिपुष्पाणामा-घ्राणाद्युपभोगे सति उद्वेजकता भवेत्॥ एतद्रूपस्यानुभवेऽप्यनुद्वेजकतेति ध्वन्यते॥ पुष्प-साधर्म्येण पद्मिनीजातितोक्ता॥ आघ्राणाभावेन मुखमारुताद्यननुभवोऽपि व्यज्यते॥ किसल-यमलूनं कररुहैरिति॥ किसलयसाधर्म्येणावयवसौकुमार्यं व्यज्यते ॥ कररुहलवनाभावेना-म्लानता च ॥ तथा लावण्याद्यतिशयः कररुहादिसम्बन्धाभावेनाननुभोगोऽपि व्यज्यते॥ अनाविद्धं रत्नमिति रत्नोपमानेन कान्तिमत्त्वं । अनाविद्धमिति सूचीवेधाभावेन कान्ते-रतिशयः॥ तेन पुरुषान्तरसम्बन्धाभावेन कन्यकात्वं । रत्नशब्देन स्त्रीजातिश्रैष्ठ्यं दुर्लभत्व-मुपादेयत्वं च व्यज्यते॥ मधुपदेन मद्योपमानात्तस्या दर्शनस्य मदहेतुता॥ अनास्वादित-रसमित्यास्वादनाभावकथनेन तच्चुम्बनादिराहित्यं । नवपदेनादरणीयत्वं च व्यज्यते ॥ यद्वा—अनास्वादितरसमिति विद्यमानस्य रसस्यास्वादनाभावकथनेनानन्यविषयाणां विलास-

---

निराकरणादुत्प्रेक्षाद्वयस्यात्मना निराकरणादन्यस्याभावमाशङ्क्य तत्र हेतुत्वेन ल्यबन्तद्वय-योजना । तेन ब्रह्मणोऽलौकिकसामर्थ्यात्तद्रूपस्य च लोकातिक्रान्तत्वात्तत्स्रष्टावन्य एव प्रकारो भविष्यतीति भावः। काव्यलिङ्गश्रुतिवृत्त्यनुप्रासौ । वसन्ततिलकावृत्तम् ।

यद्येवं प्रत्यादेश इदानीं रूपवतीनाम्। 'प्रत्यादेशो निराकृतिः' इत्यमरः॥

**अनाघ्रातमिति ॥** अनाघ्रातमकृताघ्राणम् । अनेनामोदसत्ता ध्वन्यते। कर-रुहैर्नखैरलूनमच्छिन्नम्। अनेनाक्रान्तत्वम्। अनाविद्धमासमन्ताद्वेधरहितम्। स्थूलवेधनत्वं दोषाय भवति। अथवानाविद्धमकुटिलम्। कुटिलस्य दुष्टत्वात्। 'आविद्धं कुटिलं भुग्नम्' इत्यमरः। अनेन निर्दोषत्वम् । तथा च रत्नसारसमुच्चये—'वृत्तं स्निग्धसमुज्ज्वलं शुचि गुरु श्वेतं बृहत्कोमलं स्वच्छान्तं समसूक्ष्मवेधसुरभि त्रासादिभिर्वर्जितम्' इति । तथा 'दग्धं रत्नमवर्तुलं लघु' इति । नवं मधु क्षौद्रं तत्कालनीतत्वेन नवत्वम् । अना-स्वादितरसमगृहीतास्वादम्। तादृक्त्वेनाननुभूतरसमित्यर्थः। 'मधु मद्ये पुष्परसे क्षौद्रेऽपि' इत्यमरः। अनेनातिहृद्यत्वम्। केचन मधुशब्देन मद्यं व्याचक्षते। तदसत्। तत्र नवमिति विशेषणं विरुद्धं स्याज्जीर्णस्यैव तस्योत्तमत्वात्। तथा च—'जिण्णसुरा सहीणा' इति। असावेव रघौ—'पुराणसीधुं नवपाटलं च' इति। अखण्डं पूर्णम्। अनेनात्यन्ताभिलष-

अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥ १०

---

चेष्टितानामकृत्रिमत्वं व्यज्यते ॥ अखण्डं पुण्यानां फलमिति पुण्यफलसमानधर्मत्वेन तत्प्राप्त्यखण्डत्वविशेषणेनापरिमितसुकृतातिशयवतामेव तस्या लाभः । नत्वल्पसुकृतिनामिति ध्वन्यते ॥ अनघमिति कुलाचारादिसम्पत्तिरुक्ता ॥ चशब्दस्समुच्चये ॥ इह रूपविषये भोक्तारमनुभवकर्तारं कं कीदृशं सुकृतिनं विधिस्स्रष्टा समुपस्थास्यति ॥ लोकोत्तरस्त्रीरत्नस्य सृष्टेस्साफल्यार्थमनुरूपं कं वरं सम्प्रापयिष्यति ? णिजर्थान्तर्भावात् ॥ यद्वा—विधिर्भागधेयं शकुन्तलारूपं भाग्यमित्यभेदाध्यवसायः ॥ विधिशब्दस्य भागधेयार्थकत्वात् ॥ शकुन्तलालक्षणं भागधेयमिह लोके कं पुण्यवन्तं समुपस्थास्यति सम्प्राप्स्यति न जाने तादृशं न पश्यामि न शृणोमीति यावत् ॥ अत्र तुल्यतर्को नामालङ्कारः ॥ तदुक्तम्—"रूपकैरुपमाभिर्वा तुल्यार्थाभिः प्रयोजितः । अप्रत्यक्षार्थसंस्पर्शस्तुल्यतर्कः प्रकीर्तितः" इति ॥ अप्रत्यक्षं वस्तुरूपकालङ्कारेणोपमया च समानप्रयोजनं सम्पाद्य तद्विषयविचारस्तुल्यतर्कः ॥ अत्र शकुन्तलारूपस्य पूर्वार्धपादद्वये रूपकं तृतीयपादे उपमा ॥ एवं तद्रूपातिशयं प्रतिपाद्य चतुर्थपादेन तत्प्राप्तिविचारः कृत इति तुल्यतर्कः ॥ किञ्च गुणकीर्तनं नामालङ्कारोऽपि ॥ तदुक्तम्—'लोकोत्कृष्टबहुपदार्थसाधर्म्येण वस्तुवर्णनं गुणकीर्तन'मिति ॥ अत्रानाघ्रातमित्यादिभिस्सद्यो विकसितकुसुमादिभिरौपम्येन शकुन्तलारूपवर्णनं कृतमिति गुणकीर्तनं भवति ॥

---

णीयता । एतद्रूपमेतदेवेति मालोपमा । अन्यास्पृष्टत्वमभिन्नो गम्यः सामान्यधर्मः । यद्वा म्लानता विच्छायतोत्कृष्टतानुच्छिष्टता मनोज्ञता एते वाभिन्नगम्याः सामान्यधर्माः । तत्र रूपलक्षणं सुधाकरे—'अङ्गान्यभूषितान्येव प्रक्षेप्याद्यैर्विभूषणैः । येन भूषितवद्भान्ति तद्रूपमिति कथ्यते' इति । अनाघ्रातमित्यादिकैर्विशेषणैः कन्यात्वेन स्वयोग्यतां सूचयन्पुष्पादिभिरुपमानैः क्रमेण परिभोगयोग्यता कान्तिमत्ता मुग्धता हृद्यतोत्तमजनाभिलषणीयता च ध्वनिता । अथ पञ्चभिरुपमानपदैर्घ्राणास्यचक्षूरसनेन्द्रियतर्पकत्वमपि ध्वनितम् । पुण्यफलस्य श्रवणरूपत्वात्तेन प्रत्यक्षालङ्कारो ध्वन्यते । विधिर्ब्रह्मा । इह जगति । अनघमदुःखं निष्पापं च । 'अहोदुःखव्यसनेष्वघम्' इत्यमरः । अमलं मनोज्ञं वा । 'अनघो निर्मलाऽपापमनोज्ञेषु च भेद्यवत्' इति विश्वः । तादृशस्यैव तल्लोकेः सम्भवात् । कं भोक्तारमुपस्थास्यत्युपसंक्रमिष्यति । उपगमिष्यतीत्यर्थः । अहं न जाने । स्वदृष्टेरगोचरत्वादेतद्रूपानुरूपतरुणसृष्टेऽरभावादिति भावः । उपपूर्वात्तिष्ठतेर्मन्त्रकरणाद्यर्थासम्भवान्नात्मनेपदम् । अनघममलमिति रूपविशेषणं वा । अथवानघमिति मधुव्यतिरिक्तपुष्पादेर्विशेषणत्वेन योज्यम् । तेन विशेषणक्रमभङ्गः परिहृतो भवति । आद्ये मनोज्ञं द्वितीयेऽपापं लक्षणयाऽकठोरं तृतीयेऽमलं पञ्चमेऽदुःखमिति योजनीयम् । यद्वानघमिति मालोपमायामभिन्नो वाच्यः सामान्यधर्मः । नवमिति मध्येऽप्युपात्तं सर्वेषां विशेषणत्वेन योज्यम् । 'फलमपि च' इति पाठे व्यस्तं मालारूपकं ज्ञेयम् । भोजस्तु 'पुष्पकिसलयरत्नमधुपुण्यफलानामनाघ्रातमित्यादिविशेषणापादितव्यतिरेकाणां प्रतीयमानसादृश्येन शकुन्तलारूपेण रूपणाद्व्यतिरेकवद्रूपकम्' इत्याह स्म । अत्र च विशेषणविशेष्यविशेषणक्रमेणैवोप-

**विदूषकः**—[1]तेण हि ळहु परित्तायदु णं भवंमा कस्स वि तवस्सिणो इंगुदी तेळल (मिस्स) चिक्कणसीसस्सआरण्णअस्सहथ्ते पडिस्सदि ॥

**दुष्यन्तः**—परवती खलु तत्रभवती ॥ न च सन्निहितो गुरुजनः ॥

**विदूषकः**—[2]अह अत्तभवन्तं अन्तरेण कीरिसो दिट्ठिराओ ॥

---

1 तेन हि लघु परित्रायतामेनां भवान् । मा कस्यापि तपस्विन इंगुदीतैल(मिश्र)चिक्कणशीर्षस्यारण्यकस्य हस्ते पतिष्यति ॥

2 अथात्रभवन्तमन्तरेण कीदृशोऽस्या दृष्टिरागः ॥

---

**तेण हीत्यादि ॥** तेन पूर्वोक्तगुणवत्त्वहेतुना ॥ लघु शीघ्रम् ॥ शीघ्रपरित्राणे हेतुमाह—माकस्सेत्यादिना । बलादाहरणं कर्तव्यमिति भावः ॥

अत एव बलादाहरणं कर्तुं न शक्यमित्याह—**परवतीत्यादिना ॥** परवती पराधीना ॥ काश्यपाधीनेति यावत् ॥ अनेन बलादाहरणं कर्तुं न शक्यमिति ज्ञाप्यते ॥ तथा च सति सर्वानर्थकारी शापो भवेदिति भावः ॥ अनेन राज्ञा शकुन्तलायां स्वस्य गाढानुराग उक्तः ॥

**अहेत्यादि ॥** अथेति प्रश्ने ॥ अत्र भवन्तमन्तरेण भवन्तमुद्दिश्य ॥ अन्तरेणेत्ययं निपात उद्देशार्थे वर्तते ॥ अन्तरान्तरेण युक्त इति द्वितीया ॥ कीदृशः कीदृग्भूतः ॥ उत्तमो मध्यमोऽधमो वेति यावत् ॥ दृष्टिरागः अनुरागजन्यो मुखविकासः ॥ तदुक्तम्—"दुःखमप्यधिकं चित्ते सुखत्वेनैव रज्यते । तेन स्नेहप्रकर्षेण स रागइति कथ्यते" शृङ्गाररसस्थायिभावस्य रतिरूपस्य प्रकर्षलक्षणोऽवस्थाविशेषो राग इत्युच्यते ॥ स च त्रिविधः ॥ मांजिष्ठनीलीकुसुम्भभेदतः—"श्रेष्ठो मांजिष्ठरागस्स्यान्नीलीरागस्तुमध्यमः । कुसुम्भरागः कविभिरधमः परिकीर्तितः ॥ अचिरेणैव संसक्तश्चिरादपि न नश्यति । अतीव शोभते योऽसौ मांजिष्ठो राग उच्यते । नीली रागस्तु यस्सक्तो नापैति च न दीप्यते । कुसुम्भरागस्स ज्ञेयो यश्चित्ते सज्जति क्षणात् ॥ अतिप्रकाशमानोऽपि क्षणादेव विनश्यति ॥" यद्वा दृष्टि-

---

निबन्धान्न प्रक्रमभङ्गः । श्रुतिवृत्त्यनुप्रासौ । शिखरिणीवृत्तम् । एताभ्यां पद्याभ्यां गुणकीर्तनं नाम चतुर्थ्यंवस्योक्ता । तल्लक्षणं तु 'सौन्दर्यादिगुणश्लाघा गुणकीर्तनमत्र हि' इति । तेन कारणेन । लघु शीघ्रम् । 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः । परित्रायताम् । स्वीयत्वेनाङ्गीकरणमेव परित्राणम् । एनां भवान् । कस्यापि तपस्विन इङ्गुदीतापसतरुस्तस्य तैलेन मिश्रमत एव चिक्कणं शीर्षं यस्य तस्य हस्ते पतिष्यति तन्मा इति निषेधे । परवती पराधीना । 'परतन्त्रः पराधीनः परवान्नाथवान्' इत्यमरः । तत्रभवती पूज्या । कामिनीरत्नभूतत्वात्पूज्यत्वम् । यतः परवत्त्वं स एव प्रतिच्छन्दनीय इत्यत आह—न चेति । अत्रभवन्तमिति सप्तम्यर्थे द्वितीया 'सप्तम्या द्वितीया' इति सूत्रेण । उदाहरणं च—'विज्जुज्जोअं मरइ रत्तिं' । विद्युद्द्योतं स्मरति रात्राविरत्यर्थः । तेनात्रभवन्तं पूज्यमन्तरेण विशेषेण कीदृशस्तस्या दृष्टिरागः । 'अन्तरं रन्ध्रावकाशयोः । मध्ये विनार्थे तादर्थ्ये विशेषेऽवसरेऽवधौ' इति हैमः । अत्रान्तरेण तत्रभवन्तमिति द्वितीयेति तु यत्स भ्रम एव । तस्य 'अन्तरान्तरेण' इत्यत्र सूत्रे निपातस्यैव ग्रहणात् । तेनार्थासङ्गतेः । तथाहि

दुष्यन्तः—निसर्गादप्रगल्भस्तपस्विकन्याजनः तथापि तु—

अभिमुखे मयि संहृतमी(क्षणं)क्षितं
हसितमन्यनिमित्तकृतोदयम् ।
विनयवारितवृत्तिरितस्तया
न विवृतो मदनो न च संवृतः ॥ ११

रागोऽनुरागव्यंजकस्निग्धसाकूतावलोकनविशेषः ॥ यद्यपि शकुन्तलायाः पराधीनतया बलादाहरणं कर्तुं न शक्यं । तथापि तस्यास्त्वयि गाढानुरागो विद्यते चेत्स्वयमेवाभिसरणं करिष्यतीति कीदृशो दृष्टिराग इति विदूषकेण पृष्ट इति भावः ॥

निसर्गादित्यादि ॥ निसर्गात्स्वभावतः अप्रगल्भोऽधृष्टः ॥ शीलादिमानित्यर्थः ॥ तपस्विकन्याजन इति तपस्विपदेन रागद्वेषाद्यभाव उक्तः ॥ कन्यापदेनाप्रागल्भ्यं जनपदेनानागरिकत्वं च व्यज्यते ॥ यद्वा—आकारगोपनं कर्तुं न जानातीति जनपदेन व्यज्यते ॥ तपस्विकन्याजनस्याधृष्टत्वात्तत्र विद्यमाना अपि मदनविकारास्सुखेनोपलब्धुं न शक्यन्त इति भावः ॥ तस्मात्तस्या अपि मयि गाढानुरागोऽस्ति न वेति कथं ज्ञायत इति भावः ॥ तथापीत्यादि ॥ तथापि तपस्विकन्याजनस्य विनयशीलादिमत्तया तत्र विद्यमानस्य मदनस्य ज्ञातुमशक्यत्वेऽपि तु विशेषोऽस्ति ॥

११ तमेव विशेषमाह—अभिमुख इत्यादि ॥ अभिमुखे सम्मुखे सति ईक्षितं दर्शनं संहृतम् ॥ तयेतिशेषः ॥ यद्यप्यत्र नायिकानायकयोः परस्परानुरागद्योतकं सम्मुखदर्शनं कन्यकात्वेन धाष्ट्यर्भावादनुरागव्यक्तिर्भविष्यतीति व्रीळया न कृतं तथापि मय्यभिमुखे सति संहृतमीक्षितमित्यनेन स्वस्य दर्शनाशङ्कया स्वयं दृष्ट इति द्योत्यते ॥ हसितमन्यनिमित्तकृतोदयं अन्यनिमित्तेन प्रकृतोत्कंठाकारणव्यतिरिक्तेन कृतः कल्पित उदय आविर्भावो यस्य तत्तथोक्तम् ॥ अत्र सम्मुखहासे सति सख्यास्स्वस्य राजविषय-

तस्मिन्सूत्रे वृत्तिकारेण व्याख्यातम्—'अन्तरान्तरेण शब्दौ निपातौ साहचर्यार्थेते । तत्रान्तराशब्दो मध्यमाधेयप्राधान्यमाचष्टे । द्वितीयस्तु तच्च विनार्थं च' इति । उदाहृतं च—'अन्तरा त्वां मां च कमण्डलुः । अन्तरेण पुरुषकारं किञ्चिन्न लभ्यते' इति । प्रकृत एतदर्थद्वयमप्यसङ्गतमेव । तथा चास्यैव कवेर्मालविकाग्निमित्रे नाटके प्रयोगः— 'अचिरप्पवुत्तोवदेसअं छलिअअणामणहं अन्तरेण कीरिसी मालविएत्ति अज्ज णट्टाअरिणं गणदासं पुच्छिदुंति' । निसर्गादेव स्वभावादेव । 'निसर्गः शीलसर्गयोः' इति विश्वः । अप्रगल्भोऽप्रौढः यतस्तपस्विकन्याजन इत्यर्थहेतुत्वेन योज्यम् । इति यद्यपि तथापि त्विति श्लोकेनान्वेति ॥

अभिमुख इति ॥ अभिमुखे मयीक्षणमवलोकनं संहृतम् । अनेन श्रृङ्गारलज्जा ध्वन्यते । अन्यनिमित्तमन्यहेतुकं यथा स्यात्तथा कृत उदयो यस्य । अनेनापि सैव व्यज्यते । एतादृशं हसितम् । तल्लक्षणं मातृगुप्ते—"विकासितकपोलान्तमुत्फुल्लामललोचनम् । किञ्चिल्लक्षितदन्ताग्रं हसितं तद्विदो विदुः" इति । अनेनास्या उत्तममनायिकात्वमपि ध्वनितम् ।

**विदूषकः**—[1]किं णु खु सा(णक्खु)दिट्ठमेत्तस्स तुह अंकं आरोहदि ?

**दुष्यन्तः**—मिथस्सखीभ्यां प्रस्थाने शालीनतयापि भूयिष्ठ(काम)माविष्कृतो भावः(तत्रभवत्या) तथा हि—

1 किंनु (न) खलु सा दृष्टमात्रस्य तवांकमारोहति ?

कानुरागाभिव्यक्तिर्भविष्यतीति भियाऽन्यन्निमित्तीकृत्य हसितमित्युक्तम् ॥ तेन हासस्य स्वविषयकानुरागजनितत्वं सूच्यते ॥ इतः उक्तहेतुभ्यां मदनः कामः विनयवारितवृत्तिर्विनयेन सौशील्यादिगुणेन निरुद्धप्रसरव्यापारः ॥ अनेन तस्यास्सम्मुखदर्शनहासयोरिच्छा विच्छिद्यत इति द्योत्यते ॥ उभयत्रापि विनयवारितवृत्तित्वमेव हेतुरिति भावः ॥ न विवृतो न प्रकटितः ॥ परस्परसम्मुखदर्शनाभावात्सम्यङ्न प्रकाशितः ॥ न च संवृतः स्वविषयानुरागजनितस्य हासस्य व्याजेन तिरोधानान्न प्रच्छादितश्च ॥

**किं णु इत्यादि ॥** दृष्टमात्रस्येत्यनेनेतः परमपि तस्या दर्शननिमित्तं यत्नः कर्तव्य इति भावः ॥

**मिथ इत्यादि ॥** मिथः प्रस्थाने परस्परगमने सति । शालीनतयापि विनयादौ सत्यपि । पुनर्दर्शनाभावकातरया । भावोऽभिप्रायः ॥ भूयिष्ठं बहु । भूयिष्ठमित्यनेन यद्यप्युत्तमनायिकाया ललितविलोकनादीनां स्वाभाविकरमणीयत्वं । तथापि स्वानुरागाभिव्यक्तिर्यथा भवति तथा निश्शङ्कं प्रदर्शित इति भावः ॥

यदुक्तं तत्रैव—'उत्तमस्य समुद्दिष्टं स्मितं हसितमेव च' इति । अनेनानुरागो ध्वनितः । उक्तं च—'उत्फुल्लगण्डमण्डलमुल्लसितदृगन्तसूचिताकूतम् । नमयन्त्यापि मुखाम्बुजमुन्नमितं रागसाम्राज्यम् ॥' इति । विनयेन वारिता वृत्तिः प्रसरो यस्य सः । विनयलक्षणं पूर्वमुक्तमेव । मदनो न विवृतः । ईक्षणसंहरणेनान्यनिमित्तकृतोदयेन हसितेन च । अनेन मुग्धानायिकात्वमुक्तम् । न च संवृतः । हेलामोट्टायितादेर्भावस्य प्रकाशिना विरोधाभासो वृत्त्यनुप्रासश्च । द्रुतविलम्बितं वृत्तम् । सुधाकरे—'तत्र कन्या त्वरूढा स्यात्सलज्जा पितृपालिता । सखीकेलिषु विस्रब्धा प्रायो मुग्धा गुणान्विता ॥' इत्युक्त्वा 'मुग्धा नववयःकामा' इत्युक्तम् । तेन नवकामत्वेन मुग्धात्वम् । अनेनास्याः प्रथमं यौवनमपि ध्वनितम् । 'सर्वासामपि नारीणां यौवनं च चतुर्विधम्' इत्युक्त्वा प्रथमयौवने 'ईषच्चपलनेत्रान्तं स्मरस्मेरमुखाम्बुजम्' इत्याद्युक्तम् । हेलालक्षणं तत्रैव—'नानाविकारैः सुव्यक्तः शृङ्गाराकृतिसूचकैः । हाव एव भवेद्धेला' इति चित्तजः । मोट्टायितलक्षणं तत्रैव—'स्वाभिलाषप्रकटनं मोट्टायितमितीरितम्' इति गात्रजः । न खलु दृष्टमात्रस्य तवाङ्कं समारोहति । खल्विति जिज्ञासायाम् । 'निषेधवाक्यालङ्कारजिज्ञासानुनये खलु' इत्यमरः । प्रस्थाने गमनारम्भे शालीनतयाऽधृष्टतयाप्येकान्ते काममत्यर्थमाविष्कृतो भावश्चित्ताभिप्रायः । 'शालीनकौपीने अधृष्टाकार्ययोः' इति निपातः । अतएव प्रथमाङ्कान्ते 'सव्याजं विलम्ब्य' इत्युक्तिः । 'मिथोऽन्योन्यं रहस्यपि' इत्यमरः ॥

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥ १२

---

१२ भावप्रदर्शनप्रकारमाह—दर्भाङ्कुरेणेत्यादिना ॥ अकाण्डे अकस्मात् । कारणं विनेति यावत् ॥ यत्र मार्गे दर्भाङ्कुरो न विद्यते तत्र गमनेऽपीत्यर्थः ॥ चरणः पादः ॥ चरणस्यैव येन केनापि व्यधाव्याजकल्पने सत्यवस्थानविलम्बं प्रति हेतुत्वात्तेन विना गमनक्रियासम्भवाच्चरणइत्युक्तम् ॥ दर्भाङ्कुरेण क्षतः खण्डितः आविद्ध इति यावत् ॥ कतिचिदेव स्वल्पान्येव पदानि गत्वा ॥ न हि किञ्चिद्दूरं गत्वेति यावत् ॥ कतिचिदेवेत्यनेन स्वविरहे तस्यास्सद्यएव वैवर्ण्यक्षामतादिकं जातमिति द्योत्यते ॥ अत एवाह—तन्वीति ॥ अत्र तन्वीशब्दप्रयोगेणापि स्वविरहे तस्याः कार्श्यादिकं सूच्यते ॥ मिथ्यापादलग्नदर्भाङ्कुरोद्धरणव्याजेन स्थितेत्यर्थः ॥ अङ्कुरस्यैव कण्टकवद्वेधे सामर्थ्यात् । द्रुमाणां शाखासु असक्तमप्यलग्नमपि विवृत्तवदना वलितवदना विमोचयन्ती विशेषेण मोचयन्ती ॥ विशेषमोचनं तु शीघ्राकर्षणे त्रुटितं भविष्यतीति ॥ तेनावस्थाने हेतुरुक्तः ॥ द्रुमाणां शाखास्विति बहुवचनेनापि चिरावस्थाने कारणं व्यज्यते ॥ स्वस्य गुरुपराधीनतया स्वयमेवाभिसरणं कर्तुं न शक्यम् ॥ येन केनापि प्रकारेण त्वयैव परस्परप्राप्तिं प्रति यतनीयतामिति मां प्रति द्योतितमिति भावः ॥ तथैव वदिष्यति विदूषकः "गृहीतपाथेयो भव" इति ॥ अत्र श्लोकेऽर्थापत्तिर्नामालङ्कारः ॥ तदुक्तम्—"अर्थान्तरस्य कथनाद्यत्रान्योऽर्थः प्रतीयते । वाक्यमाधुर्यसंयुक्ता सार्थापत्तिरुदाहृता" इति ॥ अत्राकाण्डे चरणः क्षत इत्यनेन शाखासु वल्कलमसक्तमपि विमोचयन्तीत्यनेन च व्याजो द्योत्यते ॥ तदुभयान्यथानुपपत्त्या स्वस्मिन्ननुरागो राज्ञा प्रकल्पित इत्यर्थापत्तिः ॥ शृङ्गाररसत्वाद्वाक्यमाधुर्यं तु सिद्धमेव ॥ अर्थापत्तिर्दण्डापूपिकयार्थान्तरस्थापनम् ॥ दण्डापूपिकयोर्भावो दण्डापूपिका * 'द्वन्द्वमनोज्ञादिभ्यश्चे'ति पृषोदरादिना वृद्ध्यभावः ॥ यथाहमहमिकेत्यादीति केचित् ॥ अन्ये तु दण्डापूपौ विद्येते यस्यां नीतौ सा दण्डापूपिका नीतिः ॥ एवमहं शक्ता स्यामित्यहमहमिकेति मत्वर्थीयः कश्चित्याहुः ॥ अपरे दण्डापूपाविव दण्डापूपिके "इवे प्रतिकृता"विति कनं वर्णयन्ति ॥ अत्र मूषककर्तृकेण दण्डभक्षणेन तत्सहभाव्यपूपभक्षणमप्यर्थात्सिद्धम् ॥ एष न्यायो दण्डापूपि-

---

दर्भेति ॥ तन्वी सा कतिचिदेव द्वित्राण्येव । नतु त्रिचतुराणि । तेनोत्कण्ठातिशयो ध्वनितः । पदानि गत्वाऽकाण्डेऽनवसरेऽकस्मात्स्थिता । 'काण्डं चावसरे बाणे' इति धरणिः । तन्वीत्वादेव गमनासहत्वं भविष्यतीत्यत आह—दर्भाङ्कुरेण चरणः क्षत इति । न तु दर्भेण । तस्य सत्त्वे व्याजो न स्यात् । अङ्कुरस्यादृश्यमानतया व्याजसम्भवात् । अतोऽङ्कुरपदे व्याजेन विलम्बितमिति ध्वनितम् । द्रुमाणां शाखास्वसक्तमपि वल्कलं विमोचयन्ती विवृत्तवदनासीत् । अत्र बहुवचने विवृत्तवदनात्वस्य वृत्तिर्व्यक्ता । विरोधाभासो हेतुश्च । श्रुतिवृत्त्यनुप्रासौ । रेणरण इति दानिदनेति च्छेकानुप्रासोऽपि । वसन्ततिलकावृत्तम् । अथानुरागेङ्गितमित्यधिकृत्योक्तं रतिविलासे—'विलम्बस्तु पथि व्याजात्परा-

**विदूषकः**—[1]जइ एव्वं(तेणहि)गहीदपाहेओ होहि । किदं तुए दाणिं तवोवणं उववणन्ति पेक्खामि ।

**दुष्यन्तः**—सखे ! तपस्विभिः कैश्चिदिहस्थः परिज्ञातोऽस्मि चिन्तय तावत् केनापदेशेन सकृदप्याश्रमपदं (वसामः) प्रविशामः ।

**विदूषकः**—[2]को अवरो अवदेसो ? (तुम राआणं) णं भवं राआ !

**दुष्यन्तः**—ततः किम् ?

**विदूषकः**—[3]णीवारसट्ठभाअं आरण्णआ अम्हाणं उवहरन्तुत्ति ।

**दुष्यन्तः**—(मूर्ख)अन्यद्भागधेयमेतेषां रक्षणे निपतति यद्रत्नराशीनपि

---

1 यद्येवं (तेन हि) गृहीतपाथेयो भव । कृतं त्वयेदानीं तपोवनमुपवनमिति पश्यामि ॥
2 कोऽपरोपदेशः ? (तव राज्ञः) ननु भवान् राजा !
3 नीवारषष्ठभागमारण्यका अस्माकमुपहरन्त्विति ॥

---

काशब्देनोच्यते ॥ ततः यथा दण्डभक्षणादपूपभक्षणमर्थादापतितं तद्वत्कस्यचिदर्थस्य निष्पत्तौ सामर्थ्यात्समानन्यायत्वलक्षणाद्यतोऽर्थान्तरमापतति सार्थापत्तिः ॥ न चेदमनुमानम् ॥ समानन्यायस्य सम्बन्धरूपत्वाभावात् ॥ असम्बन्धे चानुमानार्थानामर्थापत्तिश्च वाक्यविदां न्याय इति तज्ज्ञाननयेनेहाभिधानम् ॥

**जइ इत्यादि ॥** एवं यदीति स्वस्य गाढानुरागत्वं गुरुपराधीनस्वाभिसरणासामर्थ्यं च तथा प्रदर्शितं यदीत्यर्थः ॥ गृहीतपाथेयो भवेत्यनेन शकुन्तलागमनाय सन्नद्धो भवेत्यभिप्रायः ॥ तपोवनमुपवनमित्यनेन शान्तिप्रधाने तपोवने परिमिताहारादिमत्तया क्लिष्टजनस्यापि त्वां दृष्ट्वा मदनविकारो जातः ॥ नगरादौ स्थितस्य का कथेति भावः ॥

**केनेत्यादि ॥** अपदेशेन व्याजेन ॥ सकृदप्येकवारमपि । सकृदपीत्यनेन शकुन्तलासङ्गमविषये सर्वं जातप्रायमितःपरमेकवारदर्शनमात्रमेव व्यवधानमिति द्योत्यते ॥

**अन्यदित्यादि ॥** एतेषां तपस्विनां रक्षणे परिपालने सति अन्यद्भागधेयं नीवारषष्ठांशव्यतिरिक्तं भागधेयम् ॥ निपतति आपतति ॥ रत्नराशीनप्युत्कृष्टपदार्थसमूहा-

---

वृत्यापि दर्शनम्' इत्यादि । तेन हि गृहीतपाथेयो भव । गृहीतपाथेय इत्युद्योगस्यावश्यकर्तव्यता ध्वनिता । यथा कञ्चिज्जिगमिषुं प्रति कश्चिद्वदति पाथेयं गृहाणेति तद्वत् । पथि साधु पाथेयम् । 'पथ्यतिथिवसतिस्वपतेर्ढञ्' इति ढञ् । कृतं त्वयोपवनं तपोवनमिति पश्यामि । उद्देश्यविधेयभावे व्यत्ययो ज्ञेयः । अपदेशेन व्याजेन । 'व्याजोऽपदेशो लक्ष्यं च' इत्यमरः । सकृदेकवारम् । इत्यनेनोत्कण्ठातिशयो व्यज्यते । कोऽपरोऽपदेशः । तुम तव राज्ञ इति । 'तुम' इति षष्ठ्येकवचने युष्मद आदेशः 'तइतुन्तेतुम्हतुहतुहन्तुवतुम-' इत्यादि सूत्रेण । 'ङसि तुमतुज्झतुह्माः' इति वररुचिसूत्रं च । नीवारषष्ठभागमस्माकमुपहरन्त्विति । अयमेवापदेश इत्यर्थः । भागधेयं राजग्राह्यो भागः । 'भागरूपनामभ्यो धेयः' इति स्वार्थे धेयः । 'भागधेयं मतं भाग्यं भागधेयः स्मृतो बलिः' इति धरणिः ॥

विहायाभिनन्द्यम् पश्य—

यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तत्फलम् ।
तपष्षड्भागमक्षय्यं ददत्यारण्यका हि नः ॥ १३

(नेपथ्ये)

हन्त सिद्धार्थौ स्वः ।

**दुष्यन्तः**—(कर्णं दत्वा) अये धीरप्रशान्तस्वरैः तपस्विभिर्भवितव्यम् ।

---

नपि ॥ "जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यत" इत्यभिधानात् ॥ अभिनन्द्यमाशास्यम् ॥ अनेनाननुभूतदुःखमनुभूयापि राज्ञा तपस्विनां तपोरक्षा कर्तव्येति व्यज्यते ॥ तेषां मनसि विकृते सति रत्नराश्यादिकं सर्वं नश्यति तत्प्रसादे सति पुनस्सर्वं भवतीति भावः ॥ अनेनागाम्यृषिकुमारपात्रसूचनं क्रियते ॥ तदुक्तम्—"नासूचितस्य पात्रस्य प्रवेशो निर्गमोऽपिवा" इति ॥ पश्येत्यामन्त्रणे लोट् ॥

**१३ यदिति ॥** वर्णेभ्यो ब्राह्मणाद्याश्रमेभ्यः ॥ "वर्णो द्विजादौ ॥ शुक्लादौ- स्तुतौ" इत्यमरः ॥ यत्फलं षष्ठांशादिकमुत्तिष्ठत्युदेति ॥ नृपाणां सर्वाश्रमरक्षकाणां राज्ञां तत्फलं क्षयव्ययादिना क्षयशीलम् ॥ अनेन नगरं प्रति स्वस्यानागमने सति ब्राह्मणादिचतुराश्रमरक्षाभावाद्रत्नादिवस्तुक्षतावप्यत्रैव स्थित्वा तपोधनानां तपोरक्षा कर्तव्येति द्योत्यते ॥ तेन चागाम्यृषिकुमारवचनस्यावश्यकर्तव्यत्वं सूचितमित्यवगन्तव्यम् ॥ आरण्यकास्तापसाः ॥ नः अस्माकं तपष्षड्भागं तपसष्षष्ठांशसुकृतविशेषं अक्षय्यं अप्रत्यक्षत्वाद्व्ययादेरशक्यतया नाशरहितं ददति प्रयच्छन्ति ॥ अनेन राजैव दुर्विनीतानां शिक्षकः ॥ तादृशेन राज्ञा मया बलादाहरणादिरूपान्याय्यादिकं कथं कर्तुं युक्तम् ॥ सैव स्वयमेवाभिसरणं करोति चेत्परिगृह्यत इति विदूषकं प्रति सूचितमिति द्योत्यते ॥

**नेपथ्यइत्यादि ॥** हन्त हर्षे ॥ "हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयो"- रित्यभिधानात् ॥ सिद्धार्थौ स्वः कृतार्थौ भवावः ॥ ऋषिकुमारयोः कृतार्थत्वं राजावस्थानसिद्धेरित्यभिप्रायः ॥ अये इति जिज्ञासायाम् ॥ धीरप्रशान्तस्वरः स्वरस्य धीरत्वं तपोविशेषप्रभावाद्राजादिभिः पुरस्कार्यत्वं प्रशान्तत्वमहंकारराहित्यम् ॥

---

**यदुत्तिष्ठतीति ॥** वर्णेभ्यो ब्राह्मणादिभ्यो यत्फलमुत्तिष्ठत्युत्पद्यते तत्क्षयि विनाशि । प्रकारसहस्रैरपि न स्थायीति व्यज्यते । आरण्यकास्तपस्विनो नोऽस्माकमक्षय्यमविनाशि तपः षड्भागं ददति । 'क्षय्यजय्यौ शक्यार्थे' इति निपातनात्साधु । अक्षय्यमिति प्रयत्नसहस्रैरपि न नश्यतीति ध्वन्यते । व्यतिरेकालङ्कारः । 'चिन्तय' इत्यादिनैतदन्तेन विलासो नामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'विलासः सङ्गमार्थस्तु व्यापारः परिकीर्तितः' इति । हन्तेति हर्षे । 'हन्त हर्षेऽनुकम्पायाम्' इत्यमरः । सिद्धार्थौ निष्पन्नप्रयोजनौ । राज्ञो दर्शनेनैव ।

**दौवारिकः**—(प्रविश्य) [1]जेदु भट्टा, एदे दुवे इसिकुमारा पडिहारभूमिं उवट्ठिदा ।

**दुष्यन्तः**—तेन ह्यविलम्बितं प्रवेशय तौ ।

**दौवारिकः**—[2](एसो) अअं पवेसेमि । (इति निष्क्रम्य, ऋषिकुमाराभ्यां सह प्रविश्य) [3]इदोइदो भ(वन्तौ)अवन्तो ।

(उभौ राजानं विलोकयतः)

**प्रथमः**—अहो दीप्तिमतोऽपि विश्वसनीयता(स्य)वपुषः ! अथवा उपपन्नमेतदृषिभ्यो नातिभिन्ने राजनि कुतः ?

---

1 जयतु भर्ता, एतौ द्वौ ऋषिकुमारौ प्रतिहारभूमिमुपस्थितौ ।
2 एष अयं प्रवेशयामि ।
3 इत इतो भगवन्तौ ॥

---

**अहोइत्यादि** ॥ दीप्तिस्तु दुरासदतेजोविशेषः ॥ तेजस्विनोऽपीति यावत् ॥ राज्ञां दीप्तिस्तु माहात्म्यजनितभयङ्करतेजोविशेषः ॥ तथाहि सर्वोऽपि भयङ्करपदार्थस्त्रिविधः—आकृतिभीषणः क्रियाभीषणो माहात्म्यभीषणश्चेति तत्राकृतिभीषणा रक्षःपिशाचादयः ॥ क्रियाभीषणाः परशुरामवीरभद्रहनुमत्प्रभृतयः ॥ माहात्म्यभीषणा युधिष्ठिरादयः ॥ अत्र माहात्म्यभीषणं राजवपुर्विनयादि गुणैर्विश्वसनीयं जातमिति यावत् ॥ अनेन राज्ञः प्रत्युत्थानादिसत्कारस्सूच्यते ॥ यद्वा । दीप्तिर्नाम महाभाग्यादिद्योतकः कान्तिविशेषः ॥ तादृशकान्तिविशेषवतोऽपि सार्वभौमस्यापीति यावत् ॥ तत्रापि वपुष इत्यनेन यौवनमध्यवर्तित्वं व्यज्यते ॥ विश्वसनीयता उपसर्पणार्हता ॥ प्रत्युत्थानादिविनयक्रियेति यावत् ॥ अहो आश्चर्ये ॥ महैश्वर्यवतस्सार्वभौमस्य विनयादिकमाश्चर्यमिति भावः ॥ अथवा ऋषिभ्यो नातिभिन्ने उपशमवत्त्वयोऽत्यर्थमपृथग्भूते ॥ किंत्वीषदेव पृथग्भूत इति यावत् ॥ एतत् यद्वपुषो विश्वसनीयत्वं प्रत्युत्थानविनयादिकमिति यावत् ॥ उपपन्नं युक्तम् ॥ ऋषिभ्यो नातिभिन्नत्वाद्योग्यमिति यावत् ॥ नवयौवनरूपसार्वभौमत्वादि महदैश्वर्यं महतां विनयकरम् ॥ किंतु नीचानामेव मदकरमिति भावः ॥ कुतः कस्मात्कारणात् ॥

---

जयतु भर्ता । एतौ द्वौ ऋषिकुमारौ प्रतीहारभूमिं द्वारस्थानमुपस्थितौ । 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः । 'भूमिः स्यात्स्थानमात्रके' इति विश्वः ।
एष प्रवेशयामि । इत इतो भवन्तौ । अहो इत्याश्चर्ये । दीप्तिमतोऽपि तेजोयुक्तस्यापि ।
नातिभिन्ने सदृशे । नसमासः । सादृश्यमेव श्लोकेनाह—

अध्याक्रान्ता वसतिरमुनाऽप्याश्रमे सर्वभोग्ये
रक्षायोगादयमपि तपः प्रत्यहं सञ्चिनोति ।
अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः
पुण्यश्शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥ १४

---

१४ इत्याशङ्कयाह—अध्याक्रान्तेत्यादि ॥ अमुनापि दुष्यन्तेनापि सर्वभोग्ये सर्ववर्णानां विनयाधानरक्षणभरणार्हे आश्रमे राज्यपरिपालनाधिकारे ॥ सर्वभोग्य इत्यनेन सर्वजनाः पक्षपातराहित्येन स्वप्रजा इव राज्ञा रक्षिता इति द्योत्यते ॥ वसतिरवस्थितिः ॥ अध्याक्रान्ता स्वीकृता ॥ अनेनाप्रतिभटं साम्राज्यं व्यज्यते ॥ तेन विनीतस्यैव राज्ञस्सर्वे जना वशीभवन्तीति भावः ॥ तपस्विपक्षे । आश्रमे धर्मारण्ये ॥ सर्वभोग्य इत्यनेनाश्रमस्य सकलजनसाधारणत्वमुक्तम् ॥ तेनाश्रमस्य सकलसाधारण्येन ऋषीणां यथास्वत्वाभिमानाभावेन गर्वाभावः । तद्वद्दुष्यन्तस्य सार्वभौमत्वेऽप्यहङ्काराभाव इति यावत् ॥ अयमपि दुष्यन्तोऽपि ॥ प्रत्यहं प्रतिदिनं प्रत्यहमित्यनेन सार्वकालिकप्रजापरिपालनजागरूकत्वं व्यज्यते ॥ तेन कादाचित्कविषयीति भावः ॥ रक्षायोगात्प्रजापरिपालनात् ॥ तपष्षष्ठांशरूपं सुकृतविशेषम् ॥ राज्ञस्तपष्षष्ठांशस्य न्यायसिद्धत्वात् ॥ सञ्चिनोति सम्यगुपचितं करोति ॥ उक्तं च मनुना—"यदह्ना कुरुते धर्मं प्रजाधर्मेण पालयन् । शतवर्षसहस्राणि तस्य भुङ्क्ते महत्फल"मिति ॥ रक्षायोगादित्यनेन राज्यपरिपालनसामर्थ्यं सूच्यते ॥ तेन शूरत्वं चोक्तम् ॥ प्रजापरिपालनमेव राजधर्मः तेनैव महापुरुषत्वलाभ इति भावः ॥ अस्यापि दुष्यन्तस्यापि वशिनः जितेन्द्रियस्य ॥ अहङ्काररहितस्येति यावत् ॥ वशिन इत्यनेन जितेन्द्रियत्वमेव विनयप्रजावशीकरणधर्मसङ्ग्रहकीर्त्यार्जनोपाय इति द्योत्यते ॥ चारणद्वन्द्वगीतः चारणमिथुनवर्णितः ॥ अनेन दुष्यन्तगुणा मनुष्यैर्वर्णयितुं न शक्यन्ते ॥ किं तु क्रान्तदर्शिभिर्देवयोनिभिरेव वर्ण्यन्त इति व्यज्यते ॥ अनेनामानुषप्रभावस्सूच्यते ॥ कीर्तेर्दिगन्तव्यापित्वं च ॥ पुण्यः पुण्यजनकः ॥ अनेन पुण्यश्लोकिता ज्ञाप्यते ॥ मननान्मुनिः ॥ "मुनिर्दीनतपस्विना" विति विश्वः ॥ केवलमेकं राजपूर्वः राजशब्दः पूर्वो यस्य स तथोक्तः ॥ राजोपपदमात्रभिन्न इत्यर्थः ॥ द्यामाकाशं स्पृशत्याश्रयते ॥ अनेन जन्मसद्भावस्य महापदानजनितकीर्तिसम्पादनेन साफल्यमिति व्यज्यते ॥ राजपूर्वो मुनिरित्यनेन मुनीनां यथा तपःकरणे सावधानता तथा राज्ञामपि राज्यरक्षायां जागरूकतया भवितव्यमिति भावः ॥

---

अधीति ॥ अमुना । अपिशब्दात्सर्वत्र मुनिः । सर्वैर्ब्रह्मचारिप्रमुखैर्भोग्य आश्रयणीयः सर्वभोग्यस्तस्मिन्नाश्रमे गृहस्थाश्रमे । वसतिर्गृहमध्याक्रान्ता अङ्गीकृता । मुनिपक्षे सर्वैर्बटुभिर्भोग्यः पाठार्थमाश्रयणीयस्तस्मिन्नाश्रमे मठे वसतिः । स्थानमङ्गीकृतम् । 'आश्रमो व्रतिनां मठे । ब्रह्मचर्यादिचतुष्के' इति । 'वसतिः स्यादवस्थाने निशायां सदनेऽपि च' इति हैमः । उक्तं च पद्मपुराणे—'यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः । तथा गृहस्थमाश्रित्य वर्तन्ते चतुराश्रमाः ॥' इति । रक्षायोगात् प्रजापरिपालनात् । तपो लोकोत्तरं धर्मं सञ्चिनेति । रक्षार्थं शरीररक्षार्थम् । योगोऽष्टाङ्गस्तन्निमित्तम् । तपश्चान्द्रायणादि ।

द्वितीयः—गौतम, अयं स वलभित्सखः पार्थिवो दुष्यन्तः ।

प्रथमः—अथ किं !

द्वितीयः—तेन हि ।

नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्री-
मेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ।
आशंसन्ते सुरयुवतयः सक्त(बद्ध)वैरा हि दैत्यै-
रस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥ १५

---

गौतमेत्यादि ॥ वलभित्सखः देवेन्द्रसखः ॥ अनेन देवेन्द्रस्यापि दुष्करकार्यकरणेन दुष्यन्तस्य मित्रत्वमिति ज्ञातव्यम् ॥ तेन दुष्यन्तपरिपालितभूलोकस्यापि स्वर्गातिशायि वैभवं सूच्यते ॥ देवेन्द्रस्यापि महाकार्यकरणसाहाय्ये दुष्यन्तापेक्षा ॥ अस्माकं पुनः का कथेति भावः ॥ अथ किमित्यङ्गीकारे ॥ तेन हि उक्तगुणवत्त्वेन हेतुना ॥

१५ नैतदिति ॥ अयं दुष्यन्तः ॥ एकः अप्रतिभटः उदधिश्यामसीमां धरित्रीं भुनक्ति पालयतीति यत् तदेतच्चित्रमाश्चर्यं न भवति ॥ इतरविलक्षणशौर्यवतो दुष्यन्तस्य लोकमात्राधिपत्यमाश्चर्यं न भवतीति यावत् ॥ नगरपरिघप्रांशुबाहुरित्यनेन—श्रु ॥ "रूपमेवास्यैतन्महिमानं व्याचष्ट" इति न्यायेनाकृतिविशेष एव माहात्म्यं व्यनक्तीति ध्वन्यते ॥ तेन चेतरत्र कार्यान्तरगमने निश्शङ्कत्वं व्यज्यते ॥ शूरस्यैव सार्वभौमत्वं भवति ॥ तथापि केचन शूरास्स्वकीयराज्यमात्रं रक्षन्ति ॥ दुष्यन्तस्य लोकान्तररक्षायामपि शक्तिरस्तीति भावः ॥ तदेवाह—आशंसन्त इत्यादिना ॥ दैत्यैर्दानवैः । सक्तवैरा आहितवैरास्सुरस्त्रियः अस्य दुष्यन्तस्याधिज्ये आरोपितगुणे आशंसन्ते वाञ्छन्ति ॥ देवेन्द्रपरिपालितस्वर्गलोकस्याप्युपद्रवबाहुल्यमस्ति; दुष्यन्तपरिपालितभूलोकस्य बाधा नास्तीत्यर्थः ॥ अनेन

---

सञ्चिनोति करोति । 'तपश्चान्द्रायणादौ स्याद्धर्मे लोकोत्तरेऽपि च' इति विश्वः । चारणानां द्वन्द्वं स्त्रीपुरुषयुगलम् । 'स्त्रीपुंसौ मिथुनं द्वन्द्वम्' इत्यमरः । तेन गीत इति विशेषणमनुवाद्यम् । चारणलक्षणं रत्नाकरे—'किंकिणीवाद्यवेदी च वृतो विकटनर्तकैः । मर्मज्ञः सर्वरागेषु चतुरश्चारणो मतः ॥' इति । केवलं राजपूर्वो मुनिरिति शब्दः । राजर्षिरित्यर्थः । द्यां स्वर्गं स्पृशति । 'द्यौः स्वर्गसुरवर्त्मनोः' इति विश्वः । श्लेषो व्यतिरेकश्च । बलभित्सखः । अनेन वक्ष्यमाणविघ्नापसारणक्षमत्वं ध्वन्यते ॥

नैतदिति ॥ उदधिश्यामसीमामित्युक्त एकदेशेऽपि तत्सम्भवात्कृत्स्नामित्युक्तम् । नगरपदेनात्यन्तदैर्घ्यं ध्वनितम् । परिघोऽर्गलः । 'परिघो योगभेदेऽस्त्रे मुद्गरेऽर्गलघातयोः' इति विश्वः । तद्वत्प्रांशू दीर्घौ बाहू यस्य सः अनेन भुजसहायेन सर्वे शत्रवो हता इति कारणे वक्तव्ये समस्तोर्वीजयलक्षणकार्यमेवोक्तमिति पर्यायोक्तालङ्कारः । सुरयुवतय इति युवतिग्रहणं तासामतिभीरुत्वाद्बन्दीदुःखाद्यनुभवात्स्त्रीत्वेन युद्धाभिमानाद्यभावाच्च । प्रथममस्य धनुषो ग्रहणादस्यैव प्राधान्यं द्योत्यते । 'पौरुहूते च वज्रे' इति पश्चादुपदेशाद्गौणत्वं ध्वन्यते ।

**उभौ**—(उपगम्य) विजयस्व राजन् ।

**दुष्यन्तः**—(आसनादुत्थाय) अभिवादये भवन्तौ ।

**उभौ**—स्वस्ति भवते (इति फलान्युपहरतः)

**दुष्यन्तः**—(सप्रणामं प्रतिगृह्य) आज्ञापयितुमिच्छामि ।

**उभौ**—विदितो भवानाश्रम(सदा)वासिनामिहस्थः । तेन भवन्तं प्रार्थयन्ते ।

**दुष्यन्तः**—किमाज्ञापयन्ति ?

---

दुष्यन्तस्य शूरत्वमुक्तम् ॥ स्वयज्ञविघ्नकरनिवारणसामर्थ्यं च व्यज्यते ॥ अभ्याक्रान्तेत्यादिनैतदन्तेनातिशयो नामालङ्कारः ॥ तदुक्तम्—"बहून्गुणान्कीर्तयित्वा सामान्यगुणसम्भवान् । विशेषः कीर्त्यते यस्तु ज्ञेय स्सोतिऽशयो बुधै" रिति ॥ अत्र पूर्वश्लोके ऋषिसाधर्म्यमभिहितं द्वितीय श्लोकप्रथमार्धेन वीरक्षत्रियसाधर्म्यमभिधाय द्वितीयार्धेन सकलक्षत्रियेभ्यो विशिष्टस्सुरयुवतिप्रार्थनीयताख्यो गुण उक्त इत्यतिशयः ॥

**फलानीत्यादि** ॥ उपहरतस्समर्पयतः ॥ "रिक्तपाणिस्तु नोपेयाद्राजानं दैवतं गुरु" मिति न्यायात् ॥ आज्ञापयितुं आज्ञापनां प्रयोजयितुं गुरवः ॥ हितोपदेशकाः ॥ तदुक्तम्—"गुशब्दस्त्वन्धकारस्स्याद्रुशब्दस्तन्निरोधकः । अन्धकारनिरोधित्वाद्गुरुरित्यभिधीयते" इति निरुक्तपरिभाषायाम् ॥ आन्तरतिमिरविरोधिन इति यावत् ॥

---

आशंसन्त इति 'शसि इच्छायाम्' इत्यस्येदितो रूपम् । 'शंसु स्तुतिहिंसनयोः' इत्यस्य तु शंसतीति । तथासावेव रघौ—'इत्याशशंसे करणैरबाह्यैः' इति । वृत्त्यनुप्रासः समुच्चयालङ्कारः । वज्रधनुषोर्द्वयोः समुच्चितत्वात् । नैतच्चित्रमित्यर्थं प्रत्युत्तरार्थवाक्यार्थस्य हिशब्देन हेतुत्वोपादानात्काव्यलिङ्गमुपमा च । उभयोर्मन्दाक्रान्तावृत्तम् । आभ्यां युद्धवीरो ध्वन्यते । तल्लक्षणं तु—'अविस्मयादसम्मोहादविषादाच्च यः सताम् । धर्माद्यर्थविशेषेषु कार्यतत्त्वविनिश्चयः ॥ तपश्च विनयः कीर्तिः पराक्रमणशक्तिता । इत्यादयो विभावाः स्युः' इति । 'युद्धवीरे हर्षगर्वामर्षाद्या व्यभिचारिणः । असहायेऽपि युद्धेच्छा समरादनिवर्तनम् ॥ भीताभयप्रदानाद्या अनुभावाः प्रकीर्तिताः । उत्साहः स्थायिभावश्च धीरा वीरं बभाषिरे ॥' इति । अत्र विभावानुभावावुपनिबद्धौ । व्यभिचार्यादयः स्वयमूहनीयाः । आज्ञाप्यतामित्युक्ते तौ प्रति नियोगः कृतः स्यादित्याज्ञापयितुमिच्छामीत्युक्तम् ।

**उभौ**—अ(त)त्रभवतः कण्वस्य महर्षेरसान्निध्याद्रक्षांसि न इष्टिविघ्न-मुत्पादयन्ति । तत्कतिपयरात्रं सारथिद्वितीयेनायुधसध्रीचा भवता सनाथी-क्रियतामाश्रमइति ।

**दुष्यन्तः**—अनुगृहीतोऽस्मि ।

**विदूषकः**—(अपवार्य) [1]इअं दाणिं अनुऊला अब्भत्थणा ।

**दुष्यन्तः**—रैवतक, मद्वचनादुच्यतां सारथिः, सबा(णासनं)णकार्मुकं रथमुपस्थापयेति ।

**दौवारिकः**—[2]जेदु भट्टा जं देवो आणवेदि ।

(इति निष्क्रान्तः)

**उभौ**—(सहर्षम्)

**अनुकारिणि पूर्वेषां युक्तरूपमिदं त्वयि ।**

---

1 इयमिदानीमनुकूलाभ्यर्थना ।

2 जयतु भर्ता । यद्देव आज्ञापयति ॥

---

महर्षेरसान्निध्यात् सन्निधानाभावमधिगम्य ॥ ल्यब्लोपे पञ्चमी ॥ उत्पादयन्ति सम्पादयन्ति ॥ सारथिर्द्वितीयो यस्य स तथोक्तः । सनाथीक्रियतां ऋषेरसन्निधानादनाथः । इदानीं नाथसहितः क्रियताम् ॥ निर्विघ्नं क्रियतामित्यर्थः ॥ अनेन राज्ञश्शूरत्वं प्रकटितम् ॥ तदुक्तम्—"साहाय्यमन्तरेण शत्रुजेता शूर" इति ॥ अत्र सारथिद्वितीयेनेत्यनेनासाहाय्यत्वं सूचितम् ॥ तेनैव युद्धशूरत्वं प्रकटीचकार ॥ अपवार्येत्यादिना । अपवार्य प्रच्छाद्य । नाट्ये—"अपवारितकं कार्यं त्रिपताकेन पाणि"नेति भरतेनोक्तम् ॥

**इअमिति** ॥ इदानीं सांप्रतम् ॥ शकुन्तलादर्शनार्थमुपायविचारसमय इति यावत् ॥ अनुकूला अनायासेन तद्दर्शनाद्यनुरूपा ॥

१६ **अनुकारिणीत्यादि** ॥ खलु यतः कारणात्पौरवाः पुरुवंशोद्भवा राजानः ॥ न तु त्वमेक एवेति यावत् ॥ आपन्नाभयसत्रेषु दीक्षिताः गृहीतव्रताः ॥ तस्मा-

---

प्रार्थयन्त आश्रमसद इति विभक्तिविपरिणामेन सम्बध्यते । तत्रभवतः पूज्यस्य । क्वचित् 'तत्र भगवतः' इति पाठः । तव संनिधानादिति सम्बन्धः । एषेदानीमनुकूलाभ्यर्थना । ते तव । बाणासनं धनुः । यद्देव आज्ञापयति ॥

**अनुकारिणीति** ॥ पूर्वेषां पुरुप्रभृतीनामनुकारिणि सदृशे । चारित्र्येण रूपेण शौर्येण दानेन पावित्र्येणेत्यादि ज्ञेयम् । युक्तरूपमतिशयेन युक्तम् । प्रशंसायां रूपप् । आपन्ना आपद्युक्ताः । 'आपन्न आपत्प्राप्तः स्यात्' इत्यमरः । तेषां यदभयं तदेव

आपन्नाभयसत्रेषु दीक्षिताः खलु पौरवाः ॥ १६

दुष्यन्तः—गच्छ(तं)तां पुरो भवन्तौ ; अहमप्यनुपदमागत एव ।

(इति निष्क्रान्तौ)

उभौ—विजयस्व राजन् !

दुष्यन्तः—माढव्य ! अप्यस्ति शकुन्तलादर्शनकुतूहलम् ?

विदूषकः—[1]पढमं सपरिवाहं आसी । दाणिं रक्खसवुत्तंतेण बिन्दू-वि णावसेसिदो ।

दुष्यन्तः—मा भैषीः ॥ ननु मत्समीपे वर्तिष्यसे ?

विदूषकः—[2]एसो रक्खसादो रक्खिदोह्मि ॥

(प्रविश्य दौवारिकः)

---

1 प्रथमं सपरिवाहमासीत् । इदानीं राक्षसवृत्तान्तेन बिन्दुरपि नावशेषितः ॥

2 एष राक्षसाद्रक्षितोऽस्मि ॥

---

त्पूर्वेषां पुरुवंश्यनृपाणां कर्मणि षष्ठी ॥ अनुकारिणि अनुसारिणि ॥ पूर्वेषामनुकारिणीत्यनेन केषाञ्चिद्राज्ञां वंश्याश्शूराश्चाशूराश्च भवन्ति ॥ पौरवास्तु न तथा ॥ किन्तु सर्वे शूरा इति व्यज्यते ॥ इदं आपन्नपरित्राणं युक्तरूपं सुष्ठु युक्तम् ॥ प्रशंसायां रूपप् प्रत्ययः ॥ त्वयीत्यनेन आपन्नपरित्राणं कर्तुं त्वदन्यः कोऽपि नास्तीति व्यज्यते ॥

पढममित्यादि ॥ प्रथमं त्वया तद्रूपादिवर्णनसमये ॥ सपरिवाहं यथा तटाकस्य जलातिशये सत्युत्कूलप्रवाहता । तद्वत्तद्दर्शननिमित्तकौतूहलस्यापीति यावत् ॥ बिन्दुरपि लवमात्रमपि ॥ "बिन्दुर्ना पद्मके ज्ञातर्यक्षरावयवे लव" इति हलायुधः ॥

---

सत्त्रं यज्ञविशेषः तत्र दीक्षिताः । कृतदीक्षा इति रूपकम् । अनेनावश्यकर्तव्यत्वं भयापसारणस्य ध्वन्यते । खलु यस्मादित्यनेन पूर्वार्धं प्रति हेतुत्वात्काव्यलिङ्गमपि । अनुपदं भवत्पदन्यासं लक्ष्यीकृत्य । अनन्तरमेवेत्यर्थः । 'पादन्यासे पादमुद्रा सुसिङ्न्ते पदं भवेत्' इति क्षीरस्वामी । प्रथमं सपरीवाहमासीत् । जलनिर्गमनमार्गवाची परीवाहशब्दोऽल्पस्य लक्षको निर्गमनसम्बन्धेनाधिक्यं लक्षयति । यदधिकं भवति तन्निर्गच्छति । शीघ्रप्रतिबन्धः फलम् । तदेवाह—इदानीं राक्षसवृत्तान्तेन बिन्दुरपि नावशेषितः । अत्रापि बिन्दुशब्दोऽल्पस्य लक्षकः । एष राक्षसाद्रक्षितोऽस्मि ।

**दौवारिकः**—[1]जेदु भट्टा ॥ सज्जो र(धो)हो ॥ भट्टिणो विअअपत्थाणं अवेक्खदि ॥ एसो उण नअरादो देवीणं आणत्तिहरो करभओ (आअदो) उवट्ठिदो ॥

**दुष्यन्तः**—(सादरं) किमम्बाभिः प्रेषितः ?

**दौवारिकः**—[2]अह किम् ॥

**दुष्यन्तः**—ननु प्रवेश्यताम् ॥

**दौवारिकः**—[3]तह ॥ (इति निष्क्रम्य करभकेण सह प्रविश्य) [4]एसो भट्टा ॥ उपसप्पा ॥

**करभकः**—(उपसृत्य) [5]जेदु जेदु भट्टा देवी आणवेदि—आआमिणि चउत्थे दिअहे दीहाउणा अवस्सं (सम्भाविद्व्वात्ति) सण्णिहिदेण होदव्वं ति॥

**दुष्यन्तः**—इतस्तपस्विकार्यम् ॥ इतो गुरुजनाज्ञा ॥ द्वयमप्यनतिक्रमणीयम् ॥ किमत्र प्रति(विधेयम्)विधातव्यम् ?

---

1 जयतु भर्ता ॥ सज्जो रथः भर्तुर्विजयप्रस्थानमपेक्षते । एष पुनर्नगराद्देवीनामाज्ञप्तिहरः करभक (आगतः) उपस्थितः ॥

2 अथ किम् ।

3 तथा ॥

4 एष भर्ता । उपसर्प ।

5 जयतु जयतु भर्ता । देव्याज्ञापयति आगामिनि चतुर्थे दिवसे निर्वृत्तपारण उपवासो मम भविष्यति । तस्मिन् दिवसे दीर्घायुषाऽवश्यं (सम्भावनीयेति) सन्निहितेन भवितव्यमिति ॥

---

करभक इत्याज्ञप्तिहरस्य नाम ॥ अथ किमित्यङ्गीकारे

---

सज्जो रथो भर्तुर्विजयप्रस्थानमपेक्षते । एष पुनर्नगराद्देवीनामम्बानामाज्ञप्तिहरः करभक आगतः । अथ किम् । तह इति । तथेति । एष भर्ता । उपसर्प । जयतु भर्ता । देव्यम्बाज्ञापयति । आगामिनि चतुर्थदिवसे प्रवृत्तपारणो मे उपवासो भविष्यति । पूर्वमुपवासवचनश्रवणमस्य दुःखदं भविष्यतीतिप्रवृत्तपारण इति प्रथममुपन्यस्तम् । तत्र दीर्घायुषावश्यं सम्भावनीयेति ।

**विदूषकः**—[1]तिसंकू विअ अन्तराळे चिट्ठ ॥

**दुष्यन्तः**—अलं परिहासेन ॥ सत्यमाकुलीभूतोऽस्मि ॥

**कृत्ययोर्भिन्नदेशत्वाद्द्वैधीभवति मे मनः ।**
**पुरः प्रतिहतं शैले स्रोतः स्रोतो(वहो)वहं यथा ॥** १७

(विचिन्त्य) सखे! त्वमम्बाभिः पुत्र इति प्रतिगृहीतः ॥ सभवानितः प्रतिनिवृत्य तपस्विकार्यव्यग्र(मानसं मां)तां निवेद्य । तत्रभवतीनां पुत्त्रकृत्यमनुष्ठातुमर्हसि ॥

**विदूषकः**—[2](ण)मा खु मं रक्खोभीरुअं गणेसि ?

**दुष्यन्तः**—भो महाब्राह्मण कथमेतद्भवति सम्भाव्यते ?

**विदूषकः**—[3]तेण हि जह राआणुएण गन्तव्वं तह (गच्छामि) गमिस्सम् ॥

---

1 त्रिशंकुरिवान्तराळे तिष्ठ।
2 मा खलु मां रक्षोभीरुकं गणयसि ?
3 तेन हि यथा राजानुजेन गन्तव्यं तथा (गच्छामि) गमिष्यामि ।

---

**तिसङ्कू इति ॥** यथा त्रिशङ्कुर्द्यावापृथिव्योर्मध्ये तिष्ठति । तद्वत्त्वमपि कृत्ययोर्मध्ये तिष्ठेत्यर्थः ॥ तेन द्वयमपि न कर्तव्यमिति भावः ॥ सत्यमित्यादि । सत्यं तत्त्वतः ॥ "सत्यं शपथतत्त्वयो "रित्यमरः ॥ आकुलीभूतोऽस्मि कलुषीभूतचित्तोऽस्मि ॥

**१७ कृत्ययोरिति ॥** कृत्ययोः कर्तुं योग्ययोः ॥ अनेन द्वयोरप्यवश्यं कर्तव्यता सूचिता ॥ पुरश्शैले प्रतिहतं प्रतिरुद्धं स्रोतोवहा नद्यः तत्सम्बन्धिस्रोतोवहम् ॥ "स्रोतोऽम्बुवेगेन्द्रिययो "रिति विश्वः ॥ यथा शब्दो दृष्टान्तवाचकः ॥

---

प्रतिविधेयं प्रतिकर्तव्यम् । त्रिशङ्कुरिवान्तराले तिष्ठेत्यादिषु विदूषकवचनेषु हास्यप्रतीतिः स्फुटैव । उक्तं च—'विदूषकस्य हास्यं तु नायके हास्यकारणम्' इति । तल्लक्षणम्—'भाषणाकृतिवेषणां क्रियायाश्च विकारतः । लौल्यादेश्च परस्थानामेषामनुकृतेरिति । 'विकासश्चेतसो हासः' इति । एतत्स्थायी हास्य इति ज्ञेयम् ॥

**कृत्ययोरिति ॥** कार्ययोर्मनसो द्वैधीभवनं नामैकत्वापर्यवसानम् । उपमाने तु मार्गद्वयगमनम् । उभे भिन्ने अपि समानधर्मार्थमतिशयोक्त्यैकत्वेनाध्यवसिते । पुरोऽग्रे शैले प्रतिहतमवरोधं प्राप्तं स्रोतोवहो नद्याः स्रोत इव । अन्यदल्पं स्रोतः शैलावरुद्धं तिष्ठेदेवेति सम्बन्धिपदोपादानम् । तत्रापि नद्यादिपदाभावेन यद्विशिष्टस्य ग्रहणं तेन

**दुष्यन्तः**—तपोवनोपरोधः परिहरणीय इति सर्वाननुयात्रिकान् त्वया सह प्रस्थापयामि ॥

**विदूषकः**—[1]तेण हि जुवराओम्हि दाणीं संवुत्तो ॥

**दुष्यन्तः**—(आत्मगतम्) चपलोऽयं वटुः ॥ कदाचिदस्मत्प्रार्थनामन्तःपुरेभ्यः कथयेत् ॥ भवत्वेनमेवं वक्ष्ये ॥ (विदूषकं हस्ते गृहीत्वा) (प्रकाशम्) वयस्य ! महर्षिगौरवादाश्रमं गच्छामि ॥ न खलु सत्यमेव तापसकन्यकायां शकुन्तलायां ममाभिलाषः ॥ पश्य—

1 तेन हि युवराजोऽस्मीदानीं संवृत्तः ॥

**तेण हीति** ॥ युवराज इत्यनेन राज्ञः पुत्राभावस्सूचितः ॥ राज्ञः पुत्रसद्भावे स्वस्य युवराजत्वकथनस्यानुचितत्वात् ॥ तेन च स्वान्तःपुरयुवतिषु पुत्रोत्पत्तिर्नास्ति ॥ इतः परमेव शकुन्तलायां भविष्यतीति सूच्यते ॥

**चपलइत्यादि** ॥ चपलः अनवस्थितचित्तः ॥ "चपलः पारदे शीघ्रे दुर्विनीतेऽनवस्थित "इति वैजयन्ती ॥ पटुर्वक्तव्यावक्तव्यविवेकरहितः ॥ अन्तःपुरेभ्योऽन्तःपुरवासिनीभ्यः ॥ भवतु स यादृशस्तादृशो वास्तु ॥ यद्वा—भवत्वित्युपायस्मरणे ॥ एवं वक्ष्ये वक्ष्यमाणप्रकारेण प्रच्छाद्य कथयिष्यामि ॥ एनमित्यनादरनिर्देशेन प्रतारणे सुकरत्वं व्यज्यते ॥

महर्षिगौरवात् ॥ महर्षेर्बहुमानाद्धेतोः ॥ नचेत्सर्वानर्थकारी शापो भवेदिति भावः ॥ तर्हि शकुन्तलादर्शनार्थमपि भवत्वित्याशङ्क्याह—ममेति ॥ नागरिकस्य ममेत्यर्थः ॥ तापसकन्यायाम् ॥ तापसपदेन परिणयायोग्यत्वं रूपाद्यभावश्च व्यज्यते ॥ कन्यापदेनाप्रागल्भ्यं तात्कालिकसम्भोगाद्यनर्हत्वं सूच्यते ॥ तस्यामभिलाषः आदरः ॥ नास्ति ॥ तर्हि परबुद्धेरप्रत्यक्षत्वादनुरागाभावे किं निश्चायकमित्याशङ्क्याह—सत्यमिति ॥ सत्यं तत्त्वतः ॥ अमुमुर्थं विशिष्याह—पश्येत्यादिना ॥

महानदीत्वं ध्वनितम् । वृत्त्यनुप्रासच्छेकानुप्रासयोः संसृष्टिः उपमा च । न खलु मां रक्षोभीरुकं गणय । भवति त्वयि । यथा राजानुगेन गन्तव्यं तथा गच्छामि । आनुयात्रिकान्सहागतान् । तेन हि युवराजः । अस्मीत्यहमर्थे । इदानीं संवृत्तः । अन्तः पुरेभ्यस्तत्स्थस्त्रीभ्यः । विदूषकं प्रत्याययितुं तापसकन्यकायामित्युक्तिः ॥

क्व वयं क्व परोक्षमन्मथो
मृगशावैस्सममेधितो जनः ।
परिहासविजल्पितं सखे
परमार्थेन न गृह्यतां वचः ॥ १८

१८ क्वेति ॥ वयमिति बहुवचनेन प्रौढकामिनीवेद्यलोकोत्तरचमत्कारिमन्मथकलाकुशलाः तादृशनागरिका वयं कुत्रेति द्योत्यते ॥ परोक्षमन्मथः अज्ञातकामः । व्यवहितमदन इति यावत् ॥ मृगशावैर्हरिणपोतैः समं तुल्यम् ॥ "समा वर्षे समं तुल्य"मिति यादवः ॥ एधितो वर्धितः ॥ मृगशावैरित्यनेन महर्षेस्तिर्यग्जन्तुषु मनुष्येषु च साधारणबुद्धिः ॥ न तु लोकोत्तरस्त्रीरत्नमिति ॥ तत्तत्कालवयउचितद्रव्यैस्सम्यङ्न वर्धित इत्यर्थः ॥ जन इत्यनेन जनमात्रमुच्यते ॥ न तु नागरिकजनसहवासेन लोकवृत्तान्ताभिज्ञत्वेन प्रागल्भ्यमिति द्योत्यते ॥ क्व कुत्र । यदि तस्यानागरिकजनसहवासेन मन्मथकलावैदग्ध्येन प्रागल्भ्यं काश्यपाधीनत्वाभावश्च भवति । तदा तत्संसर्गस्समुचितस्यादिति भावः ॥ अत्र नागरिकानागरिकयोस्संसर्गस्यासम्भावितत्वाद्द्वौ क्वौ प्रयुक्तौ ॥ तदुक्तम्—"अत्यन्तासम्भाविते-ऽर्थे द्वौ क्वौ प्रयुज्येते" इति ॥ तर्ह्येतावन्तमनेहसं चित्रे निवेश्येत्यादिना रूपं वर्णितं । दर्भाङ्कुरेणात्यादिनानुरागोऽपि वर्णितः ॥ तत्कथमित्यत आह—परिहासविजल्पितमिति ॥ तर्हि सर्वैस्समं परिहासो न युज्यत इत्यत आह—सख इत्यादि ॥ मित्रेण समुचितानुचितादिकं वक्तुं शक्यत इति भावः ॥ परिहासविजल्पितमित्यनेन पूर्वं तद्रूपादिविषयेऽतिमात्रं बहुवर्णितमिति व्यज्यते ॥ वचस्तद्रूपादिवर्णनरूपं परमार्थेन तत्त्वेन न गृह्यतां नाङ्गीक्रियताम् ॥ अत्र पूर्वोक्तस्य शकुन्तलानुरागस्यान्यथाकथनाद्राज्ञः प्रज्ञागुण उक्तः॥ तदुक्तम्—

क्व वयमिति ॥ वयं क्व । वयमित्यर्थान्तरसंक्रमितवाच्यम् । तेनानेकराजोपचारयुक्तत्वं नानावैदग्धीकुशलत्वं च व्यज्यते । मृगशावैर्हरिणबालकैः । समं सहैधितो वृद्धिं प्राप्तः । अत एव परोक्षमन्मथो दूरभुक्तमनोभवः । कामकलानभिज्ञ इत्यर्थः । एधितपदार्थसमर्थनार्थं शावपदम् । तेन नावकरत्वम् । परिहासेन विविधं जल्पितं यत्र तद्वचः शकुन्तलायामनुरागकथनरूपं परमार्थेन न गृह्यताम् । पुनरुक्तवदाभासः । वृत्त्यनुप्रासः । काव्यलिङ्गं पदार्थवाक्यार्थरूपेण । पूर्वार्धे विषमयैको भेदः सहोऽक्तिश्च । वैतालीयं वृत्तम् । अन्ये त्वर्धसमं प्रबोधितं मन्यन्ते । 'राजा—स्वगतम्' इत्यादिनैतदन्तेन संवृतिर्नाम सन्ध्यन्तराङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'संवृतिः स्वयमुक्तस्य स्वयं प्रच्छादनं भवेत्' इति ॥

**विदूषकः**—[1]अथ इं ॥

(इति निष्क्रान्ताः सर्वे)

1 अथ किम् ॥

"उक्तार्थस्यान्यथाकथनं प्रज्ञावत्त्वमुदाहृत"मिति ॥ अथ किमित्यङ्गीकारे ॥ अत्र देवीव्रतरूपावान्तरार्थकथनं राज्ञस्सकाशाद्विदूषकापकर्षणार्थमित्यवगन्तव्यम् ॥

इति श्रीरमणवेङ्कटाचलेश्वरपादारविन्दसमाराधकवैखानसकुलतिलक
श्रीकौशिकगोत्र श्रीतिरुमलाचार्यपुत्त्रेण ध्वनिप्रस्थानपरमाचार्याष्ट-
भाषाचक्रवर्ति श्रीनिवासाचार्येण विरचितायां
शाकुन्तलव्याख्यायां द्वितीयोऽङ्कः ॥

इति श्रीमदभिज्ञानशाकुन्तलटीकायामर्थद्योतनिकायां द्वितीयोऽङ्कः समाप्तः

॥ श्रीरस्तु ॥

# ॥ अभिज्ञानशाकुन्तलम् ॥

## ॥ तृतीयोऽङ्कः ॥

(ततः प्रविशति यजमानशिष्यः कुशानादाय)

**शिष्यः**—अहो? महानुभावः खलु पार्थिवो दुष्यन्तः ॥ यत्प्रविष्टमात्र एवाश्रमपदं तत्रभवति राजनि निरुप(द्रवाणि)प्लवानि नः कर्माणि संवृत्तानि ।

**का कथा बाणसन्धाने ज्याशब्देनैव दूरतः ।**
**हुङ्कारेणेव धनुषस्स हि विघ्नानपोहति ॥ १**

---

कविरिदानीं कथान्तरमारभमाणो वस्तुसङ्कटनाय विष्कंभं नामार्थोपक्षेपकं प्रस्तौति—**ततः प्रविशतीत्यादि** ॥ यजमानशिष्यः यजमानः कण्वस्तस्य शिष्यः ॥ खलु यतो हेतोः ॥ तत्रभवति पूज्ये राजनि आश्रमं धर्मारण्यम् ॥ नः अस्माकं कर्माणि उद्देश्यक्रियाः निरुपप्लवानि निर्विघ्नानि ॥ ततो हेतोर्महानुभावः माहात्म्यवान् ॥ अमानुषप्रभाव इति यावत् ॥ अहो आश्चर्ये ॥

१ महानुभावत्वं निर्विघ्नत्वं चाह—**काकथेत्यादिना** ॥ हि यतः ॥ धनुषः ज्याशब्देन मौर्वीध्वनिना ज्याशब्दमुत्प्रेक्षते—हुङ्कारेणेवेति ॥ अनेन यज्ञकर्मसमाप्तिपर्यन्तं राज्ञो जागरूकत्वं व्यज्यते ॥ विघ्नान् कर्मोपप्लावकान् अपोहत्यपसारयति ॥ बाणसन्धाने सति का वार्ता? विघ्नानामिति शेषः ॥ कर्मोपप्लावकवार्तैव न स्यादित्यर्थः ॥

---

महानुभावः प्रभावो यस्य सः । 'अनुभावः प्रभावेपि' इत्यमरः । प्रविष्टेति । तत्रभवति पूज्ये । अत्र राक्षसनिराकरणे कारणे वक्तव्ये कार्यरूपकर्मनिरुपद्रवतोक्तेः पर्यायोक्तालङ्कारः ॥

**का कथेति** ॥ बाणसन्धाने का कथा । शरसंधानं नापेक्षत इत्यर्थः । स धनुषो ज्याशब्देनैव विघ्नान्दूरतोऽपोहति निराकरोति । केनेव । हुङ्कारेणेवेति एकदेशविवर्तिन्युपमा । तेन राज्ञो गणपत्युपमानत्वं गम्यते । अथवा स ज्याशब्देनैव दूरतो विघ्नानपोहति । कथंभूतेनेव । धनुषो हुङ्कारेणेवेति समासोक्तिगर्भोत्प्रेक्षा धनुषश्चेतनत्वारोपात् । अनयानायासेन रिपुनिबर्हणं ध्वनितम् । अस्मिन्पक्षे धनुर्ज्याशब्दयोरर्थैपौन-

यावदिमान् वेदिसंस्तरणा(र्थं)र्थान् दर्भानृत्विग्भ्य उप(नयामि)हरामि (परिक्रम्यावलोक्य च)

(आकाशे)

प्रियंवदे ! कस्येदमुशीरानुलेपनं मृणालवन्ति नलिनीपत्राणि च नीयन्ते ? (आकर्ण्य) (श्रुतिमभिनीय) किं ब्रवीषि ? आतपलङ्घनाद्बलवदस्वस्था शकुन्तला ॥ तस्याश्श(श्शा)रीरसन्तापनिर्वापणायेति ॥ तर्हि(त्वरितं गम्यतां सखि)यत्ना-दुपक्रम्यताम् सा खलु (भगवतः कण्वस्य) कुलपतेरुच्छ्वसितम् ॥ अहमपि वैतानिकं शान्त्युदकं (अस्यै) गौतमीहस्ते विसर्जयिष्यामि ॥

(इति निष्क्रान्तः)

शुद्धविष्कम्भः ॥

---

शिष्यः स्वागमनप्रयोजनमाह—**यावदित्यादि** ॥ यावदुपहरामि समर्पयिष्यामि ॥

**आकाश इति** ॥ नाट्ये रङ्गमध्ये नेपथ्यव्यतिरिक्तस्थानमाकाश इत्युच्यते ॥ नीयन्ते प्राप्यन्ते ॥ आतपलङ्घनादातपातिक्रमात् बलवद्दृढं अस्वस्था पीडिता ॥ निर्वापणाय शमनार्थम् ॥ किं प्रश्ने अत्राप्रविष्टया प्रियंवदया सहालापादाकाशभाषितमित्यवगन्तव्यम् ॥ तदुक्तम्—"किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यः । श्रुत्वेवानुक्तमप्येकस्तत्स्यादा-काशभाषितम्" इति ॥ नाट्ये प्रत्युत्त्यवसरप्रदानार्थमाकाशभाषितं कर्तव्यम् ॥ तदुक्तम्—"प्रश्नो दूतश्च लोपश्च नेपथ्योक्तिस्तथैव च । आकाशोक्तिश्च पञ्चैते प्रत्युत्त्यवसरप्रदा" इति ॥

**तर्हीत्यादि** ॥ तर्हि तथा चेत् ॥ बलवदस्वस्था चेदित्यर्थः ॥ शीघ्रं यत्नेनोपक्र-म्यतां चिकित्स्यताम् ॥ उच्छ्वसितं जीवितम् ॥ जीवितकारणमिति यावत् ॥ वैतानिकं वितानो यागः तत्सम्बन्धि वैतानिकम् ॥ गौतमी कण्वस्य भगिनी ॥ शुद्धविष्कम्भः ॥ विष्कम्भ-लक्षणं चतुर्थेऽङ्के निरूप्यते ॥

---

रुक्त्यं परिहृतं भवति । आकाश इति । तल्लक्षणं तु दशरूपके—'किं ब्रवीष्येवमित्यादि विनापात्रं ब्रवीति यत् । श्रुत्वेवानुक्तमप्येकस्तत्स्यादाकाशभाषितम् ॥' इति । नाट्यधर्मोऽ-यम् । आकर्ण्याकर्णनमभिनीय । तच्च पार्श्वानतेन शिरसा स्तब्धेन नेत्रेण । तल्लक्षणं तु—'पार्श्वस्याभिमुखं यत्तु तत्पार्श्वानतमुच्यते' । 'प्रयोज्यमाकर्णनादौ पार्श्वस्थस्याव-लोकने । यत्तु स्यान्निश्चलपुटं स्तब्धनेत्रं प्रचक्षते ॥' इति ॥

**विष्कम्भकः** ॥ तल्लक्षणं तु सुधाकरे—'तत्र विष्कम्भको भूतभाविवस्त्वंश-सूचकः । अमुख्यपात्ररचितः संक्षेपैकप्रयोजनः ॥ द्विधा स शुद्धो मिश्रश्च मिश्रः स्यान्नीच-मध्यमैः । शुद्धः केवलमध्योऽयमेकानेककृतो द्विधा ॥' इति । तदयमेककृतः शुद्धः । अत्र दुष्यन्तस्याश्रमाभ्यन्तरागमनं कृततपस्विकार्यत्वेन निराकुलत्वं सम्भूतसूचनं शकुन्तलाया

(ततः प्रविशति कामयमानावस्थो राजा)

दुष्यन्तः—

जाने तपसो वीर्यं सा बाला परवतीति मे विदितम् ।
अलमस्मि ततो हृदयं तथापि नेदं निवर्तयितुम् ॥ २

---

ततः प्रविशतीत्यादि ॥ ततश्शिष्यनिष्क्रमणानन्तरं कामयमानावस्थः प्रार्थयमानावस्थः ॥

२ जान इत्यादि ॥ तपसः वीर्यं प्रभावम् ॥ "वीर्यं शुक्रे प्रभावे च तेजस्सामर्थ्ययोरपि" इति वैजयन्ती ॥ जाने बुध्ये ॥ अहमिति शेषः ॥ अनेन यदि शकुन्तलां बलादपहरामि तदा सर्वसंहारकारी काश्यपमुनिशापो भवेदिति ध्वन्यते ॥ सा अनुभूता ॥ तदुक्तम्—"प्रक्रान्तप्रसिद्धानुभूतार्थस्तच्छब्दो यच्छब्दं नापेक्षत" इति ॥ बाला अप्रगल्भा ॥ परवती पराधीनेति विदितम् ॥ प्रथमेऽङ्के प्रियंवदानसूयाभ्यां शकुन्तलायाः काश्यपसुतात्वपरिग्रहत्वकथनेन ज्ञातम् ॥ यद्यपि मुनेस्तपस्सामर्थ्यं । तथापि तदधीनत्वाभावे प्रागल्भ्यवत्त्वे च तद्घटना सम्भवतीत्यभिप्रायः ॥ तर्हि सा अप्रगल्भा पराधीना च; मुनिशापश्च दुर्निवारो यदि तद्विषयचिन्तैव त्यज्यतामित्यत आह—तथापीति ॥ तथापि सर्वं ज्ञात्वा ततश्शकुन्तलायाः हृदयं सर्वकरणप्रधानभूतं मनः निवर्तयितुं नालमस्मि न समर्थोऽस्मि ॥ तदनुरागि मम चित्तं मया निवर्त्यमानमपि तत्सौंदर्यबलान्न निवर्तत इति भावः ॥ अनेन राज्ञश्शङ्कारूप व्यभिचारिभाव उक्तः ॥ उक्तं च—"अनर्थोत्प्रेक्षणं शङ्कापरक्रौर्यात्स्वदुर्णया" दिति ॥ अत्र राज्ञा पित्रादिभिरदत्तशकुन्तलापरिग्रहणरूपस्वदुर्णयान्मुनिक्रोधाच्चशापरूपानर्थोत्प्रेक्षणं कृतम् ॥

---

आतपलङ्घनव्याजेन विरहावस्थाकथनं भविष्यत्सूचनमिति ज्ञेयम् । कामयमानो विरही तस्येवावस्था यस्य स तथा । क्वचित् 'कामयानः' इति पाठः । सोप्यनित्यमागमानुशासनमिति मुख्यकृते साधुः । तथा च वामनाचार्यसूत्रम्—'कामयानशब्दः सिद्धोऽनादिश्च' इति । तत्र राजानकमम्मटेन व्याख्यातम्—'अनित्यमागमानुशासनम्' इति । यद्वा कामस्य यान उद्गमन आरोहणे वा या अवस्था अभिलाषाद्यास्ता यस्य सः ॥

जान इति ॥ अहं तपसो वीर्यं जाने । प्रसह्य धर्षणीया न भवतीति भावः । प्रसह्य धर्षणीयत्वाभावे कार्ये प्रस्तुते यदप्रस्तुतं तपसो वीर्यं जान इति कार्यमुक्तं साऽप्रस्तुतप्रशंसा । तर्हि सैवागमिष्यतीत्यत आह—सेति । सा बालाऽप्रगल्भा परवती पराधीनेत्युभयं विधेयम् । अयं व्याजो भविष्यतीत्याह—इति मे विदितम् । म इति मयेत्यर्थे निपातः । तदुक्तं वामनाचार्यैः—'ते-मे-शब्दनिपातौ त्वयामयेत्यर्थे' इति । नपुंसके भावे क्तस्य शेषविवक्षायां चेति वा सम्बन्धे षष्ठी । एवं यद्यपि तथापि ततः शकुन्तलायाः सकाशादिदं मया सह सम्बद्धं मां च परित्यज्य क्षणमात्रपरिचित आसक्तमिति निर्ह्रीकं हृदयं निवर्तयितुं नालं न समर्थोऽस्मि । स्वयं न निवर्तते, मयाप्यशक्यं निवर्तनमित्यर्थः । वेदनक्रियाया हृदयनिवर्तनक्रियायाश्च विरोधः । तदाभासस्तु रतिस्वाभाव्यात् । श्रुति-

(मदनबाधां निरू(प्य)पयन्) भगवन् कुसुमायुध! त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसन्धीयते कामिजनसार्थः—कुतः?

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-
र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु।

---

मदनबाधामित्यादि॥ निरूपयन्नितरां रूपयन्॥ अभिनयन्निति यावत्॥ निमीलननिश्वासाद्यतिशयमवयवपारवश्यादिना दर्शयन्नित्यर्थः॥ अत्र राज्ञश्शकुन्तलाहृतत्वेन पारवश्याद्धस्तेन मदनबाधाभिनयो न कर्तव्यः॥ किंतु सात्त्विकभावैरेवाभिनेतव्यः॥ अतएवोक्तं निरूपयन्निति—तदुक्तं भरतेन—"विषण्णे मूर्च्छिते हीते जुगुप्साशोकपीडिते। ग्लाने सुप्ते विहस्ते च निश्चेष्टे तन्द्रिते जडे॥ व्याधिग्रस्ते ज्वरार्ते च भयार्ते शीतविप्लुते। मत्ते प्रमत्ते चोन्मत्ते चिन्तायां तपसि स्थिते॥ नहस्ताभिनयो योज्यः कार्यस्सत्त्वस्य सङ्ग्रहः" इति॥ विषण्णादिशब्दास्तत्तत्सञ्चारिवाचकाः॥ विषण्णादिषु पारवश्याद्विवेकाभावेन यथोचितहस्ताभिनयाभावात्केवलं स्तम्भस्वेददीनदृष्ट्यश्रुपातगद्गदत्वादिभिरेवाभिनयो योज्यः॥ केवलहस्ताभिनये तादृशचमत्काराभावादित्यर्थः॥

भगवन्नित्यादि॥ भगवन्निति साक्षेपवचनं॥ यद्वा—दैन्योक्तिः॥ कुसुमायुध! पुष्पायुधेत्याक्षिप्यमाणार्थेन सम्बोधनम्॥ अनेनेतरधन्विवैलक्षण्यमुक्तम्॥ चन्द्रमसेति *चदि आह्लादन इत्याह्लादकार्थश्चन्द्रशब्दः॥ विश्वसनीयाभ्यामुक्तनाम्नस्सार्थकत्वभ्रमेण विश्वासयोग्याभ्याम्॥ अतिसन्धीयते बाह्याकारेण वञ्चयित्वान्तर्निगूढं बाध्यते॥ सार्थस्समूहः॥ न त्वहमेक एवेत्यभिप्रायः॥

३ उक्तार्थमुपपादयति—तव कुसुमेत्यादिना॥ तवेत्येकवचनेन मदनस्य नैर्घृण्यादनभिजातत्वं सूच्यते॥ कुसुमशरत्वमित्यनेन लोकानां विश्वसनीयतायां परा काष्ठा

---

वृत्त्यनुप्रासौ। मदनबाधां निरूप्येति। लोलितेन शिरसा दोलेन हस्तेन शून्यया दृष्ट्येत्यादि ज्ञेयम्। तल्लक्षणानि तु—'शिरः स्याल्लोलितं सर्वदिक्कैः शिथिललोचनैः' इति। 'लम्बमानौ पताकौ तु श्लथांसौ शिथिलाङ्गुली। दोलौ भवेदसौ' इति। 'समतारापुटा दृश्यदृष्टिः शून्यविलोकिनी' इति। अथवा दोलस्थाने कर्कटं कुर्यात्। तल्लक्षणं तु—'अन्योन्यस्यान्तरैर्यत्राङ्गुल्यो निःसृत्य हस्तयोः। अन्तर्बहिर्वा दृश्यन्ते कर्कटः सोऽभिधीयते॥ अन्तः स्थिताङ्गुलिः पृष्ठेत्वङ्गुलीनां हनुं दधत्। चिन्तायामथ खेदे च' इति। अत एवोक्तम्—'सूचयन्त्यान्तरं भावं ये कराः कर्कटादयः। विषण्णादिष्वपि प्रायः प्रयोज्यास्ते सतां मताः॥' इति। विश्वसनीयाभ्यामित्यत्रोपात्तविशेष्यार्थौ हेतुत्वेनोपात्तोऽवगन्तव्यः। कामिजनसार्थो विरहिसमूहोऽतिसन्धीयते वञ्च्यते। 'अतिसमौ वञ्चने' इति गणपाठात्। तदेवाह—

तवेति॥ कुसुमशब्देनात्यन्तपेलवत्वं ध्वनितम्। कुसुमशरस्य भावः कुसुमशरत्वम्। अत्र चूर्णिकायां चन्द्रमसा चेत्युक्तेस्तवेतिवत्सर्वनामपरामर्शो न्याय्यो नेन्दुपदोपादानम्। तेन 'त्वमस्य द्वयम्' इति पठनीयम्। अयथार्थम् विपरीतार्थ-

विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान् वज्रसारीकरोषि ॥ ३

सूचिता ॥ * इन्दि क्लेदनइत्यस्य धातोस्स्वरव्यत्यासेनामृतवद्रूपार्थ इन्दुशब्दः ॥ शीतरश्मित्वमित्यनेन शीतलत्वे सर्वलोकसंवादस्सूच्यते ॥ द्वयमिदं अनुभूतं द्वयमपि अयथार्थम् ॥ यथाशब्दस्सादृश्ये ॥ श्रूयमाणार्थो यथा तादृगर्थरहितम् ॥ मद्विधेषु केवलं मयि न । मत्सदृशेषु सर्वेष्वित्यर्थः ॥ दृश्यते स्फुटं विभाव्यते न तु लोकवार्तामात्रमिति यावत् ॥ अतिसन्धानप्रकारमाह—हिमगर्भैर्मयूखैरग्निं विसृजतीति ॥ गर्भशब्दस्त्वावरणवाचकः ॥ येषामन्तस्स्थितानेर्हिममावरणं तैः किरणैरिति यावत् ॥ अग्निं हिमेन प्रच्छाद्य मुञ्चतीत्यर्थः ॥ कुसुमान्येव बाणाः शोषणमोहनादिलक्षणारविन्दाशोकादिबाणाः ॥ तान् वज्रसारीकरोषि अवज्रसारान्कोमलान्वज्रसमानदार्ढ्यान्करोषि ॥ यथा वज्रं पर्वतं भिनत्ति तथा मम हृदयं पर्वतादप्यधिकतरधैर्यमुद्भिद्य भिनत्तीत्यर्थः ॥ क्रियापदे वर्तमानार्थप्रत्ययेन जीवितसंशयं गते मय्यद्यापि बाणान्मुञ्चसीति व्यज्यते ॥ तेन च तस्य नृशंसत्वं सूचितम् ॥ हिमगर्भैर्मयूखैरग्निं विसृजतीत्यनेनात्युद्दीपकतया निश्यपि निद्राच्छेदरूपा चतुर्थी स्मरदशा सूचिता ॥ अनेन निश्यपि निद्राभावात्स्वप्नेऽपि तस्यास्सङ्गमो नास्तीति सूच्यते ॥ विसृजतीति वर्तमानव्यपदेशेन दिवा चन्द्रकिरणाभावात्पूर्वरात्रानुभूतचन्द्रकिरणानां गाढव्यथाकारित्वं सूच्यते ॥ अतिदुःखानुभवादद्याप्यनुभूयमाना इव चन्द्रमयूखा दृश्यन्त इति भावः ॥ यद्वा—वर्तमानसामीप्ये लट्प्रत्ययः ॥ तेन चेतःपरं पुनरपि रात्रौ चन्द्रकिरणजनितदुःखमागतप्रायमिति द्योत्यते ॥ रात्र्यागमनात्प्रागेव प्रतीकारः कर्तव्य इति भावः ॥ कुसुमबाणानिति बहुवचनेन मदनजनितबहुदुःखानुभवेन स्वस्य मरणसध्रीची दशा सूच्यते ॥ यद्वा—बहुवचनेनैकैकस्य बाणस्य मदनस्तु नैष्फल्यं मत्वातिक्रोधेनामोघास्त्रमपि मुक्तवानिति द्योत्यते ॥ अतएवोक्तं वज्रसारी करोषीति ॥ तेन च स्वस्य जीवितस्य कालाक्षमत्वं व्यज्यते ॥ अत्र श्लोके गर्हणं नामालङ्कारः ॥ तदुक्तम्—“यत्र संकीर्तयेद्दोषं गुणमर्थेन दर्शयेत् । गुणातिपाताद्दोषाद्वा गर्हणं नाम तद्भवे” दिति ॥ वस्तुनि दोषकथनाद्वागुणाभावकथनाद्वा गर्हणं भवति ॥ अत्र इन्दुमदनयोर्गर्हणं कृतं न गुणउक्तः ॥

मित्यर्थः । ‘तदन्यतद्विरुद्धतदभावेषु नञ्वर्तते’ इति विरुद्धार्थेऽत्र नञ् । मद्विधेषु विरहिष्वित्यर्थः । अत्रापि मयीति विशेषे प्रस्तुते सामान्योक्तेरप्रस्तुतप्रशंसा । अयथार्थत्व उत्तरवाक्यार्थं हेतुत्वेनाह—विसृजतीति । यत इन्दुः, हिमं गर्भे येषां तैः । अनेन कालत्रयेऽप्युष्णत्वशङ्कामात्रमपि नास्तीति व्यज्यते । मयूखैः किरणैरग्निं विसृजति किरति । अवज्रसारान्वज्रसारान्करोषि वज्रसारीकरोषि । यद्वा वज्रवत्सारीकरोषि दृढीकरोषि । काव्यलिङ्गं रूपकमुपमाक्रमेण । हिमगर्भैरग्निमिति गुणद्रव्ययोर्विरोधः । विप्रलम्भस्वाभाव्यादाभासत्वं चूर्णिकया श्लोकपूर्वार्धेऽयथालङ्कारः, कुसुमेषु यद्वाणत्वमारोपितं तद्विरहदुःखदत्वेन प्रकृतोपयोगीति परिणामश्च । ‘आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः’ इति तल्लक्षणात् । त्वंत्वेति मिन्दोर्भिदमिति छेकवृत्त्यनुप्रासौ । मालिनीवृत्तम् । उत्तरार्धे क्रमप्रक्रमभङ्गो विरहिणो राज्ञो वचनमिति परिहर्तव्यः । ‘त्वमिह कुसुमबाणान्वज्रसारान्विधत्से विसृजति स च वह्निं शीतगर्भैर्मयूखैः’ इति वा पाठः । अत्र च पाठे शीतपदोपा-

(*भगवन् कामदेव ! न ते मय्यनुक्रोशः (मदनबाधां निरूप्य) कुतस्ते कुसुमायुधस्य सतस्तैक्ष्ण्यमेतत् ? आं ज्ञातम् ॥
कुतः ?

अद्यापि नूनं हरकोपवह्नि-
स्त्वयि ज्वलत्यौर्व इवांबुराशौ ।
त्वमन्यथा मन्मथ ! मद्विधानां
भस्मावशेषः कथमित्थमुष्णः ? २

अथवा—

अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे ।
यदि मदिरायतनयनां तामधिकृत्य प्रभवतीति ॥

भगवन् कन्दर्प ! एवमुपालब्धस्य ते न मां प्रत्यनुक्रोशः ?

वृथैव सङ्कल्पशतैरजस्र-
मनङ्ग ! नीतोऽसि मया विवृद्धिम् ।
आकृष्य चापं श्रवणोपकण्ठे
मय्येव युक्तं तव बाणमोक्षः ॥ ) ३

(सखेदं परिक्रम्य) क्व नु खलु संस्थिते सवनकर्मणि सदस्यैरनुज्ञातः (श्रम) क्लान्तमात्मानं विनोदयामि ? (निश्वस्य) किन्नु खलु मे प्रियादर्शनादृते शर(ण)

---

**क्व नु खल्वित्यादि ॥** खलु जिज्ञासायाम् ॥ सवनकर्मणि यज्ञकर्मणि संस्थिते परिसमाप्ते सदस्यै ऋत्विग्भिः क्लान्तं विरहपरम्पराजनितदुःखपीडितं आत्मानं चित्तम् ॥

**निश्वस्येत्यादि ॥** खलु यतो हेतोः ॥ मे एतादृशावस्थापन्नस्य मम प्रियादर्शनादृते अविच्छिन्नाकांक्षालम्बनीभूतनायिकादर्शनमन्तरेण ॥ शरणं रक्षितृ ॥ किमित्या-

---

दानादुद्देश्यप्रतिनिर्देश्ययोरेकपदोपादानलक्षणो गुणः । इन्दुशब्दानुपादानात्कथितपददोषाभावश्च स्वीकृतो भवति । श्लोके च यथासंख्यालङ्कारः । संस्थितेऽवसिते । सदसि साधवः सदस्यास्तैरुपद्रष्टृभिः । 'सदस्या विधिदर्शिनः' इत्यमरः । क्व नु खलु विनोदयामीत्यन्वयः । विनोदेन कौतुकेन क्लेशमपहरामीति भावः । अन्यत्र क्वचिदपि विनोदनाभावान्निःश्वस्येत्युक्तिः । तव दीर्घत्वमुष्णत्वं विरहित्वादवसेयम् । अन्यथैतदुक्तेरेव वैयर्थ्यात्तस्य

---

* "भगवन्नि" त्यारभ्य "युक्तं तव बाणमोक्षः" इत्यन्तमूलपाठः क्वचिन्नैव दृश्यते क्वचित्कुण्डलितश्च दृश्यते न कुत्रापि केनापि व्याख्यातश्च ॥

ण्यमन्यत्? यावदेनामन्वि(ष्या)च्छामि ॥ (सूर्यमवलोक्य) इमामुग्रातपवेळां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजना शकुन्तला गमयति ॥

---

क्षेपे ॥ अन्यत्किमपि नास्त्येवेत्यर्थः ॥ यावदन्विच्छामि अन्वेषयामि ॥ अनेन विलासो नाम प्रतिमुखसन्ध्यङ्गमुक्तम्—तदुक्तम्—"दर्शनालिङ्गनादीच्छा विलासः परिगीयते" इति ॥ अत्र दुष्यन्तस्य शकुन्तलादर्शनादिच्छया विलासः ॥

**इमामित्यादि ॥** मालिनीतीरेष्विति बहुवचनेन शकुन्तलाया अपि स्वविरहजनितदुःखानुभवोऽस्तीति राज्ञा सूच्यते ॥ विरहपीडितजनस्यैकत्रावस्थितेरसम्भवात् ॥ तथा मेघसन्देशेऽपि प्रयुक्तं रामगिर्याश्रमेष्विति ॥ अनेनोभयानुरागस्सूचितः ॥ न चेद्रसाभासप्रसङ्गस्स्यात् ॥ तदुक्तं काव्यप्रकाशे—"एकत्रैवानुरागश्चेत्तिर्यङ्म्लेच्छगतोऽपि वा। योषितो बहुसक्तिश्चेद्रसाभासः प्रकीर्तित" इति ॥ तथा भावप्रकाशिकायामप्युक्तम्—"श्रृङ्गारो हास्यभूयिष्ठः श्रृङ्गाराभास ईरित" इति ॥ श्रृङ्गारस्यारागस्त्वनेकरागस्तिर्यग्गतो म्लेच्छगतश्चेति चतुर्धा हास्यभूयस्त्वम् ॥ तत्रारागस्त्वेकत्र रागाभावः ॥ नन्वेकत्ररागाभावाद्रसस्याभासत्वं न युज्यते? यतः। रत्नावळ्यां प्रथमजातानुरागे वत्सराजे जातानुरागायाः रत्नावळ्याः "दुर्लभजणाणुराओ" इत्यादौ पूर्वानुरागस्याभासत्वप्रसङ्गोऽस्तीति चेत्। उच्यते ॥ अभावो हि त्रिविधः ॥ प्रागभावोऽत्यन्ताभावः प्रध्वंसाभावश्चेति ॥ तत्र प्रागभावे दर्शनादिकारणेषु रागोत्पत्तिसम्भावनयाऽभासत्वम् ॥ इतरयोस्तु कारणसद्भावेऽपि रागानुत्पत्तेराभासत्वमेव ॥ केचित्तु—"त्रिधैव रागाभावे रसस्याभासत्वं प्रतिजानते ॥" अन्ये तु—"तिर्यङ्म्लेच्छगतयोराभासत्वं न युज्यते। तयोर्विभावादिसम्भवेनास्वादयोग्यताप्रतीते" रिति वदन्ति ॥ तथा विद्याधरेणैकावल्यां समर्थितम् ॥ अपरे—रसाभावं तिर्यक्षु प्रचक्षते ॥ तन्नपरीक्षाक्षमम् ॥ तेष्वपि विभावादिसम्भवात् ॥ विभावादिज्ञानशून्यास्तिर्यञ्चो न भाजनं रसस्य भवितुमर्हन्तीति चेत्। न—मनुष्येष्वपि केषु चित्तथाभूतेषु रसविषयाभावप्रसङ्गात् ॥ विभावादिज्ञानं नामौचित्यविवेकः ॥ तेन शून्यास्तिर्यञ्चो न विभावतामर्हन्ति ॥ तर्हि विभावादिज्ञानरहितेषु मनुष्येषु रसाभावप्रसङ्ग इति चेत्। नैष दोषः ॥ विभावादिसम्भवोबहीरसं प्रति प्रयोजको विशिष्टप्रयोजकः ॥ विशिष्टप्रयोजकत्वाङ्गीकारे विवेकादिविशेषानुप्रवेशोऽङ्गीकृतः ॥ ननु सीतादिविभावैर्वस्तुमात्रैरेव योषिन्मात्रप्रतीतौ सामाजिकानां रसोदयः ॥ न पुनर्विशिष्टैः ॥ तत्कथं? इति चेत्। उच्यते ॥ तत्र जनकतनयात्वरामपरिगृहीतृत्वाद्यतिविरुद्धधर्मपरिहारेण ललितोज्ज्वलशुचिदर्शनीयत्वादिविशिष्ट एव सीतादिभावो योषित्सामान्यं तादृशमेव ज्ञापयति। न पुनःस्त्रीजातिमात्रमिति सर्वं निरवद्यम् ॥

---

स्वभावत एव सम्भवात्। अन्यत्किं खलु शरणं रक्षकम्। न किञ्चिदित्यर्थः। 'ततः प्रविशति' इत्यादिनैतदन्तेनोद्वेगो नाम पञ्चम्यवस्था सूचिता। तल्लक्षणं तु—'मनसः कम्पउद्वेगः कथितस्तत्र विक्रियाः। चित्तसन्तापनिःश्वासौ द्वेषः शय्यासनादिषु ॥ स्तम्भचिन्ताश्रुवैवर्ण्यदीनत्वादय ईरिताः' इति। मालिनीति नदीसमाख्या। 'यावदेनाम्' इत्यादिना 'गच्छामी' इत्यन्तेन परिसर्पो नामाङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'दृष्ट-

तत्रैव तावद्गच्छामि॥ (परिक्रम्य स्पर्शसुखं रूपयित्वा) अहो! प्रवातसुभगोऽयमुद्देशः॥

शक्यमरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम्।
अङ्गैरनङ्गतप्तैरविरळमालिङ्गितुं पवनः॥ ४

---

**तत्रैवेत्यादि॥** तावद्गच्छामि गमिष्यामि॥ तत्रैवेत्यनेन स्वस्येतरकार्यवैमुख्यं सूच्यते॥ अनेन परिसर्पो नाम प्रतिमुखसन्ध्यङ्गमुक्तम्॥ तदुक्तम्—"दृष्टस्यादर्शने पश्चात्परिसर्पोऽगवेषणं" इति॥ अत्र प्रथमदृष्टायाश्शकुन्तळायाः पश्चाद्दर्शनार्थं मालिनीतीरगतं दुष्यन्तेन विचारितमिति परिसर्पः॥

**अहो इत्यादि॥** उद्देशः प्रदेशः॥ प्रवातसुभगः प्रकृष्टो वातो यत्र स तथोक्तः॥ तेन सुभगः मनोहरः॥ विविधक्रीडोचितप्रदेश इत्यर्थः॥ अनेन यदि शकुन्तळा मिळति। तदा तया सममत्र विविधक्रीडां कर्तुं शक्यत इति द्योत्यते॥ प्रवातपदेन क्रीडापरिश्रमजनितस्वेदापनयने इतरजनताळवृन्तादिनैरपेक्ष्यं व्यज्यते॥ विविक्तप्रदेश इति भावः॥ वातस्य प्रकृष्टत्वं शैत्यमान्द्यसौरभ्यवत्त्वम्॥

४ तदेवाह—**शक्यमित्यादिना॥** अरविन्दसुरभिरित्यनेनारविन्दस्पर्शान्मान्द्यं सौरभ्यं चोक्तम्॥ कणवाहीत्यनेन शैत्यमुक्तम्॥ अनङ्गतप्तैः चन्द्रकिरणकोकिलालापादिस्मरोद्दीपनविभावक्लिष्टैः॥ अङ्गैस्सर्वावयवैः। अविरळं गाढमालिङ्गितुं शक्यम्॥ भवितव्यं भवत्विति विरहिजनाग्निज्वालायमानः॥ पवनः उष्णमुष्णेन शाम्यतीति न्यायेनालिङ्गितुं योग्यम्॥ शक्यमित्यव्ययं न चेच्छक्यइति प्रयोगस्स्यात्। तथा रामायणेऽपि॥ "शक्यमञ्जलिभिः पातुं वाताः कैतकगन्धिन" इति॥ अङ्गैरिति बहुवचनेन सर्वावयवानां तत्तदुचितसार्वकालिकतदीयचुम्बनसम्भाषणालिङ्गनरहस्यश्रवणाद्यौत्सुक्याधिक्यं ध्वन्यते॥ अनङ्गतप्तैरित्यनेन सर्वावयवानां पारवश्यकथनेन स्वस्वोचितकार्येष्वपि वैमुख्यं सूच्यते॥ तेनालस्यग्लानिश्रमचिन्ताद्याः व्यभिचारिण उक्ताः॥ अविरळमालिङ्गितुं शक्यमित्यने-

---

नष्टानुसरणं परिसर्प इतीरितः' इति। अहो इति। अकस्माद्वातस्पर्शसञ्जातसुखेनाश्चर्यम्। प्रकृष्टो वातस्तेन सुभगो मनोहरः। अत्र सौभाग्यं चेतनधर्मः स देशे न सम्भवतीति मुख्यार्थबाधेन यो मनोहरः स सुभगो भवतीति कार्यकारणसम्बन्धेन मनोज्ञत्वं लक्षयन्विरहिमनोविनोदनत्वादिकं ध्वनयति॥

**शक्यमिति॥** एतादृशः पवनोऽनङ्गतप्तैरङ्गैरविरलं गाढं यथा स्यादेवमालिङ्गितुं शक्यम्। मालिनीतरङ्गाणामित्यनेन तरङ्गोत्पादनोक्तेर्मन्दत्वं ज्ञेयम्। अत्र पवनोऽङ्गान्यालिङ्गतीति कर्तृकर्मवद्भावे वाच्ये यद्वैपरीत्यं कृतं तेषामतितानवमतिशयसन्तापत्वं तस्य च तद्दूरीकरणेन दुःखदायित्वं व्यज्यते। अत्र प्रियादर्शनेनात्मविनोदनकार्यमारभमाणस्य पवनोऽपि तत्कार्ये सहायत्वेनोपात्त इति समाहितालङ्कारः। 'कार्यारम्भे सहायाप्तिः' इति तल्लक्षणात्। अत्र मालिमालीति लिङ्गचतुष्टयस्योपादानाच्छेकानुप्रासः। श्रुत्यनुप्रासस्य त्वनेन सहैकवाचकानुप्रवेशलक्षणः सङ्करः। वृत्त्यनुप्रासश्च। अरविन्दवन्मनोज्ञः शीतलः पवनः पवित्रः समालिङ्गनेन सुखमुत्पादयतीति समासोक्तिरपि। 'सुगन्धौ च मनोज्ञे

(परिक्रम्यावलोक्य च) सत्यमस्मिन् वेतसपरिक्षिप्ते लतामण्टपे सन्निहितया शकुन्तलया भवितव्यम् ॥

तथा हि—(अधो विलोक्य)

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात् ।

---

नातिदुःखानुभवाज्जीवितनैराश्येन कान्ताविरहेऽपि स्वशरीरे जीवतीति अत्र जुगुप्सा व्यज्यते ॥ पवन इत्यनेन मलयानिलं प्रत्यौग्र्यं व्यज्यते ॥ ननु । "आलस्यौग्र्यजुगुप्साभिर्भावैस्तु परिवर्जिताः । उद्भावयन्ति शृङ्गारं सर्वे भावाश्च संश्रया" इति भरतेनोक्त्वाच्छृङ्गारे आलस्यौग्र्यजुगुप्सानामयुक्तत्वात्तद्वर्जिता एव भावा अङ्गतां भजन्त इति चेत् । न विप्रलम्भे आलस्यौग्र्यजुगुप्सानामपि सम्भवात् ॥ तथाहि—सर्वकार्येष्वलसता । चन्द्रमलयानिलादिष्वौग्र्यं । इष्टजनविरहेऽपि स्वशरीरे जीवतीति तत्र जुगुप्सेति साहित्याम्नायरहस्यम् । अरविन्दसुरभीत्यनेन तापोपशमनार्थं मृणालनलिनीपत्राण्यत्र सन्ति शकुन्तलापि तापोपशमनार्थं मृणालादिकं गृहीत्वात्रैव क्वचित्तिष्ठतीति राज्ञोऽभिप्रायः ॥

तथैवाह—**सत्यमस्मिन्नित्यादि ॥** लतामण्टपे लतागृहे सन्निहितया भवितव्यमिति सम्भावनया । लतामण्टपाद्बहिः कोऽपि जनो न दृश्यते ॥ यदि तिष्ठति तदा कतिपयजनसहितैव तिष्ठेदित्यभिप्रायः ॥ लतामण्टप इत्यनेन लतानां विवरात्स्वस्य गोप्यदर्शनानुकूल्यमुक्तम् । तेन प्रदेशस्य विविक्तत्वं व्यज्यते ॥

**५ अभीति ॥** अभ्युन्नता अभित उन्नता ॥ अभ्युपसर्गेण चित्तपारवश्याद्गमने पादयोर्वैषम्यं द्योत्यते ॥ बुद्धिपूर्वकगमनं न भवतीति यावत् ॥ जघनगौरवादित्यनेन

---

च वाच्यवत्सुरभिः स्मृतः' इति विश्वः । ननु पवनस्य सर्वतोविष्युद्दीपकत्वात्तस्य च विरहित्वात्पवन आलिङ्गितुं शक्य इति तस्य मनोविनोदहेतुत्वं कथमिति चेत् । 'इमामुग्रातपवेलां मालिनीतीरेषु शकुन्तला गमयति' इति पूर्वमुक्तेरत्र च मालिनीतरङ्गाणां कणवाहित्वयुक्तेर्नायिकासंस्पृष्टत्वं व्यज्यते । तेन विनोदकारित्वमुक्तमेव । अनेनैवान्यत्राप्युक्तम्—'आलिङ्ग्यन्ते गुणवति मया ते तुषाराद्रिवाताः पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति' । ननु 'शकिसहोश्च' इति कर्मणि यकि कृते सह्यं शक्यमिति रूपम् । तेन सह पवनस्य भिन्नलिङ्गस्य सामानाधिकरण्यं कुत इति चेन्न । महाभाष्यवचनात्सिद्धम् 'शक्यं च श्वमांसादिभिरपि क्षुत्प्रतिहन्तुम्' इति । तथा च वामनसूत्रम्—'शक्यमिति रूपं विलिङ्गवचनस्यापि कर्माभिधायां सामान्योपक्रमात्' इति ॥

**अभ्युन्नतेति ॥** पुरस्तात्पादाग्रभागेऽभ्युन्नता । उन्नतत्वं च सापेक्षमिति पश्चाद्भागापेक्षयोन्नतत्वं ज्ञेयम् । पश्चात्पार्ष्णिदेशे । जघनगौरवान्नितम्बगौरवात् । 'जघनं कट्यां । स्त्रियः श्रोणिपुरोभागे' इति हैमः । अवगाढा निम्नेति स्वभावोक्तिः । प्रतिबिम्बितपदपङ्क्तिः । 'पदं शब्दे च वाक्ये च पादतच्चिह्नयोरपि' इति विश्वः । 'पादन्यासे पादमुद्रा सुप्तिङन्ते पदं भवेत्' इति क्षीरस्वामी । अस्य वेतसलतामण्डपस्य । पाण्डुः सिकता यत्र तस्मिन् । एतेन तत्प्रतिबिम्बयोग्यत्वं ध्वनितम् । पाण्डुशब्देनोद्दीपकत्वम् ।

द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥ ५

यावद्विटपान्तरित एवावलोकयामि ॥ (परिक्रम्य तथा कृत्वा) अये लब्धं नेत्रनिर्वाणम्! एषा मे मनोरथप्रियतमा सकुसुमास्तरणशिलापट्टमधिशयाना सह सखीभ्यामन्वास्यते ॥ भवतु श्रोष्यामि तावदासां विस्रम्भकथितानि ॥ (इति विलोकयन् स्थितः)

(ततः प्रविशति यथानिर्दिष्टव्यापारा सह सखीभ्यां शकुन्तला)

---

पूर्वानुभूततदीययौवनपरिपोषदशास्मरणमुक्तम् ॥ पदपङ्क्तिरभिनवेत्यनेनेदानीमेव लतामण्टपे प्रविष्टा विस्रम्भालापादिकमितःपरं श्रोतुं शक्यते चिराद्गमने सति विस्रम्भालापादिश्रवणासिद्धिरिति व्यज्यते ॥

**अये इत्यादि ॥** अये इति हर्षे ॥ नेत्रनिर्वाणं नेत्रयोर्निर्वाणं श्रेयः लब्धं चिरान्नेत्रसद्भावस्य साफल्यं जातमिति यावत् ॥ स्वाभिलाषविषयभूतदर्शनीयवस्तुदर्शनजनितपरमानन्दानुभवो जात इत्यभिप्रायः ॥ नेत्रनिर्वाणं लब्धमित्यनेनेतःपरमन्येन्द्रियाणामपि सम्भाषणालिङ्गनादिभिस्तृप्त्या भाव्यमिति व्यज्यते ॥ मनोरथप्रियतमा मनोरथस्य सङ्कल्पस्य प्रियतमा उचिता ॥ सङ्गमे सति ये ये मदनविकारास्तत्तदङ्गेषु कर्तव्या इति मनोरथस्तस्योचिताङ्गीति यावत् ॥ भवतु यथा तथा वा सखीजनसहिता तिष्ठतु ॥ तावत् क्रमेण यथोक्तव्यापारा राजनिर्दिष्टावस्था ॥

---

'यावद्रम्यमुज्ज्वलं च' इत्युक्तेः। द्वारे दृश्यते तत्प्रवेशसूचनार्थं द्वारग्रहणम् । अनेन पथा लतामण्डपं प्रविष्टेति कारणे वक्तव्ये यत्तत्कार्यरूपपदपङ्क्तिवर्णनं तत्पर्यायोक्तम् । हेतुश्च । अत्र राजा लतामण्डपद्वारि न गतोऽस्ति । तत्पृष्ठभाग एवास्ति । तत एव पदपङ्क्तौ दृष्टिः पतिता । पदपङ्क्तिश्च प्रवेशसूचिका । अत एव पूर्वं पुरोभागस्य पश्चात्पश्चाद्भागस्य वर्णनमिति वर्ण्यक्रमभङ्गो नाशङ्कनीयः । भोजेन तु 'प्रत्यक्षमक्षजं ज्ञानम्' इति प्रत्यक्षालङ्कारोऽङ्गीकृतः । उदाहृतं च—'वीक्ष्यते स्म शनकैर्नववध्वा' इति । तेन पदपङ्क्तिर्दृश्यत इति प्रत्यक्षालङ्कारः । 'सदृशात्सदृशज्ञानमुपमानं द्विधेह तत् । स्यादेकमनुभूतेऽर्थेऽननुभूते द्वितीयकम्' इति । तेनैवोपमानालङ्कार उक्तः । तेनात्राप्यभ्युन्नतेत्यादिविशिष्टपदपङ्क्तौ तस्या इयमिति ज्ञानं सोऽयमनुभूतार्थविषय उपमानालङ्कार उक्तः । (तेनात्राप्यभ्युन्नतेत्यादिविशिष्टपदपङ्क्तौ तस्या इयमिति ज्ञानं सोऽयमनुभूतार्थविषय उपमानालङ्कारः) । अथ च विशिष्टपदपङ्क्त्या वेतसगृहे तत्सद्भावादनुमानालङ्कारोऽपि । यदाहुः—'अपि चास्त्यनुमानेऽपि सादृश्यं लिङ्गलिङ्गिनोः । पादेन यत्र कुब्जेन कुब्जपादोऽनुमीयते ॥' इति । श्रुत्यनुप्रासश्च । विटपान्तरेण शाखावकाशेन । 'अन्तरमवकाशावधि' इत्यमरः । नेत्रनिर्वाणं नयनानन्दमित्यतिशयोक्तिः । नायिकालक्षणस्य विषयस्य निगीर्णत्वात् । मनोरथप्रियतमेति रतेरनिर्वाहात् । विस्रम्भकथितानि विश्वासभणितानि । 'समौ विस्रम्भविश्वासौ' इत्यमरः । यथोक्तव्यापारा । मदनबाधया

**सख्यौ**—(उपवीज्य) (सस्नेहम्) [1]हला सउन्दले ! अवि (सुहेदि) सुहाअदे णळिणीपत्तवादो ?

**शकुन्तला**—[2]किं मं वीजअंति सहीओ ?

**सख्यौ**—(विषादं नाटयित्वा परस्परमवलोकयतः)

**दुष्यन्तः**—बलवदस्व(स्थशरीरा)स्था तत्रभवती शकुन्तला दृश्यते ॥ (सवितर्कम्)तत्किमातपदोषो वा ? उत मदनदोषो वा स्यात् ? (उत यथा)

1 सखि शकुन्तले, अपि (सुखयति) सुखायते नळिनीपत्रवातः ?

2 किं मां वीजयतः सख्यौ ?

**हळेत्यादि** ॥ अपीति प्रश्ने ॥ अत्र सखीति पदेन सखित्वान्मयि किमपि गोपनीयं हृदि स्थितं शकुन्तलाया नास्तीति व्यज्यते ॥ अत्र सखीपदमेवालम् ॥ शकुन्तलाशब्दप्रयोगस्तु साभिप्रायकः । यदाह—भागुरिः—"धातुजं धातुजाजातं समर्थार्थकमेव च । वाक्यजं व्यतिकीर्णं च निर्वाच्यं पञ्चधा पदम्" इति ॥ तदयमत्राभिप्रायः ॥ तापवशान्मानवती च दृश्यते ॥ तदियमधिगतशब्दार्थशासना ॥ इदानीं स्वनामग्रहणे मदभिप्रायं ज्ञात्वा मौनं ध्यानं च परित्यज्य सन्तापविषयं कारणं विविच्य वदिष्यतीति शकुन्तलाशब्दप्रयोगस्याशयः ॥ सुखायेत्यत्र तादर्थ्ये ङे स्वति विकल्पेन चतुर्थी ॥ किमिति प्रश्नेन तापातिशयाच्चिन्तया व्यजनवातो नानुभूयत इति ज्ञाप्यते ॥

विषादमित्यनेन प्रारब्धोपचारक्रियाया वैफल्याद्विषाद इत्यवगन्तव्यम् ॥

**बलवदित्यादि** ॥ बलवद्दृढम् ॥ अस्वस्था पीडिता ॥ तत्रभवती सर्वाकारनिरवद्या ॥ किमिति वितर्के ॥ आतपदोष इत्यनेन वर्तमानसमयस्येतरर्त्वपेक्षयातिसन्तापकरत्वं व्यज्यते ॥ तेन च शकुन्तलाशरीरस्यातपस्पर्शासहलक्षणसौकुमार्यञ्च ज्ञाप्यते ॥ नायिकाशरीरगतसौकुमार्यमप्युद्दीपकहेतुर्भवति ॥ तदुक्तम्—"उद्दीपनाश्चतुर्धा स्युरालम्बनसमाश्रयाः । गुणचेष्टालंकृतयस्तटस्थाश्चेति भेदतः" तत्र गुणाः—"यौवनं रूपलावण्ये सौन्दर्यमभिरूपता । मार्दवं सौकुमार्यं चेत्यालम्बनगता गुणा" इति ॥ वेति विकल्पे ॥ मदनदोष इत्यनेन नायकविषयकगाढानुरागस्तेन च विप्रलम्भजनितज्वराख्यमदनदशाव-

शीतलशयनतलनिपतना(ननलिनीपत्रवाता) दिर्व्यापारः । अपीति प्रश्ने । सुखयति ते नलिनीपत्रवातः । किं वीजयतो मां सख्यौ । अनेन तापाधिक्यं तेनान्यविषयासंवेद्यत्वं च ध्वनितम् । विषयनिवृत्तिश्चावस्थोक्ता । अनेन विधूतं नामाङ्गमुपक्षिप्तम् । तल्लक्षणं दशरूपके—'विधूतं स्यादरतिः' इति । विषादं नाटयित्वेति । धुतेन शिरसा विषण्णया दृष्ट्या चेति ज्ञेयम् । तल्लक्षणं तु—'पर्यायेण शनैस्तिर्यग्गतमुक्तं धुतं शिरः । विषादेऽनीप्सिते ज्ञेयम्' इति । 'या दृष्टिः पतितापाङ्गा विस्तारितपुटद्वया । निमेषिण्यस्ततारा च विषण्णा सा विषादिनी ॥' इति । परस्परमवलोकयत इति शङ्कासूचकम् । बलवदधिकम् ।

उभयधापि मे मनसि वर्तते ॥ (साभिलाषं निर्वर्ण्य)अथवा कृतं सन्देहेन ॥

स्तनन्यस्तोशीरं (शिथिलित) प्रशिथिलमृणालैकवलयं
प्रियायास्साबाधं तदपि कमनीयं वपुरिदम् ।

---

स्थान्तरं सूच्यते ॥ स्यादिति सम्भावनायां लिङ् ॥ उभयधा उभयप्रकारेण ॥ आतपस्पर्शजनिततापो वा मदनज्वरो वेत्युभयथेति यावत् ॥

६ एवं सन्दिह्याथवेत्यादिपक्षान्तरेण साबाधत्वेऽपि कमनीयत्वादिभिः करणैर्मदनताप एवेति निश्चिनोति—स्तनन्यस्तोशीरमित्यादिना ॥ स्तनयोर्न्यस्तमर्पितमुशीरं नळदसम्बन्धिलेपनं यस्य तत्तथा ॥ एतद्गन्धाघ्राणेनान्तस्तापशमनं भवत्विति स्तनयोरुशीरलेपनमिति व्यज्यते ॥ अनेन स्तनयोरौन्नत्यं च व्यज्यते ॥ स्तनन्यस्तमिति स्तनमात्रपरिच्छेदकथनेनात्युच्चस्तनोशीरलेपने सति निश्वासगतागतसमये तद्गन्धस्त्वन्तर्लगतीति भावः ॥ ननु सर्वावयवन्यस्तोशीरमिति प्रयुक्तम् ॥ अनेन दीर्घनिश्वासत्वं बुद्धिपूर्वकोशीरगन्धाघ्राणाभावात्सर्वावयवपारवश्यं च द्योत्यते ॥ किंतु सखीभ्यामेव स्तनयोरुशीरं न्यस्तमित्यभिप्रायः ॥ प्रशिथिलमृणालैकवलयं प्रकर्षेण शिथिलं गळन्मृणालवलयं बिसकङ्कणं यस्य तत्तथोक्तम् ॥ एकशब्दः केवलवाचकः ॥ प्रोपसर्गेण विप्रलम्भज्वरयुक्तशरीरसम्पर्काद्बिसवलयानि शुष्कतां प्राप्य शिथिलीभवन्तीति व्यज्यते ॥ अनेन मदनज्वरस्य प्राबल्यमुक्तम् ॥ यद्वा—प्रतिक्षणम् ॥ शरीरकार्श्यवशान्मृणाळानि गळन्तीति व्यज्यते ॥ तेन च कार्श्यं नाम मदनावस्थान्तरमुक्तम् ॥ यद्वा—शरीरस्यातिसौकुमार्यान्मृणाळस्पर्शासहनतया शिथिलं यथा भवति तथा सखीभ्यां मृणाळवलयमवयवेष्वर्पितमिति प्रशिथिलमित्यनेन व्यज्यते ॥ प्रियायाः स्वाभिलाषविषयीभूतनायिकायाः ॥ साबाधं सव्यथं ॥ तदपि सव्यथमपि कमनीयं स्वविषयकविप्रलम्भज्वरजनितव्यथया दर्शनीयम् ॥

---

कृतम् । अलमित्यर्थः । 'कृतमिति निवार्यनिषेधयोः' इति भोजकृतसरस्वतीकण्ठाभरणवृत्तौ ॥

स्तनेति ॥ स्तनयोर्न्यस्तमुशीरं नळदानुलेपो यत्र तत् । अत्र तरुणीस्तनौ हिमकाल उष्णौ ग्रीष्मकाले शीतलाविति कामशास्त्रमर्यादा तत्काले तु तयोस्तादृशोरपि स्तनयोस्तापाधिक्यं द्योतयितुं स्तनन्यस्तेत्युक्तिः । न हृदि न्यस्तेति । शिथिलितं शिथिलं संजातं मृणालस्यैकं मुख्यं वलयं यत्र । सन्तापाच्छुष्कत्वेन शैथिल्यम् । एकमित्यनेन वलयान्तरासहत्वं ध्वन्यते । 'एके मुख्यान्यकेवलाः' इत्यमरः । वलयस्य करनियमितस्थितेः प्राप्तत्वात्तदग्रहणम् । आसमन्ताद्बाधया पीडया सह वर्तमानम् । 'पीडा बाधा व्यथा' इत्यमरः । आङा पीडायाः सर्वाङ्गततत्वं व्यज्यते । पीडायुक्तं न । अपि तु पीडया सह वर्तमानम् । एतेन कतिपयकालकलाजनितापि पीडा शरीरोत्पत्तिकालादारभ्यैव वर्तत इति ध्वन्यते । कीदृशम् । प्रियाया इति साभिप्रायम् । वपुः किमपि लोकोत्तरचमत्कारि । कमनीयमिति विधेयम् । एतादृशसन्तापेऽपि सत्यतिशयशोभायुक्तमिति भावः । काममित्यनुमतौ । 'निकामानुमतौ कामम्' इत्यमरः । मनसिजनिदाघप्रसरयोः कामग्रीष्मवेगयोस्तापः समस्तुल्यो यद्यपि तथापि ग्रीष्मस्य निदाघस्य युवतिष्वपराद्धं

समस्तापः कामं मनसिजनिदाघप्रसरयो-
र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥ ६

प्रियंवदा—(जनांतिकम्) [1]अणसूए । तस्स राएसिणो (पढम)पुडमदंसणादो आरहिअ पज्जासिअ आपण्णा विअ सउन्दला । किं णुखु से तंणिमित्तो एव्व अअं आतंको ह(भ)वे ?

1 अनसूये, तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्युत्सुका आपन्नेव शकुन्तला । किं नु खल्वस्यास्तन्निमित्तोऽयं संतापो भवेत्?

इदमिति प्रत्यक्षनिर्देशेन यद्वपुः पूर्वमतिरम्यत्वेन दृष्टं तदिति सर्वावयवप्रत्यक्षता व्यज्यते ॥ मनसिजनिदाघप्रसरयोः मन्मथग्रीष्मप्रचारयोः ॥ तापः कामं यद्यपि समस्तुल्यः तु तथापि विशेषोऽस्ति ॥ युवतिषु युवतिविषये ॥ न त्वेकत्र ॥ किन्तु सर्वासु युवतिष्विति यावत् ॥ अपराद्धस्य नपुंसकत्वम् ॥ "भावेक्त" इतिक्त प्रत्ययः ॥ एवं परिदृश्यमानप्रकारेण सुभगं दर्शनीयं न भवति ॥ ग्रीष्मतापोऽतिविलक्षण इति यावत् ॥ सुभगत्वान्मदनताप एवेत्यभिप्रायः ॥ अनेनानुमानं नाम सन्ध्यङ्गमुक्तम् ॥ यदाह—"अङ्गैरूह्योऽनुमानं स्या" दिति ॥ अत्र तापातिशयेन शरीरस्यात्यन्तबाधेऽप्यनपहीयमानलावण्यादिना मदनतापो निश्चीयत इत्यनुमानम् ॥

अणसूए इत्यादि ॥ तस्य ॥ राजर्षेरित्यनेन लोके रूपलावण्याद्यतिशयवत्पुरुषविशेषेषु सत्स्वपि सएव स्पृहणीयतया मनोविश्रान्तिहेतुरिति दुष्यन्ते उत्कर्षसम्भावना व्यज्यते ॥ तेन च महाकुलीनत्वेन रूपादिमत्तया च तस्मिन्नभिलाषवत्त्वे शकुन्तलाया हेतुरुक्तः ॥ प्रथमदर्शनादारभ्येत्यनेन पुनरपि यज्ञकर्मादौ बहुवारदर्शनं सूच्यते ॥ असकृद्दर्शनेनैव हि तत्कृत साकूतावलोकनचेष्टाविशेषाणां स्वविषयानुरागजन्यत्वं सम्यक् ज्ञायते ॥ तथा मालतीमाधवेऽपि ॥ "भूयोभूयस्सविधनगरीरध्यये"त्यादौ ॥ तेन च प्रथमदर्शनानन्तरं शकुन्तलायाः दुष्यन्तदर्शनार्थं कृतनानाव्याजादिकं सूच्यते ॥ पर्युत्सुकेत्यनेन गाढानुरागात्तद्दर्शनप्रभृत्युचितकार्यवैमुख्यं ज्ञाप्यते ॥ आपन्नेत्यनेन वस्तुसौन्दर्यबलाद्रूढमूलानुरागतया विरहपरम्पराजनितस्मृतिर्गुणगणोद्वेगाद्यवस्थाः द्योत्यन्ते ॥ आतङ्कः दुःखपरम्परा ॥ भवेदिति विधौ लिङ् ॥

तापरूपम् । एवं लावण्यशेषतया परिदृश्यमानं सुभगं न तु नैवेति व्यतिरेकः । 'तु स्याद्भेदेऽवधारणे' इत्यमरः । तेन कामकृतः परिताप इति भावः । युवतिष्विति सामान्यनिर्देशादप्रस्तुतप्रशंसा । ग्रीष्मस्येति सम्बन्धमात्रे षष्ठी । स्तस्तो इति किमकमेति छेकवृत्तिश्रुत्यनुप्रासाः । अत्र यद्यपि कथितपददोषभिया ग्रीष्मापराद्धपदे उपात्ते । तथापि तन्नोचितम् । अस्योद्देश्यविधेयभावविषयतया तदेव दातव्यं भवेत् । 'उदेति सविता ताम्रस्ताम्र एवास्तमेति च' इतिवत् । एतद्व्यतिरिक्तविषयत्वात् कथितपदस्यापवादविषयं परित्यज्यैवोत्सर्गस्य प्रवृत्तेः । तेन 'निदाघस्यैतादृग्युवतिषु न तापस्तु सुभगः' इति पठनीयम् । अस्मिन्पाठे षष्ठीदोषोऽपि परिहृतः । अनसूये, तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्युत्सुकेव शकुन्तला । तस्यां मिथ्यारोपभियेवशब्दोपादानम् । किं न खलु

**अनसूया**—[1]सहि । म(म)ह वि ईरिसीआसङ्का हिअअस्स होदु । पुच्छिस्सं दाव णं ॥

[*]**प्रियंवदा**—(प्रकाशम्) [2]सहि । किं वि पुच्छिदव्वासि ॥ बलीअं खु दे सन्दावो ॥

**शकुन्तला**—(पूर्वार्धेन पुष्पशयनादुत्थाय) [3]हला । किं वत्तु कामासि ?

**अनसूया**—[4]हला सउन्दले । अणब्भन्तरा खु (अंहे) वअं मअण गदस्स उत्तंतस्स ॥ किं दु जारिसी इदिहासणिबन्धणेसु कामअमाणाणं (अवत्था) समवत्था सुणिअदि । तारिसिं दे पेक्खामि ॥ कहेहि किंणिमि(त्तं)

1 सखि, ममापीदृशी शङ्का हृदयस्य । भवतु । (प्रक्ष्यामि) पृच्छामि तावदेनां ।

2 सखि, किमपि प्रष्टव्यासि । बलवान् खलु ते सन्तापः ।

3 सखि, किं वक्तुकामासि ?

4 सखि शकुन्तले, अनभ्यन्त(रे)रा खलु (आवां) वयं मदनगतस्य वृत्तांतस्य, ।किंतु यादृशी इतिहासनिबन्धनेषु कामयमानानां (अवस्था) समवस्था श्रूयते, तादृशीं ते पश्यामि । कथय किं

अनभ्यन्तराः अविषयाः ॥ शान्तिप्रधानतपोवनावस्थानान्मदनवृत्तान्तानभिज्ञा इति यावत् ॥

तर्हीदानीं स्वस्य मदनताप एवेति कथं ज्ञायते ? इत्यत आह—**किन्दु इति** ॥ किन्तु तथापि अनभिज्ञापीति यावत् ॥ पुरावृत्ताख्यानमितिहासः । तन्निबन्धनेषु पुराणेष्वित्यर्थः ॥ अत्र सारूप्यं नामालङ्कारः ॥ तदुक्तम्—"दृष्टश्रुतानुभूतार्थकथनादिसमुद्भवम् । सादृश्यक्षोभजनितं सारूप्यमिति संज्ञित" मिति पूर्वानुभूतसादृश्यार्थेन वस्तुकथनं सारूप्यम् ॥ अत्र शकुन्तलावस्थाया इतिहासादिना श्रुतकामावस्थासारूप्यम् ॥

तस्यास्तन्निमित्तोऽयमातङ्को भवेत् । सखि, ममापीदृश्याशङ्का हृदयस्य । ममापि हृदयस्येति सम्बन्धः । हृदयग्रहणेन तस्मिन्स्फुरणमात्रमुक्तं न तु तत्त्वतः । अत एवाशङ्कापदम् । भवतु । प्रक्ष्यामि तावदेनाम् । सखि प्रष्टव्यासि किमपि । बलवान्खलु ते सन्तापः । पूर्वार्धेनेति । शरीरस्येति शेषः । 'पूर्वेण' इति पाठे शरीरार्धेनेत्यर्थम् । किं वक्तुकामासि । अनभ्यन्तरास्तत्त्वेनाज्ञाः खलु निश्चितं वयं मदनगतस्य वृत्तान्तस्य । तस्यां मिथ्यारोपभियैवाज्ञानप्रकाशनपूर्वप्रश्नः । किं तु यादृशीतिहासनिबन्धेषु कामयमानानां विरहिणामवस्था श्रूयते तादृशीमवस्थां तव पश्यामि । ज्ञानेऽपि श्रवणमेव कारणमुक्तम् । न तु स्वयमन्यस्य प्रत्यक्षतो दर्शनमवस्थायाः तस्मिन्सत्यस्य सत्यत्वसम्भावना स्यात् । किं च निरूपणेऽपि तत्सादृश्येनैव निरूपणं न तत्त्वेन । कथय । किंनिमित्तं ते सन्तापः । विकारं खलु

* प्रश्नवाक्यमिदमनुसूयाया इति क्वचिद्दृश्यते ॥

त्तो एसो दे (सन्दावो) आआसो ॥ विआरं खु परमत्थ(दो)तो अजाणिअ अणारम्भो पडिहारस्स ॥

**दुष्यन्तः**—अनसूयामप्यनुगतो मदीयस्तर्कः ॥ न हि स्वाभिप्रायेण दर्शनम् ॥

**शकुन्तला**—(आत्मगतम्) [1]ब (लवं) ळीअं खु मे अहिणिवेसो ॥ (दाणिंवि सहसा एदाणं) एदाणिं वि सहसा ण-सक्कुणोमि निवे(दि)देदुम् ॥

**प्रियंवदा**—[2]सहि । (सउंदले) सुट्ठु एसा भणदि ॥ किं अत्तणो आदङ्कं उवेक्खसि ? अणुदिअहं खु परिहीअसि अङ्गेहिं ॥ केवळं ळावण्णमई छाआ तुमं ण मुंचइ ॥

---

निमि(त्तं) त्त एष ते (सन्तापः) आयासः । विकारं खलु परमार्थतोऽज्ञात्वा नारम्भः (प्रतीकारस्य) परिहारस्य ॥

1 बलवान् खलु मेऽभिनिवेशः । (इदानीमपि सहसैतयोः) एतयोरपि सहसा न शक्नोमि निवेदयितुम् ॥

2 सखि, (शकुन्तले) सुष्टु एषा भणति । किमात्मन आतङ्कमुपेक्षसे ? अनुदिवसं खलु परिहीयसेऽङ्गैः । केवलं लावण्यमयी छाया त्वां न मुञ्चति ॥

---

**बळीअमिति ॥** अभिनिवेशः प्रयत्नविशेषः बलवान् दृढः ॥ यस्मिन् विषये स्वस्याभिनिवेशस्सतु दुर्घट इति यावत् ॥ यद्वा—अभिनिवेशोऽनुरागप्रकर्षः बलवान् मरणाख्यं मदनावस्थान्तरं गतः ॥ अतएव निवेदयितुं शक्नोमीत्यनेन स्वस्य वचनोच्चारणे ग्लानिः ॥ सहसेत्यनेन शनैर्निवेदयितुं शक्यत इति द्योत्यते ॥ तेन स्वस्य मरणसध्रीचीनदशा ध्वन्यते ॥ एतयोरपीत्यनेन सखीव्यतिरिक्तयोर्निवेदने लज्जा समुचितैव ॥ सख्योरपि स्वावस्थानिवेदने व्रीळा भवतीति व्यज्यते ॥ अनुरागदशायामेव निवेदितमिदानीमेतदवस्थान्तरसमये स्वावस्थानिवेदने सख्यौ किं वदिष्यत इति भावः ॥

**सहीत्यादि ॥** परिहीयस इत्यनेन परिहानिं तनुताख्यां पञ्चमीं मदनावस्थामनुभवसीति भावः ॥ लावण्यस्य लक्षणं पूर्वमेवोक्तम् ॥

---

परमार्थतोऽज्ञात्वाऽनारम्भः प्रतीकारस्य । उक्तं च—'व्याधेस्तत्त्वपरिज्ञानम्' इति । दर्शनं ज्ञानम् । बलवानधिकः खलु निश्चितं मेऽभिनिवेश आग्रहः । अकथन इत्यार्थम् । 'अभिनिवेश इति ग्रहे' इति गणपाठात् । इदानीमप्येतदवस्थायामपि । एतादृक्प्रश्नसद्भावे सत्यपीत्यपिशब्दार्थः । सहसाकस्मात् । अग्रेऽवश्यं वक्ष्यमाणत्वात्सहसेत्युक्तिः । एतयोरिति सख्योः । तत्रापि प्रियसख्योः । रहस्याभेदिन्योर्मदर्थं प्राणपरित्यागिन्योरित्यर्थान्तरसंक्रमितम् । शक्नोमि नितरां सामस्त्येन वेदितुम् । सुष्टेषा भणति । किमात्मन आतङ्कमुपेक्षसे । अनेन ममापि प्रश्नेऽभिप्रायोऽस्तीत्युक्तम् । अनुदिवसं खलु परिहीयसेऽङ्गैः । पूर्वं स्वभावत एव कृशा अधुना ततोऽपीति भावः । केवलं लावण्यमयी छाया त्वां न मुञ्चति । तथा कार्श्यं यथा प्रधानं लावण्यमेव दर्शनयोग्यं नावयवा इति भावः ।

दुष्यन्तः—अवितथमाह प्रियंवदा ॥

तथा हि—

क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं
मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा ।
शोच्या च प्रियदर्शना च मदनक्लिष्टेयमालक्ष्यते
पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥ ७

---

अवितथं सत्यम् ॥

७ क्षामेत्यादि ॥ कपोलयोः स्वाभाविकी क्षामता इदानीं विरहपरम्पराजनितदुःखेनातिशयेन जातेत्यर्थः ॥ काठिन्यमुक्तस्तनमिति ॥ प्रत्ययविशेषेण सर्वावयवकार्श्येऽपि कुचयोः परिणाहो न विहतः ॥ केवलमीषत्काठिन्यपरित्याग एवेति ध्वन्यते ॥ अन्यथा प्रियदर्शनत्वानुपपत्तेः ॥ मध्यः क्लान्ततर इति ॥ कृशोदरीत्वेन स्तनजघनभाराभ्यां च मध्यः पूर्वमेव क्लान्तः ॥ सम्प्रत्यतिशयेन क्लान्त इत्यर्थः ॥ अनेन कार्श्यं नामावस्थान्तरमुक्तम् ॥ प्रकामविनतौ अंसौ स्तनभाराभ्यां पूर्वमेव नतौ इदानीं प्रकर्षेण विनताविलर्थः ॥ छविः पाण्डुरेति पूर्वमविद्यमानैव पाण्डुतोक्ता ॥ अनेन पाण्डुत्वं नामावस्थान्तरमुक्तम् ॥ शोच्या-एतादृक्परिपुष्टावयवानामेवं क्षामतादिजननेन शोचनीया ॥ प्रियदर्शना अवयवक्षामतादिसत्त्वेऽपि लावण्यस्यातिशयितत्वेन स्वविषयानुरागजनितक्षामतादिमत्त्वेन च प्रियदर्शना ॥ दर्शनं दृष्टिः ॥ तस्याः परमसुखदर्शनत्वेन प्रियत्वम् ॥ रम्याणां विकृतिरपि शोभावहेत्यर्थः ॥ तदुक्तं भोजेन—"किञ्चिदाश्रयसौन्दर्याद्धत्ते शोभामसाध्वपि । कान्ताविलोचनन्यस्तं मलीमसमिवाञ्जन"मिति ॥ पत्राणामिवेत्यादिदृष्टान्तः ॥ अत्र शोषणेन पाण्डुता कथिता ॥ मरुता स्पृष्टेति माधवीलतायां मलयमारुतस्पर्शेनाङ्कुरादिजननाद्दर्शनीयतोक्ता ॥ अत्र कान्तिर्नाम स्त्रीणां स्वाभाविकालङ्कार उक्तः ॥ तदुक्तं—"रूपयौवनाद्यतिशयश्शोभा ॥ तस्यैव

---

अवितथं सत्यम् । यस्तु प्रियं वदति स सत्यं न वदति । इयं प्रियंवदा सत्यवचनापीति विरोधः । नाम्ना तदाभासः । तया 'अङ्गैः परिहीयसे' इत्युक्तम् । अतो राजापि तदेव दर्शयति—तथाहीति ॥

क्षामेति ॥ क्षामक्षामौ कृशतरौ पूर्वं कृशावधुना कृशतरौ कपोलौ यत्र तदाननं मुखम् । उरः काठिन्येन मुक्तौ स्तनौ यत्र तत् । इदमपि कार्श्यादेव । पूर्वं क्लान्तः कृशः, अधुना क्लान्ततरो मध्यः' अंसौ पूर्वमेव विनतौ, अधुना प्रकाममत्यर्थं विनतौ । छविः पाण्डुरेति विरहकार्श्यादेव । शोच्या शोचनीया च प्रियदर्शना चेति विरोधः । शोच्यानुकम्पार्हेति तदाभासः । मदनेन क्लिष्टेति शोच्यत्वे हेतुत्वोपादानात्काव्यलिङ्गम् । केव । माधवी वासन्ती लतेव । कीदृशी । शोष्यतेऽनेनेति । शोषणः । 'करणाधिकरणयोश्च' इति ल्युट् । तेन पत्राणां शोषणेन मरुता पश्चिमवायुना स्पृष्टा । स तु तस्या अपि शोषक इति क्लिष्टत्वम् । माधवीशब्देन प्रियदर्शनत्वमुक्तं लतामात्रस्यैव कार्श्यसम्भवात् उपमानुप्रासौ । शार्दूलविक्रीडितं वृत्तम् । 'वक्त्रं क्षामकपोलयुग्भृशमुरः' इति 'क्लान्ततरोंऽसयुग्ममधिकं नम्रं छविः' इति पाठ उद्देश्यप्रतिनिर्देशप्रक्रमभङ्गः

**शकुन्तला**—(सलज्जम्) [1]सहि । कस्स वा अण्णस्स कहइस्सं? किंदु आआसइत्तिआ दाणिं वो भविस्सम् ॥

**उभे**—[2]अदो एव्व (क्खु)णिब्बन्धो ॥ सिणिद्धजणसंविभत्तं खु दुक्खं सज्झवेदणं होदि ॥

**दुष्यन्तः**—

पृष्टा जनेन समदुःखसुखेन बाला
नेयं न वक्ष्यति मनोगतमाधिहेतुम् ।

---

1 सखि, कस्य वाऽन्यस्य कथयिष्यामि? किंतु आयासयितृकेदानीं वां भविष्यामि।
2 अतएव (खलु) निर्बन्धः स्निग्धजनसंविभक्तं खलु दुःखं सह्यवेदनं भवति ।

---

मन्मथविकारोपबृंहितत्वे कान्तिः" इति ॥ अत्र मन्मथजनितकार्श्येऽपि मनोहरत्वात्कान्तिरुक्ता ॥

**सहीत्यादि** ॥ अन्यस्य कथयिष्यामीति भविष्यद्व्यपदेशेनेतः पूर्वं कस्यापि न कथितमिति द्योत्यते ॥ युवयोरकथनादेवैवं दुःखमनुभूयत इति भावः ॥ इदानीं सख्येतदवस्थान्तरं गतायां सत्यामित्यर्थः ॥ आयासयितृका प्रयासकारिणी ॥ भविष्यामीत्यनेन स्वस्येप्सितप्राप्तिं विना दुःखं न गच्छतीति ज्ञाप्यते ॥ तेन च सख्योस्सार्वकालिकस्वाभिलषितवस्तुसम्पादनैकपरत्वं सूच्यते ॥ अत एव अकथनादेव निर्बन्धः प्रयासः ॥ संविभक्तं खलु सम्यग्विविच्य प्रकटितं चेत् । सह्यवेदनम् ॥ तत्प्रतीकारोपायचिन्तया सोढुं शक्यमित्यर्थः ॥

८ **पृष्टेत्यादि** ॥ इयं परिदृश्यमाना एतदवस्थान्तरं गतेयमिति यावत् ॥ अनेन मरणसध्रीचीनदशावत्तया वक्तव्यं सावशेषं न वदिष्यतीति द्योत्यते ॥ किन्तु वक्तव्यं सर्वं वदिष्यतीत्यर्थः ॥ तर्हि प्रौढा चेल्लज्जया न वक्ष्यतीत्यत आह—बाला अप्रगल्भा अनेन व्रीळया प्रौढेव प्रच्छाद्य वक्तुं न जानातीति द्योत्यते ॥ किन्तु दुःखसहने धार्ष्ट्यभावा-

---

प्रकामविशब्दयोरर्थपौनरुक्त्यं च परिहृतं भवति । 'संपृष्टा दलशोषणेन मरुता सा माधवीव प्रिया' इति पाठ इवप्रयोगप्रक्रमभङ्गो लताशब्दस्यावकरत्वं च परिहृतं भवति। सखी, कस्य वान्यस्य कथयिष्यामि। आयासयित्री युवयोरिदानीं भविष्यामि। अतो न कथयामीत्यर्थः । अत एव खलु निर्बन्धः। यदेवाकथने कारणत्वेन निबद्धं तदेव कथने हेतुत्वेनोपात्तमिति व्याघातालङ्कारः । 'सौकर्येण कार्यं विरुद्धं क्रिया च' इति लक्षणात्। स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवतीत्यर्थान्तरन्यासः ॥

**पृष्टेति** ॥ जनेनाधिहेतुं मनः पीडाकारणं पृष्टा । 'पुंस्याधिर्मानसी व्यथा' इत्यमरः। इयं बाला मनोगतं सत्यं न वक्ष्यतीति न । अपि तु वक्ष्यत्येव । एतदर्थमेवनञ्द्वयम्। बालेति कैतवानभिज्ञत्वं ध्वन्यते। सत्यवचने हेतुगर्भं विशेषणमाह—समदुःखसु-

दृष्टो विवृत्य बहुशोऽप्यनया सतृष्ण-
मत्रान्तरे श्रवणकातरतां गतोऽस्मि ॥ ८

**शकुन्तला**—(सलज्जम्) [1]सहि । जदो पहुदि मह दंसणपहं (आअदो सो गदो तवोवणरक्खिदा रा(यसी) एसि । तदो आरहिअ तग्गदेण अहिलासेण एतदवत्थह्मि संवुत्ता ॥

1 सखि! यतः प्रभृति मम दर्शनपथं (आगतस्सः) गतस्तपोवनरक्षिता राजर्षिः, तत आरभ्य, तद्गतेनाभिलाषेण, एतदवस्थास्मि संवृत्ता ॥

स्फुटमेव वदिष्यतीति यावत् ॥ तर्हि । यद्यपि बाला । तथाप्यन्यत्र कथनशङ्कया न वदेदित्यत आह—समदुःखसुखजनेन पृष्टेति सखीजनेन पृष्टेति यावत् ॥ तेनान्यत्र कथनशङ्का निरस्यते ॥ आधिहेतुं चित्तदुःखकारणम् ॥ "आधिस्तु व्यसने चित्तदुःखेऽधिष्ठानबन्धयो" रिति वैजयन्ती ॥ मनोगतं चित्तसम्बन्धि न वक्ष्यतीति न उक्तहेतुभिर्नवदिष्यतीति न ॥ किन्तु वदिष्यत्येवेत्यर्थः ॥ समदुःखजनेन पृष्टेत्यनेन तद्वचनस्यानुलङ्घनीयत्वं शकुन्तलाहृदयमर्मज्ञत्वं च व्यज्यते ॥ मनोगतमाधिहेतुमित्यनेन शरीरकार्श्यादीनां सुभगत्वान्मदनताप एवेति प्रागेव स्तनन्यस्तोशीरमित्यादिना निर्णीतः ॥ नत्वातपदोषकथनशङ्का ॥ किन्तु परबुद्धेरप्रत्यक्षत्वात्तद्विषयकं किं वक्ष्यतीति द्योत्यते ॥ अत एवोक्तं मनोगतमिति ॥ तन्मनोदुःखस्य स्वनिमित्तत्वमाह—दृष्ट इत्यादिना ॥ अनया परिदृश्यमानया दृष्टः न तु सख्योरभिप्रायमात्रेण तदीयतापस्य स्वविषयकत्वनिर्णय इत्यर्थः ॥ तर्हि कादाचित्कदर्शनेन कथमनुरागनिर्णयइत्यतआह—बहुशइति ॥ बहुशः वारं वारमित्यर्थः ॥ उत्तमनायिकाया ललितविलोकनं स्वाभाविकमिति तदुपपत्तिमाह—सतृष्णमिति ॥ सतृष्णं सस्पृहम् ॥ अनेन स्निग्धवीक्षणमुच्यते ॥ विवृत्येत्यनेन स्वकीयदर्शनार्थं तया कृतदर्भाङ्कुरचरणक्षतानि व्याजानि सूच्यंते ॥ अत्रांतरे प्रश्नोत्तरक्षणे ॥ श्रवणकातरतामाकर्णनभीरुताम् ॥

**सहीत्यादि ॥** मम दर्शनपथं गत इत्यनेन दर्शनीयतया वस्तुसौन्दर्यप्राबल्यमुक्तम् ॥ तेन च सौन्दर्यादयो बाह्यगुणा कथिताः ॥ तपोवनरक्षितेत्यनेन शौर्यदाक्षिण्यादयआन्तरगुणा उक्ताः ॥ यत्राकृतिस्तत्र गुणा वसन्तीति श्रवणात् ॥ राजर्षिरित्यनेन महाकुलीनत्वं महदैश्वर्यं च सूचितम् ॥ तेन च स्वस्य तस्मिन्ननुरागवत्त्वे हेतुरुक्तः ॥ तपोवनरक्षितेत्यनेन विलापो नाम षष्ठी स्मरदशा सूचिता ॥ तदुक्तम्—"इहस्थितइहासीन इहचोपगतो मया । इति तैस्तैर्विलपितैर्विलापं सम्प्रयोजयेत् ॥ उद्विग्नात्यर्थमौत्सुक्यादरत्या च विलापिनी । इतस्ततश्च भ्रमति विलापस्थानमाश्रिता" इति ॥ उद्वेगातिशयात्परिदेवनं

खेनेति । तेन काव्यलिङ्गम् । हि निश्चितमनया तरलायतलोचनया सतृष्णं साभिलाषं यथा स्यादेवं विवृत्य परावृत्य बहुशो दृष्टोऽप्यहमत्रान्तरेऽस्मिन्नवसरे तद्वचःश्रवणे कातरतां भीतिं प्राप्तोऽस्मि । किं वक्ष्यतीति भयमित्यर्थः । नवा नवेति मतमतेति (गतगतेति) छेकवृत्तिश्रुत्यनुप्रासाः । वसन्ततिलकावृत्तम् । सखि । यतः प्रभृति मम दर्शनपथमागतः स तपोवनरक्षिता राजर्षिस्तत आरभ्य तद्गतेनाभिलाषेणैतदवस्थास्मि संवृत्ता ॥

दुष्यन्तः—(सहर्षम्) श्रुतं श्रोतव्यम् ॥

स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः ।
दिवस इवा(र्ध)भ्रश्यामस्तपात्यये जीवलोकस्य ॥ ९

---

विलाप इत्यर्थः ॥ विलापसान्निध्यमेवोन्मादायतनं शङ्काबीजम् ॥ तदुक्तम्—"विलापातिशयादेव प्रकृतिविपर्ययादुन्मादस्सप्तम्यवस्था" इति ॥ अत्रैव पूर्वाचार्ययोर्विप्रतिपत्तिः ॥ यतः किल मल्लनागाचार्यस्सप्तममुन्मादमाह ॥ वात्स्यायनस्त्वष्टममिति ॥ श्रुतमित्यादि ॥ शकुन्तलया स्वशरीरसन्तापस्य दुष्यन्तदर्शननिमित्ततया कथितत्वाच्छ्रोतव्यं श्रुतमित्युक्तम् ॥

९ **स्मर इति** ॥ स्मर एव मदन एव तापहेतुः ॥ स्वस्य शकुन्तलायामनुरागमुत्पाद्य विरहपरम्पराजनितदुःखेन सन्तापकरो जातइत्यर्थः ॥ निर्वापयिता सन्तापशमयिता जातः ॥ स्वस्य यथा शकुन्तलायामनुरागं सम्पादितवान् ॥ तथा तस्या अपि स्वस्मिन्ननुरागं सम्पाद्य तच्छरीरकार्श्यादीनां स्वनिमित्तश्रवणादनुरागस्योभयानुरागत्वान्मूर्धन्यतया फलोन्मुखं कृतवानित्यर्थः ॥ मदनस्तु पक्षपातरहितो जात इति भावः ॥ तत्र दृष्टान्तमाह—दिवस इवेत्यादि ॥ तपात्यये ग्रीष्मान्ते ॥ अभ्रैर्मेघैश्श्यामः नीलः ॥ वर्षोन्मुख इति यावत् ॥ वर्षाकाले एकएव दिवसः कञ्चित्कालं ग्रीष्मापेक्षयात्यर्थं तपति ॥ सएवानन्तरक्षणे अभिवर्ष्य शैत्यजनको भवति ॥ तथा रत्नावल्यामपि—"तपति प्रावृषि नितरामभ्यर्णजलागमो दिवस" इति ॥

---

**स्मर इति** ॥ यस्तापहेतुः स एव निर्वापयितेति विरोधाभासः । वस्तुतस्तु तद्गतः स्मरस्तापहेतुर्नायिकागतो निर्वापयितेत्यर्थः । अत एव मे प्रतिकूलं दैवं स्मरेण मां तापयतीयं तेनैव मां निर्वापयतीति प्रतीतेर्व्यङ्ग्यो व्याघातालङ्कारः । 'यथासाधितस्य तथैवान्येनान्यथाकरणं व्याघातः' इति तल्लक्षणात् । तत्रोपमामाह—दिवस इवेति । तपात्यये निदाघात्यये । प्रावृडारम्भ इत्यर्थः । 'उष्ण ऊष्मागमस्तपः' इत्यमरः । अर्धश्यामोऽर्धे मेघाक्रान्तत्वाच्छ्यामः सच्छायः पूर्वाह्णे सातपोऽपरत्र सच्छायो वा दिवसो जीवलोकस्य प्राणिवर्गस्य तापयिता निर्वापयिता च यथा भवति । वृत्त्यनुप्रासः । तद्यदि युवयोरनुमतं तदा तथा वर्तेथां यथा तस्य राजर्षेरनुकम्पनीया भवामि । अन्यथावश्यं सिञ्चतं मे तिलोदकम् । अनेन शमो नामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'तस्योपशमनं यत्तु शमनं तदुदाहृतम्' इति । दूरगतमन्मथाऽक्षमा कालहरणस्य । अत्राद्यावस्थात्रयं प्रथममेवोक्तम् । तनुतानन्तरमेवोक्ता । 'किं वीजयतो मां सख्यौ' इति विषयनिवृत्तिः । एतयोरग्रेऽभिलाषकथनादेव त्रपानाश उक्तः । परिहार्यावस्थात्रयमेवावशिष्टमिति दूरगतमन्मथत्वम् । तथा च कद्रये—'नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽर्थसङ्कल्पः । निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ॥ उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्युः' इति ।

**शकुन्तला**—[1]तं जदि वो अणुमदं तह वट्टेह जह तस्स राएसिणो अणुअंपणिज्जा होमि ॥ अण्णहा (अवस्सं) सिंचह मे उ(तिलो) दअं ॥

**दुष्यन्तः**—विमर्श(संशय)च्छेदि वचनम् ॥

**प्रियंवदा**—(जनान्तिकं) [2]अणसूए । दूरगअमम्महा अक्खमा इअं कालहरणस्स ॥ जस्सिं बद्धहावा एसा । सो ळ्ळाम हूदो पौरवाणं ॥ ता जुत्तं से अहिळासो अहिणंदिदुम् ॥

---

1 तद्यदि वामनुमतं तथा वर्तेथां यथा तस्य राजर्षेरनुकम्पनीया भवामि । अन्यथा सिंचतं मे उ(तिलो)दकम् ॥

2 अनसूये, दूरगतमन्मथाऽक्षमेयं कालहरणस्य । यस्मिन् बद्धभावैषा, स ललामभूतः पौरवाणाम् ॥ तस्माद्युक्तमस्या अभिलाषोऽभिनन्दितुम् ॥

---

**तं इत्यादि ॥** यत्स्वशरीरसन्तापस्य दुष्यन्तविषयत्वं मया कथितं तदित्यर्थः ॥ युवयोरनुमतं यदि स्वानुरागस्य रूपलावण्यमहाकुलीनत्वाद्याभिजात्यगुणविशिष्टपुरुषविशेषविषयतया युवयोर्मनसि पतितं चेदित्यर्थः ॥ तथा वर्तेथामित्यनेन तत्प्राप्त्युपाये दृढप्रयत्ने भूत्वा मम जीवितं धारयेथामित्यर्थः ॥ यथानुकम्पनीया भवामीत्यनेन स्वस्य दुष्यन्तविषयगाढानुरागो विद्यते तस्यापि तस्मिन्ननुरागोऽस्ति वा नवेति न जान इति व्यज्यते ॥ यद्यनुरागस्यात्कथमेतादृशावस्थापन्नां मामुपेक्षत इति भावः ॥ राजर्षेरित्यनेन राज्ञस्तु लोकोत्तरबहुवल्लभासु सतीषु कथमरण्यवासिन्यां मयि तस्यानुरागो भवेदिति व्यज्यते ॥ यद्यन्तःपुरस्त्रीभ्यस्त्वस्मिन्नधिकगुणास्सन्ति तर्हि मयि राज्ञोऽप्यनुरागस्यादिति भावः ॥ येन केनापि प्रकारेण तत्प्राप्त्युपाये यतनीयमित्यभिप्रायः ॥ वैपरीत्ये दोषमाह—अन्यथेति ॥ अन्यथा तत्प्राप्त्यभावे ॥ उदकं सिञ्चतं निवापजलं प्रयच्छतम् ॥ अनेन स्वस्य मरणमेव शरणमित्याशयः ॥ तेनात्मन आसन्नमरणसमानदशा सूच्यते ॥ सिञ्चतमिति विध्यर्थेन स्वस्यापि जीवितविषये नैराश्यं व्यज्यते ॥ विमर्शच्छेदीत्यादि ॥ विमर्शच्छेदि संशयापनोदि ॥

प्रियंवदाशकुन्तलावचनव्यंग्यं मरणरूपमित्येवेति हृदि निधाय ब्रूते - अणसूये इति ॥ अत्र मन्मथशब्देन मदनावस्थाः कथ्यन्ते ॥ दूरगतमन्मथा अत्यर्थमन्मथावस्था ॥ मदनावस्थासु बह्वथोऽवस्था अतिक्रान्ता इत्यर्थः ॥ अत एव कालहरणस्याक्षमा ॥ विलम्बे सति चरमा मरणावस्थैव भविष्यतीति यावत् ॥ अवस्थाः कथ्यन्ते ॥ शृङ्गारस्याङ्कुरितत्वपल्लवितत्वकुसुमितत्वफलितत्वहेतवो द्वादशावस्था भवन्ति—"चक्षुःप्रीतिर्मनस्सङ्गस्सङ्कल्पोऽथ प्रलापनं । जागरः कार्श्यमरतिर्लज्जात्यागोऽथ संज्वरः ॥ उन्मादो मूर्छना चैव मरणं चरमं विदु" रिति ॥

---

ननु पूर्वमभिलाषचिन्तनेत्यादिदशावस्था उक्ताः । अधुना तु नयनप्रीत्यादय उक्ता इति पूर्वापरानाकलनादिति चेन्न । आचार्यमतभेदमात्रत्वात् । अत एवोक्तम्—'अभिलाषाद्यवस्थानां चक्षुःप्रीत्यादिकास्वपि । सम्भवादितरत्रापि तासां स्यादैक्यमेव तत् ॥ चिरन्तनप्रसिद्ध्या तु विविच्य कथिता इमाः' इति । यस्मिन्बद्धभावा सानुरागैषा स ललामभूतः प्रधानं पौरवाणाम् । तस्माद्युक्तमस्या अभिलाषोऽभिनन्दितुम् । युक्तमिति प्राकृतत्वा-

**अनसूया**—(जनान्तिकं) [1]सहि जह भणसि (प्रकाशं) (शकुन्तलां दृष्ट्वा) * सहि । दिट्ठिआ दे अणुरुव्वो अहिणिवेसो ॥ साअरं उज्झिअ कहिं वा महाणई वोदरइ ।

**प्रियंवदा**—[2]को वा दाणिं सहआरमन्दरेण अदिमुत्तलदं पळ्ळविदं (सहेदि) अरुहदि ?

**दुष्यन्तः**—किमत्र चित्रं ? यदि विशाखे शशाङ्कलेखामनुवर्तेते ॥

**अनसूया**—[3]को उण उवाओ हवे ? जेण अविळंबिअं णिहुअं च सही(ए)मणोरहं सं(पादम्हे)वादेम ॥

**प्रियंवदा**—[4]निहुअं त्ति (चिन्तणिज्जं) चिन्दा हवे सिग्घं ति सुअरं॥

---

1 सखि यथा भणसि· सखि, दिष्ट्या तेऽनुरूपोऽभिनिवेशः। सागरमुज्झित्वा कुत्र वा महानद्यवतरति ॥

2 को वेदानीं सहकारमन्तरेणातिमुक्तलतां पल्लवि(तां सहते)तामर्हति ?

3 कः पुनरुपायो भवेत्? येनाविलम्बितं निभृतं च स(ख्या) खीमनोरथं सम्पादयावः॥

4 निभृतमिति (चिन्तनीयं) चिन्ता भवेत् शीघ्रमिति सुकरम्।

---

**सहीत्यादि ॥** यथा भणसि॥ तत्तथैवेत्यर्थः॥ अभिनिवेशः अनुरागप्रकर्षः॥ अनुरूपः अनुरागस्य महाकुलीनराजर्षिविषयकतया योग्य इत्यर्थः॥ दिष्ट्या अनायासेन॥ ते तव आश्रमवासिन्यास्तवेति यावत्॥

अतिमुक्तलता माधवीलता॥

**णिहुअमिति ॥** निभृतं गूढं अप्रकाशमिति यावत्॥ शीघ्रं स्फुटम्॥ प्रकाशमित्यर्थः॥

---

लिङ्गविपर्ययः। प्रथमायां वा द्वितीया। यथा भणसि तत्तथैवेत्यर्थः। दिष्ट्या दैवेनानुरूपस्तेऽभिनिवेशः। सागरमुज्झित्वा कुत्र वा महानद्यवतरति। क इदानीं सहकारमन्तरेणातिमुक्तलतां पल्लविनीं सहते। स्वीयत्वेन परिगृह्णातीत्यर्थः। मालादृष्टान्तः। पूर्वत्र नायिकायाः कर्तृत्वमुक्तम्। उत्तरत्र नायकस्येति विशेषः। द्विदैवत्वाद्विशाखयोर्द्वित्वम्। युक्तमेवैतयोरेतस्या अनुमोदनमिति भावः। एतदभिप्रायमेव विशाखयोर्द्वित्वम्। शशिलेखात्वेन स्त्रीलिङ्गनिर्देशश्च विशाखे शशाङ्कलेखा चाप्रस्तुता। तासां वचनादप्रस्तुतप्रशंसा। तया च सख्योः शकुन्तलायाश्च प्रकृतानां योग्यसमागमत्वेन समालङ्कारो व्यज्यते। कः पुनरुपायो भवेद्येनाविलम्बितं शीघ्रं निभृतं गुप्तं च सख्या मनोरथं सम्पादयावः। निभृतमिति चिन्तनीयं भवेत्। शीघ्रमिति सुकरम्।

---

* इदमपि वचनं प्रियंवदाया एवेति क्वचिद्दृश्यते॥

**अनसूया**—[1]कहं विअ ?

**प्रियंवदा**—[2]णं एसो रा एसी इमस्सिं सि(णि)द्धदिट्ठिए सूइदाहिळासो इमाइ दिअहाइ प(जा)आअरकिसो लक्खिअदि ॥

**दुष्यन्तः**—सत्यमित्थं भूतोऽस्मि ॥

तथाहि—

इदमशिशिरैरन्तस्तापाद्विवर्णमणीकृतं
निशिनिशि भुजन्यस्तापाङ्गप्र(सारि)सर्पिभिरश्रुभिः ।

1 कथमिव ?

2 नन्वेष राजर्षिरस्यां स्निग्धदृष्ट्या सूचिताभिलाषः इमानि दिवसानि प्रजागरकृशो लक्ष्यते ।

**सत्यमित्यादि ॥** सत्यं तत्त्वतः ॥

१० **इदमिति ॥** इदं कनकवलयं मया प्रतिसार्यत इति योजना ॥ कीदृगित्याह—अन्तस्तापादिति ॥ बाष्पस्याग्निसम्बन्धाभावेनोष्णत्वमसम्भाव्यमिति ॥ तदुपपत्तिमाह—अन्तस्तापादिति ॥ विप्रलम्भजनितज्वरेण सर्वाङ्गसन्तापवत्त्वात्ततोऽग्निच्छलतः बाष्पस्योष्णत्वोपपत्तेः ॥ निशि निशीति वीप्सायाम् ॥ अनेन सार्वकालिकतदेकतानगाढानुरागजनितचिन्ता व्यज्यते ॥ भुजन्यस्तापाङ्गप्रसर्पिभिरिति ॥ अरत्या शय्योपधानाद्यभावेनान्यकान्तालिङ्गनादिसम्भावनाभावाच्च स्वभुजमेवोपधानीकृत्य शयने क्रियमाणे अपाङ्गस्य तत्संयोगित्वेन ततस्सर्वदा प्रसरणशीलैरित्यर्थः ॥ अश्रुभिरिति बहुवचनेन सार्वकालिकनिर्यंत्रण प्रसरणमुच्यते ॥ विवर्णमणीकृतमिति स्वाभाविककान्तिसन्तोऽपि मणयः उष्णजलादिसम्बन्धेन दर्पणादिवद्विवर्णा भवन्तीति च्विप्रत्यय उक्तः ॥ अनतिलुलित ज्याघाताङ्कमिति ॥

कथमिव । ननु स राजर्षिरेतस्यां स्निग्धदृष्ट्या सूचिताभिलाष एतान्दिवसान्प्रजागरकृशो लक्ष्यते । उक्तस्य पुरुषत्वाद्विशेषतो राजत्वात्तत्रापि स्वयं दुष्यन्त इति विषयनिवृत्तित्रपानाशलक्षणे अवस्थे एनं प्रति न वर्णिते । अधीरत्वेनानौचित्यप्रसङ्गात् ॥

**इदमिति ॥** निशि निशि प्रतिरात्रम् । अनेन दर्शनात्प्रभृत्यद्य यावदेतदवस्था द्योतिता । भुज उपधानीकृते न्यस्तो योऽयमपाङ्गो नेत्रान्तस्तत्र प्रसर्तुं शीलं येषां तैः । अत प्रजागराच्छय्यायां परिवृत्तिविवर्तनैः सत्यप्युपधाने तस्य निष्फलत्वाद्भुजोपधानत्वमुक्तम् । अन्तस्तापादशिशिरैरुष्णैरश्रुभिर्विवर्णा मणयो यत्र तत् । अविवर्णमणि विवर्णमणिसम्पादितं विवर्णमणीकृतम् । अनेनापि दीर्घकालमियमवस्था व्यज्यते ।

अन(भि)तिलुळितज्याघाताङ्कं मुहुर्मणिबन्धनात्
कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्यते ॥ १०

ज्याघातेन प्रकोष्ठस्य किणितत्वेन वलयं तत्र क्षणं प्रतिबद्धं भवतीत्यर्थः॥ अनेन स्वस्य शूरतया युद्धवीरत्वं सूच्यते ॥ स्रस्तं स्रस्तमिति वीप्सायाम् ॥ यदा मुहुस्तस्य डोलाहस्तता तदा स्रस्तं भवतीत्यर्थः ॥ मयेति स्वानुभवविषयतोक्ता ॥ प्रतिसार्यत इति प्रतिकूलं प्रकोष्ठादूर्ध्वं नीयते ॥ वर्तमानव्यपदेशेन सार्वकालिकप्रतिसरणमुक्तम् ॥ अश्रुभिर्विवर्णमणीकृतमित्यनेनाश्रुनाम सात्त्विकभाव उक्तः ॥ तदुक्तं—"बाष्पोज्जृम्भोभयक्रोधसुखैरनिमिषेक्षणैः । वियोगरोगशोकादेर्जायन्ते जनधूमता" इति ॥ अत्र वियोगजनिताश्रुपातस्सात्त्विकपर्यवसायितया वर्णितः ॥ सात्त्विकभावा निरूप्यन्ते ॥ सत्त्वं चित्तम् ॥ तत्र स्थितान् स्थायिनो रत्यादीन्सञ्चारिणो निर्वेदादींश्चाभिव्यंजयन्तस्सात्त्विका उच्यन्ते ॥ यदाहुः—"रजस्तमोभ्यामस्पृष्टं मनस्सत्त्वमिहोच्यते । निर्वृत्तास्तेन तद्योगात्प्रभवन्ति हि सात्त्विका" इति सतश्चित्तस्वभावः परिणामस्सत्त्वम् ॥ सत्त्वशब्देन रत्यादिश्शृङ्गारादिर्निर्वेदादिश्चोच्यते ॥ सर्वेषां चित्तपरिणामरूपत्वात् ॥ तेन निष्पन्नास्सात्त्विकाः ॥ ते च कृत्रिमाकृत्रिमभेदेन द्विविधाः ॥ साक्षान्नायकादिगता अकृत्रिमाः ॥ नटादिगताः कृत्रिमाः ॥ नाट्यशास्त्रे सत्त्वशब्देनान्तःकरणपरिणाम उच्यते ॥ यद्यपि तत्परिणामरूपस्य रत्यादिभावरससमुदायस्य स्तम्भस्वेदादयः कटाक्षादयश्च व्यञ्जकाः ॥ तथापि विक्षिप्तचित्तैरपि कटाक्षादयः कर्तुं शक्यन्ते ॥ स्वेदादयस्तु समाहितचित्तानामेव भवन्तीति नटादिभिरपि समाहितचित्तैरेव तद्भावापत्त्या स्वेदादयोऽभिनेया इति स्वेदादीनामेव सात्त्विकत्वम् ॥ आङ्गिकवाचिकाहार्याणां विक्षिप्तचित्तैरप्यभिनेतुं शक्यत्वेन तेषामभिनयत्वमेव । न सात्त्विकत्वमिति भावः ॥ सिद्धान्तस्तु एकैव संवित् स्थायितां प्रतिपद्य सैव तदनुगुणव्यापारविशिष्टा सञ्चारितां प्रतिपद्यते ॥ सैव बाह्यलिङ्गैः स्फुटीभूता सात्त्विकतां प्रतिपद्यते ॥ केचित्तु चित्तवृत्तीनां विलम्बितत्वतीव्रत्वादिभेदेन भेद इति वदन्ति ॥ ते च "स्तम्भप्रळयरोमाञ्चास्स्वेदो वैवर्ण्यवेपथू । अश्रु वैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्तिताः" इति ॥

स्वभावत एव वलयस्य शिथिलत्वे कामावस्थाकृततनुताप्रतीतिर्नभवतीति तस्य स्वभावस्थितिसूचकं विशेषणमाह । अनभिलुलितोऽस्पृष्टो ज्याघाताङ्को येन तत् । तदुपरिभागे गाढत्वेन स्थितत्वात् । एतादृशं कनकवलयम् । कनकेति शैत्यद्योतनाय । वलयमित्येकवचनेन विरहित्वात्सर्वाभरणपरित्यागो द्योत्यते । स्रस्तं स्रस्तं वारंवारं पाणिमूलमागतं कार्श्यात् । मणेर्बन्धनमत्र मणिबन्धनं भुजस्य पाणेश्च सन्धिः । तस्मान्मया राज्ञा दुष्यन्तेनापि सता मुहुर्वारं वारं न तु सकृत्प्रतिसार्यत ऊर्ध्वं नीयते । स्वभावोक्तिः । अथ च प्रजागरत्वे कृशत्वे च कारणे वक्तव्ये यत्तयोरश्रुभिर्विवर्णो बन्धनान्निःसार्यत इत्युक्तिः स लेशः (?) । हरिणीवृत्तम् ।

**प्रियंवदा**—(विचिन्त्य) [1]हळा मअणलेहोस्स करीअदु ।। (इमं देवप्पसादस्सावदेसेण) तं सुमणोगोविदं करिअ देवदापसादव्ववदेसेण तस्स रण्णो-हत्थं पावइस्सम् ।।

**अनसूया**—[2]रोअदि मे अअं सुउमारप्पओओ ।। किंवा सउंदळा भणदि ।।

**शकुन्तला**—[3]किं णिओओ वां विअप्पिअदि ?

**प्रियंवदा**—[4]तेण हि अत्तणो उवण्णासपुव्वं चिन्तेहि (दाव) किंविलळिदपदबन्धणम् ।।

---

1 सखि मदनलेखोऽस्य क्रियताम् । (इमं देवप्रसादस्यापदेशेन) तं सुमनोगोपितं कृत्वा देवताप्रसादव्यपदेशेन तस्य राज्ञो हस्तं प्रापयिष्यामि ।

2 रोचते मेऽयं सुकुमारप्रयोगः । किं वा शकुन्तला भणति ?

3 किं नियोगो वां विकल्प्यते ?

4 तेन ह्यात्मन उपन्यासपूर्वं चिन्तय तावत् किमपि ललितपदबन्धनम् ।

---

**हळेत्यादि** ।। सुकुमारः प्रयासरहितः गूढप्रयोगः ।। मदनलेख इत्यादिनैतदन्तेन प्रज्ञानाम सन्ध्यङ्गमुक्तम् ।। यदाह—"प्रज्ञा सुनिश्चिता बुद्धिः" इति ।। अत्र दुष्यन्तप्राप्तिं प्रत्यसहकालविलम्बनायाश्शकुन्तलाया नायकप्राप्त्यर्थं मदनलेखः क्रियतामिति सुनिश्चितत्वात्प्रज्ञा भवति ।।

**किमित्यादि** ।। अवधीरणाभीरुकमित्यनेन "सार्वभौमस्य मम बहुवल्लभतया अरण्यवासिन्यां युवत्यां कथमनुरागो भूया"दिति राजा वदिष्यतीति न्यक्कारजनितभयग्रस्तमित्यर्थः ।। तेन आत्मनः कन्याभावसुलभमप्रागल्भ्यं ज्ञाप्यते ।।

---

मदनलेखस्तस्मै क्रियताम् । इमं मदनलेखं देवप्पसादस्सावदेसेण देवप्रसादस्यापदेशेन व्याजेन सुमनोगोपितं पुष्पगोपितं कृत्वा तस्य हस्तं प्रापयिष्यामि । सुमनोगोपितं कृत्वा देवप्रसादव्याजेन हस्तं प्रापयिष्यामीत्यन्वयः । विरहिण्याः स्वावस्थासूचको निबद्धो लेखो मदनलेख इत्युच्यते । रोचते मे सुकुमारः प्रयोगः । किं वा शकुन्तला भणति । को नियोग आज्ञा विकल्प्यते विचार्यते । दातुमिति शेषः । तेन ह्यात्मन उपन्यासपूर्वं चिन्तय तावल्ललितपदबन्धनम् । ललितं च तत्पदबन्धनं चेतीदमेव विशेष्यम् । केषुचित्पुस्तकेषु 'ललियपबन्धणं छलियम्' इति पाठः । छलितकमित्यर्थः । तदुक्तं सरस्वतीकण्ठाभरणे—'यदाङ्गिकैकनिर्वर्त्यमुज्झितं वाचिकादिभिः । नर्तकैरभिनीयेत प्रक्ष्वेडो वल्लिकादि यत् ।। तल्लास्यं ताण्डवं चैव छलितम्' इत्यादिना । 'लास्यच्छलितसम्पादि प्रेक्ष्यार्थम्' इति काव्यादर्शेऽपि । छलितलक्षणं यथा—'रतिक्रोधोत्साहभावप्रधानं छलितं मतम्' इति ।

**शकुन्तला**—[1]हळा चिन्देमि ॥ (अहं) किंदु अवहीरणाभीरुअं उण वेवइ मे हिअअम् ॥

**दुष्यन्तः**—(आत्मगतम्)

**अयं स ते तिष्ठति सङ्गमोत्सुको**
**विशंकसे भीरु यतोऽवधीरणाम् ।**
**लभेत वा प्रार्थयिता न वा श्रियं**
**श्रिया दुरापः कथमीप्सितो भवेत् ? ॥** ११

1 तथा चिन्तयामि । किन्त्ववधीरणाभीरुकं पुनः वेपते मे हृदयम् ।

**११ अयं स त इत्यादि ॥** भीरु भयशीले ॥ अत्र भीरुपदं साभिप्रायकम् ॥ वस्तुतस्तु धाष्ट्र्यमेव ॥ सख्योरभिप्रायज्ञानार्थं भीरुत्वप्रकटनमिति यावत् ॥ यतः यस्मादवधीरणां न्यक्कारं विशङ्कसे ॥ परबुद्धेरप्रत्यक्षत्वात् तस्याप्यरण्यवासिन्यामनागरिकायां मय्यनुरागोऽस्ति वा न वेति सन्देहे सति स्वयमेवाभिसरणे क्रियमाणे औदासीन्यं भवेदिति न्यक्कारं विशेषेण तर्कयसि । सोऽयं ते सङ्गमोत्सुकस्सन् तिष्ठति तव रूपलावण्याद्यतिशयादन्तःपुरयुवतिषु वैमनस्यं प्राप्य त्वद्वलाहरणे ऋषिशापरूपानर्थं मत्वा सङ्गमः कदा भविष्यतीति निकट एव वर्तत इत्यर्थः ॥ तत्र दृष्टान्तमाह—लभेय वा प्रार्थयिता न वा श्रियमित्यादि ॥ श्रियं सम्पदं प्रार्थयिता याचमानः पुरुषः ॥ "लक्ष्मी वाणी धात्री त्रिवर्गसम्पद्विभूतिशोभासु । उपकरणवेषरचनाविशेषेषु च श्रीरिति प्रथिता" इति नाममाला ॥ लभेत वा न वेति वितर्के श्रिया सम्पदा ईप्सितः वांछितः कथं दुरापः दुर्लभः ? कथमित्याक्षेपे ॥ दुरापो न भवेदिति यावत् ॥

चिन्तयाम्यहम् । अवधीरणा तिरस्कारस्तेन भीरु पुनर्मे वेपते हृदयम् । मे हृदयं पुनर्वेपत इति सम्बन्धः । क्रियायां विशेषणं हेतुत्वेन योज्यम् ॥

**अयमिति ॥** हे भीरु, अनेन तिरस्कारशङ्कासम्भावना व्यज्यते । यतो यस्मान्मल्लक्षणाज्जनादवधीरणां तिरस्कारं विशङ्कसे । स्यादवधीरणाशङ्का यदि केवलं मत्प्रार्थनैव त्वदीयप्राप्तिहेतुः स्यादिति भावः । सोऽयमिति प्रत्यक्षेण निर्दिशति । सुन्दरीभियं प्रति विधेर्हेतुत्वे योज्यम् । अयं ते तव सङ्गमोत्सुकस्तिष्ठतीति विशिष्टस्य विधेयत्वम् । त्वत्प्रार्थितः कथं दुर्लभो भविष्यामीत्याशयः । पूर्वापरचरणयोर्व्यत्ययपाठेनोद्देश्यप्रतिनिर्देश्यप्रक्रमभङ्गः परिहरणीयः । प्रार्थयिता पुरुषः श्रियं लभेत न लभेत वा, श्रिया पुनरीप्सितः प्रार्थितः कथं दुरापो दुर्लभो भवेत् । अयमर्थान्तरन्यासः । व्यत्ययपठितस्य पूर्ववाक्यस्य पूर्ववाक्यं समर्थकम्, तादृगुत्तरस्योत्तरं समर्थकमिति विवेकः । नन्वत्र सामान्यस्य समर्थकत्वं वक्तव्यम् । श्रीशब्दस्य विशेषवाचित्वादत्र कथं तन्निर्वाह इति चेदुच्यते—'लक्ष्मीसरस्वतीधीत्रिवर्गसम्पद्विभूतिशोभासु । उपकरणवेषरचनागुणेषु सरलद्रवे च कथिता श्रीः ॥' इति व्याडिकोशादत्रातिशयोक्त्या शोभाभारतीलक्ष्मीधीवेषविरचनाविभूतित्रिवर्गसम्पत्तीनामेकत्वेनाध्यवसानात्सामान्यवाचकत्वम् । अतिशयोक्तेः सर्वालङ्कारमूलत्वमाकरेषु

*प्रियंवदा—[1]अइ आत्तगुणावमाणिणि कोवा दाणिं सरीरणिव्वाप-इत्तिअं सारदिं जोसिणिं पटंदेण णिवारइस्सदि ?

शकुन्तला—(सस्मितम्) [2]णिओइदा दाणिं ह्मि ॥

(उपविष्टा चिन्तयति)

दुष्यन्तः—स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि ॥

तथा हि—

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।

1 अयि आत्मगुणावमानिनि· कोवेदानीं शरीरनिर्वापयितृकां शारदीं ज्योत्स्नां पटान्तेन निवारयिष्यति ?

2 नियोजितेदानीमस्मि ।

अईत्यादि ॥ अयीति अतिदुःखितजनं प्रति सुकुमारसम्बोधने ॥ यद्वा—अयीत्यनेन मय्यपि स्वाभिप्रायगुप्तिं करोषीति सासूयवचनम् ॥

१२ उन्नमितेत्यादि ॥ कण्टकितेन सञ्जातपुळकोद्गमेन अनुरागमाञ्जिष्ठाख्यं रागविशेषं प्रथयति निस्संशयं प्रकटयति ॥ अन्यथा रोमाञ्चाभावात् अनुरागस्य लक्षणमुक्तं पूर्वाचार्यैः—"इयमङ्कुरिता प्रेम्णा मनाक्पल्लविता भवेत् । सकोरका प्रणयतः स्नेहात्कुसुमिता भवेत् । रागात्पल्लविता चेयमनुरागेण भुज्यत" इति ॥ एतेषां लक्षणमुच्यते—"परस्पराश्रयघनं निरूढं भावबन्धनं । यदेकायत्ततोपाधि तत्प्रेमेति निगद्यते" अथ-मानः—"येन प्रेमानुबन्धेन स्वातन्त्र्यं हृदयङ्गमं । बध्नाति भावकौटिल्यं समान इति प्रसिद्धम् । श्रुतिवृत्तिच्छेकानुप्रासाः । 'कथं न लभ्येत नरः श्रियार्थितः' इति पठित्वा पर्यायप्रक्रमभङ्गः परिहरणीयः । वंशस्थं वृत्तम् । आत्मगुणावमानिनीति त्वद्गुणैरेव स क्रीतोऽवधीरणाशङ्कापि क्वेति भावः । क इदानीं शरीरनिर्वापयित्रीं शरीरसुखदायिनीं शारदीं शरत्कालसम्बन्धिनीमित्यतिशयेनाह्लादकारित्वं ध्वनितम् । ज्योत्स्नां पटान्तेन वारयति । शकुन्तलावाक्यं प्रति दृष्टान्तः । नियोजितेदानीमस्मि । कामलेख इत्यार्थम् । विस्मृतो निमेषो येन तेन । निर्निमेषेणेत्यर्थः । एतदर्थमेव चक्षुषो विशेष्यस्योपादानम् । प्रियां न स्त्रीमात्रम् । दृष्टचरीमप्यनेकश इति ज्ञेयम् । यदवलोकयामि तत्स्थाने युक्तं खलु । अथवा स्थाने प्रदेशविशेषे ॥

उन्नमितेति ॥ एतादृश्याः पूर्वमदर्शनादनिमेषदर्शनं युक्ततरमिति भावः । पदानि सुप्तिङन्तानि रचयन्त्या अस्याः । उन्नमितोत्क्षिप्तैका भ्रूलता यत्र । इदं पदं देयमिदं वेति वितर्के । तस्याः प्रयोगात्तदाननं कण्टकितेन रोमाञ्चितेन । 'रोमहर्षेऽपि कण्टकः'

*'सख्यौ' इति पाठान्तरम् ।

कण्टकितेन प्रथयति मय्यनुरागं कपोलेन ॥ १२

शकुन्तला—[1]हळा (चिंतिदं) चिंदिदा मए (गीदवत्थु) गीदि ॥ ण खु सण्णिहिदाइ लेहणसाहणाइ ॥

प्रियंवदा—[2]एदस्सिं सुओदरसुउमारे नळिणीपत्ते णहेहिं णिक्खित्त-वण्णं करेहि ॥

1 सख्यौ ! चिन्ति(तं)ता मया (गीतवस्तु) गीतिः न खलु सन्निहितानि लेखनसाधनानि ।
2 एतस्मिन् शुकोदरसुकुमारे नळिनीपत्रे नखैर्निक्षिप्तवर्णां कुरु ।

गीयते" अथ प्रणयः—"उपचारैर्मिथो यूनोर्यद्वाह्याभ्यन्तराभिधैः । प्रेम नीतं प्रकर्षं चेत् स एव प्रणयः स्मृतः" अथ स्नेहः "विस्रम्भे परमां काष्ठामारूढे दर्शनादिभिः । यत्र द्रवत्यन्तरङ्गं स स्नेह इति कथ्यते ॥" स्नेहस्त्रिविधः प्रौढमध्यमन्दभेदतः ॥ "प्रवासादिभिरज्ञातचित्तवृत्तौ प्रयोजने । इतरक्लेशकारी यस्स प्रौढः स्नेह उच्यते।" इतरानुभवापेक्षां सहते यस्स मध्यमः । द्वयोरेकस्य मानादौ तदन्यस्य करोति यः । नैवापेक्षां न चोपेक्षां स स्नेहो मन्द उच्यते ॥" रागस्य लक्षणं द्वितीयेऽङ्के उक्तम् ॥ अथानुरागः—"राग एव स्वसंवेद्यदशाप्राप्त्या प्रकाशितः । यावदाश्रयवृत्तिश्चेदनुराग इतीरितः ॥"

हळेत्यादि ॥ निक्षिप्तवर्णां कुरु ॥ गीतिकामिति शेषः ॥ अनेन लेखो नामसन्ध्यङ्गमुक्तम् ॥ यदाह—"यूनोः परस्परं लेखो मन्मथार्थविलेखन" मिति ॥ अत्र शकुन्तलायाः दुष्यन्तं प्रति ॥

इत्यमरः । कपोलेन यैवैका भ्रूलतोन्नमिता तद्दिक्स्थकपोलस्यैव रोमाञ्चितत्वमित्येकवचनम् । मयीति स्वस्याधिकरणत्वेन धन्यतां सुभगम्मन्यतां च ध्वनयति । अनुरागं प्रीतिविशेषं प्रथयति शंसति । अयमन्यस्मिन्नन्यधर्माधानलक्षणः समाधिर्नाम गुणः । तत्त्वं न तिरस्कृतवाच्यस्य ध्वनेर्विषयः । यथा—'वदति बिसिनीपत्रशयनम्' इति । उक्तं च ध्वनिकृता—'निरूढा विषयेऽन्यत्र शब्दाः स्वविषयादपि । लावण्याद्याः प्रयुक्तास्ते न प्लवन्ति पदं ध्वनेः ॥ इति रतेरेव षष्ठ्यवस्थानुरागः । उक्तं च सुधाकरे—'अङ्कुरपल्लवकलिकाप्रसूनफलभोगभागियं क्रमशः । प्रेमा मानः प्रणयः स्नेहो रागोऽनुराग इत्युक्तः ॥' इति । अनुरागलक्षणं तत्रैव—'राग एव स्वसंवेद्यदशाप्राप्त्या प्रकाशितः । यावदाश्रयवृत्तिश्चेदनुराग इतीरितः ॥' इति । भोगस्योत्तरदक्षिणभावित्वादपि स जात इवेति मत्वैतादृश्युक्तिः । जातिरलंकारोऽनुप्रासश्च । रोमाञ्चितकपोलान्यथानुपपत्त्यानुरागप्रथनादर्थापत्त्यलङ्कारः । केचिदनुमानालङ्कारमाहुः । साधकबाधकप्रमाणाभावादन्ये सन्देहसङ्करमाहुः । भ्रूलतमित्युपमा च । उन्नमितस्य साधकत्वात् । भ्रूलक्षणं यथा—'उश्चि(त्सि)यासङ्ग (?) तान्यर्थान्क्रमेण सह वान्यथा । स्त्रीणां कोपे वितर्के च दर्शने श्रवणे निजे । भ्रूलीलाहेलयोश्चैव कार्योत्क्षिप्ता विचक्षणैः' इति सङ्गीतरत्नाकरे । चिन्तितं मया गीतवस्तु । न खलु सन्निहितानि पुनर्लेखनसाधनानि । एतस्मिञ्छुकोदरसुकुमारे नलिनीपत्रे

शकुन्तला—(यथोद्दिष्टं रूपयित्वा) [1]हळा सुणुह दाणिं संगदद्धा ण वेत्ति॥

उभे—[2]अवहिदं ह्मि ॥

शकुन्तला—(वाचयति)

[3]तुज्झ ण आणे हिअअं मह उण मअणो दिवा वि रत्तिम्मि ।
णिग्घिण त(व)वेइ बळिअं तुइ जु(वु)त्तमणोरहाइ अङ्गाइ ॥ १३

1 सख्यौ, शृणुतमिदानीं सङ्गतार्थां नवेति ॥
2 अवहिते स्वः ।
3 तव न जाने हृदयं मम पुनर्मदनो दिवापि रात्रिमपि ।
निर्घृण(णः)(स्त) तपति (बलीयस्त्व) बलवत्त्वयि मुक्त (वृत्त) मनोरथान्यङ्गानि ॥

१३ तुज्झेति ॥ हे निर्घृण ॥ निष्करुणेति दैन्योक्त्या सम्बोधनम् ॥ स्वविषयकगाढानुरागजनितविप्रलम्भज्वरसम्पादितानि मम शरीरकार्श्यादीनि दृष्ट्वापि तव दया नोत्पद्यत इति यत् तस्मान्निर्घृणेति सम्बोधनम् ॥ स्वनिमित्त व्यसनाभिभूतं जनं पश्यतः पुरुषस्य तस्मिन् दयोत्पत्तेस्सम्भवादिति भावः ॥ अनेन स्वशरीरकार्श्यादिनिवेदनं कृतम् ॥ तव हृदयं न जान इत्यनेन मम हृदयं स्थिरानुरागम् ॥ तव चित्तमपि स्थिरानुरागं वा न वेति परबुद्धेरप्रत्यक्षत्वाच्चिरसहवासाभावाच्च जान इति द्योत्यते ॥ यदि तव हृदयमपि गाढानुरागकं । तर्ह्येतादृशावस्थापन्नां मां कथमुपेक्षस इति भावः ॥ तेन स्वस्यानुरागस्य कालाक्षमत्वं ज्ञाप्यते ॥ तेन स्वस्याः कन्याभावसुलभमप्रागल्भ्यं च सूच्यते ॥ किञ्चानेन लज्जात्यागो नाम मदनदशावस्थान्तरं च ध्वन्यते ॥ तवेत्यनेन कठिनचित्तस्य तवेत्यर्थः ॥ स्वस्य एतादृशावस्थान्तरोपेक्षकतया नामधेयग्रहणायोग्यस्य तवेति व्यज्यते ॥ अत एव दुष्यन्तादिपदं न प्रयुक्तम् ॥ मम पुनः मम तु ॥ पुनश्शब्दो विशेषवाची ॥ यद्यपि तव

नखैर्निक्षिप्तवर्णं कुरु । शृणुतमिदानीं सङ्गतार्थं न वेति । अवहिते स्वः ॥

तुज्झेति ॥ तव न जाने हृदयम् । मम पुनः कामो दिवापि रात्रावपि । निर्घृण निष्कृप, तापयत्यधिकम् । त्वयि वृत्तमनोरथानीति हेतुत्वेन योज्यम् । अङ्गानीति बहुवचनेन मार्दवातिशयो ध्वन्यते । तव हृदयमिति विशेषोपादानात्स्वस्योत्कण्ठातिशयस्तस्य तदभावो ध्वन्यते । अथ च रक्तं तापयति तदा न जाने किमयं यद्यप्येतादृशतापेऽपि न द्रवति । एतदनुसन्धायैव निष्कृपेति सम्बुद्धिः । सा चेत्स्याद्द्रुतमेव स्यात्तत्स्वभावत्वात्तस्या इति दुःखात्परुषोक्तिः । अर्थापत्त्यलङ्कारः । अथ च 'हृदयं मानसोरसोः' इति विश्वः । तेन तव हृदयं गोपुरकपाटायमानं रिपुदनुजनिवहशरशतैरप्यभेद्यमेवंभूतमहं न जाने, अपि तु जाने । आप्तजनवचनात् । अतएव मेऽङ्गानि सर्वाणि दिवापि रात्रावपि तापयति कामः । तव तु वक्षोमात्रमपि न तापयितुं शक्तः । यदि तापयेत्तदा निर्घृण निर्जुगुप्स, निदाघसमयशीतलतरमत्कुचपरिरम्भणायागच्छेः । 'घृणा जुगुप्सा-

हृदयमपि स्थिरानुरागं। तथापि मदनस्तु मां यथा बाधते तथा त्वां न बाधत इत्यर्थः॥ मदनस्त्वयि युक्तमनोरथान्यङ्गानि तपतीत्यनेन त्वय्यनुरक्तां मां कामो रूपलावण्यादिना-त्वत्सदृशस्तव द्विषत् त्वत्सम्बन्धितया मां बाधते॥ तादृशीं दुर्बलां मां त्वमुपेक्षस इत्यर्थः॥ अतएव त्वयि युक्तमनोरथानीत्युक्तम्॥ ममेत्यनेनानुभूयमानमरणसध्रीचीनात्मदशानिवेदनं क्रियते॥ तपतीति वर्तमानव्यपदेशेनाद्यापि जीवितसंशयगतायामपि मयि सत्यामपि तस्य कोपस्योपशमो नास्तीति व्यज्यते॥ मदन इत्यनेन पूर्वमेव रूपलावण्यादिविषये मदनस्य तव च गाढशात्रवमिदानीं विप्रलम्भरूपरन्ध्रे प्राप्ते कथं त्वत्सम्बन्धिनं मां न प्रहरेदिति भावः॥ दिवारात्रमपीत्यनेन मन्दमारुतकोकिलालापचन्द्रकिरणादीनामसह्यदर्शनतया परमोद्दीपन-विभाव उक्तः॥ तेन मदनस्य चूतादिसामग्रीसम्पत्त्या बलोत्कर्षउक्तः॥ ममाङ्गानीत्यनेन मदनस्तु त्वद्रूपलावण्यादीनि दृष्ट्वा तव पुरस्तात् स्थातुं व्रीळितस्सन् त्वय्यनुरक्तां मामेव बाधते॥ यदि मामिव मदनस्त्वामपि बाधेत। तदा मदीयदुःखं ज्ञास्यसीति भावः॥ अनेन मदनस्य पक्षपातित्वं सूच्यते॥ अङ्गानीति बहुवचनेन मदनस्य सर्वलक्ष्येषु सावधानता ध्वन्यते॥ अनेन कर्णहस्ताद्यवयवानां रहस्यश्रवणगाढालिङ्गनाद्यौत्सुक्यं ज्ञाप्यते॥ अत्र श्लोके त्रयस्त्रिंशद्व्यभिचारिभावाः। अष्टौ सात्त्विकाः॥ अष्टौ स्थायिनः। आहत्यैकोनपञ्चाश-द्भावाश्च यथासम्भवं प्रतीयन्ते॥ तथा हि॥ तवेति स्मरणम्॥ हृदयं न जानइत्यभिप्राय-परिज्ञानाभावाद्भयम्॥ हृदयपरिज्ञानाभावेऽपि लेखः कथं प्रेष्यत इति शङ्का॥ तव हृदयं न जान इति तव मनः स्थिरानुरागं वा न वेति वितर्कः॥ मम हृदयं स्थिरानुरागमिति व्यंग्येन लज्जाभावाच्छान्तिः॥ प्रियप्रार्थनया चपलता॥ तव हृदयं न जान इति त्वच्चित्त-परिज्ञानार्थं चतुरास्सख्यो न सन्तीति सखीष्वसूया॥ तवेति दुष्यन्तादिनामग्रहणाभावा-दवहित्थम्॥ हृदयपरिज्ञानाभावेऽपि लेखप्रेषणाद्धासः॥ तव हृदयं न जान इति विषादः॥

---

कृपयोः' इति विश्वः। तादृशं तव वक्ष आलिङ्गितुमिच्छामीत्यभिलाषोक्तिः। अनुमाना-लङ्कारः। अयं मल्लक्षणो जनस्तव हृद्धृदयरूपः रूपकम्। कामः पुनर्ममाङ्गानि यत्तापयति तन्न जान इति प्रश्नकाकुः। वृथैव तापयतीत्यर्थः। ते स्प्रष्टुमप्यशक्येति भावः। समा-सोक्तिः। त्वं त्वेतादृशो निष्कृपो यद्धृदयरूपामपि मां न परित्रायसे। अथ चायं जनस्तव हृत्कामः पुनर्ममाङ्गानि यत्तापयति तदहं न जाने, अपि तु जाने। त्वत्कान्ति-जित इत्यर्थः। तेन तव हृदयं कठोरत्वात्तापयितुं शक्तो न। अतस्तद्रूपाया ममाङ्गानि तापयतीति भाव इति चाटूक्तिः। प्रत्यनीकालङ्कारः। 'प्रतिपक्षप्रतीकाराशक्तौ तदीयतिर-स्कारः प्रत्यनीकम्' इति तल्लक्षणात्। त्वं त्वेतादृशो निर्घृणो यस्त्वदर्थे पीड्यमानामपि मां न रक्षसीति। अथ च त्वयि विषये वृत्ता जाता मनोरथा येषां तानि। आलिङ्गनं भुजयोर्मनोरथः, त्वत्कान्तिझरप्रवाहपानं तु चक्षुषोः, त्वद्वचनामृतसरसीनिमज्जनं च श्रवणयोः, त्वन्मुखसरोजश्वासाघ्राणं नसोः, शशाङ्ककोमलत्वादङ्कारोहणं नितम्बस्य, त्वत्करतलमेलनं कुचयोरित्यादि। एवंभूतमनोरथानि ममाङ्गानि कामोऽधिकं तापयति। त्वं त्वेवं निष्कृपो यत्स्वभक्तान्येवं परेण ताप्यमानान्यपि सहसे तत्तव हृदयं न जाने क्षत्रहृदयमिति न जाने। परैः पीड्यमानं क्षत्रियः परित्रायते स्वभक्तं तु सुतरामित्यु-पालम्भः। कामो ममाङ्गान्यत्यर्थमधिकं तापयति, तव पुनर्हृदयमत्यर्थं न तापयतीत्यहं जाने। यतस्त्वं दिवसे निष्कृपो लोकादिभयात्। एवं रात्रावपि निष्कृपोऽसि यदभिसरणं

तव हृदयं न जान इति चित्तपरिज्ञानाभावात्प्राप्तिः कथं भविष्यतीति चिन्ता ॥ तवेत्यस्मदेतादृशीमवस्थामुपेक्षमाणस्य नामग्रहणायोग्यस्य तवेति मतिः । गर्वो । मदो वा ॥ मदन इति त्रासः ॥ तदनुगतो रोमाञ्चो वेपथुश्च ॥ निर्घृणेति दैन्यम् ॥ तेन गद्गदत्वं च ॥ तदनुगताश्रुपातः । वैस्वर्यं च ॥ त्वयि युक्तमनोरथानीत्यौत्सुक्यम् ॥ त्वयीति रतिः अभिलाषश्च ॥ बलवत्तपतीति जीवितनैराश्ये धृतिर्निर्वेदश्शोकश्च ॥ अङ्गानीति प्रियविरहेऽपि स्वशरीरे जीविनीति तत्र जुगुप्सा ॥ दिवारात्रमपीति इन्दुमलयानिलादिष्वौग्र्यम् ॥ तेनाहारनिद्राद्यभावाद्व्याधिः ॥ तेन सर्वकालेष्वलसता जडता च । तपतीति वर्तमानप्रयोगेणाद्यापि जीवितसंशयगतायामपि मयि बाधत इति विस्मयः ॥ तव हृदयं न जान इति मम हृदयं स्थिरानुरागमिति साक्षान्नोक्तमिति व्रीळा ॥ निर्घृणपदस्य विशेष्यं नोक्तमिति नामोच्चारणे ग्लानिः चित्तविभ्रमादुन्मादो वा ॥ सम्मुखदर्शनाभावेऽपि तवेति साक्षान्निर्देशान्मोहः ॥ निर्घृणेति दैन्योक्त्या वैवर्ण्यम् ॥ मम पुनरिति मम विशेषोऽस्तीत्यर्थेन दुष्यन्तस्यापि मदनबाधासम्भावनया हर्षः ॥ अन्येऽपि भावा बुद्धिमता ऊह्याः ॥ उत्तमप्रकृतेर्निर्वेदादिभाववर्णना व्यंग्यतयैव कार्या ॥ मध्यमपात्रस्य मध्यवृत्त्या ॥ नीचपात्रस्यातिशयितः प्रयोगः कार्यः ॥ तत्रोत्तमपात्राणि देवा राजानो मुनयः ॥ स्त्रीषु तत्स्त्रियः ॥ मध्यप्रकृतयो यक्षगन्धर्वादयः पुरोहितमन्त्रिसेनापतिप्रभृतयश्च ॥ स्त्रीषु तद्वनितास्सख्यादयः परिव्राजिकादयश्च अन्ये विदूषकप्रभृतयो नीचप्रकृतयः ॥ तत्रापि देशकालावस्थाभेदं ज्ञात्वा भावा वर्णनीयाः ॥ देशउद्यानसरित्पुलिनादिर्गुर्वादिसन्निधिर्वा ॥ कालो वसन्तादिः । रात्रिर्वा अवस्था मुग्धामध्याप्रगल्भाभेदाः ॥ अत्र तुज्झ ण जाण इत्यादौ वाचिकश्शृङ्गार उक्तः ॥ तदुक्तं—"भावगर्भवचस्संविन्मधुरं नर्मपेशलं । रहस्य श्रवणानन्दश्शृङ्गारो वाचिकस्स्मृत "इति ॥ अत्र तव हृदयं न जानइत्यनेन संविदो माधुर्यं सूच्यते ॥ तेन नर्मालापोऽपि प्रदर्शितः ॥ त्वयि युक्तमनोरथान्यङ्गानीति बहुवचनेन कर्णाधिवयवानां रहस्यश्रवणेनौत्सुक्यकथनेन श्रवणानन्दोऽपि प्रकाशित इति वाचिकश्शृङ्गारः ॥ शृङ्गारस्वरूपमुच्यते—"देशकालवयोद्रव्यगुणप्रकृतिकर्मणां । ज्येष्ठं शृङ्गं तदस्यास्ति तेन शृङ्गार उच्यते ॥" सोऽयं त्रिविधः ॥ वाचिक नैपथ्यक्रियाभेदतः ॥ वाचिकस्य लक्षणमुक्तम्—"वासोङ्गरागभूषादियोगो नैपथ्यमुच्यते ॥ क्रियाबहुविधाभावव्रीडादिजलकेळयः ॥ वीणानर्तनगानादिसम्भोगस्यात्क्रियात्मकः । सम्भोगो विप्रलम्भश्च

नाकार्षीरिति चोपालम्भः । अथ च त्वं तु केनाभिप्रायेण व्यवहरसीति तव हृदयं लक्षणया हृदयाभिप्रायं न जाने । कामः पुनर्मम मत्सम्बन्धी सुहृदिति भावः । यत्त्वयि वृत्तमनोरथान्यङ्गानि तापयति किमिति तस्मिन्नीदृशे शठेऽनुरक्तासीति तापं दुःखं दत्त्वा शिक्षयतीति वोपालम्भः । एवमकृतार्थरतिं प्रत्येतादृशोपालम्भादानादुन्मादावस्थाप्युक्ता । अथ च निश्चयेन कृपा यस्य तस्य सम्बोधनम् । हे कृपालो, यस्त्वमङ्गुलीयकं दत्त्वा सख्याः सकाशान्मां मोचितवानसि तस्य तव हृदयमहं न जाने । अपि तु जानेऽत्यन्तं दयाशीलमिति । 'निर्निश्चयनिषेधयोः' इत्यमरः । मम पुनर्मदीयं हृदयं न जाने । तत्तु त्वयि वर्तते । तदभावाद्धृदयशून्याहं वर्त इति भावः । केवलं तदेव त्वयि गतमिति न । अपि त्वङ्गान्यपि त्वयि जातमनोरथानि । केवलमङ्गान्येवेति न । अपि तु कामोऽभिलाषोऽपि त्वयि विषये दिने रात्रावधिकं तपति वर्धते लक्षणया । 'कामः स्मरेऽभिलाषे च' इति विश्वः । इत्यनुनयोक्तिः । तेन मदीयं बाह्यमाभ्यन्तरं न किञ्चिदपि मत्सम्बद्धमिति शीघ्रमागच्छेति भावः । श्लेषानुप्रासौ । क्वचित् 'रत्तिं पि' इति पाठः । तदा

**दुष्यन्तः**—(सहसोपसृत्य)

**तपति तनुगात्रि मदनस्त्वामनिशं मां पुनर्दहत्येव ।**
**ग्लपयति यथा शशाङ्कं न तथाहि कुमुद्वतीं दिवसः ॥ १४**

---

शृङ्गारो द्विविधः स्मृतः॥ समागमस्तु सम्भोगः कान्तयोर्दर्शनादिकः॥ आदिशब्दात्परस्परालिङ्गनसम्भाषणमाल्यानुलेपनसौभाग्योपवनवासक्रीडादूती सल्लापपुष्पापचयजलक्रीडागीतादिश्रवणलीलादिकरणादिरूपो बहुविध उच्यते ॥ विप्रलम्भशृङ्गारस्तु—"संसृष्टयोर्विप्रलम्भो विप्रयोगोऽनुरक्तयोः । स चाभिलाषेर्ष्याविरहप्रवासशापज" इति पञ्चविधः॥

**सहसेत्यादि ॥** सहसा हठात्॥ मदनस्तु मामेव दृढतरं बाधते न तु त्वामिति शकुन्तलया यदुक्तं तद्वचनासहिष्णुतया हठादुपसर्पणमिति ज्ञातव्यम्॥

**१४ तपतीति ॥** तनुगात्रि ! हे तन्वङ्गीत्यनेन गात्रं तु पूर्वमेव कृशम् ॥ कोमलं च ॥ स्वल्पमपि न व्यथासहनशीलम्॥ तादृशगात्रस्य स्वनिमित्तकमदनबाधाजनितकार्श्यादिदुःखाद्यनुभवात् तस्यां स्वस्य दयोत्पत्तिस्तनुगात्रीत्यनेन दयाविषयकत्वं सूच्यते॥ काकुश्शब्दधर्मः॥ तस्य लक्षणं पूर्वमेवोक्तम्॥ अनेन निर्घृणेति पूर्वं शकुन्तलोक्तस्य उत्तरमुक्तमित्यवगन्तव्यम्॥ मदनः रूपलावण्यादिसाम्येन मम शत्रुरिति यावत्॥ त्वां तपति॥ मत्सम्बन्धरूपतया विशेषरूपरन्ध्रे सति सार्वकालिकचिन्तितविविधमनोरथविषयनायकालिङ्गनचुम्बनाद्यसम्भवात्सर्वावयवानां कोकिलालापचन्द्रातपमलयमारुतादिश्रवणस्पर्शाद्वेदनां करोति॥ तपतीत्यनेन मदनस्य तादृशः कोपावेशस्त्वयि नास्ति॥ मत्सम्बन्धमात्र हेतुनाऽन्तस्तापं जनयन् तवाकृतिं न नाशयति॥ किन्तु तापमात्रकर इति भावः॥ मां पुनः मां प्रत्यन्यथा॥ दहति केवलतापकरणे पुनर्जीविष्यतीति भस्मसात्करोति॥ मरणसध्रीचीनदारुणदुःखानुभवादिति भावः॥ जीविते नैराश्यं जनयन्नाकारसद्भावे संदिग्धं मां करोतीति यावत्॥ अनेन स्वस्यापि शरीरकार्श्यवैवर्ण्यादिप्रदर्शनं कृतम्॥ अनिशमित्यनेन स्वस्य स्रक्चन्दनादिविषयवैमुख्यं सूच्यते ॥ तेन च सार्वकालिकत्वदेकतानचित्तत्वेन चन्द्रातपमलयमारुतकोकिलालापादीनामसह्यव्यथाकारित्वान्निद्राहाराद्यभाव उक्तः ॥ एवकारेण स्वप्रयोजनार्थं न तु मिथ्याभाषणम्॥ किन्तु स्वशरीरकार्श्यवैवर्ण्यादिकमेव प्रमाणमिति ज्ञाप्यते॥ मामित्यनेन लोकोत्तरबहुस्त्रीरत्नवंतं सार्वभौमं मामिति व्यज्यते॥

---

रात्रिमपीत्यर्थः। 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया। 'णिक्वि' इत्यनेन वज्राङ्गमुपक्षिप्तम्—'विरूक्षवचनं यत्तु वज्रमित्यभिधीयते' इति भरतोक्तेः। लेखनामकं सन्ध्यङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'विवक्षितार्थकलिता पत्रिका लेख उच्यते' इति॥

**तपतीति ॥** तनूनि कृशानि गात्राणि यस्यास्तस्याः सम्बोधनम् । मदनस्त्वां तपति तत्रार्थे हेतुः सम्बोधनपदार्थः। कृशगात्रत्वं स्त्रीत्वं चेति काव्यलिङ्गम्। तनुगात्रीति पुनरुक्तवदाभासश्च । मां पुनः पुरुषं कठिनशरीरमनिशं सर्वदा, अथ च निशाव्यतिरिक्तसमयेऽपि दहत्येव। किमपि नावशेष्यार्थः क्रमेण हेतुत्वेन योज्यः। दृष्टान्तोऽनुप्रासश्च। मदयतीति मदनो हर्षदः स कथं तपति दहतीति विरोधाभासश्च।

उभे—(विलोक्य सहर्षं) [1]साअदं अविलम्बिणो मणोरहस्स ?

शकुन्तला—(अभ्युत्थातुमिच्छति)

दुष्यन्तः—अलमलमायासेन ॥

संदष्टकुसुमशयनान्याशु क्लान्तबिसभङ्गसुरभीणि ।
गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति ॥ १५

1 स्वागतमविलम्बिनो मनोरथस्य ?

तेन स्वान्तःपुरस्त्रीभ्यश्शकुन्तलाया रूपलावण्याद्यतिशयवत्तया तासु वैमुख्यं सूच्यते ॥ तेन च स्वशरीरकार्श्यादीनामन्तःपुरस्त्रीविरहो निमित्तं न भवति ॥ किन्तु त्वद्विरह एव निमित्त-मिति ज्ञाप्यते ॥ ग्लपयतीत्यादि दृष्टान्तः ॥ दिवसः सर्वपदार्थप्रकाशकः दिवा ॥ शशाङ्कं स्वमिव तमोनिरोधकं चन्द्रम् ॥ यथा येन प्रकारेण ॥ ग्लपयति म्लापयति ॥ विच्छायं कृत्वा स्वरूपदर्शने सदसद्बुद्धिं करोति ॥ तथा तदुदयास्तमयाभ्यां विकाससङ्कोचवतीं कुमुद्वतीं न ग्लपयति ॥ किन्तु सङ्कोचमात्रं जनयतीति यावत् ॥

साअदमित्यादि ॥ अत्र मनोरथशब्देन तद्विषयो राजा कथ्यते ॥

१५ सन्दष्टेति ॥ सन्दष्टकुसुमशयनानि सन्दष्टानि संसक्तानि कुसुमशय-नानि पुष्पास्तरणानि यैस्तानि तथोक्तानि ॥ अनेन श्लोकेन संभोगं प्रतिविलम्बं कर्तुं न शक्यम् ॥ किमर्थं न प्रत्युत्थानं क्रियत इति भावः ॥

स्वागतमविलम्बिनो मनोरथस्येति नृपत्वलक्षणविषयनिगरणादतिशयोक्तिः । अलमलमिति द्विरुक्तिरादरातिशयं ध्वनयति ॥

सन्दष्टेति ॥ यतो गुरुर्महान्परितः सर्वतस्तापः सन्तापो येषु तानि । अतो विशेषणद्वयविशिष्टानि ते तव गात्राण्यवयवा उपचारं तत्तद्योग्यव्यवहारकरणं नार्हन्ति । 'गात्रमङ्गे कलेबरे' इति विश्वः । दष्टं लग्नम् । केवलं लग्नं न, अपि तु सम्यग्दष्टम् । केवलं कुसुमं न, अपि तु कुसुमशयनीयं येषु तानि । गात्राणामुत्थाने कर्तव्ये कुसुम-शय्याप्यङ्गलग्नोत्तिष्ठतीति भावः । आशु शीघ्रं क्लान्तो बिसभङ्गस्तद्वत्तेन वा सुरभीणि चारूणि । शीघ्रत्वं च भङ्गापेक्षया । तेन तात्कालिकक्लान्तत्वमुक्तम् । काव्यलिङ्गपरिकरानु-प्रासाः । पक्ष उपमा च । भङ्गः क्रिया तस्याः कथं क्लान्तत्वमिति नाशङ्कनीयम् । क्रियया तद्वान्पदार्थो लक्ष्यते । शैत्ये श्वैत्याधिक्यप्रयोजनमुन्नेयम् ।

**अनसूया**—[1]इदो सिळातळेक्कदेसं (अलङ्करेदु) अणुगेण्हादु पिअवअस्सो ॥

**दुष्यन्तः**—(उपविष्टः)

**शकुन्तला**—(सलज्जं तिष्ठति)

**प्रियंवदा**—[2]वअस्स । दुव्वेणं वो अण्णोण्णाणुराओ पच्चक्खो ॥ त ह वि सहीसिणेहो मं पुणरुत्तवादिणिं करेदि ॥

**दुष्यन्तः**—भद्रे! नैतत्परिहार्यं विवक्षितं ह्यनुक्तमनुतापं जनयति ॥

**प्रियंवदा**—[3]आवण्णस्स विषअवासिणो जणस्स आत्तिहरेण रण्णा होदव्वं ति णं एस वो धम्मो ?

**दुष्यन्तः**—नास्मात्परम् ॥

---

1 इतश्शिलातलैकदेशमनुगृह्णातु प्रियवयस्यः ॥
2 वयस्य द्वयोर्वामन्योन्यानुरागः प्रत्यक्षः । तथापि सखीस्नेहो मां पुनरुक्तवादिनीं करोति ।
3 आपन्नस्य विषयवासिनो जनस्यार्तिहरेण राज्ञा भवितव्यमिति नन्वेष वो धर्मः ?

---

**इदो इत्यादि** ॥ इतः शिलातलैकदेशमुपविश्यानुगृह्णात्वार्यः ॥ उपविश्यानुगृह्णात्वित्यनेन मदनकातरतादिकं त्वया किमपि हठान्न कर्तव्यं । किंतु वक्तव्यांशोऽस्तीति भावः ॥ अन्योन्यानुरागः कालाक्षमलक्षणोऽभिलाषविशेषः ॥ प्रत्यक्षः शरीरकार्श्यवैवर्ण्यादिभिस्साक्षाद्दृष्टः ॥ तथापि सखीस्नेहः शकुन्तलाविषयकाहेतुपक्षपातः पुनरुक्तवादिनीं करोति ॥ अनेन तव शरीरकार्श्यादीन् प्रति निमित्तान्तरमप्यस्तीति भावः ॥

तदेवाह—**आपन्नस्येत्यादिना** ॥ आर्तिहरेण भवितव्यमित्यनेन राज्ञो बहुवल्लभत्वस्य युक्तत्वाद्या या राजानं कामयते सा सा राज्ञा परिगृह्यत इत्यर्थः ॥ वः युष्माकं तस्यैकस्यैव न भवतीति यावत् ॥ एषः बहुवल्लभत्वं धर्मः कुलाचारः ॥ त्वच्छरीरकार्श्यादीनामन्तःपुरस्त्रीविरहनिमित्तकल्पनापि सम्भाव्यत इति भावः ॥

---

इतः शिलातलैकदेशमलङ्करोतु वयस्यः । द्वयोर्नतु युवयोरन्योन्यानुरागः प्रत्यक्षः । सखीस्नेहो मां पुनरुक्तवादिनीं करोति । आपन्नस्यापत्प्राप्तस्य विषयनिवासिनो देशनिवासिनो जनस्यार्तिहरेण पीडाहरेण राज्ञा भवितव्यमित्येष युष्माकं धर्मः । 'आपन्न आपत्प्राप्तः स्यात्' । 'देशविषयौ तूपवर्तनम्' । 'आर्तिः पीडाधनुःकोट्योः' इति चामरः ।

**प्रियंवदा**—[1]तेण हि इअं णो पिअसही तुमं एव्व उद्दिसिअ एदं अवत्थन्तरं भअवदा मम्महेण आरोविदा ता अरुहसि अब्भुववत्तीए जीविदं से अवळंबिदुम् ॥

**दुष्यन्तः**—भद्रे, साधारणोऽयं प्रणयः ॥ सर्वथानुगृहीतोऽस्मि ॥

**शकुन्तला**—(प्रियंवदामवलोक्य) [2]हळा अळं (किं) अंतेउरविरहपय्युस्सुअस्स राएसिणो उवरोहेण ॥

1 तेन हीयं प्रियसखी त्वामेवोद्दिश्येदमवस्थान्तरं भगवता मन्मथेनारोपिता। तस्मादर्हस्यभ्युपपत्त्या जीवितमस्या अवलम्बितुम्।

2 सखि! अलं किमन्तःपुरविरहपर्युत्सुकस्य राजर्षेरुपरोधेन।

त्वामेवोद्दिश्य मदनेनारोपितेत्यनेन शकुन्तलाशरीरसन्तापादेस्त्वमेव निमित्तं न तु पुरुषविशेषनिमित्तांतरकल्पनावकाश इति भावः ॥ अभ्युपपत्त्या अनुग्रहेण ॥ जीवितमवलम्बिन्तुमर्हसीत्यनेन रूपलावण्याभिजात्यगुणादिमत्तया शकुन्तला त्वया परिग्राह्येति वक्तुं न शक्यते ॥ किं तु निर्हेतुकशोच्यजनप्रार्थनया परिगृहीतुं योग्येति भावः ॥

**भद्रइत्यादि** ॥ प्रणयः प्रार्थना ॥ साधारणं ममापि जीवितं भवत्सख्यावलम्बनीयमित्यर्थः ॥ सर्वथा सर्वप्रकारेण अनुगृहीतोऽस्मि ॥ अभ्युपपत्तिरनुग्रहः ॥ अनेन पुष्पं नाम प्रतिमुखसन्ध्यङ्गमुक्तम् ॥ तदुक्तं—"प्रत्यक्षेणानुरागस्य पुष्पं प्रकटनं विदुः" इति ॥ अत्र शकुन्तलानुरागस्सखीमुखादुक्तः ॥ राज्ञोऽनुरागस्तु स्ववचनेन साधारणोऽयं प्रणय इत्यादिना प्रकाशितः ॥ हळेत्यादि ॥ अत्रान्तः पुरविरहपर्युत्सुकस्येत्यनेन दुष्यन्तशरीरकार्श्यादीनामन्यनायिकानिमित्तत्वकथनेन स्वस्यां तस्यानुरागाभावस्सूच्यते ॥ अन्यथा यद्यनुरागस्स्यादेतादृशावस्थापन्नां मां कथमसावुपेक्षत इत्यभिप्रायः ॥ तेन नायकविषय स्वापराद्धत्वं प्रकाश्यते ॥ अतस्तदेवाह ॥

तेन हि इयं नोऽस्माकं प्रियसखी त्वामुद्दिश्येदमवस्थान्तरं भगवता मदनेनारोपिता। तदर्हस्यभ्युपपत्त्यानुग्रहेण जीवितं तस्या अवलम्बितुम्। 'अथाभ्युपपत्तिरनुग्रहः' इति शाश्वतः। साधारण आवयोः समानः प्रणयो याच्ञा। यथा भवतीभिरेतदर्थमहमभ्यर्थ्यत एवं मयाप्येतदनुग्रहार्थं भवत्यौ प्रार्थनीये इत्यर्थः। 'प्रणयः प्रेम्णि विस्रम्भे याच्ञाप्रत्यययोरपि' इति विश्वः। अन्तःपुरविरहपर्युत्सुकस्य राजर्षेरुपरोधेन किम्। अनेनात्मनोऽतिशयितं सौभाग्यं ध्वनितम् ॥

दुष्यन्तः—

इदमनन्यपरायणमन्यथा
हृदयसन्निहिते ! हृदयं मम ।
यदि समर्थयसे मदिरेक्षणे !
मदनबाणहतोऽपि हतः पुनः ॥ १६

१६ इदमित्यादि ॥ हृदयसन्निहिते हृदये सम्यङ्निहिते ॥ अनेन गाढानुरागविषयतोक्ता ॥ अत एवानन्यपरायणं अनन्याधीनं त्वदेकनियतमित्यर्थः ॥ एवंविधं हृदयं यद्यन्यथा समर्थयसे, अन्यकान्तारागेण दूयमानं सम्भावयसि । त्वं हृदयसन्निहितापि तस्य हृदयस्य त्वदेकतानतां यदि न जानासि । मदिरेक्षणे मदिरावदीक्षणं विलोकनं यस्यास्सा तथोक्ता ॥ मदिरा यथा मोहजननी तथा त्वदपाङ्गावलोकनमपि मोहजनकमिति यावत् ॥ मदनबाणेत्यादि ॥ त्वय्यनुरागबद्धे सति त्वदप्राप्त्या मन्मथबाणैः प्रथमं बाध्यमानोऽपि सङ्गमाशया जीवितमवलम्ब्य तिष्ठामि ॥ इदानीं त्वद्दर्शने जातेऽपि यदि त्वमन्यथा सम्भाव्योपेक्षसे । तर्हि साप्याशा कुतः ? जीवितुमेव न शक्नोमीति भावः ॥ अनेन पर्युपासनं नाम प्रतिमुखसन्ध्यङ्गमुक्तमित्यवगन्तव्यम् ॥ उक्तं च—"अनुनयः पर्युपासन" मिति ॥ अत्र दुष्यन्तेन स्वानुरागप्रकटनपूर्वकदैन्योक्त्या नायिकानुनयः कृतः ॥

इदमिति ॥ इदं जन्मप्रभृति येन सह स्थितं तमपि परित्यज्य दर्शनात्प्रभृति त्वय्यनुरक्तमनन्यनिष्ठम् । केवलं त्वन्निष्ठमित्यर्थः । अत्र त्वन्निष्ठमिति वक्तव्ये यन्निषेधमुखेनोक्तिः सान्यत्र निषेधं बोधयन्ती शब्दशक्त्याल व्यञ्जनया विधित्वेन पर्यवस्यति । तेन मामपि परित्यज्य त्वयि स्थितमिति ध्वन्यते । मम त्वद्ध्यानैकचित्तस्य हृदयं हे हृदयसन्निहिते मया सर्वदा ध्याते, इति साभिप्रायम् । यो यत्सन्निहितः स तस्य तत्त्वं जानाति, त्वं च तस्य सन्निहिता, सा चेत्त्वमन्यथान्यनिष्ठं यदि समर्थयसे कल्पयसि तदा मदिरादृष्टिस्तस्या ईक्षणमिवेक्षणमवलोकनं यस्यास्तत्सम्बुद्धिः । 'सप्तम्युपमानपूर्वोत्तरपदस्य' इति समासः । मदिरादृष्टिलक्षणमादिभरते—'आघूर्णमानमध्याया क्षामा चाञ्चिततारका । दृष्टिर्विकसितापाङ्गा मदिरा तरुणे मदे ॥' इति । मदनस्य कामस्य बाणैर्हतो विद्धोऽपि पुनरत्यन्तं हतोऽस्मि । विरुद्धमनःप्रवृत्तिर्जातोऽस्मीत्यर्थः । मन्मानसं त्वन्निष्ठं तदपि चेत्त्वमन्यथा शङ्कसे तर्हि तस्य विषयान्तराभावात्प्रवृत्तिनिरोधो जात एवेति भावः । 'मनोहतः प्रतिहतः प्रतिबद्धो हतश्च सः' इत्यमरः । उपमा । हृदय हृदयेति हतो हत इति लाटानुप्रासः । द्रुतविलम्बितं वृत्तम् । अनेन सामेति सन्ध्यन्तराङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'तत्र साम प्रियं वाक्यं सानुवृत्ति प्रकाशकम्' इति ।

**अनसूया**—[1]वअस्स ! बहुवल्लहा राआणो सुणीयन्ति ॥ जहणोपि-असहीबन्धुजणसोअणीया ण होदि, तहणिव्व(त्ते)हेहि ॥

**दुष्यन्तः**—भद्रे ! किं बहुना—

**परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे ।**
**समुद्ररशना चोर्वी सखी च युवयोरियम् ॥** १७

1 वयस्य ! बहुवल्लभा राजानः श्रूयन्ते । यथा नौ प्रियसखी बन्धुजनशोचनीया न भवति तथा निर्व(र्तय)हस्व ॥

**वअस्सेत्यादि ॥** बहुवल्लभा राजानइत्यनेन स्वप्रयोजनार्थमिदानीमनुरागं प्रकाशयसि ॥ स्वप्रयोजने निर्वृत्ते सति नगरगमनानन्तरमन्तः पुरयुवतिषु बद्धचित्तस्सन् शकुन्तलां विस्मरिष्यसीत्यर्थः । बन्धुजनशोचनीया न भवतीत्यनेन स्वनगरगमनानन्तरमयं वृत्तान्तस्त्वया विस्मृतश्चेत्सखीभ्यामहं वंचितेति शकुन्तला उत्तरकाले यथा दुःखिता न भवति तथा कर्तव्यम् ॥ शपथपुरस्सरं वक्तव्यमिति भावः ॥ भद्रे किमित्यादि ॥ बहुनोक्तेनेति शेषः ॥

१७ **परिग्रहेत्यादि ॥** परिगृह्यन्त इति परिग्रहाः कळत्राणि ॥ तेषां बहुभावे सत्यपि ॥ बहुवल्लभत्वेऽपीति यावत् ॥ कुलस्य वंशस्य प्रतिष्ठे प्रतिष्ठाकारणे ॥ "आयुर्घृत" मित्यादिवदौपचारिकोऽयं प्रयोगः ॥ मे ममेत्यनेन स्वव्यतिरिक्ता अन्ये राजानस्स्वप्रयोजनार्थं यत्किंचित्कृत्वा पश्चादन्यथा आचरन्ति चेत्स्वयं न तथेति भावः ॥ कुलस्येत्यनेन भोगार्थमेषा न परिगृह्यते; किन्तु शकुन्तलामेव पट्टमहिषीं कृत्वा तज्जनितपुत्रस्यैव साम्राज्यमपीति भावः ॥ समुद्ररशनाचोर्वीत्यनेन स्वस्य निष्कण्टकं साम्राज्यं सूच्यते ॥ तेन राज्यविषये कृतकृत्यता सूच्यते ॥ इतः परं शकुन्तलया सह स्वस्य भोगसमय इति भावः ॥ युवयोस्सखी चेत्यनेन धर्मप्रजार्थमेव परिणीयत इत्यर्थः ॥

वयस्य, बहुवल्लभा राजानः श्रूयन्ते । यथा नोऽस्माकं प्रियसखी बन्धुजनशोचनीया न भवति तथा निर्वर्तय । किं बहुना । उक्तेनेति शेषः ॥

**परीति ॥** परिग्रहबहुत्वे स्त्रीबहुत्वेऽपि । 'परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः' इति विश्वः । मे मम कुलस्य प्रतिष्ठे प्रतिष्ठाहेतू । द्वे इति सारोपालक्षणा शुद्धा । कार्यकारणभावसम्बन्धात् । उक्तं च—'सारोपान्या तु यत्रोक्तौ विषयी विषयस्तथा' इति । अन्यवैलक्षण्येन प्रतिष्ठाकारित्वं व्यङ्ग्यम् । परिग्रहबहुत्वेऽपीति व्यङ्ग्यं चकारादानीय तत्रोर्वीप्रतिष्ठाहेतुर्गौरवहेतुश्चतुरुदधिमेखलायास्तस्या आचन्द्रार्कं तद्वंशेन पालनीयत्वात् । सखी प्रतिष्ठाहेतुः स्थितिहेतुरस्यां महाचक्रवर्तिवंशोत्पादकपुत्रोत्पादादिति द्वे अपि प्रतिष्ठे अतिशयोक्त्यैकत्वेनाध्यवसिते इत्यवधेयम् । 'प्रतिष्ठा गौरवे स्थितौ' इति हैमः । के द्वे इत्यत आह—समुद्र एव वसनमाच्छादनमवधित्वेन यस्याः सोर्वी मही । मुदं प्रीतिं राति ददातीति मुद्रम् । मुद्रं च तद्वसनं च मुद्रवसनम् । तेन सह वर्त-

**उभे सख्यौ—**[1]णिव्वुदम्ह ॥

**प्रियंवदा—**(सदृष्टिक्षेपं) [2]अणसूए एसो इदो तदो दिण्णदिट्ठी पय्युस्सुओ मिअपोदओ मादरं अण्णेसदि ॥ एहि (संजोएम) संओजे म णम् ॥

(इति प्रस्थिते)

**शकुन्तला—**[3]हळा असरणम्हि ॥ अण्णदरा वो आअच्छदु ॥

**उभे सख्यौ—**[4]जो पुहवीए सरणं सो तुह समीवे वट्टइ ॥

(इति निष्क्रान्ते)

**शकुन्तला—**[5]कहं ! गदा एव्व ॥

**दुष्यन्तः—**अलमलमावेगेन ॥ नन्वाराधयिता जनस्तव समीपे वर्तते ?

1 निर्वृते स्वः ।

2 अनसूये, एष इतस्ततो दत्तदृष्टिः पर्युत्सुको मृगपोतको मातरमन्वेषते । एहि संयोजयाव एनम् ।

3 सख्यौ, अशरणास्मि । अन्यतरा वामागच्छतु ।

4 यः पृथिव्याश्शरणं, स तव समीपे वर्तते ।

5 कथं ! गते एव ।

**अलमित्यादि ॥** आवेगेन कातर्येण ॥ सम्भ्रमो मास्त्वित्यर्थः । तयोर्गमनं सम्भोगरूपकार्यं प्रत्यनुकूलमिति भावः ॥ ताभ्यां कर्तव्यमेवमेव करोमीति यावत् ॥ तदेवाह-नन्विति सम्बोधने ॥ आराधयिता उपचारकर्ता अनेन स्वस्य कामसूत्रज्ञत्वं प्रकटितम् ॥ तदुक्तं कामसूत्रकारैः—"सहसा वाप्युपक्रान्ता कन्याभावमविन्दता । भयं चिन्तां समुद्वेगं सद्यो द्वेषं च गच्छति "इति ॥ आराधयिता तव समीपे वर्तइत्यनेनाहं त्वमपि द्वावेवात्र ॥ कोऽप्यन्यो नास्तीति विविक्तप्रदेशता सूच्यते ॥ तेन च विवधक्रीडाया निश्शङ्कनिरर्गळ-प्रवृत्तिः कर्तुं योग्येति सूच्यते ॥

मानेति सखीविशेषणम् । 'वसनं छादनेंऽशुके' इति विश्वः । इयं लोकातिक्रान्तसौन्दर्या गणितगुणगणाभिरामा त्रिजगल्ललामभूता तुल्ययोगितोभयोः प्रकृतत्वात् । अनया च पृथिव्या अनयाद्युत्सारणेन स्वास्थ्यमिवास्य बन्धुवियोगदुःखापाकरणेनानन्दयुक्ततया सौभाग्यातिशयो व्यज्यते । अथ च पृथिव्यास्ताद्रूप्येण सापत्न्याभावादस्या अपि तदभावः । सति सापत्न्ये पृथिवीभवत्सख्योरेव परस्परं तदिति च व्यज्यते । रूपकानुप्रासौ । निर्वृते सुखिते स्वः । 'सख्यौ—सहर्षं स्वागतम्' इत्यादिनैतदन्तेन प्रगयणं नामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'उत्तरोत्तरवाक्यं तु भवेत्प्रगयणं पुनः' इति । यथैष इतो दत्तदृष्टिरुत्सुको मृगपोतको मातरमन्विष्यति मार्गयते । एहि । संयोजयाव एनम् । निर्गमनव्याजवचनमिदम् । अशरणास्मि । एकाकिन्यस्मीत्यर्थः । अन्यतरा वां युवयोरागच्छतु । पृथिव्या यः शरणं रक्षकः स तव समीपे वर्तते । कथं गते एव । आवेगेन सम्भ्रमेण । आकुलत्वेनेत्यर्थः ॥

किं शीतलैः क्लमविनोदिभिरार्द्रवातां-
स्तसञ्चारयामि नळिनीदळताळवृन्तैः ।
अङ्के निधाय करभोरु यथासुखं ते
संवाहयामि चरणावुत पद्मताम्रौ ॥ १८

१८ आराधनप्रकारमाह—किं शीतलैरित्यादि ॥ शीतलैः जलसम्पर्काच्छैत्यजनकैः ॥ अनेन निकट एव वापी विद्यते ॥ तत्र गत्वा नूतननळिनीपत्राण्यानीयोपचारं करिष्यामीति द्योत्यते ॥ अतएवोक्तं शीतळैरिति ॥ जलसान्निध्यमपि सम्भोगान्ते गण्डूषादिप्रक्षाळनकर्मण्यनुकूलमिति भावः ॥ क्लमविनोदिभिः परिश्रमविनोदिभिः ॥ अनेन पूर्वं तापशमनार्थं सखीभ्यां स्तनादौ यन्मृणाळोशीरादिकं समर्पितं तत्सर्वं शुष्कं जातमिदानीं तत्परित्याज्यमिति द्योत्यते ॥ अतउक्तं क्लमविनोदिभिरिति । नळिनीदळताळवृन्तैः आर्द्रवातान् जलसम्पर्कात्सशीकरानित्यर्थः ॥ सञ्चारयामि यथासुखं सर्वावयवेषु सम्यक्चालयामि? किमिति प्रश्ने ॥ वर्तमानव्यपदेशेन तत्तत्कर्मकरणप्रवृत्तिस्सूच्यते ॥ न तु वाङ्मात्रव्यवहार इति भावः ॥ उत पक्षान्तरे ॥ करभोर्विति सम्बोधने ॥ करभाविव करबहिर्भागाविव ऊरू यस्यास्सा तथोक्ता ॥ तदुक्तम्—"मणिबन्धादाकनिष्ठं करस्य करभो बहि"रिति ॥ करभोर्वित्यनेन पादसंवाहने ऊरुयुगळस्यात्यन्तमानुकूल्यं प्रदर्श्य तेन च स्वहस्तसद्भावस्य त्वदूरुयुगळस्पर्शेन साफल्यमिति भावः ॥ अङ्के निधायेत्यनेन नीवीबन्धमोचनेच्छा सूच्यते ॥ यथासुखं सुखमनतिक्रम्य ॥ अनेन मयैव बलात्सम्भोगादौ प्रवृत्तिर्न क्रियते । किन्तु यावता कालेन सुरतप्रस्तावाङ्गीकारः क्रियते । तावत्संवाहयामीति द्योत्यते ॥ अत उक्तं यथा सुखमिति ॥ तेन च स्वस्य कामशास्त्रवैदुष्यप्रकटनेन कन्याविस्रम्भणोपायः प्रदर्शितः ॥ तदुक्तं द्वितीयाध्याये ॥ तद्यथा—"सङ्गतयोस्त्रिरात्रमधश्शय्या ब्रह्मचर्यमक्षारलवणाहारस्तथा सप्ताहं सतूर्यमङ्गळं स्नानं प्रसाधनं सह भोजनं च तथा प्रेक्षासम्बन्धिनां पूजनं च तस्मिन्नेव चाहनि मृदुभिरुपायैर्नायकस्तामुपक्रमे"दिति ॥ अन्ये वात्स्यायनव्यतिरिक्ता आचार्यास्तु ।

किं शीतलैरिति ॥ नलिनं पद्मं विद्यते तस्याः सा नलिनी तस्या दलानि कमलिनीपलाशानि तान्येव तालवृन्तानि व्यजनानि तैः । नलिनीपदेन सौगन्ध्यं सूचितम् । अतएव न बिसिनीत्यादि । बहुवचनेन प्रतिक्षणं भिन्नस्योपादीयमानतया दत्तविशेषणद्वयेन योग्यता सूचिता । एकस्य बहुकालं स्थितस्य तद्योग्यत्वाभावात् । 'व्यजनं तालवृन्तकम्' इत्यमरः । आर्द्रवाताञ्शीतलतरवातान् । आर्द्रत्वेन शैत्यं लक्ष्यते । तदतिशयः फलम् । सम्यञ्चान्दंमन्दं रचयामि करोमि, न तूच्चैः । किमिति प्रश्ने । कीदृशैः । शीतलैः शीतलस्पर्शैः । यानि स्वयं शीतलानि तज्जन्यो वायुः सुतरां शीतल इत्यार्द्रपदार्थस्य हेतुत्वेन योज्यम् । पुनः कीदृशैः । क्लमं विशेषेण नुदन्ति तैः क्लान्तिहरैः । यानि दृष्टानि स्पृष्टान्याघ्रातानि स्वयं क्लमच्छिन्दि तज्जन्यो वायुः सुतरां क्लमच्छिदिति भावः । उतेति विकल्पे । हे करभोरु, 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः ।' तद्वदूरू यस्यास्तत्सम्बोधनम् । अत्रानुवृत्तत्वकोमलत्वादयः सामान्यधर्माः । ते पद्मताम्रौ कुशेशयलोहितौ । पदि मातीति पद्मम् । तेन सह साम्यं नास्तीति ताम्रत्वमात्रेण साम्यम् ।

शकुन्तला—[1]ण माणणीएसु अत्ताणं अवराहइस्सम् ॥

(इत्युत्थाय प्रस्थिता)

दुष्यन्तः—सुन्दरि ! अपरि(अ)निर्वाणोऽयं दिवसः ॥ इयं च ते समवस्था ॥

---

1 न माननीयेष्वात्मानमपराधयि(ष्ये)ष्यामि ।

---

कन्यया सह त्रिरात्रं वचनमपि न वक्तव्यमिति मन्वते ॥ बाभ्रव्यास्त्वाहुः—'त्रिरात्रमेवावचने हि ॥ स्तम्भमिव नायकं पश्यन्ति कन्या निर्विद्यते परिभवेच्च तृतीयामिव प्रकृति'मिति ॥ वात्स्यायनस्तु 'उपक्रमेत विस्रम्भयेच्च नतु ब्रह्मचर्यमितिवर्त्तत उपक्रममाणश्च न प्रसह्य किञ्चिदाचरे'दित्यादिना प्रबन्धेनोक्तो बोद्धव्यः ॥ चरणावित्यनेन पादसंवाहने शनैर्जघनस्पर्शीकरणेच्छा द्योत्यते ॥ पद्मताम्रावित्यनेन मदनकलाप्रयोगसमये मिथ्याबाह्यकोपाद्यदि चरणाभ्यां प्रहरेत् तदपि स्वस्य सुखकरमिति ज्ञाप्यते ॥ संवाहयामीति वर्तमानव्यपदेशेन पादसंवाहनार्थं तत्प्रतिबन्धकवस्त्रमोक्षणारम्भस्सूच्यते ॥ अनेन श्लोकेन नायिकानुरागार्थं नायकक्रियमाणोपचारस्सूचितः ॥ तदुक्तं भावप्रकाशे—"उपचारो यथा सत्वं स्त्रीणामल्पोऽपि हर्षदः । महानप्यन्यथा युक्तो नैव तुष्टिकरो भवेत् ॥ वासोऽङ्गरागाभरणमाल्यशय्यासनादिषु । यत्र यत्र स्पृहा तद्वद्देशकालानुकूलतः ॥ अत्यादरेण सत्कार उपचार इतीरित" इति ॥

**ण माणणीएस्वित्यादि ॥** माननीयेषु गुरुजनेषु आत्मानं स्वं नापराधयिष्यामीत्यनेन काश्यपासम्मत्या स्वातंत्र्यं न करिष्यामीत्यर्थः ॥ अपरिनिर्वाणः निर्वाणरहितः ॥ अप्रशान्तताप इत्यर्थः ॥ दिवस इत्यनेन विविधक्रीडायाः आसायंकालमवकाशस्सूच्यते ॥ समवस्था ॥ अवस्थायां समवस्थेति प्रयुज्यते ॥

---

अतएव नारविन्दादिपदोपादानम् । करभोरुपद्मताम्राविति पदाभ्यां चरणयोः संवाहनयोग्यत्वं ध्वनितम् । चरणावङ्के निधायेत्यनेन तस्याः सौभाग्यसर्वङ्कषत्वं स्वस्य धन्यतरत्वं च सूचितम् । यथासुखमित्यनेन च स्वस्य संवाहनकलाकौशलं ध्वनितम् । संवाहयामि संवाहनेन खेदमपनयामीत्यर्थः । नलिनीदलस्य तालवृन्तत्वारोप आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम इति परिणामालङ्कारः । पूर्वोत्तरार्धयोर्विकल्पालङ्कारः । 'तुल्यबलविरोधे विकल्पः' इति तल्लक्षणात् । काव्यलिङ्गपरिकरोपमावृत्त्यनुप्रासाश्च । वसन्ततिलकावृत्तम् । अनेनोपन्यासो नामाङ्गमुपक्षिप्तम् । तल्लक्षणं दशरूपके—'प्रसादनमुपन्यासः' इति । अनेन माला नाम भूषणमप्युपक्षिप्तम् । तल्लक्षणं तु—'माला स्याद्यदभीष्टार्थप्रकाशनम्' इति । न माननीयेष्वात्मानमपराधयिष्ये । सुन्दरीति । एतादृगवस्थायामपि सौन्दर्यस्य परित्यागो नास्तीति भावः । अनिर्वाणोऽपरिणतः ॥

उत्सृज्य कुसुमशयनं नळिनीदळकल्पितं स्तनावरणम् ।
कथमातपे गमिष्यसि परिबाधापे(लवै)शलैरङ्गैः ? ॥ १९

(इति बलादेनां निवर्तयति)

शकुन्तला—[1]पोरव ! रक्ख (अ) विणअं ॥ मअण (सन्तत्ता)हत्थ-गदा वि अत्तणो ण प्पहवामि ॥

1 पौरव ! रक्ष(अ)विनयं । मदन(सन्तप्ता)हस्तगताप्यात्मनो न प्रभवामि ।

१९ उत्सृज्येति ॥ अङ्गैरित्युपलक्षणे तृतीया ॥ कथं गमिष्यसीत्याक्षेपे ॥ कुसुमशयनमुत्सृज्येत्यनेन मद्विप्रलम्भजनितज्वरोपशमनार्थं कुसुमशयनादिकं कल्पितम् ॥ मय्यागतेऽपि कथं मामुपेक्षस इत्यर्थः ॥ गमिष्यसीत्येकवचनेन यदि त्वं मामुपेक्ष्य गमिष्यसि । तर्हि तदा बलाद्गृहीत्वापि प्रकृतकार्यं करिष्यामीति द्योत्यते । निवारकेतर-जनसन्निधानाभावादिति भावः ॥

पोरवेत्यादि ॥ विनयं सौशील्यादिगुणं रक्षेत्यनेन परकन्याबलाद्ग्रहणेन सर्वं गमिष्यतीत्यर्थः ॥ तर्हि एतावन्तमनेहसं मदनज्वरजनितकार्श्यवैवर्ण्यादिकं मिथ्या किमित्याशङ्क्याह—मदनहस्तगतापीत्यादिना ॥ आत्मनः न प्रभवामीत्यनेन स्वतन्त्रा न भवामि ॥ किन्तु काश्यपाधीनेत्यर्थः ॥

उत्सृज्येति ॥ परितो बाधा पीडा यस्याः सा । 'पीडा बाधा व्यथा' इत्यमरः । पेलवैः कोमलैरङ्गैरुपलक्षिता । इदं परिबाधेत्यलार्थहेतुत्वेन योज्यम् । अथवा शब्दहेतुत्वेनैव योज्यम् । पेलवैरङ्गैर्हेतुभिरिति । कुसुमशयनमुत्सृज्य नलिनीदलकल्पितं स्तनावरणमुत्सृज्येत्यनेन तापातिशयो द्योत्यते । अत आतपे घर्मे कथं गमिष्यसि । स्वस्थोऽपि वस्त्रावरणादि हित्वाऽतपे गन्तुमसमर्थः, त्वं तु स्वभावतः सुकुमाराङ्गी तत्रापि पीडायुक्ता तत्रापीदृगवस्था तत्रापि कुसुमशयननलिनीदलादि हित्वा सुतरां गन्तुमशक्तेति कथंशब्दार्थः । काव्यलिङ्गं हेतुर्वा । श्रुत्यनुप्रासवृत्त्यनुप्रासयोः पूर्वार्धः एक-वाचकानुप्रवेशलक्षणः सङ्करः । उत्तरार्धे तु श्रुत्यनुप्रासवृत्त्यनुप्रासयोरेव संसृष्टिः । दन्त्या-नामोष्ठ्यानां च बहूनां सद्भावात् । अत्र पेलवैरित्यत्र पर्यायं पठित्वा व्रीडाश्लीलदोषः परिहर्तव्यः । अनेन चोपन्यासो नामाङ्गमुपक्षिप्तम् । तल्लक्षणमादिभरते—'उपपत्तिकृतो योऽर्थ उपन्यासस्तु स स्मृतः' इति । पौरव, रक्षाविनयम् । रतेरनिर्वाहात्पौरवेति संबुद्धिः । मदनसन्तप्तापि न खल्वात्मनः प्रभवामि । स्वेच्छायां सत्यामपि गुरुजनपरा-धीनत्वादसामर्थ्यम् । स्वेच्छा तु मदनसन्तप्तेत्यनेनोक्ता । क्वचित्पुस्तके 'मअणवाहिआओ वि कण्णआओ अत्तणो ण प्पवहन्ति' इति पाठः ॥ मदनबाधिता अपि कन्यका इत्य-

**दुष्यन्तः**—अलं भीरु! गुरुजनभयेन ॥ श्रुत्वापि (दृष्ट्वा) ते विदितधर्मा तत्रभवानत्र दोषं न ग्रहीष्यति कुलपतिः ॥

पश्य—

गान्धर्वेण विवाहेन बह्व्यो राजर्षिकन्यकाः ।
श्रूयन्ते परिणीतास्ताः पितृभिश्चाभिनन्दिताः ॥ २०

---

**अलमित्यादि** ॥ गुरुजनभयेन "ताते जीवे देशिके च श्लाघ्या लघ्वोर्गुरुष्विष्वि"ति नानार्थरत्नमाला ॥ अलमिति प्रतिषेधे ॥ कन्यासम्प्रदानाधिकारिणो गुरवः किमपि चिन्तयिष्यंतीति चिन्ताजनितं कार्यप्रत्यूहनिमित्तं भीरुत्वं मुंचेति भावः ॥ विदितधर्मा विदितः ज्ञातः धर्मो येन स तथोक्तः ॥ 'धर्मादनिच् केवला'दिति समासान्तः ॥ अत्र अस्मिन् सङ्गमविषये दोषं व्यभिचारित्वदोषम् ॥

२० अथ कामसूत्रविद्दुष्यन्तः गुरुजनभीत्याभिसरणभीरुकां शकुन्तलां कामसूत्रोक्तकन्याविस्रम्भणोपायं मनसि निधाय दृष्टान्तेन समाधत्ते—**गान्धर्वेणेत्यादिना** ॥ यदाह वात्स्यायनः—"एवं चित्तानुगां बालामुपायेन प्रसाधयेत् । तथा चेत्सानुरागा च विस्रब्धा चापि जायते ॥ नात्यन्तमानुलोम्येन न चातिप्रातिकूल्यतः । सिद्धिं गच्छति कन्यासु तस्मान्मध्येन साधयेत् । आत्मनः प्रीतिजननं योषितां मानवर्धनं । कन्याविस्रम्भणं वेत्ति यस्स तासां प्रियो भवेत् । अतिलज्जान्वितेत्येवं यस्तु कन्यामुपेक्षते । सोऽनभिप्रायवेदीति पशुवत्परिभूयत" इति ॥ गान्धर्वेणेत्यादि ॥ गान्धर्वेण विवाहेन गान्धर्वनाम्ना विवाहेन ॥ परस्परं स्नेहात्कृतो विवाहो गान्धर्व इत्युच्यते ॥ तदुक्तं याज्ञवल्क्येन—"गान्धर्वस्समयान्मिथ" इति ॥ बह्व्यः ॥ न तु त्वमेकेति यावत् ॥ राजर्षिकन्यका इत्यनेन त्वमपि राजर्षेर्विश्वामित्रस्य दुहिता ॥ तवापि गान्धर्वविवाहस्तु युज्यत इत्यर्थः ॥ गान्धर्वविवाहविषये स्वस्य न विचिकित्सा ॥ किन्तु पितृजनासम्मत्या स्वातन्त्र्ये क्रियमाणे अपराधस्स्यादित्याशङ्कयाह—पितृभिश्चाभिनन्दिताः ॥ गान्धर्वविवाहस्य पितृजनानपेक्षितत्वात् ॥ अनुमोदिताः अनुरूपवरसन्निधानमेव गान्धर्वविवाहस्य हेतुरिति भावः ॥ स्वकुलकलङ्कभूतव्यभिचारित्वदोषसंभावना न कर्तव्येति भावः ॥ अत्र श्लोके उदाहरणं नामालङ्कारः ॥ तदाह—"यत्र त्वल्पार्थउक्तेन वाक्येनाभिप्रदर्शनात् । साध्यन्ते निपुणैरर्थास्तदुदाहरणं स्मृत" मिति ॥ अत्र निपुणेन राज्ञा गूढाभिसरणभीतां शकुन्तलां

---

प्रस्तुतप्रशंसा । दृष्ट्वा । अर्थात्त्वाम् । ते तव तत्र मत्परिग्रहे तत्रभवान्पूज्यः कुलपतिः कण्वो दोषं न ग्रहीष्यति । यतो विदितधर्मा श्रुतिस्मृत्याचारज्ञ इत्यर्थः । 'धर्मादनिच्केवलात' इत्यनिच् ॥

**गान्धर्वेणेति** ॥ 'गान्धर्वः समयान्मिथः' इति स्मरणात् । अयं गान्धर्वो विवाहः । अनेनोपदिष्टं नाम भूषणमुक्तम् । तल्लक्षणं तु—'प्रतिगृह्य तु शास्त्रार्थं यद्वाक्यमभिधीयते । विद्वन्मनोहरं स्वन्तमुपदिष्टं तदुच्यते ॥' इति ।

**शकुन्तला**—[1]अज्ज दाव मुञ्च मम् ॥ भूओ वि सहीजनं अणुमाणयिस्सम् ॥

**दुष्यन्तः**—भवतु मोक्ष्यामि ॥

**शकुन्तला**—[2]कदा ?

**दुष्यन्तः**—

**अपरिक्षतकोमलस्य यावत्**
**कुसुमस्येव नवस्य षट्पदेन ।**

1 आर्य ! तावन्मुञ्च मां । भूयोऽपि सखीजनमनुमानयिष्यामि ।
2 कदा ?

प्रति स्वाभिसरणस्य गान्धर्वविवाहत्वेन प्रदर्शितत्वात् ॥ तेन च काश्यपकोपाभावप्रतिपादनादुदाहरणं भवति ॥

**अज्जेत्यादि ॥** भूयोऽपि सखीजनमित्यनेन प्रथमं सख्यनुरोधेनेदमकृत्यमारब्धम् ॥ नत्वनुरागेणेति आत्मगौरवं व्यज्यते ॥ तेन स्वात्मनि प्रणयाभिमानस्सूच्यते ॥ तेन धृतिः ॥ भवत्वित्यङ्गीकारे ॥ मोक्ष्यामीति भविष्यदर्थेन इदानीं न मुञ्चामि । किन्तु प्रकृतकार्यनिर्वाहानन्तरं मोक्ष्यामीति व्यज्यते ॥

२१ **अपरिक्षतेत्यादि ॥** अपरिक्षतकोमलस्यानुपहतकोमलस्य केनाप्यननुभूतस्येति यावत् ॥ नवस्य नूतनस्य ॥ सद्यो विकसितस्येति यावत् ॥ अनेनाधरपानं प्रत्यादरत्वे हेतुरुक्तः ॥ अधरस्य कुसुमोपमानेनातिमार्दवमुच्यते ॥ राज्ञःषट्पदोपमानेन भ्रमरस्य यथा बहुकुसुमरसास्वादनवैदग्ध्यं तथा स्वस्यापि बहुपद्मिनीजातिस्त्रीसम्भोगचातुरी सूच्यते॥

मुञ्च तावन्माम् । भूयोऽपि सखीजनमनुमानयिष्ये ॥

**अपरिक्षतेति ॥** सुन्दरीति व्याख्यातचरम् । न विद्यते परितः क्षतं यस्य स चासौ कोमलश्च । अथ चापरिक्षतं भ्रमरादिना कोमलं च तस्य नवस्य प्रथमास्वाद्यस्य । अथ च प्रथमविकसितस्य कुसुमस्येव तवास्य सुधासहोदरस्य मत्सुकृतोपचयलभ्यस्याधरस्य पिपासता पातुमिच्छता षट्पदेन भ्रमरेणेव मया सर्वदैतच्चित्तेनाधुना धन्यतरेण सदयं यावद्रसो गृह्यतेऽधरपानं क्रियत इति । यावदित्यवधौ । तदनन्तरं मोक्ष्यामीति भावः । सदयमित्यनेन बालालालनकौशलं ध्वनितम् । श्लेषवाच्योपमा । स्यस्येति सदसुन्देति च्छेकवृत्त्यनुप्रासाः । मालभारिणी वृत्तम् । तल्लक्षणं तु—‘ससजाः प्रथमे पदे गुरू चेत्सभरा येन च मालभारिणीयम्’ इति । समुन्नमयितुमिति त्रिपताकस्योत्तानाभ्यां मध्यमातर्जनीभ्यां चिबुकदेशगताभ्यामिति ज्ञेयम् । नाट्येनेति परावृत्तेन शिरसा विनिगूहितेनाधरेण । तल्लक्षणं तु—‘पराङ्मुखीकृतं शीर्षं परावृत्तमुदीरितम् । तत्कार्यं कोपलज्जादिकृते वक्त्रापसारणे ॥ मुखान्तर्निहितप्राणसाध्येषु विनिगूहितः । रोषेर्ष्ययोश्च नारीणां बलाच्चुम्बति वल्लभे ॥’

अधरस्य पिपासता मया ते
सदयं सुन्दरि ! गृह्यते रसोऽस्य ॥ २१

(इति मुखं तस्याः समुन्नमयितुमिच्छति)

शकुन्तला—(नाट्येन परिहरति)

(नेपथ्ये)

[1]चक्कवाकवहूए ! आमंदेहि सहअरं ॥ उवट्ठिदा रअणी ॥

---

1 चक्रवाकव(धूः)धूके आमन्त्रयस्व सहचरम् उपस्थिता रजनी ।

---

पिपासता पातुमिच्छता मयेत्यनेन ॥ "रत्नहारीतुपार्थिव" इति न्यायेन लोकोत्तरं चिरप्रार्थितमुपनतं वस्तु कथं मया परित्याज्यमिति द्योत्यते ॥ अस्याधरस्येति निर्देशेन तद्ग्रहणे प्रवृत्तिस्सूच्यते ॥ सुन्दरीत्यनेन गाढालिङ्गनाभिलाषस्सूच्यते ॥ देहसद्भावस्य त्वत्प्राप्त्या सफलत्वमिति भावः ॥ अतएव सुन्दरीत्युक्तम् ॥

नाट्येन परिहरतीत्यनेन नाटकस्याभिनेयत्वादभिनयस्य सम्भोगशृङ्गारस्यासभ्यत्वात्तत्र परिहार इत्यवगन्तव्यम् ॥ नाटकस्य सम्भोगवर्णनेन रसभङ्गप्रसङ्गः ॥ तदुक्तं—"संरोधं भोजनं स्नानं सम्भोगं चानुलेपनं । अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत्" इति ॥

**नेपथ्य इत्यादि ॥** इदं सखीवचनम् ॥ गौतम्यागच्छति ; दुष्यन्तं मुञ्चेति समासोक्त्यलङ्कारेण व्यज्यते ॥ चक्रवाकवधूके इत्यनेन प्रच्छन्नकामुकानुरक्तकामिनीसम्बोधनं क्रियते ॥ रजनीशब्देन प्रारब्धकर्मप्रत्यूह उक्तः ॥ अत्र नर्मस्पन्दो नाम कैशिकीवृत्त्यङ्गमुक्तम् ॥ यदाह—"नर्मस्पन्दस्सुखारम्भो भयान्तो नवसङ्गम" इति ॥ अत्र विरहखेदखिन्नायाश्शकुन्तलायाः प्रियसमागमेन सुखारम्भः गौतम्यागमनिमित्तभयेन भयान्त इति नर्मस्पन्दः ॥

---

इति । अनेन मुग्धाव्यवहारोऽप्युक्तः । 'मुग्धा नववयःकामा रतौ वामा' इति । हे चक्रवाकवधूः । आमन्त्रयस्वापृच्छस्व सहचरम् । उपस्थिता रजनी । इयमप्रस्तुतप्रशंसा । तेन शकुन्तले प्रियमापृच्छस्वेति प्रकृतो गम्योऽर्थः । अतएव 'शकुन्तला—ससम्भ्रमम्' इत्यादि । अनेन द्वितीयं पताकास्थानकमुक्तम् । तल्लक्षणं दशरूपके—'प्रस्तुतागन्तुभावस्य वस्तुनोऽन्योक्तिसूचकम् । पताकास्थानवत्तुल्यं संविधानविशेषणम् ॥' इति वृत्तिकारेण व्याख्यातमन्योक्तिसमासोक्तिभेदादिति । तत्रान्योक्त्येदम् । समासोक्त्याग्रिमसन्धौ भविष्यति । अन्योक्तिलक्षणं तूद्भटे—'असमानविशेषणमपि यत्र समाने निवृत्तमुपमेयम् । उक्तेन गम्यते परमुपमानेनेति सान्योक्तिः ॥' इति । एषां स्थानमप्युक्तं मातृगुप्ताचार्यैः—'मुखे प्रतिमुखे गर्भे विमर्शे च चतुर्ष्वपि । भेदाः सन्धिषु कर्तव्याः पताकास्थानकस्य तु ॥' इति ।

**शकुन्तला**—(कर्णं दत्वा) (ससंभ्रमम्) [1]पोरव असंसअं मह शरीरपुत्तंतोवलम्भाअ अज्जा गोदमी इदो एव्व आअच्छइ ॥ (जाव) ता विडवन्दरिदो होहि ॥

**दुष्यन्तः**—(तथात्मानमावृत्य स्थितः)

(ततः प्रविष्टा पात्रहस्ता तापसी सख्यौ च)

**सख्यौ**—[2]इदो इदो ॥ (अज्जा गोदमी)

**गौतमी**—(शकुन्तलामुपेत्य) [3]जादे अवि लहुसन्दावाइ दे अङ्गाइ?

**शकुन्तला**—[4]अत्थि मे विसेसो ॥

**गौतमी**—[5]इमिणा मन्दिददब्भोदएण णिराबाधं एव्व दे सरीरं भविस्सदि ॥ (शिरासि शकुन्तलामभ्युक्ष्य) वच्छे! परिणदो दिअहो ॥ एहि उडजं एव्व गच्छम्ह ॥ (इति प्रस्थिताः)

---

1 पौरव! असंशयं स्वयं मम शरीरवृत्तांतोपलम्भायार्या गौतमीत एवागच्छति ॥ तस्मा-(याव) द्विटपान्तरितो भव ॥

2 इत इतः ॥

3 जाते! अपि लघुसन्तापानि तेऽङ्गानि?

4 अस्ति मे विशेषः।

5 अनेन मन्त्रितदर्भोदकेन निराबाधमेव ते शरीरं भविष्यति (शिरसिशकुन्तलामभ्युक्ष्य) वत्से! परिणतो दिवसः एहि उटजमेव गच्छावः॥

---

ससम्भ्रमं सभयम्। पौरव, असंशयं मम शरीरवृत्तान्तोपलम्भायार्या गौतमीतएवागच्छति। 'उपलम्भस्त्वनुभवः' इत्यमरः। यावद्विटपान्तरितो भव। इदं व्याजमिति राज्ञो मनसि स्यात् तन्निवारणायासंशयमित्युक्तिः। अनेन निरोधो नामाङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'या तु व्यसनसम्प्राप्तिर्निरोधः स तु कीर्त्यते' इति। अत्र स्वाभीष्टाच्युतिरेव व्यसनम्। इत इत आर्या गौतमी। जाते पुत्रि, अपीति प्रश्ने। लघुः स्वल्पः सन्तापो येषु तानि तेऽङ्गानि। अस्ति मे विशेषः। अनेन दर्भोदकेन दर्भसहितेनोदकेन। वैतानोदकेनेत्यर्थः। निराबाधं पीडारहितमेव ते शरीरं भविष्यति। वत्से, परिणतो दिवसः। एहि। उटजमेव गच्छामः। 'पर्णशालोटजोऽस्त्रियाम्' इत्यमरः।

**शकुन्तला**—(स्वगतम्) [1]हिअअ! पुडमं एव्व सुहोवणदे मणोरहे कादरभावं ण मुंचेसि ॥ साणुसअं विहडिअस्स कहं णु दे सम्पदं! (पदान्तरे स्थित्वा) (प्रकाशम्) लदावळअ! सन्दाव(हारअ) हर:! आमंदेमि भूओवि परिभोआअ ॥

(दुःखदुःखेन निष्क्रान्ता सहेतराभिः)

---

1 हृदय! प्रथममेव सुखोपनते मनोरथे कातरभावं न मुंचासि। सानुशयं विघटितस्य कथं नु ते सांप्रतं (प्रतीकारः)? लतावलय! सन्ताप(हारक)हर! आमन्त्रयामि भूयोऽपि परिभोगाय ॥

---

**हृदयेति ॥** प्रथममेव सुखोपनत इति प्रथमाङ्के आश्रमरक्षाव्याजेन स्वयमेवानायासेन समागत इत्यर्थः॥ मनोरथे मनोरथविषये अनुरूपवरे राजनीत्यर्थः ॥ मनोरथ इत्यनेनानुरूपवरप्राप्तौ सत्यां बहुरहस्यकथनचुम्बनालिङ्गनसम्भोगादिकं कर्तव्यमिति स्वमनसि स्थितमुच्यते॥ कातरभावं न मुञ्चसीत्यनेन दुष्यन्तेन बहुप्रार्थनायां कृतायामपि गुरुजनादिभीत्या सम्भोगादिविषये अनुमतिर्नकृतेत्यर्थः॥ सांम्प्रतमिदानीं॥ अस्मिन्नेव राजनि पुनरप्यागते सतीत्यर्थः ॥ सानुशयं विघटितस्येति गौतम्यागमनेन पश्चात्तापपूर्वकं विघटितस्य यथामनोरथपरिपूर्तिर्भवति तथा सम्भोगादिकं न जातमित्यर्थः ॥ मनोरथस्तु बहुवारं सम्भोगादिकं कर्तव्यमिति मनसि स्थितमिदानीं गौतम्यागमनेन एकवारमेव जातमिति भावः ॥ सानुशयमित्यनेन पूर्वं प्रथमदर्शने एकवारं सम्भोगादिकं जातं चेदिदानीमप्येकवारसंभोगेन मनोरथपरिपूर्तिः किञ्चिद्भवेत्। तथा न जातमित्यर्थः ॥ अनेन पुनरपि नायकप्राप्तिं प्रति चित्तासङ्गो बिन्दुरित्यनुसन्धेयम्॥

**लतावलयेत्यादि ॥** अत्र मनोरथो नामालङ्कारः ॥ तदुक्तं—"मनोरथस्तु व्याजेन विवक्षितनिवेदन"मिति॥ अत्र शकुन्तला लतावलयव्याजेन राजानमामंत्रयत इति मनोरथः॥

---

हृदय! प्रथममेव सुखोपनते मनोरथे कातरभावं न मुञ्चसि। एवकारो भिन्नक्रमः। नैव मुञ्चसीति। मनोरथे विषयस्य निगीर्णत्वादतिशयोक्तिः। सानुशयविघटितस्य सपश्चात्तापं च तद्विघट्टितं च तस्य। 'अथानुशयो दीर्घद्वेषानुतापयोः' इत्यमरः। कथं ते साम्प्रतं सन्तापः। यत्सङ्गमे कातरता तत्सङ्गमाभावे तदभाव एवोचितो न तु ताप इति कथं शब्दार्थः। लतावलय लतागृह सन्तापहारकेति। अथ च लतागृह सन्तापहारकेत्येकयोक्त्या दुष्यन्तलतागृहयोः सम्बोधनम्। वलयशब्देनाच्छादकत्वसाधर्म्येण गृहं लक्षयता गुप्ततरत्वमनोहरत्वादि ध्वनितम्। आमन्त्रये त्वां भूयोऽपि परिभोगाय सुखाय सम्भोगाय च। अनेन मनोरथो नाम भूषणमुपक्षिप्तम्। तल्लक्षणं तु—'मनोरथस्तु व्याजेन विवक्षितनिवेदनम्' इति॥

**दुष्यन्तः**—(पूर्वस्थानमुपेत्य । सनिश्वासम्) अहो ! विघ्नवत्यः प्रार्थितार्थसिद्धयः ॥ मया हि—

**मुहुरंगुलिसंवृताधरोष्ठं**
**प्रतिषेधाक्षरविक्लबाभिरामम् ।**

---

**अहो इत्यादि ॥** अहो इत्याश्चर्ये चिरप्रार्थितनायिकासङ्गमजनितानन्दानुभवस्य मध्ये विघटनात् स्वप्रतिकूलविधिप्राबल्यं प्रत्याश्चर्यं प्रार्थितार्थसिद्धय. इति बहुवचनेन स्वस्य नायिकाविषयकविविधमनोरथभेदास्सूच्यन्ते ॥ मयेत्यनेनानुभवविषयतोक्ता ॥

२२ **मुहुरङ्गुलिरिति ॥** अङ्गुलीभिस्संवृतः सम्यक्प्रच्छादितः अधरोष्ठः यत्र तत्तथोक्तं ॥ अङ्गुलीभिस्संवृत इत्यनेन अधरचुम्बनप्रतिबन्धकतिरस्कारे सुकरत्वं सूचितम् ॥ न तु हस्तसंवृताधरोष्ठमित्युक्तम् ॥ तेनानुरागातिशयान्मानजनितबाह्यकोपस्सूच्यते ॥ अनेन संवरणांगुल्यपकर्षणकार्यं तत्कारणभूतकेशग्रहादयश्च व्यज्यन्ते ॥ मुहुर्बहुश इत्यनेन यदा एकेन हस्तेन कचं गृहीत्वा अन्यहस्तेनाङ्गुलीरपनुद्य तेनैव हस्तेन नीवीमोचनं क्रियते ॥ तन्मध्ये क्षणे क्षणे अङ्गुलीभिरधरसंवरणमिति भावः ॥ तेन चाधरसंवरणांगुल्यपनयनसमये तदनुनयार्थं बहुविधचाटुकरणचातुरी सूच्यते ॥ यावता कालेन सुरतप्रस्तावाङ्गीकारः तावदविकलमेकेन हस्तेन केशग्रहं कृत्वा चाटूक्त्यानुनीयान्यहस्तेनाङ्गुलीरपनुद्य चुम्बितमिति भावः ॥ अनेन स्फुरिताख्यः कन्याचुम्बनविशेषस्सूचितः ॥ यदाह वात्स्यायनः—"निमित्तं । स्फुरितं । घटितमिति त्रीणि कन्याचुम्बनानि ॥" तत्र वदनप्रवेशितमोष्ठमवग्रहीतुमिच्छन्ती स्पन्दयन्ती स्वमोष्ठं नोत्तरमुत्सहत इति स्फुरितमिति ॥ प्रतिषेधाक्षरविक्लबाभिरामं प्रतिषेधाक्षरैः परस्परविमर्दजनितानन्दातिशयवशान्मा मेत्यादिवचनैर्विक्लबं विह्वलं परवशमिति यावत् ॥ अभिरामं ॥ भ्रूभङ्गाधरस्पन्दनस्वेदबिन्दूनां स्वसंपर्कसम्भूतसुखजनितत्वाद्रमणीयं ॥ अनेन प्रतिषेधाक्षरकथनेन हस्तयोर्व्यापाराभावाद्गाढाश्लेषस्सूच्यते ॥ तेन च स्तनमुकुळादिसर्वांगस्पर्शनं सूचितम् ॥ अत्रापि मुहुरित्यनुषज्यते ॥ तेन च देशस्य विविक्ततया निरर्गळसुरतक्रियानुकूलबहुविधस्वरविशेषवद्वाग्विजृम्भणचातुरी ध्वनिता ॥ अंसविवर्तीति ॥ अंसयोर्विवर्तते विवलत इत्यंसविवर्ति ॥ एतदंसविवर्तनं गुरुजनभीत्या दन्तक्षतकरणपरिहारार्थमित्यवगन्तव्यम् ॥ अत्रापि मुहुरित्यनुषज्यते ॥ अनेन सम्मुखे सति अधरचुम्बनं तत्परिहारार्थमंसयोर्विवर्तने सति कपोलचुम्बनं तदुभयपरिहारार्थं मुहुरिति भावः ॥ तेन निरतिशयानन्दानुभवाद्वचसा निषेधं कर्तुमशक्यत्वं सूचितम् ॥ अतएव मुखमित्युक्तम् ॥ न त्वधरमिति ॥ मुखस्यैव बहुचुम्बनविषयत्वात् ॥ अत एव पक्ष्मलाक्ष्या इत्यनेन नेत्रचुम्बनमपि सूचितम् ॥ अनेन सम्भोगस्सूच्यते ॥ तदुक्तं भावप्रकाशे—"कामोपचारस्सम्भोगः काम-

---

**मुहुरिति ॥** मुहुर्वारंवारमङ्गुल्या तर्जन्या संवृत आच्छादितोऽधरोष्ठो यत्र तत् । प्रतिषेधाक्षराणि मा मा अलमित्यादीनि तेषां यद्वैक्लव्यं स्फुटमनुच्चारणं तेनाभिरामम् । विक्लबशब्दो धर्मपरः । अंसे विवर्तितुं शीलं यस्य तत् । वलिते पक्ष्मले अक्षिणी यस्याः सा

मुखमंसविवर्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं न चुम्बितं तु ॥ २२

स्त्रीपुंसयोस्सुखं । सुखमानन्दसम्भेदः परस्परविमर्दतः ॥ उपचारस्तदानन्दकारकं कर्म कथ्यत" इति ॥ अत्र केशग्रहणमुष्टिपीडनविशेषादीनां नायिकासुखकरत्वादानन्दसम्भोगः ॥ कथमपीति ॥ कथञ्चिद्यत्नेनेति यावत् ॥ तदुक्तमुत्पलमालायां—"ज्ञातहेतुविवक्षाया मप्यादिकथमव्ययं । कथमादि तथाप्यन्तं यत्नगौरवबाढयो"रिति ॥ प्रथममङ्गुलिसंवरणम् ॥ तस्मिन्नपकृष्टे सति प्रतिषेधाक्षरवैक्लब्यम् ॥ तस्मिन्विरमिते सति अंसविवर्तनम् ॥ एवंप्रकारेण कृच्छ्रेणेत्यर्थः ॥ कथमपीत्यनेन नववधूश्शनैरेवोपभोक्तुमुचितेति युज्यते ॥ न चुम्बितं तु ॥ अत्र चुम्बनशब्देन तदविनाभूतसम्भोगस्सूच्यते ॥ न चुम्बितं त्विति तुशब्दः पुनश्शब्दार्थवाचकः ॥ तु पुनर्न चुम्बितमित्यनेन एकवारमेव चुम्बितमिति व्यज्यते ॥ चिरप्रार्थितकृच्छ्रलब्धनायिकायाः बहुवारसंभोगस्य समुचितत्वात् गौतम्यागमनेन एकवारसंभोगो जात इत्यर्थः ॥ तेन च मध्याह्ने सङ्गतयोः स्त्रीपुंसोरासायमेकवारसम्भोगकथनेन स्वस्य मन्मथकलाप्रावीण्येन दीर्घसुरतं बहुविधक्रीडाश्च सूच्यन्ते ॥ ध्वनिकारेणापि निपातानां रसाभिव्यञ्जकत्वोदाहरणे अयं श्लोकस्तु 'न चुम्बितम्' त्वित्येवोदाहृतः ॥ केचि 'न्न चुम्बितं त'दिति पठन्ति ॥ तदयुक्तम् ॥ उत्तरत्र 'दुष्यन्तेनाहितं तेजो दधाना'मिति । 'पीतं मया सदयमेव रतोत्सवेऽपि' इत्यनेन च सम्भोगगर्भधारणानामाकाशवाणीदुष्यन्तमुखोदितत्वात् ॥ तु पुनर्न चुम्बितमित्यनेन पुनरपि तत्प्राप्तिं प्रति चित्तासङ्गो बिन्दुरुक्त इति बोध्यम् ॥ अत्र कुट्टमितं नाम स्त्रीणां स्वाभाविकालङ्कार उक्तः ॥ तदुक्तम्—"अलङ्कारास्तु नाट्यज्ञैः प्रोक्ता भावसमाश्रयाः । यौवनेऽभ्यधिकं स्त्रीणां विकारा गात्रवक्त्रजाः" तत्र—"उपचारैस्सदानन्दाधरकेशग्रहादिभिः । सुखोपचारवत्कोपो बाह्यः कुट्टमितं जगु"रिति ॥ अत्र सुखोपभोगपरमानन्दकेशग्रहादयः स्फुटाः ॥ अङ्गुलिसंवृताधरोष्ठत्वेन प्रतिषेधाक्षरैश्च बाह्यः कोपोऽनुमीयते । तत्र अनेके रसाश्च प्रतीयन्ते ॥ यदाह भरतः—"न ह्येकरसजं काव्यं किञ्चिदस्ति प्रयोगतः । भावो वापि रसो वापि प्रवृत्तिर्वृत्तिरेव वा" इति ॥ लोकोत्तरवर्णनानिपुणकविकर्म काव्यम् ॥ तदेव प्रयोगार्हं नाट्यं भवति ॥ भावादिव्यतिरेकेण एकरस एव यस्मिन्काव्ये दृश्यते । तादृशं काव्यं प्रयोगार्हं न भवतीत्यर्थः ॥ यथा प्रकृते नायकारब्धः श्रृंगारस्स्फुट एव ॥ तदनुभावाः । अधरस्याङ्गुलिसंवरणेन ॥ धैर्यम् ॥ तेन च मिथ्यामानेन गर्वो मदश्च ॥ मुहुरित्यनेनानुरागगोपनादवहित्थम् ॥ प्रतिषेधाक्षरविक्लबमित्यनेन दैन्यम् ॥ अंसविवर्तीत्यनेन वचनोच्चारणे ग्लानिः ॥ परस्परदृष्टिसंबन्धे लज्जा ॥ चुम्बितमित्यनेन हर्षः ॥ पुनर्न चुम्बितमित्यनेन विघ्नकारिणीं गौतमीं प्रति क्रोधः ॥ तेन रौद्ररसः प्रतीयते ॥ किञ्च । पुनर्न चुम्बितमित्यनेन राव्यागमनात्खलु गौतम्यागतेति रत्रि प्रत्यौग्र्यम् ॥ अहो इति विस्मयः ॥ प्रार्थितार्थसिद्धयो विघ्नवत्य इति निर्वेदश्शोकश्च ॥ पुनर्न चुम्बितमित्यनेन

पक्ष्मलाक्षी तस्या मुखम् । अनेन चुम्बनार्थमुन्नमने योग्यता ध्वनिता । कथमपि महता कष्टेन । उन्नमितं चुम्बनार्थमूर्ध्वीकृतम् । न चुम्बितम् । तु पश्चात्तापे । तेन तावन्मात्रचुम्बनलाभेनापि कृतकृत्यता स्यादिति ध्वन्यते । स्वभावोक्तिः । श्रुतिवृत्त्यनुप्रासौ । कथमपीत्यस्यार्थं प्रति विशेषणत्रयार्थस्य हेतुत्वोपादानात्काव्यलिङ्गम् । वृत्तमनन्तरोक्तम् ।

क्व नु खलु (सम्प्रति) गच्छामि ? अथवा । इहैव प्रियापरिभुक्तमुक्ते लता (वलये) मण्टपे मुहूर्तं स्थास्यामि ॥

तस्याः पुष्पमयी शरीरलुलिता
शय्या शिलायामियं
क्का(न्तो)न्ते मन्मथलेख एष नलिनी-
पत्रे नखैरर्पितः ।
हस्ताद्भ्रष्टमिदं बिसाभरणमि-
त्यासज्यमानेक्षणो
निर्गन्तुं सहसा न वेतसगृहा-
च्छक्नोमि शून्यादपि ॥ २३

---

पुनस्तत्प्राप्तिं प्रति चिन्ता वितर्कश्च ॥ प्रतिषेधाक्षरविक्लबमित्यनेन लज्जाभावश्शान्तिश्चपलता च ॥ अंसविवर्तीत्यनेन चुम्बनपरिहारेण दन्तक्षताद्गुरुभ्यश्शङ्का भयं च ॥ अङ्गुलिसंवृताधरोष्ठमित्यनेन मुग्धत्वं तेन नायकारब्धश्शृङ्गारः ॥ तदुक्तम्—"शृङ्गारे कदाचिन्नायिकारब्धत्वं कदाचिन्नायकारब्धत्वं कदाचिदुभयारब्धत्वं कदाचिद्दर्शनारम्भो मदेन वा चिन्तया वोन्मादेन वा" इत्यादि ॥ अत्रानेकेषां रसानां शृङ्गाराङ्गत्वेनोपादानं कृतम् ॥ अनेन कविनटयोश्शिक्षाप्रकारः प्रदर्शितः ॥

क्व नु खल्वित्यादि ॥ खलुर्जिज्ञासायाम् ॥

२३ **तस्या इति ॥** तस्या अनुभूतायाः शकुन्तलायाः ॥ शरीरलुलितेत्यनेन तत्कृतबहुविधसुरतक्रियास्सूच्यन्ते ॥ आसज्यमानेक्षणः आसमन्ताद्बद्धेक्षणः ॥ सहसा न शक्नोमीत्यनेन सर्वकार्यानुत्साह उक्तः ॥

---

**तस्या इति ॥** तस्याः पुर इव परिवर्तमानायाः पुष्पमयी न पल्लवमयी । तेषां ततोऽपि मृदुत्वात् । तेन तस्याः कोमलतरत्वं ध्वन्यते । शरीरेण सन्तप्तदेहेन लुलितेतस्ततः क्षिप्ता । शरीरस्य सन्तप्तत्वं प्रकरणलभ्यमिति नोक्तम् । शिलायामियं शय्येति यथादृष्टोक्तिः । क्रान्ता । एवमेष इदमित्यत्रापि । अत्रैषशब्दः समीपतरत्वं वदन्मदनलेखस्य स्वोद्देशेन प्रियालिखितत्वेन च हृद्यतरत्वं ध्वनयति । अतएव नेदमैतदोः प्रक्रमभङ्गः शङ्कनीयः । उक्तं च—'इदमः प्रत्यक्षगतं समीपतरवर्ति चैतदो रूपम्' इति । अतएव पुष्पाद्यविशेषेणोक्तम् । अत्र तु नलिनीपत्रे नखैरर्पित इति । यथायथं पञ्चानामप्युपयोगादक्षरबाहुल्याद्वा नखैरिति बहुवचनम् । बिसाभरणं क्रान्तमित्येव । इत्यमुना प्रकारेणायं स्तनन्यस्तो मृणालभरः क्रान्तः इति प्रकारशब्दार्थः । मध्यदीपकालङ्कारः । आ समन्तात्सज्यमाने स्वयमेव सम्बध्यमाने ईक्षणे यस्य सः । शून्यादपि तया विरहितादपि वेतसगृहात्सहसा कस्मान्निर्गन्तुं न शक्नोमि ।

(नेपथ्ये)

राजन् !

सायन्तने सवनकर्मणि संप्रवृत्ते
वेदीं हुताशनवतीं परितः प्र(यस्ताः)वृत्ताः ।
छायाश्चरन्ति बहुधा भयमादधानाः
सन्ध्यापयोदकपिशाः पिशिताशनानाम् ॥ २४

---

२४ सायन्तन इति ॥ सायन्तने सान्ध्ये सवनकर्मणि यज्ञकर्मणि ॥ छायाः प्रतिबिम्बानि ॥ चरन्ति घृतादिपात्रेषु दृश्यन्त इत्यर्थः ॥ बहुधा भयमादधाना इत्यनेन स्वेषां तत्प्रतीकाराशक्यत्वमुक्तम् ॥ अयमहमागच्छामीत्यनेन स्वस्य युद्धवीरत्वं दयावीरत्वं च सूचितम् ॥ निष्क्रान्तास्सर्वे ॥ "तेषा मन्ते च निर्गम" इत्युक्तत्वात् ॥

---

तत्त्यक्तान्युपभोगचिह्नान्यत्यन्तं मम मनो रमयन्ति तत्र सा किमु वक्तव्येति भावः। हेत्वनुप्रासौ। अत्र निर्गमनकारणे शून्यत्वे सति यस्तदभावः सा विशेषोक्तिः। अथ च तत्सद्भावस्य कारणस्याभावेऽपि गमनाभावस्तत्कार्यमुक्तमिति विभावना। अत्र च कारणाभावस्तद्विरुद्धोक्तिः साधकबाधकप्रमाणाभावात्सन्देहसङ्करः। शार्दूलविक्रीडितं वृत्तम्। अस्य तुर्यचरणेन पुष्पं नामाङ्गमुपक्षिप्तम्। तल्लक्षणं दशरूपके—'पुष्पं वाच्यं विशेषवत्' इति ॥

सायन्तन इति ॥ सायन्तने सायङ्कालीने। 'सायञ्चिरं—' इत्यादिना ट्युल् तुडागमश्च। सवनकर्मणि यजनकर्मणि। 'सवनं यजने स्नाने' इति विश्वः। सम्यक्प्रवृत्ते न त्वादावेव। हुताशनवतीं वेदीं परितः प्रयस्ता इतस्ततो विक्षिप्ताः। क्वचित् 'प्रकीर्णाः' इति पाठः। संध्यापयोदवत्सायङ्कालीनमेघवत्कपिशाः पिङ्गला भयमादधानाः पिशिताशनानां रक्षसां छायाः पङ्क्यो बहुधानेकवारं चरन्ति गतागतं कुर्वन्ति। 'छाया स्यादातपाभावे सच्छोभापङ्क्तिषु स्मृता' इति विश्वः। परिप्रेति पिशापिशीति च्छेकवृत्तिश्रुत्यनुप्रासाः। उपमा च। वसन्ततिलकावृत्तम्। अत्रापि भयानको रसः। उक्तं च—'भये तु मन्तुना घोरदर्शनश्रवणादिभिः। चेतस्यतीव चाञ्चल्यं तत्प्रायो नीचमध्ययोः' इति। तद्भयं स्थायिभावः। पिशिताशनच्छायावलोकनं विभावः। पद्यस्थभयशब्देन त्रासलक्षणो व्यभिचारी। उद्दीपनभावादिकं स्वयमूहनीयम्। अत्र प्रतिमुखसन्धौ नर्मनर्मद्युत्युपासनान्यङ्गानि नोक्तानि। कानिचिद्ग्रन्थेनाप्युक्तानि तत्कथमिति न वाच्यम्। भरतादिभिरेव तथोक्तेः। तत्रादिभरते—'कविभिः काव्यकुशलै रसभावमपेक्ष्य तु। सर्वाङ्गानि कदाचित्तु द्वित्रिहीनानि वा पुनः। व्युत्क्रमेणापि कार्याणि' इति रसार्णवसुधाकरेऽपि—'केषांचिदेषामङ्गानां वैकल्यं केचिदूचिरे' इत्यादि ॥

**दुष्यन्तः**—(श्रुत्वा) अयमहमागच्छामि ॥

(इति निष्क्रान्तः)

इति श्रीमहाकविकालिदासकृतौ शाकुन्तलनाटके
तृतीयोऽङ्कः ॥

इति श्रीरमणवेङ्कटाचलेश्वरपादारविन्दसमाराधकवैखानसकुलतिलक
श्रीकौशिकगोत्र श्रीतिरुमलाचार्यपुत्रेण ध्वनिप्रस्थानपरमाचार्याष्ट-
भाषाचक्रवर्तिश्रीनिवासाचार्येण विरचितायां
शाकुन्तलव्याख्यायां तृतीयोऽङ्कः ॥

---

इति श्रीमदभिज्ञानशाकुन्तलटीकायामर्थद्योतनिकायां
तृतीयोऽङ्कः समाप्तः ॥

॥ श्रीरस्तु ॥

# ॥ अभिज्ञानशाकुन्तलम् ॥

## ॥ चतुर्थोऽङ्कः ॥

॥ तदादौ विष्कम्भः ॥

(ततः प्रविशतः कुसुमापच(यं नाटयन्त्यौ) वयमभिनयन्त्यौ सख्यौ)

---

कविरिदानीं कथान्तरमारभमाणो वस्तुसङ्घटनार्थं विष्कम्भं नामार्थोपक्षेपकं प्रस्तौति—ततः प्रविशतइत्यादि ॥ तदुक्तं—"सूच्यं श्राव्यं दृश्यमिति तत्र वस्तु त्रिधा मतम् । नीरसानुचितं वस्तु सदा संसूच्यमेव तत् ॥ श्राव्यं तु युद्धसंक्षोभपुत्त्रजन्मादिकं स्मृतम् । दृश्यं तु मधुरोदात्तरसभावनिरन्तरम् ॥ अर्थोपक्षेपकैस्सूच्यं पञ्चभिः प्रतिपादयेत् । विष्कम्भचूळिकांकास्यांकावतारप्रवेशकैः ॥ अतीतानां भाविनां च कथांशानां प्रदर्शकः । मध्यमेवैकपात्रे च द्वाभ्यां त्रिभिरथापि वा ॥ प्रयोज्यो वस्तुविस्तारो विष्कम्भस्तु द्विधा भवेत् । शुद्धसङ्कीर्णभेदेन शुद्धः केवलमध्यमैः ॥ पात्रैः प्रयोज्यो भाषैक्यात्सङ्कीर्णो नीचमध्यमैः । वाक्यैस्स्याद्भिन्नभाषार्थैस्संस्कृतप्राकृतादिभिः ॥ आदौ विष्कम्भकं कुर्यान्नाटकेषु महाकविः । अपेक्षितं परित्यज्य नीरसं वस्तु विस्तरम् ॥ यदा सन्दर्शयेच्छेषं कुर्याद्विष्कम्भकं तदा । यदा तु सरसं वस्तु मूलादेव प्रवर्तते । आदावेव तदांकास्यादामुखाक्षेपसंयुतम् । यथोचितं तु विष्कम्भं सर्वांकेषु प्रकल्पये"दिति ॥

---

अथ चतुर्थाङ्कादिपञ्चममध्ये 'यथोक्तं करोति' इत्यन्तेन गर्भसन्धिरुक्तः । तल्लक्षणमादिभरते—'उद्भेदस्तस्य बीजस्य प्राप्तिरप्राप्तिरेव च । पुनश्चान्वेषणं यत्र स गर्भः परिकीर्तितः ॥' इति । पूर्वसंध्युपक्षिप्ताप्तिः । दुर्वाससः शापादप्राप्तिः । पुनस्तस्य प्रसादेनाभिज्ञानदर्शनेन पुनः प्राप्तिरिति । 'अत्राप्त्याशापताकानुरोधादङ्गानि कल्पयेत् । अभूताहरणं मार्गो रूपोदाहरणे क्रमः ॥ सङ्ग्रहश्चानुमानं च तोटकादिबले तथा । उद्वेगसम्भ्रमाक्षेपा द्वादश' इति । एषामङ्गानां व्याख्यानावसरे तत्र तत्र लक्षणं वक्ष्यामः । तत्र पताकाया अनित्यत्वादत्र पताका नास्ति । तदुक्तं धनिकेन—'पताका स्यान्न वा स्यात्प्राप्तिसम्भवे' इति । प्राप्त्याशाया नियतत्वमुक्तं सुधाकरेऽपि—'पताकायास्त्ववस्थानं क्वचित्' इति । तेन प्राप्त्याशालक्षणमेव लिख्यते । तल्लक्षणं सुधाकरे—'प्राप्त्याशा तु महार्थस्य सिद्धिसद्भावभावना' इति । अत्रापि दुर्वाससः प्रसादेन महार्थस्य शकुन्तलारूपस्य राज्ञः प्राप्तिसद्भावनेति ज्ञेयम् । कुसुमावचयं नाटयन्त्याविति वामहस्तेनोत्तानेनाराळेन दक्षिणेन पुरः पार्श्वादिस्थितेनाञ्चिताच्युतसंयुक्ते न हंसास्येन । तल्लक्षणं यथा—'तर्जन्यादिष्वङ्गुलीषु प्राच्याः प्राच्याः पराः पराः । दूरस्थोर्ध्वा मनाग्वक्रा धनुर्वक्रा तु तर्जनी ॥ अङ्गुष्ठः कुञ्चितो यत्र तमराळं प्रचक्षते' इति । 'लग्नास्त्रेताग्निसंस्थानास्तर्जन्यङ्गुष्ठमध्यमाः । शेषे यत्रोर्ध्वविरळे स हंसास्योऽभिधीयते ॥ अञ्चिताच्युतसंयुक्तं कुसुमावचयादिषु ॥' इति । 'हस्तादाने चेरस्तेये' इति घञि कृते अवचाय इति भाव्यम् । तथा च वामनसूत्रम्—'अवतारा-

**अनसूया**—[1]हळा! पिअंवदे! (जहवि) गन्धव्वेण विवाहविहिणा णिव्वुत्तकल्लाणा सउन्दला अणुरूवभत्तुगामिणी संवुत्तेति णिव्वुदं मे हिअं तह वि(एत्तिअं) एदं चिन्तणिज्जम् ॥

**प्रियंवदा**—[2]कहं वि अ?

**अनसूया**—[3]अज्ज सो राएसी इट्ठिं परिसमाविअ इसीहिं विसज्जिदो अत्तणो णअरं पविसिअ अन्तेउरसमाअदो इदोगदंवुत्तंदं सुमरेदि वा ण वेत्ति।

---

1 सखि! प्रियंवदे! यद्यपि गान्धर्वेण विवाहविधिना निर्वृत्तकल्याणा शकुन्तलाऽनुरूपभर्तृगामिनी संवृत्तेति निर्वृतं मे हृदयम्। तथाप्ये(ताव)तच्चिन्तनीयम्॥

2 कथमिव?

3 अद्य स राजर्षिरिष्टिं परिसमाप्य ऋषिभिर्विसर्जित आत्मनो नगरं प्रविश्यांतःपुरसमागत इतोगतं वृत्तान्तं स्मरति वा नवेति॥

---

**हळेत्यादि ॥** सखि प्रियंवदे! यद्यपि गान्धर्वेण विवाहविधिना निर्वृत्तकल्याणा शकुन्तला अनुरूपभर्तृगामिनी संवृत्तेति निर्वृतं मे हृदयम् ॥ अनेन पुनः पूर्वांकार्थ उक्तइत्यवगन्तव्यम् ॥ तह वीत्यादि ॥ अनेनोत्तरांकार्थसूचनं कृतमिति ज्ञातव्यम् ॥ अनसूयाप्रियंवदयोर्नायिकाप्रियसखीत्वान्मध्यमपात्रत्वम्। देशीयत्वाभावात् ॥ अत्रपूर्वोत्तरांकवृत्तवर्तिष्यमाणवस्तुसूचनमात्रत्वान्नीरसत्वेन विष्कम्भत्वम्॥

---

वचायशब्दयोर्दीर्घव्यत्यासो बालानाम्' इति। अत्रोच्यते—'हस्तादानग्रहणे प्रत्यासत्तिरादेयस्य लक्ष्यते' इति वृत्तिकारेण व्याख्यातम्। हस्तादान इति किम्। 'वृक्षशिखरे पुष्पप्रचयं करोति' इति प्रत्युदाहृतम्। इदं च पदमङ्गीकारेण व्याख्यातम्। आरुह्य हस्तादानेऽप्यादेयस्य प्रत्यासत्त्यभावाद्घञभावः। एवमत्रापि तासां बालत्वात् आदेयस्य प्रत्यासत्त्यभावाद्घञभाव इति ज्ञेयम्। प्रियंवदे, यद्यपि गान्धर्वेण विधिना निर्वृत्तकल्याणा जातमङ्गला। 'कल्याणं मङ्गलेऽपि च' इति विश्वः। शकुन्तलानुरूपभर्तृगामिनी संवृत्तेति मे निर्वृतं सुखितं हृदयम्। तथाप्येतावच्चिन्तनीयम्। कथमिव। अद्य स राजर्षिरिष्टिं परिसमाप्य प्रहित ऋषिभिर्विसर्जित आत्मनो नगरं प्रविश्यान्तःपुरे स्त्रीसमाजे समागतो मिलित इतोगतं वृत्तान्तं स्मरति वा न वा। अनेन वक्ष्यमाणेन

**प्रियंवदा**—[1]विस्सद्धा होहि । *ण तादिसी गुणविरोहिणी पकिदी ॥ तादो दाणिं इमं वुत्तंदं सुणिय ण आणे किं पडिवज्जिस्सदित्ति ॥

**अनसूया**—[2]जह अहं पेक्खामि । तह तस्स अणुमदं ॥ (भवे)

**प्रियंवदा**—[3]कहं विअ ?

**अनसूया**—[4]गुणवदे कण्णआ पडिवादणिज्जेत्ति अअं दावपुढमो सङ्कप्पो तादस्स तं जइ देव्वं एव्व सम्पादेदि, णं अ(प्प)प्पा आसेण किदद्धो गुरुअणो ॥

**प्रियंवदा**—(पुष्पभाजनं विलोक्य) [5]सहि, अवइदाइ खु बलिअम्मपज्जत्ताइ कुसुमाइ ॥

---

1 विस्रब्धा भव । न तादृशी गुणविरोधिनी प्रकृतिः । तात इदानीमिमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यतीति ॥

2 यथाहं पश्यामि । तथा तस्यानुमतम् ।

3 कथमिव ?

4 गुणवते कन्यका प्रतिपादनीयेत्ययं तावत्प्रथमस्सङ्कल्पस्तातस्य तं यदि दैवमेव सम्पादयति । नन्व(प्र)ल्पायासेन कृतार्थो गुरुजनः ॥

5 सखि, अपचितानि खलु बलिकर्मपर्याप्तानि कुसुमानि ।

---

बलिकर्मपर्याप्तानि ॥ पूजाक्रियापरिपूर्णानि ॥

---

दुर्वाससः शापेन राज्ञो नायिकाविस्मरणकारणं सूचितम् । विस्रब्धा भव विश्वासयुक्ता भव । न तादृशा आकृतिविशेषा गुणविरोधिनो भवन्ति । 'यत्राकृतिस्तत्र गुणा वसन्ति' इत्युक्तेः । तेन तस्मिन्दुष्यन्ते वञ्चनाविस्मरणादिकं न सम्भाव्यत इति भावः । तात इदानीमिमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यत इति । यथाहं पश्यामि । अत्र दृशिर्ज्ञानार्थः । जानामीत्यर्थः । यथाशब्दो योग्यतायाम् । योग्यतयाहं जानामि । तस्यानुमतं भवेदिति । यथेति 'योग्यतावीप्सापदार्थानतिवृत्तिसादृश्येषु' इति दण्डनाथः । कथमिव । गुणवते कन्यका प्रतिपादनीयेत्ययं तावत्प्रथमो मुख्यः सङ्कल्पो मानसं कर्म । तद्यदि दैवमेव सम्पादयति । नन्ववधारणे । अप्रयासेन प्रयासाभावेन कृतार्थो गुरुजनः । सखि, अवचितानि बलिकर्म पूजाकर्म तत्पर्याप्तानि कुसुमानि ।

---

* ण तादिसा आकिदिविशेसा गुणविरोहिणो होन्दि ॥

छा ॥ न तादृशा आकृतिविशेषा गुणविरोधिनो भवन्ति— इति (पाठान्तरम्)

**अनसूया**—[1]णं (सहि ए) सउन्दलाए सोहग्गदेवदा—अच्च (णीआ) णिज्जा—

**प्रियंवदा**—[2]जुज्जइ ॥

(तदेव कर्मारभेते)

(नेपथ्ये)

अयमहं भोः !!

**अनसूया**—(आकर्ण्य) [3]अदि (धी) हीणं विअ णिवेदिदं ॥

**प्रियंवदा**—[4]णं उडअसण्णिहिदा सउन्दळा (आत्मगतम्)

*अनसूया—[5]न (अज्ज) उण हि अएण सण्णिहिदा

‡प्रियंवदा—[6]होदु अळं एत्तिएहिं कुसुमेहिं ॥

(इति प्रस्थिते)

(नेपथ्ये)—आः ! अतिथिपरिभाविनि !

---

1 ननु, शकुन्तलायास्सौभाग्यदेवताऽर्चनीया ।

2 युज्यते ।

3 अतिथीनामिव निवेदितम् ।

4 ननूटजसन्निहिता शकुन्तला ।

5 न (अद्य) पुनर्हृदयेन सन्निहिता ।

6 भवतु, अलमेतावद्भिः कुसुमैः ॥

---

सौभाग्यदेवता ॥ यया देवतया अनुरूपवरसङ्घटना कृता सा देवता अर्चनीयेत्यर्थः ॥

**भोः इति ॥** स्वगुणतारतम्यानभिज्ञजनसंबोधने ॥ अयमहमागत इत्यनेन निकटे आगत इत्यर्थः ॥

**नेपथ्य इत्यादि ॥** आः इति अवमानजनितपीडायां निपातः ॥ "अस्तु स्यात्कोपपीडयो"रित्यमरः ॥ तेन पीडाजनितः कोपस्सूचितः ॥ कोपे कारणमाह—अतिथिपरिभाविनीति आगन्तुकावमानिनि ॥ अतिथिपरिभाविनीत्यनेनातिथिस्तु सत्कारयोग्यः ॥ बहुदूरागतक्षुत्पीडितातिथिः केनोपाधिना त्वत्कृतावमानं सहत इति भावः ॥

---

ननु परमताक्षेपे । सख्याः शकुन्तलायाः सौभाग्यदेवतार्चनीया । युज्यते । तदेव कुसुमावचयलक्षणमेव । सखि, अतिथीनामिव निवेदितम् । भावे क्तः । ननु सम्बोधने । उटजसन्निहिता शकुन्तला । अद्य पुनर्हृदयेनासंनिहिता । दुष्यन्तगतहृदयेत्यर्थः । भवतु । अलमेतावद्भिः कुसुमैः ॥

---

* प्रियंवदावनचमिदमिति क्वचित्पाठः

‡ अनसूयावचनमिति क्वचित् ।

विचिन्तयन्ती यमनन्यमानसा
तपो(धनं)निधिं वेत्सि न मामुपस्थितम् ।
स्मरिष्यति त्वां न स बोधितोऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव ॥ १

---

१ स्वकृतावमानस्यानुभूयिष्यमाणफलमाह—विचिन्तयन्तीयमित्यादि ॥ स्वाभिलाषविषयकं पुरुषमनन्यमानसा तदेकतानचित्ता ॥ अनेन नायकस्मरणेऽपि तत्सम्पर्कजनितानन्दसमानसुखानुभवस्सूच्यते ॥ तेन च विगळितवेद्यान्तरत्वेन उचितकार्येऽपि प्रवृत्त्यभावो व्यज्यते ॥ विचिन्तयन्ती विशेषेण चिन्तयन्ती ॥ त्वमिति शेषः ॥ अत्र त्वमिति विशेष्यपदोपादानाभावस्त्वागन्तुकावमानकरणादश्लीलनामोच्चारणायोग्यताभिप्रायः ॥ मां न वेत्सि ॥ मामित्यनेन स्वस्य इतरऋषिवैलक्षण्येन शीघ्रकोपोदयत्वमवमानासहिष्णुत्वं च व्यज्यते ॥ तर्हि विप्रकृष्टं कथं वेद्मीत्यत आह—उपस्थितं सन्निहितं ॥ न तु दूरस्थमित्यर्थः ॥ उपस्थितमित्यनेन स्वावस्थितिस्थलं प्रति बहुदूरमप्यागत्य जनैस्सत्कारयितुं योग्यस्तादृशं निकटवर्तिनं मां न जानातीति व्यज्यते ॥ तर्हि प्रमादात्किंचित्पापमुपनतं तत्परलोके अनुभविष्यामीत्यत आह—तपोनिधिमिति ॥ अनेन स्वस्य कोपप्रसादयोस्सद्यः फलप्रदत्वं ज्ञाप्यते ॥ न वेत्सीति वर्तमानव्यपदेशेनाद्यापि न वेत्सीति स्वकृतबहुनिर्वेदनं व्यज्यते ॥ तेन शापदाने स्वस्मिन् दोषाभाव उक्तः ॥ स त्वां न स्मरिष्यति ॥ सः त्वच्चिन्ताविषयस्तादृशत्वद्विषयकानुरागातिशयवान्पुरुषः ॥ त्वां तादृशानुरागवतीमनुभूतां त्वामित्यर्थः ॥ न स्मरिष्यति त्वद्विषयकस्मरणं न करिष्यति ॥ तर्हि । तेन तेन स्मारकलिङ्गेन बोध्यते चेत् स्मरिष्यतीत्यत आह—बोधितोऽपीति ॥ बोधितोऽपीत्यनेन निकटेन त्वां स्मारितोऽपि स्वकृतं वृत्तान्तं न स्मरिष्यति ॥ दूरे स्मारकपत्रलेखादिप्रेषणेन स्मरणं कुत इति भावः ॥ न स्मरिष्यतीत्यनेन स्मरणमेव नास्ति तत्सम्पर्कादिकं कुत इत्यभिप्रायः ॥ स्मरिष्यतीति भविष्यद्व्यपदेशेनेदानीं त्वयि तस्य गाढानुरागातिशयो विद्यते ॥ इतः परं मच्छापबलान्न स्मरिष्यतीति व्यज्यते ॥ न ह्यन्तः पुरस्त्रीगणापहृतचित्ततया चिरविश्लेषेण च तव स्मरणाभावः । किन्तु मच्छापबलादिति भावः ॥ अत्र दृष्टान्तमाह—प्रमत्त इति ॥ यथा मदनीयद्रव्यसेवया प्रकर्षेण मत्तः प्रथमं कृतां पूर्वक्षणोक्तां कथां वार्तां बोधितोऽप्यकथितपूर्वामिव उत्तरक्षणे न स्मरिष्यति । तथेत्यर्थः ॥ यथा मया बहुधा बोध्यमानापि त्वन्निकटवर्तिनं मां न वेत्सि तथा त्वां दुष्यन्त इति भावः ॥

---

विचिन्तयन्तीति ॥ यं विचिन्तयन्त्यनन्यमानसा त्वं मां दुर्वाससमुपस्थितमागतं तपोधनम् । त्रयं विधेयम् । न वेत्सि त्वां स्वयं न स्मरिष्यत्येव, परन्तु बोधितोऽपि ज्ञापितोऽपि न स्मरिष्यतीत्यपिशब्दार्थः । कः कामिव । प्रकर्षेण मत्तः प्रथमं पूर्वं कृतां कथामिव । स राजा कीदृशः । प्रमत्तोऽवधानरहितः । 'प्रमादोऽनवधानता' इत्यमरः । तेनासमर्थदोषः परिहृतः । त्वां कीदृशीम् । पूर्वं कृतामङ्गीकृताम् । काव्यलिङ्गोपमाश्लेषाः । तयतीयेति मनमानेति नसुसन्निति प्रमेति च्छेकवृत्त्यनुप्रासाः । वंशस्थं वृत्तम् ।

*अनसूया—[1]हद्धि ! हद्धि !! तदेव्व (अप्पिअं एव्व) संवुत्तम्, जस्सिं कस्सिं वि वूआरुहे अवरद्धा सुण्णहिअअ सउन्दला (पुनर्विलोक्य) ण खु जस्सिं कस्सिं वि ॥ एसो दुव्वासो सुलहकोवो महेसी ॥ तह सवि अ (वेअबलुप्फुल्लाए) चडुलदुव्वाराए गईए (पडि) णिव्वुत्तो ॥ को अण्णो हुदवहादो दहिदुं पहविस्सदि ? ‡गच्छ ॥ पादेसु पणमिअणिवत्तेहि णं जाव अहं अग्घोदअं गेण्हि अ उवसप्पामि ॥

प्रियंवदा—[2]तह (इति निष्क्रान्ता)

अनसूया—(पदान्तरे स्खलितं निरूप्य) [3]अम्हो ! आवेअक्खलिआए (गईए) मह पब्भट्ठं (मे) अग्गहत्थदो पुप्फभाअणम् ॥

(इति पुष्पोच्चयं निरूपयति)

---

1 हा धिक् ! हा धिक् !! तदेव (अप्रियमेव) संवृत्तम् । यस्मिन् कस्मिन्नपि पूजार्हेऽपराद्धा शून्यहृदया शकुन्तला (पुनर्विलोक्य) न खलु यस्मिन् कस्मिन्नपि । एष दुर्वासाः सुलभकोपो महर्षिः । तथा शप्त्वा (वेगबलोत्फुल्लया) चटुलदुर्वारया गत्या (प्रति) निवृत्तः । कोऽन्यो हुतवहाद्दग्धुं । प्रभ(वति)विष्यति ? गच्छ पादयोः प्रणम्य । निवर्तयैनम् यावदहमर्घ्योदकं गृहीत्वोपसर्पामि ॥

2 तथा ॥

3 अहो ! आवेगस्खलि(तया)ताया (गत्या) मम प्रभ्रष्टमग्रहस्तात् पुष्पभाजनम् ।

---

हद्धीत्यादि ॥

---

हा धिक् । अप्रियमेव संवृत्तम् । कस्मिंश्चिदपि पूजार्हेऽपराद्धा शून्यहृदया शकुन्तला । न खलु यस्मिन्कस्मिन्नपि । एष दुर्वासाः सुलभकोपो महर्षिः । तथा शप्त्वा वेगबलोत्फुल्लया दुर्वारया गत्या प्रतिनिवृत्तः । कोऽन्यो हुतवहाद्दग्धुं प्रभवति । दृष्टान्तालङ्कारः । गच्छ । पादेषु प्रणम्य निवर्तयैनम् । पादेष्विति द्वितीयार्थे सप्तमी । यावदहमर्घोदकमुपकल्पयामि । तथेति निष्क्रान्ता । अव्वो इति दुःखे । 'अव्वो सूचनादुःखसम्भाषण—' इत्यादिसूत्रेण निपातः । आवेगस्खलितया सम्भ्रमस्खलितया गत्या प्रभ्रष्टं ममाग्रहस्तात्पुष्पभाजनम् । अनेनापशकुनेन दुर्वाससोऽनिवृत्तिः सूचिता । अग्राग्रः स चासौ हस्तश्चेति समानाधिकरणे विशेषणसमासेऽवयवावयविसम्बन्धेन लक्षणा । उक्तं च वामनेन—'हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदाभ्याम्' इति । अन्ये त्वग्रहस्त इत्यखण्ड एवायं शब्दो हस्ताग्रवाचक इत्याहुः । अपरे तु हस्तस्याग्रमित्येव विगृह्याग्रशब्दस्याहिताग्न्यादिपाठात्पूर्वनिपातमाहुः । इतरे तु प्राकृते पूर्वनिपातनियमाभावादधस्ताग्रशब्दमेवाहुः । पुष्पोच्चयं

---

* इयमुक्तिः प्रियंवदायाः ‡ अनसूयायाः इति क्वचित्

**प्रियंवदा**—(प्रविश्य) [1]सहि! पकिदिवक्को कस्स वा सो अणुणअं पडिगेण्हदि? किञ्चि उण साणुक्कोसो किदो ॥

**अनसूया**—(सस्मितम्) [2]तस्सिं बहु एदं वि कहेहि कहेहि ॥

**प्रियंवदा**—[3]जदा अणुणीदो वि णिवत्तिदुं ण इच्छदि, तदा विण्णाविदो मए ॥

**अनसूया**—[4]कहं वि अ?

**प्रियंवदा**—[5]भअवं पुडमभत्तिं अवेक्खिअ अविण्णादप्पहावस्स दुहिदुजणस्स भअवदा एक्को अवराहो मरिसिदव्वोत्ति ॥

**अनसूया**—[6]तदो तदो ॥

---

1 सखि! प्रकृतिवक्रः कस्य वा सोऽनुनयं प्रतिगृह्णाति, किंचित्पुनस्सानुक्रोशः कृतः

2 तस्मिन् बह्वेतदपि । कथय कथय ।

3 यदानुनीतोऽपि निवर्तितुं नेच्छति तदा विज्ञापितो मया ।

4 कथमिव?

5 भगवन्। प्रथमभक्तिमवेक्ष्य अविज्ञातप्रभावस्य दुहितृजनस्य भगवतैकोऽपराधो मर्षितव्य इति ॥

6 ततस्ततः ।

---

प्रकृतिवक्र इत्यनेन शापान्ताकथनशङ्कया सविषादमित्युच्यते ॥ सानुक्रोशः दयासहितः ॥ इत्यनेन हर्षात् स्मितम् ॥ तस्मिन् तादृशसुलभकोपे ऋषौ एतत्सानुक्रोशत्वं ॥ बह्वधिकं तदेवालमिति यावत् ॥

---

रूपयतीति पूर्ववत्। सखि, प्रकृतिवक्रः स कस्यानुनयं प्रतिगृह्णाति। किञ्चित्पुनः सानुक्रोशः सकृपः कृतः। 'कृपा दयानुकम्पा स्यादनुक्रोशोऽपि' इत्यमरः। तस्मिन्बह्वेतदपि कथय । यदा निवर्तितुं नेच्छति तदा विज्ञापितो मया । भगवन्, प्रथम इति प्रेक्ष्य विचार्य। अत्र कोपः कर्तुं युक्तो न वेति विचार्येत्यर्थः। अविज्ञाततपःप्रभावस्य दुहितृजनस्य भगवतैकोऽपराधो मर्षितव्य इति । अयमर्थः—यथा सा कण्वदुहिता तद्वत्तव दुहिता। अथ च दुहिता बालिकातएवाविज्ञाततपःप्रभावा। अतोऽस्याः प्रथम एकोऽपराध इति सोढव्यः ।

**प्रियंवदा**—[1]सो तदो 'णमे वअणं अण्णहा होदुं अरुहदि ॥ किन्दु । अहिण्णाणाहरणदस्सणेण सावो णिवत्तिस्सदि' त्ति मन्त अन्तो एव्व अन्तरिहिदो ॥

**अनसूया**—[2]सक्कं दाणिं अस्ससिदुं अत्थि तेण राएसिणा सम्पत्थिदेण सणामहेयं किदं अङ्गुलीअअं सुमरिणीयं त्ति सअं पिणद्धं ॥ तेण (तस्सिं) साहीणो वा आ सउन्दळा भविस्सदि ॥

**प्रियंवदा**—[3]एहि देवकज्जं दावसेणिव्वत्तेमो (इति परिक्रामतः)

**प्रियंवदा**—(विलोक्य) [4]अनसूए पेक्ख दाव णं वामहत्थोवहिदवअ-(णा)णं आळिहि(दा)दं विअ पिअस (ही) हिं भत्तुगदाए चिन्दाए अत्ताणं वि एसा ण विभावेदि ॥ किं उण आअन्दुअम् ॥

**अनसूया**—[5]पिअंवदे दुव्वेणं एव्व (णं) णो मुहे एसो वुत्तंदो चिठ्ठदु ॥ रक्खणीआ खु पकिदि वेसळा सही ॥

---

1 स ततो 'न मे वचनमन्यथा भवितुमर्हति । किंत्वभिज्ञानाभरणदर्शनेन शापो निवर्तिष्यते' इति मन्त्रयन्नेवान्तर्हितः ॥

2 शक्यमिदानीमाश्वासितुं । अस्ति तेन राजर्षिणा सम्प्रस्थितेन स्वनामधेयाङ्कितमङ्गुळीयकं स्मरणीयमिति स्वयं पिनद्धम् । तेन (तस्मिन्) स्वाधीनोपाया शकुन्तला भविष्यति ॥

3 एहि देवकार्यं तावदस्या निर्वर्तयावः ।

4 अनसूये ! पश्य तावदेनां वामहस्तोपहितवद(नालि)नामालिखि(तेव)तामिव प्रियस(खी)खीम् ॥ भर्तृगतया चिन्तयाऽत्मानमप्येषा न विभावयति किं पुनरागन्तुकम् ॥

5 प्रियंवदे ! द्वयोरेव (ननु) नौ मुखे एष वृत्तान्तास्तिष्ठतु । रक्षणीया खलु प्रकृतिपेशला सखी ॥

---

ततो मे वचनमन्यथाभवितुं नार्हति । किंत्वभिज्ञानाभरणदर्शनेन शापो निवर्तिष्यत इति मन्त्रयन्कथयन्स्वयमन्तर्हितः । शक्यमिदानीमाश्वासयितुम् । अस्ति तेन राजर्षिणा सम्प्रस्थितेन स्वनामधेयाङ्कितमङ्गुलीयकं स्मरणीयमिति स्वयं पिनद्धं परिधापितम् । अस्तीत्यन्वयः । तस्मिन्स्वाधीनोपाया शकुन्तला भविष्यति । देवकार्यं तावन्निर्वर्तयावः । विलोक्येति । शकुन्तलामिति शेषः । अनसूये, पश्य तावत् । वामहस्तोपहितवदना । अत्र वामहस्तग्रहणं स्त्रीस्वभावात् । आलिखितेवेत्युत्प्रेक्षा । अतिनिश्चलत्वं सादृश्यं गम्यम् । प्रियसखी शकुन्तला भर्तृगतया चिन्तयात्मानमपि नैषा विभावयति जानाति । काहं किं करोमि कुत्र तिष्ठामीत्याद्यात्मविषयकमपि ज्ञानं नास्तीत्यर्थः । किं पुनरागन्तुकम् । विभावयतीत्यनुषज्यते । तज्ज्ञानं दूरापास्तमित्यर्थः । द्वयोरेव । नन्वनु मतौ । आवयोर्मुख एव वृत्तान्तस्तिष्ठतु । स्थितेः प्राप्तकालतेत्यर्थः । रक्षितव्या खलु प्रकृतिपेलवा प्रियसखी । पूर्ववाक्यं प्रत्यार्थो हेतुः ।

प्रियंवदा—[1]को (णाम) दाणिं उण्णोदएण णोमालिअं सिञ्चइ ?

(इति निष्क्रान्ते)

विष्कम्भः ॥

(ततः प्रविशति सुप्तोत्थितः शिष्यः)

शिष्यः—वेलोपलक्षणार्थमादिष्टोऽस्मि तत्रभवता प्रवासादुपावृत्तेन काश्यपेन ॥ तत्प्रकाशं निर्गतस्तावदवलोकयामि कियदवशिष्टं रजन्या इति ॥ (परिक्रम्यावलोक्य च) हन्त प्रभातम् ॥

तथा हि—

यात्येकतोऽस्तशिखरं पतिरोषधीना-
माविष्कृतोऽरुणपुरस्सर एकतोऽर्कः ।

---

1 क (कोनाम) इदानीमुष्णोदकेन नवमालिकां सिंचति ?

---

ततः प्रविशतीत्यादि ॥ वेलोपलक्षणार्थं कालपरिज्ञानार्थं ॥ प्रवासादुपावृत्तेन सोमतीर्थात्प्रतिनिवृत्तेन ॥ आदिष्टोऽस्मि आज्ञप्तोऽस्मीति यत्तत्तस्मादित्यर्थः ॥ प्रकाशस्थानं विवृतप्रदेशमित्यर्थः ॥ हन्तेति खेदे ॥

२ यात्येकत इत्यादि ॥ एकतः एकत्र पश्चिमभाग इति यावत् ॥ ओषधीनां पतिश्चन्द्रः अस्तशिखरं याति व्रजति ॥ ह्राससमयतया निस्तेजस्को जात इति भावः ॥ यातीति क्रियापदस्य वर्तमानव्यपदेशेन क्षयिष्णोश्चन्द्रस्य दृष्टिपथ एव पूर्वं यथा स्वस्य तेजस्वित्वमुदयश्च । ततोऽधिकं द्वयमप्यन्यस्य भवतीति व्यज्यते ॥ न तु परोक्ष इति भावः ॥ ओषधीनां पतिरित्येकवचनेन क्षयशीलं पुरुषं सर्वे परित्यजन्तीति व्यज्यते ॥ एकतः एकत्र पूर्वभाग इति यावत् ॥ अर्कस्सूर्यः अरुणपुरस्सरः अरुणः अनूरुः पुरस्सरोऽग्रेसरो

---

को नामोष्णोदकेन नवमालिकां सिञ्चति । वैधर्म्यदृष्टान्तः । 'द्वयोः' इत्यादिनैतदन्तेन शकुन्तलां प्रति शापाकथनच्छद्मना भूताहरणमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'कपटाश्रयं यद्वाक्यमभूताहरणं विदुः' इति । विष्कम्भलक्षणं पूर्वोक्तम् । अयमपि शुद्धविष्कम्भः केवलं प्राकृतेन कृतत्वात् । वेलोपलक्षणार्थं समयज्ञानार्थम् । 'वेला काले च जलधेस्तीरनीरविकारयोः' इति विश्वः ॥

यातीति ॥ ओषधीनां पतिश्चन्द्रः । अतिदुःसहमरणादिविपत्तिसहस्रविनाशका ओषधयस्तासां पतिरप्यस्तशिखरं यातीति । इममर्थमभिद्योतयितुमेतत्पदव्यपदेशः शिखरपदेनात्युच्चैः पतनायेति सूचितम् । अरुणोऽनूरुः पुरःसरो यस्य स तादृशोऽर्क एकतः पूर्वत आविष्कृतः प्रकटीभूतः तेजोद्वयस्य चन्द्रसूर्यरूपस्य युगपदेकदैकसमयोभयदर्शने-

तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवात्मदशान्तरेषु ॥ २

यस्य स तथोक्तः ॥ आविष्कृत आविर्भूतः वृद्धिसमयतया तेजस्वी दृष्ट इति भावः ॥ अरुणपुरस्सर इति विशेषणेन उदयशीलजनस्य सर्वे सहाया भवन्तीति व्यज्यते ॥ आविष्कृत इति भूतार्थेन वर्धिष्णोस्सूर्यस्य पुरस्तादेव । कस्यचिदन्यतेजस्विनः निष्प्रभत्वं नाशश्च भवतीति व्यज्यते तेजोद्वयस्य चन्द्रसूर्ययोः युगपदेकदा एकस्मिन् क्षण इति यावत् ॥ परस्परदृष्टिकथ एवेति भावः ॥ व्यसनोदयाभ्यां ह्रासवृद्धिभ्यां लोकः सुखदुःखवान् जनः ॥ जात्येकवचनं आत्मदशान्तरेषु स्वस्य सुखदुःखावस्थाभेदेषु नियम्यत इव सुखदुःखयोरनियतत्वात्तयोः प्राप्तयोस्ततः तदवस्थानुभवविकारो न कर्तव्य इत्युपदिश्यत इवेत्यर्थः ॥ नाटकनिबद्धनिखिलवर्णनादीनां प्रकृतोपयोगितया योज्यत्वादत्र श्लोके चन्द्रसूर्ययोर्दुःखसुखानुभवकथनेन दुष्यन्तविश्लेषाद्रात्रौ चन्द्रकिरणजनितदुःखं शकुन्तलया सोढुमुचितमिति व्यज्यते ॥ यथा नायकसङ्गमसमये सुखं तद्वत्तद्विश्लेषेऽपि दुःखमुचितमिति शकुन्तलया सोढव्यमित्युपदिश्यत इवेत्यभिप्रायः ॥ नाटकस्य काव्यस्येव यथा तथा बहुवर्णनं प्रकृताश्रयतया कर्तुं न शक्यते ॥ किन्तु निखिलपदवाक्यपदैकदेशरचनावर्णनार्थानां वाच्यलक्ष्य व्यङ्ग्यतात्पर्याणां चन्द्रोदयसूर्योदयवर्णनानामपि प्रकृतोपयोगित्वं महाकविना कर्तव्यम् ॥ नाटकान्तं कवित्वमिति नाटकस्य बहुभारतीयादिलक्षणग्रन्थलक्ष्यत्वादिति भावः ॥ महाकविप्रणीतकाव्यस्य व्यंग्यमेव भूषणं न तु वाच्यालङ्कारादि हि तदुक्तं—"मुख्या महाकविगिरामलंकृतिभृतामपि । प्रतीयमानच्छायैव भूषालज्जेव योषितां" इति ॥ यथा केयूरहारनूपुराद्यनेकालङ्कारालंकृतानामपि स्त्रीणां लज्जैव मुख्या भूषा भवति । तथा चित्रयमकश्लेषाद्यनेकालङ्कारालंकृतानामपि काव्यानां महाकविसम्बन्धिनीनां प्रतीयमानार्थच्छायैव मुख्या भूषा भवति ॥ भवतु च्छायामात्रेणापि ध्वनेर्यैतावस्थानं । तत्र तस्य मुख्यत्वमपि ॥ चित्रयमकश्लेषोपमाद्यलंकृते व्युत्पत्तिमात्रप्रदर्शनफले काव्ये कथमाविर्भवतु व्यंग्यच्छायेति

---

नैव नियमः कर्तुं शक्यते । न तु क्रमिकदर्शनेनेति युगपदित्युक्तिः । स्वव्यसनोदयाभ्यामस्तमयोदयाभ्यां विपत्सम्पद्भ्यां च हेतुभ्याम् । 'व्यसनं विपदि भ्रंशे' इत्यमरः । 'उदयः सम्पदुत्पत्त्योः पूर्वशैले समुन्नतौ' इत्यजयः । लोको जनः । आत्मदशान्तरेषु अन्तरशब्दो विशेषवाची । नियम्यत इवेत्युत्प्रेक्षा । स्वस्वविपत्तिसम्पत्तिदशायां केनापि दुःखहर्षौ न कार्याविति भावः । अत्र पूर्वार्धे यः कश्चिदतिसमृद्धभृत्योऽपि नाशं यात्यन्यो यं कञ्चनासमर्थं सर्वदा स्वाश्रितमुदयन्नेव स्वयमुदयं गच्छतीति सत्पुरुषद्वयव्यवहारसमारोपात्समासोक्तिः । उत्तरार्धे च नियम्यत इति तत्सर्वाचरणे प्रयोगात्सेनव (?) द्वस्तुसम्बन्धसामर्थ्याद्बिम्बप्रतिबिम्बकल्पनरूपा निदर्शना व्यङ्ग्या । उत्प्रेक्षाया वाच्यत्वात् ।

वादिनं प्रत्युच्यते—"निर्गुणं न भवेत्काव्यं गुणाश्च रसगोचराः। तस्माद्रसेन केनापि भाव्यं चित्रेऽप्यनुज्झिता। अनुल्बणत्वाद्व्यंग्यानामव्यङ्गं चित्रमीरितम्। व्यंग्यस्यात्यन्तविच्छित्तिः काव्ये कुत्रापि नेष्यते" काव्येन तावत्सर्वथा गुणवतैव भवितव्यम्॥ गुणाश्च रसधर्मा भवन्ति॥ तस्माच्चित्रेपि काव्ये अनुज्झता केनापि रसेन भवितव्यम्॥ अन्यथा काव्यशब्द-विषयत्वाभावात्॥ तत्कथं काव्यप्रकाशकारेणाव्यंग्यमिति प्रतिपादितमित्याशंक्योक्तम्—"अनुल्बणत्वाद्व्यंग्यानामव्यंग्ये चित्रमीरित"मिति॥ तस्माद्व्यंग्यार्थस्यात्यन्तविच्छित्तिः कुत्रापि काव्ये नेष्यते॥ यथा व्यंग्यत्वेन प्रतिपादिते चित्रकाव्ये व्यंग्यार्थच्छायानुवृत्तिरिति प्रतिपादयति—"अव्यंग्ये तु यथा काव्ये व्यंग्यच्छायानुवर्तते। ध्वनावप्यनलङ्कारे तथा-लङ्कारवासना" इति॥ काव्यस्य केनचिद्रसेन भवितव्यम्॥ रसो व्यंग्यः॥ रसएव काव्यस्यात्मा भवति॥ दोषगुणालङ्काराणां व्यंग्यस्यापि शब्दार्थायत्तत्वे समाने कथं ध्वने-रात्मत्वमित्याशंक्येदमुच्यते—"दोषगुणालंकारास्सर्वेऽपि रसगोचराः॥ काव्यस्यात्मा रसो यस्मादात्मधर्माश्च ते यतः॥ सर्वथा ध्वन्यमानस्वरूपतया रसएव काव्यस्यात्मा॥ आत्मनो धर्माश्च दोषा गुणा अलङ्कारा यस्मात्तस्मात्ते च धर्माएव ननु। काव्येषु शब्ददोषा अर्थदोषाश्शब्दगुणा अर्थगुणाश्शब्दालङ्कारा अर्थालङ्कारा इति व्यवहारः कथमिति चेदुच्यते—"गदशौर्यौ गदादीनामङ्गधर्मतया यथा। शब्दार्थगोचरतया तथा तेषां च कीर्तनम्" यथा लोके आत्मधर्माणां व्याधिरूपाणां शौर्यादिरूपाणां च गुणानामङ्गदा-दिरूपाणामलङ्काराणां च शरीरधर्मत्वेनावस्थानं। तथात्राप्यात्मभूतरसधर्माणां श्रुति-कटुकत्वादिदोषाणां माधुर्यादिगुणानामनुप्रासोपमाद्यलङ्काराणां च शब्दार्थगतत्वेन प्रतिपा-दनमिति ज्ञातव्यम्॥ अपिचेत्यादि॥ अपिच किञ्च॥ प्रातः कालसम्बन्ध्येव किञ्चिदुच्यत इत्यर्थः॥

---

वाच्या निदर्शना यथा—'चूडामणिपदे धत्ते यो देवं रविमागतम्। सतां कार्यातिथे-यीति बोधयन्गृहमेधिनः॥' इति। अत्र प्रभातवर्णने प्रकृत उभयोरपि प्राकरणिकत्वा-दरुणपुरःसरत्वस्य समानतया तुल्ययोगितापि। तेजोद्वयस्य व्यसनोदयाभ्यामिति यथा-सङ्ख्यमपि। हेतुश्च। कतोकतो इति द्वयद्वयेति छेकवृत्त्यनुप्रासौ। वसन्ततिलकावृत्तम्। उद्देश्यप्रतिनिर्देश्ययोरेकपदोपादाननियमे सत्यप्यत्रौषधिप्रत्यर्कशब्दोद्देश्यत्वेऽपि सर्वनाम-वत्तेजोद्वयस्य प्रतिनिर्देशेऽपि तत्र तयोरिति तेजोरूपस्फुरणाज्जगत्स्थितिकारणस्य तेजो-द्वयस्येदृशी गतिरन्यस्य किमु वक्तव्यमित्यर्थस्फुरणाच्च सहृदयतामर्थपोषेण चमत्कार-मेवावहतीत्येतादृशस्थले न दोषावकाश इति ज्ञेयम्॥

अपि च—

अन्तर्हिते शशिनि सैव कुमुद्वती मे
दृष्टिं न नन्दयति संस्मरणीयशोभा ।
इष्टप्रवासजनितान्यबलाजनस्य
दुःखानि नूनमतिमात्रसुदुस्सहानि ॥ ३

३ अन्तर्हित इति ॥ शशिनि चन्द्रे अन्तर्हिते अन्तर्धानं गते सति ॥ सैव कुमुद्वती ॥ या रात्रौ चन्द्रकिरणस्पर्शाद्विकासवत्तया दर्शनीया दृष्टा सैव । कुमुद्वतीति यावत् ॥ संस्मरणीयशोभा अत्यर्थं चिन्तनीयप्रभा ॥ सङ्कोचवत्तया वीतशोभेति यावत् ॥ दृष्टिं रम्यपदार्थसाफल्यहेतुमिन्द्रियं न नन्दयति न प्रीणयति ॥ वर्तमानप्रयोगेण कुमुद्वत्या-स्सुभगत्वासुभगत्वयोरव्यवधानं व्यज्यते ॥ चन्द्रास्तमयानन्तरक्षण एवेति भावः ॥ दृष्टि-मित्येकवचनेन वीतशोभतया पुनस्तदीयदर्शनवैमुख्यं व्यज्यते ॥ इष्टप्रवासेत्याद्यर्थान्तर-न्यासः ॥ अबलाजनस्य स्त्रीजनस्य इष्टप्रवासजनितानि प्रियविरहजनितानि दुःखानि विरह-परम्पराजनितकार्श्यवैवर्ण्यादीनि ॥ अतिमात्रसुदुस्सहानि अतिमात्रं प्रमाणाधिकं सुतराम-विषह्याणि ॥ मरणान्तफलानीति यावत् ॥ तेन स्मृतिगुणगणोद्वेगादिमदनदशाभेदास्सू-च्यन्ते ॥ येन विना न जीव्यते तत्रैवेष्टशब्दप्रयोगः क्रियत इति महाकवीनां सङ्केतः ॥ नूनमिति सम्भावनायाम् ॥ दुःखानीति बहुवचनेन विरहपरम्पराजनितसर्वकार्यालसतादि-विविधदुःखानुभवस्सूच्यते ॥ तेन च स्तम्भप्रळयादिभावास्सूचिताः ॥ अबलाजनस्येत्यनेना-नन्यगत्या विरहदुःखासहिष्णुतायां परा काष्ठा सूचिता ॥ पुरुषस्य बहुवल्लभताया युक्तत्वान्न तथा दुःखानुभव इति भावः ॥ अनेन चन्द्रास्तमयात्कुमुद्वत्या निष्प्रभत्वकथनेन शकुन्त-लाया अपि दुष्यन्तविश्लेषजनितबहुदुःखानुभवोऽस्तीति सूच्यते ॥

अन्तरिति ॥ शशिनि चन्द्रेऽन्तर्हिते व्यवहिते । 'अन्तर्धा व्यवधा' इत्यमरः । यतः स शशयुक्तः कलङ्की, अतस्तस्यान्तर्धानमुचितमिति भावः । या पूर्वं विकसित-कुसुमा कमलोपहारकारिणी सैव तत्रापि या काचन न भवति अपि तु पृथिवी हर्ष-कारिणी मे तापसस्य विषयादिविवेकशून्यस्य दृष्टिं न नन्दयति न हर्षयति । तत्रार्थे हेतुः । कीदृशी । संस्मरणीयाऽदृश्या शोभा यस्याः सा । इष्टः प्रियस्तस्य प्रवासो देशान्तर-स्थितिस्तेन जनितानि दुःखानि । अबलाजनस्येति सुदुःसहत्वेनोक्तम् । अन्यथा स्त्रीजन-स्येत्येव ब्रूयात् । जनशब्देन जातिमात्रग्रहणम् । नूनं निश्चितम् । अतिमात्रमत्यर्थं सुदुः-सहानि । अतिमात्रसुशब्दौ दुःसहत्वस्याप्यशक्यानुष्ठानं बोधयतः । अत्र पूर्वार्धे नायके-ऽन्तर्हिते नायिका दृष्टिं न नन्दयतीति नायकयोर्व्यवहारसमारोपात्समासोक्तिः । उत्तरार्धेन सामान्येन विशेषस्य समर्थनादर्थान्तरन्यासः । इष्टेति जनिजनेति मतिमात्रेति छेक-वृत्तिश्रुत्यनुप्रासाः काव्यलिङ्गं च । वृत्तमनन्तरोक्तमेव । अथ च कौ पृथिव्यां मुद्वती हर्षयुक्ता सैव पूर्वं दृष्टा शकुन्तला । शशिनीति दुष्यन्ते विषयनिगरणात्तद्वंशोद्भवत्वा-द्वान्तर्हितेऽसन्निहिते इत्यादि पूर्वार्धं सर्वं योज्यम् । तेनास्या राजगृहं प्रति प्रस्थापन-सूचकं तृतीयं पताकास्थानमुपक्षिप्तम् । तल्लक्षणमुक्तं मातृगुप्ताचार्यैः—'अर्थोपक्षेपणं यत्र

**अनसूया**—(प्रविश्य पटा(अपटी)क्षेपेण) [1]एव्वं (जइवि) णाम विस अपरम्मुहस्स वि जणस्स ण एदं विदिदं जं (तहवि) तहाविहेण रण्णा सउन्दलाए (अणज्जं) अण्णाअं आअरिदम् ॥

**शिष्यः**—यावदुपस्थितां होमवेळां गुरवे निवेदयामि ॥

(इति निष्क्रान्तः)

**अनसूया**—[2]अहवा पडिबुद्धावि किङ्करिस्सं ण मे उइदेसुवि कर(नि-

1 एवं (यद्यपि) नाम विषयपराङ्मुखस्यापि जनस्य नैतद्विदितम् (तथापि) यत्तथाविधेन राज्ञा शकुन्तलायाम (नार्यं) न्याय्यमाचरितम् ॥

2 अथवा प्रतिबुद्धापि किं करि(ष्ये)ष्यामि ? न मे उचितेष्वपि करणीये(निजकार्ये)षु

**प्रविश्येत्यादि** ॥ पटाक्षेपेण यवनिकापनोदनेन ॥ सूचनं विनैव प्रविश्येत्यर्थः ॥ हर्षशोकादिजनितसम्भ्रमयुक्तस्य पात्रस्य प्रवेशः पटाक्षेपेण क्रियत इति काव्यव्यवहारः ॥

**एव्वमित्यादि** ॥ विषयपराङ्मुखस्येति ॥ विषयेषु स्रक्चन्दनाद्युपभोगार्हार्थेषु पराङ्मुखस्योदासीनस्य ॥ "विषयस्यादिन्द्रियार्थे देशे जनपदेऽपि च" इति विश्वः ॥ विषयरसानभिज्ञस्य वीतरागस्यापीति यावत् ॥ जनस्येति जनशब्देन जननमात्रमुच्यते ॥ न तु लोकोत्तरस्त्रीरत्नसम्भोगविषयक्रीडाविरहजनितसुखदुःखानुभवज्ञस्येति भावः ॥ एतदिष्ट-जनप्रवासदुःखं कान्ताजनस्यासह्यमिति यदेतदित्यर्थः ॥ तथाविधेनेत्यनेन परिग्रहबहुत्वेऽपी-त्यादिना धर्मप्रजार्थमेव शकुन्तला परिगृह्यत इति दुष्यन्तकृतशपथादिकं सूच्यते ॥ राज्ञे-त्यनेन नागरिकतया राज्ञो वञ्चनाप्रकारसामर्थ्यमुक्तम् ॥ शकुन्तलायामित्यनेनारण्यवासि-तया नागरिकजनसंसर्गाभावाद्राजकृतवञ्चनाभिज्ञत्वासामर्थ्यमुक्तम् ॥ अन्याय्यम् ॥ स्वप्र-योजने निवृत्ते स्वविश्लेषदुःखितां शकुन्तलां न स्मरतीति यत्तदन्याय्यमनुचितमिति यावत् ॥ तथाविधेनेत्यनेन तृतीयेऽङ्के 'तपति तनुगात्री'त्यादिना दुष्यन्तस्य स्वशरीरकार्श्यवैवर्ण्यादीनां शकुन्तलाविरहनिमित्तत्वकथनं स्वप्रयोजनार्थं कृत्रिमं ॥ न तु स्वाभाविकमिति भावः ॥

**अहवेत्यादि** ॥ अथवेति पक्षान्तरे ॥ प्रतिबुद्धापि ज्ञातवत्यपि यद्यपि राज्ञस्ता-

न गूढं सविनं (?) भवेत् । श्लिष्टाप्रत्युत्तरोपेतं तृतीयं तन्मतं तथा ॥' इति । शिष्यो-क्तार्थान्तरन्यासश्रवणानन्तरं प्रबुद्धसख्या अनसूयाया अपटीक्षेपेण प्रवेशः । 'नासूचितस्य पात्रस्य प्रवेशो निर्गमोऽपि च' इत्युक्तेः । अपटी जवनिका । 'अपटी काण्डपटीका प्रतिसीरा जवनिका तिरस्करिणी' इति हलायुधः । यद्यप्येवमपिनाम विषयपराङ्मुखस्यापि जनस्याप्येतन्निवेदितमपि न विदितमेवेति योज्यम् । अपेरवधारणार्थत्वात् । तथापि तेन राज्ञा शकुन्तलायामनार्यमाचरितम् । होमवेलानिवेदनार्थं गते शिष्येऽस्यास्तत्र संमार्ज-नादि कर्तुमार्याया एव प्रबोधकाल इति वदति । प्रतिबुद्धोत्थितापि किं करिष्ये । न मे

अकार)णिज्जेसु हत्थपादा पसरन्ति सकामो दाणिं कामोहोदु । जेण असच्चसन्धे जणे सुण्णहिअआ सउन्दळा पदं कारिदा ।। अहवा दुव्वासकोवो एव्वं विआरेदि अण्णहा कहं सो राएसी तारिसाइ मन्तिअएत्ति अस्य काळस्स लेहमेत्तं वि ण विसज्जेदि ता इदो अहिण्णाणं अङ्गुलीआअं से विसज्जेमि ।। दुःखसीळे तपस्सिजणे कोवा अब्भत्थी अदि ।। णं सहीगामिदोसोत्ति वव-

हस्तपा(दं)दाः प्रसर(ति)न्ति । सकाम इदानीं कामो भवतु ॥ येनासत्यसन्धे जने शून्यहृदया शकुन्तला पदं कारिता । अथवा दुर्वासःकोप एवं विकारयति । अन्यथा कथं स राजर्षिस्तादृशानि मन्त्रयित्वा एतावतः कालस्य लेखमात्रमपि न विसर्जयति । तस्मादित अभिज्ञानमंगुळीयकमस्य विसर्जयामि । दुःखशीले तपस्विजने को वाभ्यर्थ्यते ननु सखीगामिदोष इति व्यवसितापि न

दृग्रागातिशयस्तथाप्यन्तःपुरस्त्रीगणहृतचित्ततया विस्मरणकारणं ज्ञातवत्यपीति यावत् ॥ उचितेषु राजानं प्रति स्मारकपत्रलेखादिनिर्माणेषु कृत्येषु ॥ हस्तपादा न प्रसरन्ति ॥ सामर्थ्यभावात्सखीदुःखवशाच्च न प्रवर्तन्त इति भावः ॥ इदानीं साम्प्रतं तादृग्रागातिशयवतो राज्ञस्स्वविश्लेषासहनशीलशकुन्तलाविषयकस्मरणाभावे सति सखीभूतायास्स्वस्या अपि तत्स्मारकपत्रलेखनादिनिर्माणसामर्थ्याभावे सति च साम्प्रतमित्यर्थः ॥ कामः रूपलावण्यादिभिरप्रतिभटस्स कामो भवतु फलितमनोरथपरम्परासहितो भवतु ॥ रूपलावण्यादिविषये स्वशत्रुभूतदुष्यन्तविषयकानुरागाद्यतिशयवतीं शकुन्तलामरविन्दाशोकादिशोषणमोहनादिबाणैस्संहर्तुं विशेषरूपरन्ध्रप्राप्त्या मदनस्य सकामत्वमिति भावः ॥ शकुन्तलायाश्चन्द्रातपकोकिलालापादिस्मरोद्दीपनविभावजनितदुःखेन मरणमेव शरणमित्यभिप्रायः ॥

अहवेत्यादि ॥ दुःखशील इति ॥ आश्रमवासित्वाद्रूपलावण्याद्यपोषक परिमिताहारादिक्लिष्टे तपस्विजने अनागरिकजनविषये ॥ शकुन्तलायामित्यर्थः ॥ कः अभ्यर्थ्यते को वा जनः प्रार्थ्यते ॥ प्रार्थनां कुरुत इति यावत् ॥ राजव्यतिरिक्तो जनः प्रार्थनां न कुरुते ॥ 'रत्नहारी तु पार्थिव' इति न्यायेन लोकोत्तरबहुस्त्रीपरिभावी राजा कथं प्रार्थ्यत इति भावः ॥ अभ्यर्थ्यत इति वर्तमानव्यपदेशेन अनुरागाभावे कथं सम्भोगादिकं कृतमित्याशङ्क्य तात्कालिकमदनबाधानिवृत्त्यर्थमेव तृतीयेऽङ्के अनुरागप्रकटनं राज्ञा कृतम् ॥ न त्वान्तमनुष्ठेयमितिव्यज्यते ॥ यद्यनुरागातिशयोऽस्ति । तर्हि । कथमेनां न स्मरति तादृग्राजाऽद्य स्मारकाङ्गु-

उचितेष्वपि निजकार्येषु हस्तपादं प्रसरति । काम इदानीं सकामो भवतु । अयमर्थः सर्वदा वक्रोऽनार्येष्वेव प्रवर्तत इति साभिलाषो भवतु । तस्याभिलाषः पूर्यतामिति । येन कामेनासत्यसन्धेऽसत्यप्रतिज्ञे । 'सन्धा प्रतिज्ञा मर्यादा' इत्यमरः । जने शून्यहृदया सखी पदं स्थानं कारिता । शून्यहृदयपदं हेतुत्वेनोपात्तम् । अथवा दुर्वाससः कोप एष विकारयत्यन्यथाकारयति । 'वेणीसहर्षा अन्यथात्वपरिणामेषु' इति गणपाठात् । अन्यथा कथं स राजर्षिरिति साभिप्रायम् । तादृशानि मन्त्रयित्वैतावत्कालस्य लेखमात्रमपि न विसृजति । तदितोऽभिज्ञानमङ्गुलीयकं तस्य विसृजावः । दुःखशीले तपस्विजने कोऽभ्यर्थ्यताम् । तत्र गन्तुमिति शेषः । ननु सखीगामी दोष इति व्यवसितापि जातव्यवसा-

सिदा वि ण पारेमि पवासप्पडिणिवुत्तस्स तादकस्सवस्स दुस्सन्दपरिणीदं आवण्णसत्तं सउन्दळं निवेदेदुं ॥ इत्थं गदे किं णु खु अम्हेहिं करणिज्जम् ?

**प्रियंवदा**—(प्रविश्य सहर्षम्) [1]हळा तुवर तुवर सउन्दळाए पत्थाण-कौदुअं णिव्वत्तिदुं ॥

**अनसूया**—[2]कहं एदं ?

**प्रियंवदा**—[3]सुणाहि दाणिं सुहसइदपुच्छिआ सउन्दळाए सआसं गदम्हि ॥

**अनसूया**—[4]तदो तदो ॥

---

पारयामि प्रवासप्रतिनिवृत्ताय तातकाश्यपाय दुष्यन्तपरिणीतां आपन्नसत्वां शकुन्तलां निवेदयितुम् । इत्थं गते किं नु खल्वस्माभिः करणीयम् ॥

1 सखि ! त्वरय त्वरय शकुन्तळायाः प्रस्थानकौतुकं निर्वर्तयितुम् ॥

2 सखि ! कथमेतत् ?

3 शृणु इदानीं सुखशयितपृच्छिका शकुन्तलायास्सकाशं गतास्मि ॥

4 ततस्ततः ॥

---

कीयकप्रेषणेनापि शकुन्तलां न स्मरतीति भावः ॥ यद्वा दुःखशीले राजानं प्रति स्मारकाङ्गुलीयकं नेतुमसमर्थे शृङ्गाररसानभिज्ञ इति यावत् ॥ तपस्विजने सर्वविषयोदासीनजनविषये कः अभ्यर्थ्यते दैन्यपुरस्सरं याच्यते ॥ इत्थं गते एवं प्राप्ते कर्मणीत्यर्थः ॥

**प्रविश्येत्यादि** ॥ प्रस्थानकौतुकं प्रयाणमङ्गळं निर्वर्तयितुं समापयितुम् ॥ ततस्तत इति श्रोतव्यौत्सुक्यद्योतिका वीप्सा प्रस्तुतकथनीयशेषं कथयेत्यर्थः ॥

---

यापि न पारयामि प्रवासप्रतिनिवृत्तस्य तातकाश्यपस्य दुष्यन्तपरिणीतामापन्नसत्त्वां गुर्विणीम् । 'आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी' इत्यमरः । शकुन्तलां निवेदयितुं सम्पादयितुम् । सखीगामी दोष इति निवेदयितुं न पारयामीति सम्बन्धः । अनेन देववाण्यास्या अन्तर्वत्नीत्वं श्रावयिष्यत इति सूचितम् । इत्थङ्गतेऽस्माभिः किं करणीयम् । सखि, त्वरस्व शकुन्तलायाः प्रस्थाने गमनसमये कौतुकं पारम्पर्यागतमङ्गलं निर्वर्तयितुं सम्पादयितुम् । 'कौतुकं नर्मणीच्छायामुत्सवे कुतुके मुदि । पारम्पर्यागतख्यातमङ्गलोद्वाहसूत्रयोः ॥' इति हैमः । कथमेतत् । शृणु । इदानीं सुखशयनपृच्छिका शकुन्तलायाः सकाशं गतास्मि । प्रातर्गत्वा रात्रौ तव सुखशयनं जातमिति या पृच्छति सा सुखशयनपृच्छेत्युच्यते । तेन प्रातः सुखशयनं प्रष्टुं गतास्मीत्यर्थः ।

**प्रियंवदा**—[1]जाव णं लज्जावणद(मुहिं)वअणं परिस्सजिअ ताद कस्सवेण एव्वं अहिणंदिदं ॥ दिट्ठिआ धूमावरुद्धदिट्ठिणो विजअमाणस्स पावए एव्व आहुदी पडिदा ॥ वच्छे सुसिस्सपरिदिण्णा विअ विज्जा असोअणिज्जासि मे संवुत्ता ॥ अज्ज एव्व राए(इ)सिपरिग्गहीदं तुमं भत्तुणो सआसं विसज्जेमित्ति॥

**अनसूया**—[2]अह केण सूइदो अं तादकस्सवस्स वुत्तंदो ?

**प्रियंवदा**—[3]अग्गिसरणं पविट्ठस्स सरीरं विणा छन्दोम ईएवा (णि) आए ॥

**अनसूया**—(सस्मितम्) [4]कहेहि कहेहि ॥

**प्रियंवदा**—(संस्कृतमाश्रित्य)

---

1 यावदेनां लज्जावनत(मुखीं) वदनां परिष्वज्य तातकाश्यपेनैवमभिनन्दितम् । दिष्ट्या धूमावरुद्धदृष्टेरपि यजमानस्य पावक एवाहुतिः पतिता । वत्से सुशिष्यपरिदत्तेव विद्या-अशोचनीयासि मे संवृत्ता अद्यैव राजर्षि (ऋषि) परिगृहीतां त्वां भर्तुस्सकाशं विसर्जयामीति ॥

2 अथ केन सूचितोऽयं तातकाश्यपस्य वृत्तान्तः ?

3 अग्निशरणं प्रविष्टस्य शरीरं विना छन्दोमय्या वाचा ।

4 कथय कथय ॥

---

ततो यावदेनां लज्जावनतमुखीं परिष्वज्य तातकाश्यपेनैवमभिनन्दितम् । दिष्ट्या दैवेन धूमाकुलितदृष्टेरपि यजमानस्य पावक एवाहुतिः पतिता । अनेन दृष्टान्तेन स्वस्य कृत-कृत्यता ध्वनिता । ममायासं विनैव वाञ्छितस्थले सम्बन्धो जात इत्यर्थः । वत्से, सुशिष्यपरिदत्ता विद्येवाशोचनीया संवृत्ता । अनेन तस्याः कृतकृत्यता ध्वनिता । अद्यैव ऋषिरक्षितां त्वां भर्तुः सकाशं विसर्जयामीति । 'वर्तमानसामीप्ये—' इति लट् । अथ केन सूचितः कथितस्तातकाश्यपस्य वृत्तान्तः । अग्निशरणमग्निहोत्रगृहम् । 'शरणं गृह-रक्षित्रोः' इत्यमरः । प्रविष्टस्य शरीरं विनाऽशरीरिण्या छन्दोमय्या वाण्या सूचित इत्यर्थः । संस्कृतमाश्रित्येति । उक्तं च मातृगुप्ताचार्यैः—'योज्यं विदूषकोन्मत्तबालतापस-योषिताम् । नीचानां पण्डकानां च नीचग्रहविकारिणाम् ॥ विद्वद्भिः प्राकृतं कार्यं कारणात्संस्कृतं क्वचित् ॥' इति । अत्र चाशरीरिणीवाण्यनुवाद एव कारणम् । यथा स्थितस्यैवानुवादः । स च संस्कृतमन्तरेण न सम्भवतीति संस्कृताश्रयणम् ॥

दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः ।
अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव ॥ ४

४ **दुष्यन्तेनेति ॥** दुष्यन्तपदेन राजर्षिकन्यायाश्शकुन्तलायाः राजर्षिवरगामिताया युक्तत्वाद्राजर्षिदुष्यन्तपरिग्रहादनुरूपवरप्राप्तिस्सूच्यते ॥ तर्ह्यस्मदनुमत्या कथं दुष्यन्तेन परिगृहीतेत्यत आह—आहितं निषिक्तं तेजो वीर्यं दधानामित्यनेन गान्धर्वविवाहस्सूचितः ॥ गान्धर्वविवाहस्य पित्राद्यनुमत्यापि परस्परसङ्केतिततात्कालिकसम्भोगस्य युक्तत्वात् ॥ सद्यो गर्भधारणेन दुष्यन्तस्यामोघवीर्यत्वं ज्ञाप्यते ब्राह्मार्षादिविवाहविधिविवाहितायाः कन्यायाः ऋतुसङ्गमनादिकालान्तरेऽपि सम्भोगस्य युक्तत्वादिति भावः ॥ भुवः भूमेः भूतये समृद्धय इत्यनेन शकुन्तलाया एव पट्टमहिषीत्वं तज्जनितपुत्त्रस्यैव साम्राज्यमिति च ज्ञाप्यते ॥ धर्मप्रजार्थमेव परिणीता ॥ न तु भोगार्थमिति भावः ॥ किञ्च । भुवो भूतय इत्यनेन जनिष्यमाणो गर्भः पुत्त्रः ॥ न तु पुत्रीति व्यज्यते ॥ स्त्रिया राज्याधिकाराभावादिति भावः ॥ भूशब्देन भूमिस्थजना लक्ष्यन्ते ॥ तत्समृद्धिकथनेन उत्पत्स्यमानस्य भरतस्य षष्ठांशकरग्रहाद्युचितराजधर्मानुष्ठानन्यायप्रवृत्तत्वं सूचितम् ॥ तेन च—"सुराज्ञि देशे राजन्वा"नित्यभिधानात् भुवो राजन्वतीत्वं ज्ञापितम् ॥ शमीमिवेति शम्युपमानेन यज्ञादिकर्मार्हपत्नीत्वं व्यज्यते ॥ अग्निगर्भामित्यनेन भरतस्य तेजस्वित्वेन महारथतया चाप्रतिरथत्वं गम्यते ॥ हे ब्रह्मन् सकलवेदान्तादिशास्त्रार्थे तात्पर्यवेदिन् ॥ ब्रह्मर्षे इति यावत् ॥ अनेन ब्रह्मन्निति सम्बोधनेन ब्रह्मर्षेः काश्यपस्य राजर्षिकन्यकायाश्शकुन्तलायाश्चासवर्णत्वं सूचितम् ॥ अनुरूपराजर्षिकृतगान्धर्वविवाहस्य शास्त्रीयत्वाच्छापो न देयः ॥ किन्तु बहुमतिरेव कर्तव्येति भावः ॥ अवेहि ॥ एतावन्तमनेहसं त्वत्कृतपोषणादिरूपप्रयासस्यानायासेन सफलत्वमवगच्छ ॥ अत्र प्राकृतभाषैव वक्तव्या ॥ कथं संस्कृतभाषाश्रयणं ? इति नाशङ्कनीयम् ॥ कार्यवशाद्भाषाविपर्ययस्याप्युक्तत्वात् ॥ तदुक्तम्—"कार्यतश्चोत्तमादीनां कार्यो भाषाविपर्ययः । देशौचित्याद्वसौचित्यात्कार्या वेषक्रियाभिदा ॥" इति ॥

**दुष्यन्तेनेति ॥** नामानुकीर्तनेन सोमवंशोद्भवत्वेन किमप्याभिजात्यमौदार्यविनयादिगुणसम्पन्नत्वं च व्यज्यते । भुवो भूतय ऐश्वर्यायेति । अनेन तस्य भाविचक्रवर्तित्वं ध्वन्यते । आहितं निषिक्तं तेजो दधानाम् । तेज इति विषयनिगरणेनातिशयोक्तिः । तेन तेजस्त्रयरूपत्वं गर्भस्य ध्वनितम् । तनयामवेहि जानीहि । अग्निगर्भां शमीमिवेति सहजपूतत्वं ध्वनितम् । उपमानुप्रासौ । अनेन मार्गलक्षणमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'भूतार्थवचनं चैष मार्ग इत्यभिधीयते' इति । अशरीरिण्या वाचा सत्यार्थकथनात्प्राप्त्याशानुगम-

**अनसूया**—(प्रियंवदामाश्लिष्य) [1]सहि पिअं मे किन्दु अज्ज एव्वसउन्दला णीअदित्ति उक्कण्ठासाहारणं परितोसं अणुहोमि ॥

**प्रियंवदा**—[2]सहि वअं दाव उक्कण्ठं विणोदइस्सामो सातवस्सिणी णिव्वुदा होदु ॥

**अनसूया**—[3] तेण हि एदस्सिं चूदसाहावलम्बिदे णाळिएरसमुग्गए तण्णिमित्तं एव्व काळन्दरक्खमा णिक्खित्ता मए केसरमालिआ ॥ तं तु (ता इ)मं हत्थसण्णिहिदं करेहि ॥ जाव अहं वि से गोरो (म अलो)अणं तित्थमित्तिअं दुव्वाकिसलआइत्ति मङ्गलसमाळम्भणाइ विरएमि ॥

**प्रियंवदा**—[4]तह करीयदु ॥

**अनसूया**—(निष्क्रान्ता)

**प्रियंवदा**—(नाट्येन सुमनोभाजनं गृह्णाति)

---

1 सखि! प्रियं मे ॥ किंत्वद्यैव शकुन्तला नीयत इति उत्कण्ठासाधारणं परितोषमनुभवामि ॥

2 सखि ! आवां तावदुत्कण्ठां विनोदयिष्यावः ॥ सा तपस्विनी निर्वृता भवतु ॥

3 तेन हि एतस्मिन् चूतशाखावलम्बिते नारिकेलसमुद्गके तन्निमित्तमेव कालान्तरक्षमा निक्षिप्ता मया केसरमालिका । तां त्वं (तदिमां) हस्तसन्निहितां कुरु ॥ यावदहमप्यस्या गो(मृग)रोचनां तीर्थमृत्तिकां दूर्वाकिसलयानीति मङ्गलसमालम्भनानि विरचयामि ॥

4 तथा क्रियताम् ॥

---

त्वम्। सखि, प्रियं मे। किंत्वद्यैव शकुन्तला नीयत इत्युत्कण्ठासाधारणं परितोषमनुभवामि। तेनोत्कण्ठा परितोषश्चेत्युभयमप्यनुभवामीत्यर्थः। आवां तावदुत्कण्ठां विनोदयिष्यावः परिहरिष्यावः। सा तपस्विन्यनुकम्पार्हा निर्वृता सुखिता भवतु। 'तपस्वी त्वनुकम्पार्हः' इत्यमरः। तेनैतस्मिंश्चूतशाखावलम्बिते नालिकेरस्य समुद्गके सम्पुटके एतन्निमित्तमेव कालान्तरक्षमा निक्षिप्ता मया केसरमालिका बकुलमाला। तदिमां हस्तसंनिहितां कुरु। गृहाणेत्यर्थः। यावदहमपि तस्यै तदर्थम्। 'तादर्थ्ये ङिच्च' इति विकल्पेन षष्ठीविधानात्। मृगरोचनां गोरोचनाम्। 'मृगः पशौ कुरङ्गे च' इति विश्वः। तीर्थमृत्तिकां दूर्वाकिसलयानि दूर्वाङ्कुरा इत्येतद्रूपाणि मङ्गलसमालम्भनानि मङ्गलालङ्करणानि विरचय्यैकत्र करोमीत्यर्थः। 'समालम्भनमालेपे तिलकेऽलङ्कृतावपि' इति यादवप्रकाशः। तथा क्रियताम्।

(नेपथ्ये)

गौतमि! आदिश्यन्तां शार्ङ्गरवमिश्राः शकुन्तलानयनाय ॥

**प्रियंवदा**—(कर्णं दत्वा) [1]अणसूए! तुवर(सु) तुवर। एदे खु अत्तिण (उ) अरगामिणो इसिणो सद्दा(वी)अन्ति ॥

(प्रविश्य समालम्भनहस्तानसूया)

**अनसूया**—[2]सहि एहि एहि ॥ गच्छम्ह ॥

(इति परिक्रामतः)

**प्रियंवदा**—(विलोक्य) [3]एसा सुज्जोदए (एव्व) सिहा मज्जिदा। णीवारक्खदहत्थाहिंसोद्धिवाअणिअहिं तावसीहिंअहिणंदि ज्जमाणा सउन्दळा चिट्ठइ ॥ उपसप्पाम णम् ॥

(इत्युपसर्पतः)

(ततः प्रविशति यथोद्दिष्टव्यापाराऽसनस्था शकुन्तला)

**तापसीनामन्यतमा**—(शकुन्तलामुद्दिश्य) [4]जादे! भत्तुणो बहुमानसूअअं महादेवीसद्दं अहिअच्छ ॥ (लहेहि)

---

1 अनसूये! त्वरय॥ (स्व) त्वरय एते खलु हस्तिनगरगामिनो ऋषयः शब्दायन्ते॥ (आकार्यन्ते)

2 सखि! एह्येहि गच्छावः॥

3 एषा सूर्योदये शिखा मार्जिता। नीवाराक्षतहस्ताभिः स्वस्तिवाचनिकाभिस्तापसीभिरभिवन्द्यमाना शकुन्तला तिष्ठति। उपसर्पाव एनाम्॥

4 जाते! भर्तुर्बहुमानसूचकं महादेवीशब्दमभिगच्छ॥ (लभस्व)

---

**प्रविश्येत्यादि ॥** समालम्भनं नाम लेपनविशेषः॥

शिखा मार्जितेत्यनेन अभ्यक्तस्नातेति यावत्॥

---

अनसूये, त्वरस्व। एते खलु हस्तिनापुरगामिन ऋषय आकार्यन्ते। सखि, एहि। गच्छावः। एषा सूर्योदय एव शिखामज्जिता मज्जनं स्नानं कारिता। अभ्यङ्गस्नानं कारितेति यावत्। प्रतिष्ठिता गृहीता नीवारा यैरेवंभूता हस्ता यासां ताभिः। शून्यहस्तानामागमनमनुचितमिति नीवारेत्याद्युक्तिः। स्वस्तिवाचनिकाभिः पारम्पर्येण स्वस्तिवाचनाधिकारिणीभिस्तापसीभिस्तपस्विसुवासिनीभिराशीर्भिरनुगृह्यमाणा (रभिनन्द्यमाना) शकुन्तला तिष्ठति। उपसर्पाव एताम्। जाते पुत्रि, भर्तुर्बहुमानसूचकं महादेवीशब्दं लभस्व।

**अपरा**—[1]वच्चे ! वीरप्पसविणी होहि ॥

**अन्या**—(तृतीया) [2]जादे (अच्छे) भत्तुणो बहुमदा होहि ॥

(इत्याशिषो दत्वा गौतमीवर्जं निष्क्रान्ताः)

**सख्यौ**—(उपसृत्य) [3]सहि सुहमज्जणं दे जादं ?

**शकुन्तला**—[4]साअदं मे पिअसहीणं ? इदो णिसीदह ॥

**उभे**— (मङ्गळपात्राण्यादाय उपविश्य) [5]हळा सउन्दळे ! सज्जा होहि ॥ जाव दे वअं मङ्गळसमाळम्भणं विरएमो ॥

**शकुन्तला**—[6]इदं खु बहु मन्तव्वम् ॥ दुळ्लहंदा(णिं)व मे सहीमण्डणं भविस्सदि ॥

(इति बाष्पं विकिरति)

**सख्यौ**—[7]सहि ण दे उइदं मङ्गळकाळे रोइदुम् ॥

(इत्यश्रूणि प्रमृज्य नाट्येन प्रसाधयतः)

---

1 वत्से ! वीरप्रसविनी भव ॥
2 जाते ! (वत्से) भर्तुर्बहुमता भव ॥
3 सखि ! सुखमज्जनं ते जातम् ?
4 स्वागतं मे प्रियसख्योः ? इतो निषीदतम् ॥
5 सखि शकुन्तले ! सज्जा भव ॥ यावत्ते आवां मङ्गलसमालम्भनं विरचयावः ॥
6 इदं खलु बहु मन्तव्यम् ॥ दुर्लभं (इदानीं) तावन्मे सखीमण्डनं भविष्यति ॥
7 सखि ! न ते उचितं मङ्गलकाले रोदितुम् ॥

---

वत्से, वीरप्रसविनी भव । वत्से, भर्तुर्बहुमता भव । सुखमज्जनं सुस्नानं ते भवतु । स्वागतं मे सख्योः । इतो निषीदतम् । सज्जा भव । यावन्मङ्गलसमालम्भनं विरचयावः । इदमपि बहु मन्तव्यम् । दुर्लभमिदानीं मे सखीमण्डनं भविष्यतीति । उचितं न ते मङ्गलकाले रोदितुम् । अनेन भविष्यद्वियोगः सूचितः । अश्रूणि विसृ(प्रमृ)ज्येति त्रिपताकानामिकया नेत्रदेशगतया । त्रिपताकालक्षणमुक्तं प्राक् । नाट्येनेति त्रिपताकानामिकया तिलकं पार्श्वमुखसन्दंशाभ्यामुभयकरस्थाभ्यां मालाभ्रमराभ्यां तालपत्रद्वयं कर्णपूरद्वयमित्यादि । तल्लक्षणानि तु—अरालाङ्गुष्ठतर्जन्यौ लग्नाग्रे निम्नतां गतः । किञ्चिच्चेतनमध्यः स्यात्तदा सन्दंश उच्यते । स त्रेधा स्यादग्रतश्च मुखतः पार्श्वतः क्रमात् । प्राङ्मुखः पार्श्वमुखः' इत्यस्य लक्षणम् ॥ इति ।

**प्रियंवदा**—[1] सहि आहरणोइदं रूपं अस्समसुलहेहिं पसाहणेहिं वि(प्प)आरीअदि ॥

(ततः प्रविष्टावुपायनहस्तावृषिकुमारौ ॥

**ऋषिकुमारौ**—इदमलङ्करणमलङ्क्रियतामत्रभवती ॥

( सर्वा विलोक्य विस्मिताः )

**गौतमी**—[2]वच्छ णारद! कुदो एदं ?

**प्रथमः**—तातकाश्यपप्रभावात् ॥

**गौतमी**—[3]किं माणसी सिट्ठी ?

**द्वितीयः**—न खलु श्रूयताम् तत्रभवता काश्यपेन वयमाज्ञापिताः शकुन्तलाहेतोर्वनस्पतिभ्यः कुसुमान्याहरतेति तत इदानीम्—

**क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं**
**निष्ठ्यूतश्चरणोपभोगसुलभो लाक्षारसः केनचित् ।**

---

1 सखि आभरणोचितं रूपमाश्रमसुलभैः प्रसाधनैर्वि(प्र)कार्यते ॥

2 वत्स! नारद! कुत एतत्?

3 किं मानसी सृष्टिः ?

---

५ **क्षौममित्यादि ॥** केनचित्तरुणा वृक्षेण मांगल्यं मङ्गलार्थं क्षौममाविष्कृतमुद्भावितम् ॥ न तु शोभार्थं ॥ प्रथमेऽङ्के—इयमधिकमनोज्ञावल्कलेनापि तन्वीति वल्कलस्यापि शोभाकरत्वकथनात् ॥ किन्तु राजगृहगमने स्त्रियाः वल्कलधारणस्यामङ्गलत्वान्मगळार्थमेव ॥ अतः प्रयुक्तं माङ्गल्यमिति ॥ इन्दुपांड्विति विशेषणेन नैर्मल्यकथनादितः पूर्वं केनाप्यनुपभुक्ततया क्षाळननैरपेक्ष्यादविळम्बेन भर्तव्यमिति ज्ञाप्यते ॥

---

अराललक्षणमुक्तं प्राक्—'अङ्गुष्ठमध्यमाङ्गुल्यौ श्लिष्टाग्रे तर्जनी नता । यत्रोर्ध्वे विरले शेषे मकरो भ्रमरो भवेत् ॥ कर्णपूरे तालपत्रे कटकोद्धरणादिषु ॥' इति । आभरणोचितं रूपमाश्रमसुलभैः प्रसाधनैर्विप्रकार्यते । विकृतं क्रियत इत्यर्थः । आभरणोचितमित्यनेन सूचितमाभरणम् । तद्द्वारा तदानयनकर्तॄणामपि सूचनमार्थम् । इत्यृषिकुमारयोः प्रवेशः । विस्मिता इति । अकस्मादलङ्कारदर्शनेन तेषां चातिरमणीयत्वदर्शनेन । वत्स नारद, कुत एतत् । किं मानसी सिद्धिः । न खल्विति पूर्वस्योत्तररूपं भिन्नं वाक्यम् ॥

**क्षौममिति ॥** केनचित्तरुणेन्दुवत्पाण्डु श्वेतम् । मङ्गलकर्मणि साधु माङ्गल्यम् । अनुपहतदशं गोरोचनाचिह्नितपर्यन्तं युगलं चेत्यर्थः । अतएवाग्रे 'परिधेहि सम्पदं खोमजु-

अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-
र्दत्तान्याभरणानि तत्किसलयोद्भेदप्रतिद्वन्द्विभिः ॥ ५

**प्रियंवदा**—(शकुन्तलां विलोक्य) [1]हळा इमाए अब्भुपपत्तीएसूइदा दे भत्तुणो गेहे अणुहोदव्वा राअळच्छी ॥ (त्ति)

**शकुन्तला**—(व्रीळां निरूपयति)

---

1 सखि! अनयाभ्युपपत्या सूचिता भर्तुर्गेहेऽनुभवितव्या राज्यलक्ष्मीः (इति)

---

केनचित्तरुणा ॥ चरणोपभोगसुलभः चरणोपभोगाय पादालङ्करणाय सुलभस्सुखेन लभ्यः ॥ अनुरूपकान्तेन सह क्रीडानां योग्य इति यावत् ॥ अनेनानुरूपवरप्राप्तिर्वनदेवताभिरपि ज्ञाप्यत इति व्यज्यते ॥ लाक्षारसः यावकरसः निष्ठ्यूतः उद्गीर्णः ॥ अन्येभ्यः इतरेभ्यः आपर्वभागोत्थितैः पर्वभागपर्यन्तं निस्सृतैः वनदेवताकरतलैः ॥ पुनः कीदृग्विधैः? तत्किसलयोद्भेदास्तेषां प्रतिद्वंद्विभिः प्रतिपक्षैस्सदृशैरिति यावत् । आभरणानीति बहुवचनेन तत्तदवयवोचितभूषणविशेषाः कथ्यन्ते ॥ अनेन नैपथ्यश्रृङ्गारस्सूचितः ॥ भूषणादिराहित्येऽपि चित्ताकर्षणशीलं वपुराभरणयुक्तं चेद्रमणीयतायां किं वदाम इति भावः ॥

---

अलं' इति । क्षौमं दुकूलमाविष्कृतं दत्तम् । केनचित्तरुणेत्यनुषज्यते । चरण उपभोगो रञ्जनादिस्तत्र सुलभो योग्यः । अनेन विशेषणेनानेकप्रयत्नजनितचरणालेपनयोग्यतायत्नसिद्धेति ध्वनितम् । लाक्षारसोऽलक्तकद्रवो निष्ठ्यूतो दत्तः । पूर्वोक्तरीत्यात्राप्यश्लीलपरिहारः । अन्येभ्यो वृक्षेभ्यः किसलयोद्भेदा उद्भिद्यमानपल्लवाः । लक्षणया रक्ततरत्वकोमलत्वादि व्यङ्ग्यम् । तत्प्रतिद्वन्द्विभिस्तत्प्रतिस्पर्धिभिः । तादृशैरिति यावत् । पूर्वभागं मर्यादीकृत्योत्थितैर्वनदेवताकरतलैराभरणानि दत्तानीत्यन्वयः । अत्र वनदेवताकरतलदत्ताभरणेन तस्या आजन्मावैधव्यसौभाग्ये आभरणानामनर्घत्वादि च व्यज्यते । तत्किसलयेति विशेषणावकाशदानाय तलग्रहणम् । आपर्वेतिविशेषणेन वनदेवतानासदृश्यत्वं सूचयता करतलभागस्यैव दृश्यत्वं वदता तासामेव करणत्वमस्तु किं तद्धस्ततलैरिति शङ्का निरस्ता । स्वभावोक्तिपर्यवसितेन तत्किसलयेति तद्विशेषणेन तेषूद्भेदयोग्यता ध्वनिता । उपमयोः संसृष्टिः । श्रुतिवृत्त्यनुप्रासौ अर्थावृत्तिर्हेतुश्च । शार्दूलविक्रीडितं वृत्तम् । 'अन्यैस्तैः' इति पठित्वा कर्तृप्रक्रमभङ्गः परिहर्तव्यः । करतलैरित्यस्य करणत्वात्केचनात्र समादधते, पूर्वार्धे वृक्षाणां सेवासूचनमुत्तरत्र वनदेवतानामिति तत्कर्तृकत्वमेवोचितमिति । तन्न सम्यक् । करणत्वेनापि तदुपपत्तेः । अन्यथा पूर्वार्धवत्करणानुपादानेऽपि तत्सम्भवात् । किं च पूर्वत्र 'वनस्पतिभ्यः पुष्पाण्याहरत' इत्युत्तरत्र 'काश्यपाय वनस्पतिसेवां निवेदयावः' इति शिष्ययोर्वाक्येन विरोधः स्यात् । अतः पूर्वोक्तमेव ज्यायः । शब्दानुपादान एकपर्वमात्रः प्रत्ययः स्यात्तद्भागशब्दोपादानेऽपि तु पर्वत्रयमपि प्रतीयत इति नावकरत्वम् । तेन विना दानासम्भवादौपम्यासङ्गतेश्च । अनयाभ्युपपत्त्यानुग्रहेण सूचिता भर्तुर्गेहेऽनुभवितव्या राजलक्ष्मीरिति ।

प्रथमः—गौतम! एह्येहि अभिषे (कोत्ती) कावतीर्णाय काश्यपाय वनस्पतिसेवां निवेदयावः ॥

द्वितीयः—तथा ॥

(इति निष्क्रान्तौ)

अनसूया—[1]सहि! अणुपजुत्तभूसणो अअं जणो तह बि चित्तकम्मपरिअएण दाणिं ते अङ्गेसु आहरणविणिओअं करेमो ॥

शकुन्तला—[2]जाणे वो णेउणम् ॥

(उभे नाट्येनालङ्कुरुतः)

(ततः प्रविशति स्नातोत्थितः काश्यपः)

काश्यपः—

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठस्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।

---

1 सखि! अनुपयुक्तभूषणोऽयं जनः ॥ तथापि चित्रकर्मपरिचयेनेदानीं ते अङ्गेष्वाभरणविनियोगं कुर्वः ॥

2 जाने वां नैपु(णम्)ण्यम् ॥

---

६ यास्यतीत्यादि ॥ शकुन्तला यास्यति गमिष्यति ॥ पतिगृहं प्रतीति वक्तव्ये विश्लेषसम्भावनाजनितदुःखवशात्तदुच्चारणं न निस्सृतमिति भावः ॥ यास्यतीति भविष्यद्व्यपदेशेन भविष्यद्गमनं सम्भाव्य अद्य साम्प्रतं गमनात्पूर्वकाल एवेति यावत् ॥ हृदयं सर्वकरणानां प्रधानभूतं चित्तं उत्कण्ठया विश्लेषासहनतया संस्पृष्टमनुषक्तं आवेगयुक्तं

---

'प्रविश्योपायनहस्तौ' इत्यादिनैतदन्तेनोदाहरणमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'यत्तु सातिशयं वाक्यं तदुदाहरणं स्मृतम्' इति । वृक्षाणां चेतनवद्वनदेवताहस्तैरलङ्कारदानवचनात्सातिशयत्वप्राप्त्याशानुगमत्वं प्रकटमेव । अनुपयुक्तभूषणोऽधृतालङ्कारोऽयं जनः । चित्रकर्मपरिचयेनाङ्गेष्वाभरणविनियोगं कुर्वः । जाने वां नैपुणम् । नाट्येनेति कर्तरीमुखेनालक्तकेन पादरञ्जनम् । हंसास्येन च्यूतसन्दंशेनोर्मिकापरिधापनम् । एवमन्यदप्यनुसन्धेयम् । कर्तरीमुखलक्षणं यथा—'अश्लिष्टा मध्यमा पृष्ठे संस्थिता तर्जनी यदा । त्रिपताकस्य हस्तस्य तदा स्यात्कर्तरीमुखः । अलक्तकादिना पादरञ्जने' इति । हंसास्यलक्षणमुक्तं प्राक् ॥

यास्यतीति ॥ अद्याधुना शकुन्तला यास्यति । न तु याता नापि याति, अपि तु यास्यतीति मनसि कृतमात्र एवेति भावः । इति कृत्वा हृदयमुत्कण्ठया संस्पृष्टम् । प्रेमातिशयो द्योत्यते । अत्रोद्देश्यप्रतिनिर्देश्यप्रक्रम इन्द्रियाणां स्वविषयाग्राहकत्वं च हृदयपदो-

वैक्लव्यं मम तावदीदृशमहो स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥ ६

(इति परिक्रामति)

---

जातमिति यावत् ॥ अनेनान्तरिन्द्रियस्य पारवश्यमुक्तम् । तत्सहकारितया प्रवृत्तनिवृत्तानामन्येन्द्रियाणां स्ववशता कुत इति भावः ॥ दर्शनमिति ॥ दृश्यतेऽनेनेति दर्शनं दृष्टिः ॥ दर्शनेन समस्तसुन्दरवस्तुसाफल्यहेतुभूता दृष्टिरिति यावत् ॥ कण्ठस्तम्भितबाष्पवृत्तिकलुषं दुःखवशात् स्वच्छस्यापि बाष्पस्य निस्सरणे सत्यमाङ्गल्यधिया धैर्येण कण्ठ एवोपरोधाद्बाष्पनिस्सरणाभावेन कलुषमाविलं ॥ "बाष्पो नेत्रजलोष्मणो"रिति विश्वः ॥ उचितेष्वपि पुरोवर्तिषु विषयेषु न प्रवर्तत इति भावः ॥ चिन्ताजडं ॥ एतावन्तमनेहसं तत्कृतवृक्षसेचननीवारबल्यादिशुश्रूषास्मरणेन राजगृहगमने सति पुनर्दर्शनाभावरूपचिन्तया च जडं व्यापाररहितं ॥ अनेन सर्वकरणानां स्वस्वविषयव्यापारशून्यता सूच्यते ॥ 'कण्ठस्तम्भितबाष्पवृत्तिकलुष' इत्यपि पाठः । अस्मिन्पाठे कण्ठशब्देन स्वरः कथ्यते—तदुक्तं "स्तनाभोगे स्तनभरः स्वरे कण्ठः प्रकीर्त्यते" इति ॥ कण्ठः स्तम्भितबाष्पवृत्तितया कलुषः सगद्गद इत्यर्थः ॥ अरण्यौकसः अरण्यवासिनः ॥ अनेन वीतरागतया सर्वविषयविमुखत्वं ज्ञाप्यते ममेत्यनेन स्वस्येतरऋषिविलक्षणरागद्वेषादिराहित्यमुच्यते ॥ अत्र तावद्ग्रहणमवधारणे ॥ ममैवेत्यर्थः ईदृशमुक्तनानाप्रकारमिदमनुभवैकवेद्यं ॥ वैक्लव्यं शोकवशादिन्द्रियादिपारवश्यं ॥ पुत्रीविश्लेषसमये कस्य वा वैक्लव्यं नास्तीत्यत आह—स्नेहादिति ॥ अनेन जन्यजनकभावसम्बन्धो निरस्यते ॥ किन्तु शरीरपोषणादिमात्रस्नेहाद्धेतोरिति यावत् ॥ अतएव शकुन्तला यास्यतीति प्रयुक्तं न तु पुत्रीति ॥ तथा प्रयोगे सति पितुः पुत्र्यां स्नेहस्य सर्वलोकप्रसिद्धत्वात् । तदभिधानमनुचितं स्यात् ॥ गृहिणः गृहस्थाः ॥ अनेन प्रत्ययविशेषेण सर्वविषयशीला इति कथ्यन्ते ॥ नवैर्नूतनैरनावृत्तैरिति यावत् ॥ तनयाविश्लेषदुःखैः धर्मप्रजार्थं स्वीकृतभार्याजनितपुत्री विश्लेषजनितदेहशोषकरदशाभेदैर्दुःखैरिति बहुवचनेन संस्कारपर्यन्तं विवेकराहित्येन मरणसध्रीचीनदशानुभवस्सूच्यते ॥ कथं । असंख्यातानिर्वचनीयप्रकारेण पीड्यन्ते बाध्यन्ते ॥ नु जिज्ञासायाम् ॥ व्यभिचारादीनां वाच्यत्वं यद्यपि दोषः । तथापि यत्र तैरन्योऽर्थः प्रतिपाद्यते । तत्र वाच्यत्वेऽपि न दोषः ॥ यथा प्रकृते उत्कण्ठा चिन्ता विक्लवशब्दवाच्यावेगविश्लेषदुःखशब्दवाच्यत्वेऽपि मुनित्वे स्वाभाविक वैराग्योपबृंहितधैर्यलक्षणभावस्य शान्तेर्व्यङ्ग्यत्वेन न दोषः ॥ उत्कण्ठादीनामपि व्यङ्ग्यत्वे भावशान्तेरपि व्यवहितत्वेन चमत्कारो न स्यात् ॥ तथा च सहृदयरञ्जनं झटिति न भवतीति अत उत्कण्ठादीनां वाच्यतैवोचिता ॥

---

पादानमन्तरेण न स्फुरतीति तत्पदोपादानम् । तेन नार्थपौनरुक्त्यम् । स्तम्भिता या बाष्पस्य वृत्तिः प्रवृत्तिः । आरम्भ इति यावत् । तया कलुषः स्वरभङ्गवान्कण्ठः । स्तम्भितत्वे कारणं पुरुषगतधैर्यम् । तेन निर्हेतुत्वं न शङ्क्यम् । हेत्वलङ्कारस्य गम्यत्वं प्रवृत्तस्य स्तम्भयितुमशक्यत्वाद्वृत्तिपदोपादानम् । एतेन स्फुटं वाचोऽप्रवृत्तिर्ध्वनिता । दर्शनं तत्तदिन्द्रियजं ज्ञानम् । चिन्तया जडं स्वस्वविषयाग्राहकम् । मनसश्चिन्तया ग्रस्तत्वात्तेन विना तदग्राहकत्वं तेषाम् । मम तावदादावेवेदृशमनिर्वचनीयमिदमनुभूयमानं स्नेहात्प्रीतिभावाद्वैक्लव्यं विह्वलता । कीदृशो मम । अरण्यौकसो वनवासिनः । अनेन तद्योग्यताप्यसम्भावनीयेति व्यज्यते ।

**प्रथमः**—गौतम! एह्येहि अभिषे (कोत्ती) कावतीर्णाय काश्यपाय वनस्पतिसेवां निवेदयावः ॥

**द्वितीयः**—तथा ॥

(इति निष्क्रान्तौ)

**अनसूया**—[1]सहि! अणुपजुत्तभूसणो अअं जणो तह बि चित्तकम्मपरिअएण दाणिं ते अङ्गेसु आहरणविणिओअं करेमो ॥

**शकुन्तला**—[2]जाणे वो णेउणम् ॥

(उभे नाट्येनालङ्कुरुतः)

(ततः प्रविशति स्नातोत्थितः काश्यपः)

**काश्यपः**—

**यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया**
**कण्ठस्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।**

---

1 सखि! अनुपयुक्तभूषणोऽयं जनः ॥ तथापि चित्रकर्मपरिचयेनेदानीं ते अङ्गेष्वाभरणविनियोगं कुर्वः ॥

2 जाने वां नैपु(णम्)ण्यम् ॥

---

६ **यास्यतीत्यादि ॥** शकुन्तला यास्यति गमिष्यति ॥ पतिगृहं प्रतीति वक्तव्ये विश्लेषसम्भावनाजनितदुःखवशात्तदुच्चारणं न निस्सृतमिति भावः ॥ यास्यतीति भविष्यद्व्यपदेशेन भविष्यद्गमनं सम्भाव्य अद्य साम्प्रतं गमनात्पूर्वकाल एवेति यावत् ॥ हृदयं सर्वकरणानां प्रधानभूतं चित्तं उत्कण्ठया विश्लेषासहनतया संस्पृष्टमनुषक्तं आवेगयुक्तं

---

'प्रविश्योपायनहस्तौ' इत्यादिनैतदन्तेनोदाहरणमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'यत्तु सातिशयं वाक्यं तदुदाहरणं स्मृतम्' इति । वृक्षाणां चेतनवद्वनदेवताहस्तैरलङ्कारदानवचनात्सातिशयत्वप्राप्त्याशानुगमत्वं प्रकटमेव । अनुपयुक्तभूषणोऽधृतालङ्कारोऽयं जनः । चित्रकर्मपरिचयेनाङ्गेष्वाभरणविनियोगं कुर्वः । जाने वां नैपुणम् । नाट्येनेति कर्तरीमुखेनालक्तकेन पादरञ्जनम् । हंसास्येन च्युतसन्दंशेनोर्मिकापरिधापनम् । एवमन्यदप्यनुसन्धेयम् । कर्तरीमुखलक्षणं यथा—'अश्लिष्टा मध्यमा पृष्ठे संस्थिता तर्जनी यदा । त्रिपताकस्य हस्तस्य तदा स्यात्कर्तरीमुखः । अलक्तकादिना पादरञ्जने' इति । हंसास्यलक्षणमुक्तं प्राक् ॥

**यास्यतीति ॥** अद्याधुना शकुन्तला यास्यति । न तु याता नापि याति, अपि तु यास्यतीति मनसि कृतमात्र एवेति भावः । इति कृत्वा हृदयमुत्कण्ठया संस्पृष्टम् । प्रेमातिशयो द्योत्यते । अत्रोद्देश्यप्रतिनिर्देश्यप्रक्रम इन्द्रियाणां स्वविषयाग्राहकत्वं च हृदयपदो-

वैक्लव्यं मम तावदीदृशमहो स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥ ६

(इति परिक्रामति)

जातमिति यावत् ॥ अनेनान्तरिन्द्रियस्य पारवश्यमुक्तम् । तत्सहकारितया प्रवृत्तनिवृत्तानामन्येन्द्रियाणां स्ववशता कुत इति भावः ॥ दर्शनमिति ॥ दृश्यतेऽनेनेति दर्शनं दृष्टिः ॥ दर्शनेन समस्तसुन्दरवस्तुसाफल्यहेतुभूता दृष्टिरिति यावत् ॥ कण्ठस्तम्भितबाष्पवृत्तिकलुषं दुःखवशात् स्वच्छस्यापि बाष्पस्य निस्सरणे सत्यमाङ्गल्यधिया धैर्येण कण्ठ एवोपरोधाद्बाष्पनिस्सरणाभावेन कलुषमाविलं ॥ "बाष्पो नेत्रजलोष्मणो"रिति विश्वः ॥ उचितेष्वपि पुरोवर्तिषु विषयेषु न प्रवर्तत इति भावः ॥ चिन्ताजडं ॥ एतावन्तमनेहसं तत्कृतवृक्षसेचननीवारबल्यादिशुश्रूषास्मरणेन राजगृहगमने सति पुनर्दर्शनाभावरूपचिन्तया च जडं व्यापाररहितं ॥ अनेन सर्वकरणानां स्वस्वविषयव्यापारशून्यता सूच्यते ॥ 'कण्ठस्तम्भितबाष्पवृत्तिकलुष' इत्यपि पाठः । अस्मिन्पाठे कण्ठशब्देन स्वरः कथ्यते—तदुक्तं "स्तनाभोगे स्तनभरः स्वरे कण्ठः प्रकीर्त्यते" इति ॥ कण्ठः स्तम्भितबाष्पवृत्तितया कलुषः सगद्गद इत्यर्थः ॥ अरण्यौकसः अरण्यवासिनः ॥ अनेन वीतरागतया सर्वविषयविमुखत्वं ज्ञाप्यते ममेत्यनेन स्वस्येतरऋषिविलक्षणरागद्वेषादिराहित्यमुच्यते ॥ अत्र तावद्ग्रहणमवधारणे ॥ ममैवेत्यर्थः ईदृशमुक्तनानाप्रकारमिदमनुभवैकवेद्यं ॥ वैक्लव्यं शोकवशादिन्द्रियादिपारवश्यं ॥ पुत्रीविश्लेषसमये कस्य वा वैक्लव्यं नास्तीत्यत आह—स्नेहादिति ॥ अनेन जन्यजनकभावसम्बन्धो निरस्यते ॥ किन्तु शरीरपोषणादिमात्रस्नेहाद्धेतोरिति यावत् ॥ अतएव शकुन्तला यास्यतीति प्रयुक्तं न तु पुत्रीति ॥ तथा प्रयोगे सति पितुः पुत्र्यां स्नेहस्य सर्वलोकप्रसिद्धत्वात् । तदभिधानमनुचितं स्यात् ॥ गृहिणः गृहस्थाः ॥ अनेन प्रत्ययविशेषेण सर्वविषयशीला इति कथ्यन्ते ॥ नवैर्नूतनैरनावृत्तैरिति यावत् ॥ तनयाविश्लेषदुःखैः धर्मप्रजार्थं स्वीकृतभार्याजनितपुत्री विश्लेषजनितदेहशोषकरदशाभेदैर्दुःखैरिति बहुवचनेन संस्कारपर्यन्तं विवेकराहित्येन मरणसध्रीचीनदशानुभवस्सूच्यते ॥ कथं । असंख्यातानिर्वचनीयप्रकारेण पीड्यन्ते बाध्यन्ते ॥ नु जिज्ञासायाम् ॥ व्यभिचारादीनां वाच्यत्वं यद्यपि दोषः । तथापि यत्र तैरन्योऽर्थः प्रतिपाद्यते । तत्र वाच्यत्वेऽपि न दोषः ॥ यथा प्रकृते उत्कण्ठा चिन्ता विक्लबशब्दवाच्यावेगविश्लेषदुःखशब्दवाच्यत्वेऽपि मुनित्वे स्वाभाविक वैराग्योपबृंहितधैर्यलक्षणभावस्य शान्तेर्व्यङ्ग्यत्वेन न दोषः ॥ उत्कण्ठादीनामपि व्यङ्ग्यत्वे भावशान्तेरपि व्यवहितत्वेन चमत्कारो न स्यात् ॥ तथा च सहृदयरञ्जनं झटिति न भवतीति अत उत्कण्ठादीनां वाच्यतैवोचिता ॥

पादानमन्तरेण न स्फुरतीति तत्पदोपादानम् । तेन नार्थपौनरुक्त्यम् । स्तम्भिता या बाष्पस्य वृत्तिः प्रवृत्तिः । आरम्भ इति यावत् । तया कलुषः स्वरभङ्गवान्कण्ठः । स्तम्भितत्वे कारणं पुरुषगतधैर्यम् । तेन निर्हेतुत्वं न शङ्क्यम् । हेत्वलङ्कारस्य गम्यत्वं प्रवृत्तस्य स्तम्भयितुमशक्यत्वाद्वृत्तिपदोपादानम् । एतेन स्फुटं वाचोऽप्रवृत्तिर्ध्वनिता । दर्शनं तत्तदिन्द्रियजं ज्ञानम् । चिन्तया जडं स्वस्वविषयाग्राहकम् । मनसश्चिन्तया ग्रस्तत्वात्तेन विना तदग्राहकत्वं तेषाम् । मम तावदादावेवेदृशमनिर्वचनीयमिदमनुभूयमानं स्नेहात्प्रीतिभावाद्वैक्लव्यं विह्वलता । कीदृशो मम । अरण्यौकसो वनवासिनः । अनेन तद्योग्यताप्यसम्भावनीयेति व्यज्यते ।

**सख्यौ**—[1]हळा सउन्दले ! अवसिदमण्डणासि ॥ परिधेहि सम्पदं खोमजुअळम् ॥

(शकुन्तला उत्थाय परिधत्ते)

**गौतमी**—[2]जादे ! एसो दे आणन्दपरिवाहिणा चक्खुणा परिसज्जन्तो-विअ गुरू उवट्ठिदो ॥ आआरं दाव पडिवज्जस्स ॥

**शकुन्तला**—(सव्रीडं) [3]ताद ! वन्दामि ॥

**काश्यपः**—वत्से !

**ययातेरिव शर्मिष्ठा भर्तुर्बहुमता भव ।**

---

1 सखि शकुन्तले ! अवसितमण्डनासि ॥ परिधत्स्व सांप्रतं क्षौमयुगळम् ॥

2 जाते ! एष ते आनन्दपरिवाहिना चक्षुषा परिष्वजमान इव गुरुरुपस्थितः आचारं तावत्प्रतिपद्यस्व ॥

3 तात ! वन्दे ॥

---

**जाद इति ॥** चक्षुषस्तावदानन्दपरिवाहित्वम् ॥ यथा जलाधारभूते तटाके जलातिशये सत्युत्कूलप्रवाहः तद्वदानन्दस्यापीत्यर्थः । आचारः प्रत्युत्थानवन्दनादिः ॥

७ **ययातेरित्यादि ॥** ययातिर्नाम नहुषपुत्त्रस्सोमवंश्यो राजा ॥ शर्मिष्ठेति वृषपर्वनाम्नोऽसुरराजस्य पुत्त्री ॥ बहुमता गौरविता ॥ भवेत्याशिषि लोट् ॥ यथा पूर्वपरिणीतदेवयानायां वैमुख्येन ययातेश्शर्मिष्ठा बहुमता जाता । तथा स्वान्तःपुरस्त्रीषु वैमनस्याद्दुष्यन्तस्य पट्टमहिषी भवेति यावत् ॥ तर्हि । भोगार्थं वा दुष्यन्तेन परिणीतेत्याशङ्क्याह—सम्राजं चक्रवर्तिनं पुत्त्रमित्यनेन धर्मप्रजार्थमेव त्वं परिगृहीता ॥ त्वज्जनितपुत्त्रस्यैव साम्राज्यमिति भावः ॥ अत्र निदर्शनालङ्कारः ॥ तदुक्तं ॥ "यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्तनं ।

---

गृहिणो गृहनिवासिनः । तद्दुःखाभिज्ञा इति भावः । नवैः प्रथमोत्पन्नैः । द्वितीयवारादौ पूर्वानुभूतत्वान्न तथा दुःखमिति भावः । गृहिण इति व्यतिरेकः । वृत्त्यनुप्रासच्छेकानुप्रासौ । इतिशब्दोपादानाद्धेतुरपि । अनन्तरोक्तमेव वृत्तम् । 'दृष्टिर्जडा चिन्तया' इति पठित्वोद्देश्यप्रतिनिर्देश्यप्रक्रमभङ्गः परिहर्तव्यः । 'दृष्टिर्ज्ञानेऽक्षिण दर्शने' इति कोशात् । अर्थः स एव । 'कथं न तनया-' इति काका योज्यम् । अवसितमण्डना समाप्तभूषणासि । परिधत्स्व साम्प्रतं क्षौमयुगलम् । जाते, एष त आनन्दपरिवाहिणा चक्षुषा परिष्वजन्निवेत्युत्प्रेक्षा । गुरुः कण्व उपस्थितः प्राप्तः । आचारमभ्युत्थानवन्दनादिकं तावत्प्रतिपद्यस्व । तात, वन्दे ॥

**ययातेरिति ॥** अनेन क्रमलक्षणभङ्गमुपक्षिप्तम् । 'तत्त्वोपलब्धिरिष्टस्य क्रम इत्यभिधीयते' इति । आशीर्वादव्याजेन तस्य वरत्वेन च कथनादाशीर्लक्षणो नाट्यालङ्कारोऽपि । 'आशीरिष्टजनाशंसा' इति तल्लक्षणात् ।

सुतं त्वमपि सम्राजं *चक्रवर्तिनमाप्नुहि ॥ ७

**गौतमी**—[1]भअवं! व(रो)रा खु ऐ (सो)दे ॥ ण आसिसा ॥

**काश्यपः**—वत्से! एहि । इतः सद्योहुतानग्नीन् प्रदक्षिणीकुरुष्व ॥

(सर्वे परिक्रामन्ति)

**काश्यपः**—(ऋक्छन्दसाशास्ते)

1 भगवन्! व(रः)रौ खल्वे(षः)तौ, ना(शीः)शिषौ ॥

परापेक्षाव्युदासार्थं तन्निदर्शनमुच्यते" इति ॥ अत्र काश्यपेन स्वस्मिन् शकुन्तलायास्स्नेहव्यपगमाय ययातिशर्मिष्ठापूरुनिदर्शनं कृतम् । पूरुनिदर्शनेन शकुन्तलापुत्त्रस्य भरतस्यासाधारणराज्यप्राप्तिस्सूच्यते ॥ प्रसङ्गादलङ्कारसामान्यस्वरूपमुच्यते—"ये त्वङ्गभूतशब्दार्थद्वारा तं सन्तमेकदा । अलङ्कुर्वन्त्यलङ्कारा हाराद्या इव ते पुनः ॥" प्रस्तुतेऽस्मिन्काव्ये ये पुनर्हाराद्या इव शरीरभूतशब्दार्थद्वारेण संयोगवृत्त्या वर्तमानं विद्यमानं रसं कदाचिदलङ्कुर्वन्ति ते त्वलङ्काराः ॥ गुणास्तु आत्मीयस्थानीयं रसं समवायवृत्त्या नियतस्थितयो ये धर्मा उत्कर्षमापादयन्ति यथा मानवशरीरेष्वात्मानं शौर्यादयस्ते गुणाः ॥ तस्मात्संयोगवृत्त्या वर्तमाना अलङ्कारा बहिरङ्गाः ॥ ननु रसव्यञ्जकत्वतदुत्कर्षाधाराभ्यामात्मधर्मत्वं भवत्वलङ्काराणां पुनरङ्गभूतशब्दार्थविषयाणां रसादिप्रतीतिशून्यकेवलशब्दार्थनिष्ठानां कथमात्मधर्मत्वमिति चेत्? उच्यते ॥ शरीरवर्तिभिर्हारादिभिरात्मैवालङ्कार्यः ॥ नत्वचेतनं शरीरं हारादिभिरलङ्कृतं शवशरीरमनौचित्याद्धास्यावहं भवति ॥ न चेदस्य किञ्चिदनौचित्यादात्मैवालङ्कार्यः ॥ अहमलङ्कृत इत्यभिमानदर्शनाच्च ॥ ननु यत्र रसो नास्ति तत्र किमलङ्काराणां कृत्यमित्यत्राह—यत्र चित्रकाव्ये स्फुटप्रतीतिको रसो नास्ति तत्र चित्रफणितिमात्र विश्रान्ताः॥ यथा चित्रवर्तिनो राजादेरलङ्काराः रसस्य सत्त्वेऽपि कदाचिदलङ्काराणामनुपयोग इत्युक्तत्वात् ॥ तस्मादलङ्कारोपकृतसौन्दर्यस्वीकारमन्तरेणापि रसस्सहृदयचमत्कारकारी भवति ॥ विद्यमानरससम्बन्धीकरणेन स्वतन्त्रवृत्त्या वर्तमानाः पुनरलङ्कारास्स्वामिनि विरुद्धवृत्तयो भृत्या इव द्वेष्या भवन्ति ॥ अलङ्काराणां पुनस्सहृदयहृदयचमत्कारकारित्वं रसानुवर्तनेनैवेति सर्वं निरवद्यम् ॥ अथवा तेषां गुणालङ्काराणां शब्दार्थगतत्वेन व्यपदेश उपचारेणेति प्रतिपादयन्ति—"एषां शब्दार्थयोर्वृत्तिर्गुणवृत्त्यैव सम्मता" इति ॥ अलङ्कारस्वरूपमुक्तम् ॥

**भअवमित्यादि** ॥ भगवन्वरौ खल्वेतौ नाशिषौ । एताविति द्विवचनेन भर्तुर्बहुमता भव सम्राजं; पुत्त्रमाप्नुहीत्येतद्वयं गृह्यते; वरौ वरकल्पावमोघवचने ॥ नाशिषौ; न तु प्रियभाषणे ॥ "आशीरुरगदंष्ट्रायां प्रियवाक्याभिलाषयो"रिति यादवः ॥ वरकल्पावित्यनेन यथा महता तपसा परितुष्टब्रह्मादिभिर्दत्तवरस्त्वमोघस्सन्नविद्यमानमपीप्सितार्थं प्रयच्छति । तद्वत्काश्यपवाक्यमपीति यावत् ॥ नाशिषावित्यनेन ॥ स्वानुग्रहाः फलन्तु वा; न

वरः खल्वेषः । नाशिषः । ऋक्छन्दस्तेन ऋक्छन्दोग्रथितेन वाक्येनेति यावत् ॥

* 'सेव पूरुमवाप्नुहि' इति पाठान्तरम् ॥

अमी वेदिं परितः क्लृप्तधिष्ण्याः
समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः ।
अपघ्नन्तो दुरितं हव्यगन्धै-
र्वैतानास्त्वां वह्नयः पालयन्तु ॥ ८

प्रतिष्ठस्वेदानीम् ॥ (सदृष्टिक्षेपम्) क्व ते शार्ङ्गरवमिश्राः ?

(प्रविश्य)

शिष्याः—भगवन्! इमे स्मः ॥

काश्यपः—शार्ङ्गरव ! भगिन्यास्ते मार्गमादेशय ॥

शार्ङ्गरवः—इत इतो भवती ॥

(शकुन्तला परिक्रामति (सर्वे परिक्रामन्ति)

काश्यपः—अहो सन्निहितदेवतास्तपोवनतरवः !

---

वा; महास्नेहात्सर्वे जनाः आशीःप्रदानं कुर्वन्ति ॥ वरप्रदाने कतिचिदेव माहात्म्यवन्तः प्रभवन्तीत्यर्थः ॥ भर्तुर्बहुमता भव; सम्राजं पुत्रमाप्नुहीति काश्यपोक्त लोट्द्वयपदेशस्य विधिरेवार्थः ॥ नाशीरिति भावः ॥

८ अमी इत्यादि ॥ प्रान्तसंस्तीर्णदर्भाः प्रान्तेषु चतुर्दिक्षु संस्तीर्णा दर्भा येषां ते तथोक्ताः ॥ अनेन त्वत्प्रेषणार्थं मयापि प्रातःकालकर्तव्याग्निहोत्रकर्मादिकं सर्वं निर्वर्तितमिति व्यज्यते ॥ वितानो यागस्तत्सम्बन्धिनो वैतानाः ॥

अहो इत्यादि ॥ सन्निहितदेवताः मिलितदेवताः ॥ अहो इति सम्बुद्धिः ॥ सन्निहितदेवतात्वकथनेन बहुवचनेन चाश्रमस्य सार्वकालिकवसन्तादिसर्वर्तुसान्निध्यं गम्यते ॥

---

अमी इति ॥ अमी पुरतः परिदृश्यमानाः क्लृप्तधिष्ण्याः क्लृप्तस्थानाः । 'धिष्ण्यं स्थाने गृहे भेऽग्नौ' इत्यमरः । अनेन त्रित्वमुक्तम् । समिद्वन्तः ससमिधः । पदसंज्ञायां जश्त्वम् । प्रान्तसंस्तीर्णेति च विशेषणद्वयेन सद्योगतत्वेन प्रकाशमानत्वाच्छुभसूचकत्वं ध्वन्यते । अपघ्नन्तो नाशयन्तः । वैताना यज्ञसम्बन्धिनः । परिकरालङ्कारः । तपोवनतरव इत्यस्य श्लोकेन सम्बन्धः ॥

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥ ९

९ **पातुमिति ॥** या शकुन्तला युष्मासु प्रथमं जलमपीतेषु ॥ न विद्यते पीतं पानं येषान्ते तथोक्ताः ॥ तेषु ॥ पीतमिति भावेक्तः ॥ पातुं न व्यवस्यति नेच्छति ॥ किन्तु पीतेष्वेव पातुं व्यवस्यतीत्यर्थः ॥ पातुमिति पानक्रियाकर्मीभूतं जलमाक्षेपादेव जाघटीति ॥ अनेन स्वशरीरसौख्यमविचार्य सूर्योदयात्प्रागेवोत्थाय वृक्षाणां जलं प्रयच्छतीति व्यज्यते ॥ जलं पातुं न व्यवस्यतीति शकुन्तलापक्षे जलशब्दस्तु फलमूलाद्युपलक्षकः ॥ वृक्षाणां जलं दत्वैव पश्चात्फलमूलादिस्वीकार इति भावः ॥ तेन च वृक्षजलप्रदानादिदुष्करकर्मणि स्ववचनानुकरणतया स्त्रीत्वेऽपि ऋषिक्रियमाणतत्सौशील्यादिप्रशंसा द्योत्यते ॥ व्यवस्यतीति वर्तमानप्रयोगेण सार्वभौमानुरूपवरप्राप्तावपि न गर्वः; किंत्वद्यापि गमनदिवसेऽपि स्ववचनानुकरणशीला जलं प्रयच्छतीति व्यज्यते ॥ वृक्षपक्षेऽपि जलशब्देन कीटादिनिवारणकरीषदानादितत्संरक्षकसामग्री गृह्यते ॥ तर्हि । तपस्विपुत्र्यास्तत्कर्मौचितमेव ॥ कथं तत्प्रशंसा क्रियत इत्यतआह—प्रियमण्डनापीति ॥ इष्टालङ्कारापि ॥ अनेन राजपुत्रीति व्यज्यते ॥ ब्रह्मर्षिपुत्र्याः परिमिताहारादि क्लिष्टव्रतविशेषानुष्ठानतत्परतया स्वदेहालङ्कारादौ वैमनस्यं सम्भोभवीति ॥ तादृशकर्मानर्हेति यावत् ॥ भवतां युष्माकं पल्लवं नवदळम् ॥ स्नेहेनाहेतुपक्षपातेन हेतुना ॥ न तु स्वदेहालङ्करणविमुखतयेति यावत् ॥ नादत्ते न गृह्णाति ॥ पल्लवमित्येकवचनेनानवधानेन लीलया वा कदाप्येकपल्लवभङ्गभीरुता व्यज्यते ॥ भवतामिति बहुवचनेन बहुवृक्षलतानां जलप्रदानादिसंरक्षणक्रियया कदापि शकुन्तलाया विश्रमाभावस्तेन च सुखोचिततादृग्राजर्षिपुत्र्यास्स्वपोषितशकुन्तलायास्स्वाश्रमे कदा सुखानुभवो नास्तीति ऋषेराशयो व्यज्यते ॥ वः युष्माकम् ॥ आद्ये प्राथमिके ॥ कुसुमप्रसूतिसमये यस्या उत्सवो भवति ॥ उत्सूते हर्षमित्युत्सवः ॥ जलप्रदानादिना स्वपरिवर्धित-

---

**पातुमिति ॥** न विद्यते पीतं पानमेषां तेऽपीताः । 'अर्शआदित्वादच्' । तथा च महाभाष्ये—'अकारो मत्वर्थीयः । विभक्तमेषामस्तीति विभक्ताः, पीतमेषामस्तीति पीताः' इति । अथवोत्तरपदलोपो द्रष्टव्यः । 'विभक्तधना विभक्ताः पीतोदकाः पीताः' इति तत्र लोपशब्दार्थमाह कैयटः—'गम्यमानस्याप्रयोग एव लोपोऽभिमतः । विभक्ता भ्रातर इत्यत्र धनस्य यद्विभक्तत्वं तद्भ्रातृषूपचर्यते । पीतोदका गाव इत्यत्राप्युदकस्य पीतत्वं गोष्वारोप्यते' इति । तदभिप्रायेणैव पूर्वव्याख्या । युष्मास्वपीतेषु सा जलं पातुं न व्यवस्यतीत्येतावत्युच्यमाने पूर्वकालतायाः प्राप्तत्वात्प्रथममिति पदमनर्थकमिति चेन्न । तदायमर्थः सम्पन्नः । यदा यदास्या जलपानव्यवसायस्तदा तदा युष्मास्वपीतेषु नेति । अयं चार्थो नाभिप्रेतः । ततः प्रथममिति पानक्रियाविशेषणम् । तेन युष्मास्वपीतेषु प्रथमं जलं पातुं न व्यवस्यतीति । भवत्सूदकव्यतिरेकेण प्रथमं जलपानं न करोतीत्यर्थः । व्यवस्यतीति वर्तमानप्रत्ययेनाधुनाप्येतदवस्थाया अपि तन्निर्वाह इति ध्वन्यते । एवमग्रिमवर्तमानप्रत्यययोरपि

( कोकिल(रवं)रुतं सूचयित्वा )

**अनुमतगमना शकुन्तला तरुभिरियं वनवासबन्धुभिः ।**
**परभृतविरुतं कलं यथा प्रतिवचनीकृतमेभिरीदृशम् ॥** १०

---

वृक्षाणां स्वदृष्टिपथ एव पुष्पोद्गमसाफल्यदर्शनाद्धर्षप्रकाशकाभ्युदयिककर्म प्रवृत्तं भवतीति यावत् ॥ न तु प्रत्यहं देवपूजार्थं पुष्पानयनपरिश्रमधिया वैमनस्यं जायत इति भावः ॥ तेन च प्रत्यहं शकुन्तलाकृतबल्यर्थपुष्पानयनादि शुश्रूषाविशेषश्च द्योत्यते ॥ सेयमिति ॥ या युष्माकं ममापि जलप्रदानादिपुष्पानयनादिशुश्रूषापरा । सेयमिति यावत् ॥ "पिता रक्षति कौमारे भर्ता रक्षति यौवने" इति न्यायेन पतिगृहं याति सहधर्मचारिणी सती धर्मप्रजाजननार्थं व्रजति ॥ सर्वैर्भवद्भिरनुज्ञायतामनुमन्यताम् ॥ पतिगृहमित्यनेन लज्जया शकुन्तला न वदति तस्मान्मयोच्यत इति भावः ॥

**कोकिलरुतमित्यादि ॥** रुतं शब्दम् ॥ आ इति हर्षे ॥

१० **अनुमतेत्यादि ॥** अनुमतगमना अनुज्ञातगमना वनवासबन्धुभिः वनवासपरिचितैः ॥ अनेनाश्रमवृक्षसहवासमात्रकथनेन प्रगल्भजनसहवासाभावादनागरिकतया कैतवानभिज्ञता शकुन्तलाया द्योत्यते ॥ एतादृशी लोकवृत्तान्तानभिज्ञा राज्ञो बहुवल्लभत्वान्नागरिकस्त्रीजनभूयिष्ठे राजगृहे समर्था सती कथं वत्स्यतीति ऋषेश्चिन्ता व्यज्यते ॥ कलमव्यक्तमधुरं पञ्चमस्वरलक्षणमिति यावत् ॥ अनेन वसन्तसमयस्सूच्यते ॥ वसन्तकालएव हि पिकस्वराणां विकस्वरता सम्भोभवीति ॥ यथाशब्द इवार्थकः ॥ प्रतिवचनीकृतमिवेति यावत् ॥

---

व्यञ्जकत्वं बोद्धव्यम् । प्रियमण्डनापीत्यनेन ग्रहणयोग्यता सूचिता । भवतां पल्लवमवतंसादि कर्तुं स्नेहेन नादत्ते । वो युष्माकमाद्ये प्रथमे कुसुमप्रसूतिसमये पुष्पोत्पत्तिकाले यस्या उत्सवो भवति । फलसमयजो हर्षातिशयो वक्तुमेव न शक्यत इत्याशयः । सेयं प्रत्यक्षपरिदृश्यमाना शकुन्तला पतिगृहं याति । सर्वैः । सम्भूयेत्यर्थः । अनुज्ञायताम् । प्रत्येकानुज्ञादाने कालविलम्बो भविष्यतीत्याशयः । पतिगृहमित्यनेनानुज्ञानस्योचितसमयत्वं ध्वनितम् । चेतनव्यवहारसमारोपात्समासोक्तिः । वृत्तिश्रुतिच्छेकानुप्रासाः । हेतुश्च । वृत्तमनन्तरोक्तम् । कोकिलरवं सूचयित्वेति नेपथ्यगतनटत्वेन । ते हि सुशिक्षिताः सर्वे शकुन्तशब्दं कुर्वन्ति ॥

**अनुमतेति ॥** इयं शकुन्तला वनवासबन्धुभिरिति रूपकम् । तरुभिरनुमतगमना यथा कलं परभृतविरुतं कोकिलकूजितं तरुभिरीदृशं प्रत्यक्षतोऽनुभूयमानं प्रतिवचनीकृतम् । विरुतस्य प्रतिवचनेन रूपेण प्रतिरूपयोगात्परिणामः । एवं पूर्वत्रापि । अनुप्रासश्च । अपरवक्त्रं वृत्तम् ॥

(आकाशे)

रम्यान्तरः कमलिनीहरितैस्सरोभि-
श्छायाद्रुमैर्नियमितार्कमयूखतापः ।
भूयात्कुशेशयरजोमृदुरेणुरस्या-
श्शान्तानुकूलपवनश्च शिवश्च पन्थाः ॥ ११

(सर्वे सविस्मयमाकर्णयन्ति)

---

११ रम्यान्तर इत्यादि ॥ रम्यान्तरः उपभोग्यान्तरालः । छायाद्रुमैश्छाया प्रधानैर्वृक्षैः । शान्तो मन्दः अनुकूलो गमनानुवर्ती । पवनः यत्र स तथोक्तः ॥ कुशेशयानां शतपत्राणां रजांसीव मृदुरेणवो यस्मिन् स तथोक्तः ॥ शिवश्शुभः ॥ चशब्दस्समुच्चये ॥

---

रम्यान्तर इति ॥ कमलिनीभिर्हरितैः श्यामलैरिति तद्गुणालङ्कारः । अनेन कमलिनीव्याप्तत्वं ध्वन्यते । कमलिनीशब्देन कमलसंयोगोऽपि । अत एव न बिसिन्यादिपदप्रयोगः । एतादृशैः सरोभी रम्याण्यन्तराणि मध्यानि यस्य सः । एतेन कोमलाङ्ग्यास्तन्व्याः कदाचनादृष्टशरणस्तृषादिपीडाभावो ध्वन्यते । सरोभिरिति बहुवचनेन प्रतिपदं सरसः सत्त्वं सूचितम् । छायाप्रधाना द्रुमास्तैः । तरुमात्रेणार्कतापनिरासः कर्तुं न शक्यत इति छायाप्रधानत्वविशेषणं बहुवचनमपि । तेन विश्रान्तिस्थलसत्त्वं व्यज्यते । विशेषणप्रक्रमभङ्गश्च निरस्तः । नियमितो निषिद्धोऽर्कस्य मयूखा दीप्तयस्तासां तापो यत्र सः । 'मयूखस्त्विट्करज्वालासु' इत्यमरः । अत्रार्कस्य दीप्त्यविनाभावेऽपि पुनर्दीप्तिग्रहणेन मध्याह्नस्था दीप्तिर्लक्ष्यते । तापाधिक्यं फलम् ॥ 'अर्कमरीचितापसः' इति पाठे 'उष्णमरीचिः' इति पठनीयम् । अनेन पूर्वव्यङ्ग्यसहकृतो गमने दुःखाभावो व्यज्यते । कुशेशयस्याम्बुजस्य रजोवन्मृदू रेणुर्यत्र सः । अनेन चरणानुपघातो व्यज्यते । शान्तो मन्दोऽनुकूलः पवनो यत्र सः । अत एव शिवः शुभः पन्था अस्या भूयात् । अत्रैकश्चकारो विशेषणानां समुच्चये । द्वितीयस्त्वनुपपन्नः । शिवश्चेत्यस्य समुच्चये भविष्यतीति चेत्तर्हि पूर्वविशेषणचतुष्टयेऽपि चकार उपादातव्यः स्यान्न चोपात्तः । तेनायमर्थः । शान्तोऽनुकूलश्चासौ पवनश्च यत्र स पन्थाश्च शिवो माङ्गल्यरूपः सुखप्रदश्च । अर्शआदित्वादच् । भूयादिति । 'शिवं मोक्षे सुखे भद्रे' इति विश्वः । वायुमार्गयोरुभयोः प्राकरणिकत्वात्तुल्ययोगितया विशेषणत्रयमत्रापि योज्यम्, अत एव शान्तेत्यादिपदं समस्तं कृतम् । तत्राद्यविशेषणद्वयेन सौगन्ध्यं शीतलत्वं चोक्तम् । शान्तेति मन्दत्वम् । अनुकूलेति शकुनसूचकत्वम् । कुशेशयेत्यनेन वायोर्धूसरत्वमुक्तम् । तेन किञ्चिदशकुनसूचकत्वम् । योग्येन वायुना योग्यस्य पथः सम्बन्धद्योतनात्समालङ्कारो व्यङ्ग्यः । परस्परोपकरणादन्योन्यालङ्कारोऽपि । वृत्तिश्रुत्यनुप्रासौ । उपमाहेतुपरिकरालङ्काराः । वसन्ततिलकावृत्तम् । पांसुलत्वेन राजकन्याङ्गानुमानादनुमानलक्षण-

**गौतमी**—[1]जादे ! दाणिं णादिजणसिणिद्धाहिं अणुण्णादगमणासि ॥ तवोवणदेवदाहिं पणम भअवदीणम् ॥

**शकुन्तला**—(सप्रणामं परिक्रम्य जनान्तिकम्) [2]हला पिअंवदे । (णं) अज्ज-उत्तदंसणोस्सुआएवि अस्समपदं परिच्चअन्तीए दुक्खं दुक्खेण मे चलणा पु(रदो)रोमुहा (प) वट्टंति ॥

**प्रियंवदा**—[3]ण केवलं तवोवणविरहकादरा सही एव्व ॥ तुए एव (ट्ठिद)हिदविओअस्स तवोवणस्सवि दाव समव(त्था)त्थं (दीसइ) पेक्ख ॥

[4]**उग्गलिअदब्भकवळा मिआ परिच्चत्तणच्चणा मोरा ।**

---

1 जाते! इदानीं ज्ञातिजनस्निग्धाभिरनुज्ञातगमनासि तपोवनदेवताभिः प्रणम भगवतीभ्यः

2 सखि प्रियंवदे (आर्यपुत्रदर्शनोत्सुकाया अपि आश्रमपदं परित्यजन्त्या दुःखदुःखेन मे चरणौ पु(रतः)रोमुखौ(प्र)वर्तेते ॥

3 न केवलं तपोवनविरहकातरा सख्येव ॥ त्वयोप(स्थि)हितवियोगस्य तपोवनस्यापि तावत्समव(स्था)स्थां (दृश्यते)पश्य ॥

4 उद्गिलितदर्भकबला मृगाः परित्यक्तनर्तना मयूराः ।

---

**जाद इत्यादि** ॥ जाते वत्से ॥

**हळेत्यादि** ॥ अनेन स्वस्याश्रमावस्थानलब्धशरीरपोषणादिबहुसौख्यानुभवकृतज्ञता प्रकाश्यते ॥

**उग्गळिएति** ॥ अत्र शकुन्तलाविश्लेषसमयजनितदुःखवशान्मृगाणां दर्भकबलभ्रंशकथनेन सार्वकालिकमृगसहवासाच्छकुन्तळायादृष्टिचांचल्यसौभाग्यं ताटस्थ्येन द्योत्यते ॥ एतावत्पर्यन्तं विजातीयमृगैस्सह समयक्षेपः इतः परं बहुपरिचारिकाजनसंकुलसहवासात्सखीभूताया मम विस्मरणं त्वया न कर्तव्यमिति सख्युपालंभगर्भितोक्तिमङ्गमुपक्षिप्तम् । तल्लक्षणं दशरूपके—'अभ्यूहो लिङ्गतोऽनुमा' इति । जाते, ज्ञातिजनवत्स्निग्धाभिरनुज्ञातगमनासि तपोवनदेवताभिः । प्रणम भगवतीः । नन्वार्यपुत्रदर्शनोत्सुकाया अप्याश्रमपदं परित्यजन्त्या दुःखेन मे चरणौ पुरतः प्रवर्तेते । अनेन वधूनां नाभिगृहत्यागे दुःखातिशयो व्यज्यते । न केवलं तपोवनविरहकातरा सख्येव । त्वयोपस्थितवियोगस्य सम्प्राप्तविरहस्यापि । न तु भूतवियोगस्य, न च भवद्वियोगस्येत्यपेरर्थः । तपोवनस्याचेतनस्यापि समवस्था दृश्यते । अवस्थामेव गाथिकया कथयति—

**उग्गलिएति** ॥ उद्गलितदर्भकबलामृग्यः परित्यक्तनर्तना मयूराः । अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः ॥ उद्गलिताश्चर्विता अपि मुखाद्बहिर्निःसृता इत्यर्थः । णिचा

ओसरिअपण्डुपत्ता मुंअन्त्यंसूणि व लदाओ ॥ १२

**शकुन्तला**—(स्मृत्वा)[1]ताद ! लदाभइणिं वणजोसिणिं दाव आमन्तइस्सम् ॥

**काश्यपः**—अवैमि ते तस्यां सोदर्यस्नेहम् ॥

**शकुन्तला**—(लतामुपेत्य) [2]वणजोसिणि ! चूदसङ्गदावि पच्चालिङ्गमं इदो गदाहिं साहाबाहाहिं । अज्जप्पहुदि दूर वट्टिणी खु दे भविस्सम् ॥

---

अपसृतपाण्डुपत्राः मुञ्चन्त्यश्रूणीव लताः ॥

1 तात ! लताभगिनीं वनज्योत्स्नां तावदामन्त्रयिष्ये ॥

2 वनज्योत्स्ने ! चूतसङ्गतापि प्रत्यालिङ्ग मामितो गताभिः शाखाबाहाभिः, अद्यप्रभृति दूरवर्तिनी खलु ते भविष्यामि ॥

---

रपि ज्ञाप्यते ॥ मयूराणां नर्तनपरित्यागकथनेन मयूरसहवासान्मन्दगमनादिगतिविशेषस्सूच्यते ॥ लतानां पाण्डुपत्रापसरणकथनेन वसन्तकालस्सूच्यते ॥ वसन्तसमये लतानां पचेलिमपत्राणि भ्रश्यन्ति ॥ ततस्सुकुमारांकुरपुष्पोद्गमोत्पत्तिः ॥ अनेन विरहिजनासह्यस्मरोद्दीपकमृगमिथुनक्रीडामयूरनर्तनपल्लवपुष्पादिभूयिष्ठाश्रमावस्थित्यपेक्षया वसन्तसमये पतिगृहगमनमेवोचितमिति ज्ञाप्यते ॥ तेन च पूर्ववाक्ये आर्यपुत्रदर्शनोत्सुकाया अपि दुःखदुःखेन मे चरणौ पुरो मुखौ वर्तेते इत्यादिना पतिगृहगमनसमयजनितहर्षादिगोपनार्थं शकुन्तलाकथितस्य सख्या प्रत्युत्तरं दत्तमिति भावः ॥

**स्मृत्वेत्यादि** ॥ अत्राचेतनलतालिङ्गनव्याजेन शकुन्तलायास्सार्वकालिकस्वहृदयस्थितचेतनरूपसखीविषयकस्नेहप्रकर्षः कैमुतिकन्यायेन ज्ञाप्यते ॥

---

दुःखातिशयो ध्वन्यते । उभयोस्तिर्यक्त्वेऽपि सहवासिनाम्यासात्तथोक्तम् । अनेन वध्वाः पतिगृहगमने पितृकुलजनस्य दुःखातिशयो व्यज्यते । बन्धुव्यवहारसमारोपात्समासोक्तिः उत्प्रेक्षानुप्रासश्च । तात, लताभगिनीं वनज्योत्स्नां तावदामन्त्रयिष्ये । लताभगिनीमिति परिणामालङ्कारः । वनज्योत्स्ने, चूतसङ्गतापि मां प्रत्यालिङ्गेतो गताभिः शाखाबाहाभिः । एकदेशविवर्ति रूपकम् । चूतसङ्गतापीत्यत्र भर्तुः स्नेहादप्यधिकः सोदर्यस्नेह इत्यपिना ध्वन्यते । अद्यप्रभृति दूरमत्यर्थं परिवर्तनं व्यावृत्त्य गमनं यस्याः सा तादृशी भविष्यामि ॥

**काश्यपः—**

सङ्कल्पितं प्रथममेव मया तवार्थे
भर्तारमात्मसदृशं सुकृतैर्गता त्वम् ।
चूतेन सं(श्रि)गतवती नवमालिकेय-
मस्यामहं त्वयि च सम्प्रति वीतचिन्तः ॥ १३

१३ **सङ्कल्पितमित्यादि ॥** तवारण्यवासिन्यास्तवेत्यर्थः॥ अर्थे कृते "अर्थेकृते च तादर्थ्ये" इत्युक्तत्वादनुरूपवरप्राप्त्ययोग्यस्थलवासिन्यास्तवार्थे इति यावत् ॥ मयेति वीतरागत्वादरण्यवासितयानुरूपवरसङ्घटनार्थं नानादेशपर्यटनायोग्येन मयेति यावत् ॥ प्रथममेव मेनकाविश्वामित्रपरित्यागानन्तरं त्वदानयनसमयएवेत्यर्थः सङ्कल्पितमनुरूप-वरप्रदानेन लोकाविरुद्धसमुचितं कुर्यामिति प्रतिज्ञातम् ॥ आत्मसदृशं "कन्यावरयते रूप" मिति न्यायेन त्वत्सौन्दर्ययौवनकुलोचितं ॥ आत्मसदृशमित्यनेन यद्यप्यस्मदननुमत्या त्वं दुष्यंतेन परिणीता । तथाप्यनुरूपवरप्राप्तिहेतुना मयापि प्रीतिरेव कृतेति व्यज्यते ॥ भर्तारं—पतिरेव स्त्रियां देव इति न्यायेन स्वस्त्रीत्वरूपलावण्यादिसाफल्यहेतुभूतं सहचरं ॥ अत्र भर्तृशब्दप्रयोगेण धर्मप्रजार्थमेव त्वं परिणीता । न तु भोगार्थमिति पट्टमहिषीत्वं ज्ञाप्यते ॥ अतएव दयितः कान्तः प्रिय इति शब्दो न प्रयुक्त इति ज्ञातव्यं ॥ सुकृतैः पुण्यविशेषैः ॥ बहुवचनेनानेकजन्मान्तरोपार्जितसुकृतविशेषा गृह्यन्ते त्वं गते-त्यनेन सुकृतैरेव गता न तु स्वयत्नविशेषैरिति यावत् ॥ अनेन अनुरूपवरप्रदानरूप-स्वसङ्कल्पस्यानायासेन साफल्यादघटनाघटकं स्वस्य दैवानुकूल्यं सूच्यते ॥ आश्रमपरि-त्यागाद्दुःखं न कर्तव्यं किं त्वनुरूपवरगृहगमनेन हर्ष एव त्वया कर्तव्य इति भावः॥ अस्यां नवमालिकायां अचेतनायामिति यावत् ॥ त्वयि च चेतनायां त्वयि चेत्यर्थः॥ सम्प्रति इदानीं वीतचिन्तः परस्परमुचिताश्रयलाभाच्चिन्तारहितः ॥ अत्र चेतनाचेतनयो-श्शकुन्तलानवमालिकयोस्समानबुद्धिकथनेन काश्यपस्य शकुन्तलादुष्यन्ताभ्यां प्रत्युपका-रलक्षणरत्नधनपश्वादिलाभनैरपेक्ष्यं प्रतीयते ॥

**संकल्पितमिति ॥** मया तपोनिधिना सदा तवार्थे त्वत्प्रयोजननिमित्तम् । प्रयोजनं च योग्यसमागम एव । प्रथममेव सङ्कल्पितं मनसाभीप्सितं, त्वं सुकृतैः पुण्यै-र्मत्कृतैः स्वयं पूर्वजन्मोपार्जितैर्वात्मसदृशमभिजनगुणैः सौन्दर्येण च वयसा च केवलं त्वद्भरणान्नापि तु त्रिभुवनभरणाद्भर्तारं गता प्राप्तासि । योग्यसमागमश्चिन्तितोऽपि पुण्याति-शयादेव भवतीति भावः । इयं पुरतो दृश्यमाना सुष्ठुकृतैः करणैर्निकटरोपणैरालवालादि-पूरणैर्नवमालिका चूतेन सह संश्रितवती । अत्र नायकव्यवहारारोपात्समासोक्तिः । उभयोः प्राकरणिकत्वात्तुल्ययोगिता च । अतएवाह—संप्रत्यस्यां त्वयि च वीतचिन्तो विशेषेण गतचिन्तः । योग्येन योग्यसमागमात्समालङ्कारः । परस्परोपकरणादन्योन्यालङ्कारो व्यङ्ग्यः। हेत्वनुप्रासौ । वृत्तमनन्तरोक्तम् । शकुन्तलापरिगृहीता सेति तस्याः सन्तोषोत्पादनार्थ-मस्यामिति पूर्वनिर्देशः । तेन क्रमप्रक्रमभङ्गः परिहृतो भवति । 'त्वय्यत्र चाहमिति सम्प्रति' इति पठित्वा वा परिहर्तव्यः । अस्मिन्पाठे यथासंख्यालङ्कारः ।

(इतः पन्थानं प्रतिपद्यस्व)

**शकुन्तला**—[1]हळा । एसा दुव्वेणं वो हत्थनिक्खेवो !

**उभे**—[2]अअं जणोदाणिं तुए कस्स हत्थे अप्पिदो ?

(इति बाष्पं विकिरतः)

**काश्यपः**—अनसूये ! अलं रुदित्वा ॥ ननु भवतीभ्यामेव स्थिरीकर्तव्या शकुन्तला ॥

(सर्वे परिक्रामन्ति)

**शकुन्तला**—[3]ताद ! एसा उडजपज्जन्तचारिणी गब्भमन्थरा मिअवहू जदा अणघप्पसवा होइ । तदा किंवि पिअ णिवेदइत्तअं विस(ज्जइस्सह) ज्जेहि ॥

**काश्यपः**—भवतु ॥ नेदं विस्मरिष्यामः ॥

**शकुन्तला**—(गतिभङ्गं रूपयित्वा) [4]किं णु खु एसो पुणो पुणो वि णिवस(णे)णं मे सज्जइ ?

(इति परावर्तते)

---

1 सख्यौ, एषा द्वयोर्वां हस्तविक्षेपः ॥

2 अयं जनस्त्वयेदानीं कस्य हस्तेऽर्पितः ?

3 तात ! एषा उटजपर्यन्तचारिणी गर्भमन्थरा मृगवधूर्यदा अनर्घप्रसवा भवति । तदा मे किमपि प्रियनिवेदयितृकं विसर्ज(यिष्यथ)य ॥

4 किं नु खल्वेष पुनः पुनरपि निवस(ने)नं मे सज्जति ?

---

**तादेत्यादि ॥** अनघप्रसवा व्यसनरहितप्रसूतिरित्यर्थः ॥ प्रियनिवेदयितृकं शोभनज्ञापनपत्रलेखादिकम् ॥ किन्न्वित्यादि ॥

---

एषा वनज्योत्स्ना द्वयोर्ननु निश्चितं युवयोर्हस्ते निक्षेपः । इति परिणामः । अयं जनः कस्य हस्ते समर्पितः । तात, एषोटजपर्यन्तचारिणी गर्भमन्थरा मृगवधूर्यदानघप्रसवा सुप्रसवा भवति तदा मह्यं कमपि प्रियनिवेदयितृकं विसर्जयिष्यथ । गतिभङ्गं रूपयित्वेति । ऊरूद्वृत्तया चार्या । तल्लक्षणं तु—'पार्ष्णिः पादस्य चेदग्रतलसञ्चरसंज्ञितः । अन्याङ्घ्रिपृष्ठाभिमुखो विपर्यासोऽथवा भवेत् ॥ नाभ्यन्यजङ्घानमिता जङ्घा चेन्नतजानुका । तज्जेर्ष्यानतिभङ्गेषु चार्यूरूद्वृत्तसंज्ञिता ॥' इति ।को नु खल्वेष निवसने मे सज्जते । परावर्तत इति । अपक्रान्तया चार्या । तल्लक्षणं तु—'बद्धां विधाय चारी चेदुद्धृत्याङ्घ्रिं च कुञ्चितम् । पार्श्वे विनिक्षिपेच्चारीमपक्रान्तां तदादिशत् ॥ ऊरुद्वयस्य वलनं जङ्घास्वस्तिकसंयुतम् । भङ्क्त्वा वा स्वस्तिकं पादतलाग्रे मण्डलभ्रमम् ॥ कृत्वा पार्श्वगतं स्वं स्वं यत्र बद्धेति सा मता ॥' इति

काश्यपः—वत्से !

यस्य त्वया व्रणविरोपणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
श्यामाकमुष्टिपरिवर्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥ १४

शकुन्तला—[1]वच्छ! किं सहवासपरिच्चाइणिं मं अणुसरसि ? अचिरप्पसूदाए जणणीए विणावि वड्ढिदो एव्व ॥ दाणिं वि तुमं मए विरहिदं तादो चिन्तइस्सदि ॥ णिवट्टेहि दाव ॥ (इति रुदती प्रस्थिता)

---

1 वत्स! किं सहवासपरित्यागिनीं मामनुसरसि ? अचिरप्रसूतया जनन्या विनापि वर्धित एव ॥ इदानीमपि त्वां मया विरहितां तातश्चिन्तयिष्यति ॥ निवर्तस्व तावत् ॥

---

१४ **यस्येति ॥** यस्य मुखे कुशसूचिविद्धे दर्भाङ्कुरक्षते व्रणविरोपणं व्रणसमाधायकं न्यषिच्यत नितरामसिच्यत ॥ निरित्युपसर्गेण व्रणावसानपर्यंतं तदेकतानचित्तत्वं द्योत्यते ॥ श्यामाकमुष्टिपरिवर्धितकः धान्यविशेषमुष्टिभिः पोषितः ॥ मुष्टिपरिवर्धितक इत्यनेन भूसंसर्गेण व्रणे तृणादिकं लग्नं स्यादिति हस्तेनैवाहारादिकं दत्तमिति यावत् ॥ वर्धितक इति कप्रत्ययेनानुकम्पया वर्धित इति द्योत्यते ॥ "अनुकम्पायां क" इत्युक्तत्वात् ॥ पुत्रकृतक इति बालार्थे कप्रत्ययः ॥

---

**यस्येति ॥** त्वयात्यन्तदयार्द्रया । मातृभूतयेत्यर्थान्तरसंक्रमितम् । यस्य कुशानां सूचिभिः सूच्याकारैरग्रैर्विद्धे कृतक्षते । सूचीशब्दस्तीक्ष्णाग्रत्वेन सम्बन्धेनाग्रं लक्षयन्वेधयोग्यातिशयं ध्वनयति । कश्चित्तु वेधस्याग्रेणैव सम्भवादवकरत्वं मन्यते तदा कुशा एव सूचय इति रूपकसमासेन व्याख्येयम् । वेधस्य साधकस्य सत्त्वात् । ननूपमासमासेऽपि स न बाधक इति स एवास्त्विति चेन्न । एतस्मिंस्तु समासे पूर्वपदप्राधान्यात्तत्कृतवेधस्य दारुणत्वं न प्रतीयते । रूपकसमासे तूत्तरपदप्राधान्याद्वेधानां बुद्धिपूर्वकपदत्वेन दारुणत्वप्रतीतेः स एव ज्यायान् । मुखे व्रणविरोपणं व्रणशमकमिङ्गुदी तापसतरुस्तत्फलतैलं न्यषिच्यत सिक्तम् । दत्तमिति यावत् । सोऽयमग्रे दृश्यमानो मृगः श्यामाको धान्यविशेषस्तन्मुष्टिभिः परिवर्धितः । कः समासान्तः । स्वयमत्तुमसमर्थस्य श्यामाकान्मुष्टौ गृहीत्वा मुखेऽर्पितवतीत्यादि पोषणप्रकारं सूचयितुं मुष्टिपदोपादानम् । सोऽयमित्यादिना जन्मारभ्य यावन्मृगत्वं प्राप्तस्तावत्त्वयैवं पोषित इति व्यज्यते । ते तव पुत्रकृतकः कृत्रिमपुत्रः । आहिताग्निपाठात्परनिपातः । पदवीं मार्गं न जहाति । त्वदनुगामी भवतीत्यर्थः ॥ मृगस्वभावोक्तिः । व्रविरो तकोतक इति च्छेकश्रुतिवृत्त्यनुप्रासाः । वृत्तमनन्तरोक्तम् ।

वत्स, किंसहवासपरित्यागिनीं मामनुसरसि । अचिरप्रसूतया जनन्या विना वर्धित एव । इदानीमपि मया विरहितमपि त्वाम् । इत्यनेन स्वस्य मातृतुल्यस्नेहत्वं ध्वनितम् । तातश्चिन्तयिष्यति । निवर्तस्व तावत् ॥

**काश्यपः**—

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
बाष्पं कुरु स्थिरतया वि(ह)रतानुबन्धम् ।
अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति ॥ १५

**शार्ङ्गरवः**—भगवन्! ओ(उ)दकान्ता(न्तं)त् स्निग्धो जनोऽनुगन्तव्य इति श्रूयते ॥ तदिदं सरस्तीरम् ॥ अत्र सन्दिश्य नः प्रतिगन्तुमर्हसि ॥

**काश्यपः**—तेन हीमां क्षीरवृक्षच्छायामाश्रयामः ॥

(सर्वे परिक्रम्य स्थिताः)

**काश्यपः**—(आत्मगतम्) किं नु खलु तत्रभवतो दुष्यन्तस्य युक्तरूपमस्माभिस्सन्देष्टव्यम्?

(इति चिन्तयति)

---

१५ **उत्पक्ष्मणोरिति** ॥ खलु यतो हेतोः अलक्षितनतोन्नतभूमिभागे अदृष्टनिम्नोन्नतभूमिप्रदेशे विषमीभवन्ति विपरीतानि भवन्ति ॥ स्खलन्तीति भावः ॥ ततो हेतोः उपरुद्धवृत्तिः उपरुद्धा अन्तरिता वृत्तिर्व्यापारो येन तत्तथोक्तम् ॥ रहितानुबद्धं रहितः त्यक्तः अनुबद्धस्सम्बद्धो येन तथोक्तम् ॥

**किं नु खल्वित्यादि** ॥ युक्तरूपं योग्यतरं कुलगोत्रचरितानुरूपमिति यावत् ॥ प्रशंसायां रूपप्प्रत्ययः ॥

---

**उत्पक्ष्मणोरिति** ॥ उदूर्ध्वं पक्ष्मणी ययोर्लोचनयोर्विषय उपरुद्धा वृत्तिः प्रवर्तनं यस्य तं बाष्पं स्थिरतया स्थैर्येण । धैर्येणेति यावत् । विहतो दूरीकृतोऽनुबन्धः पुनःपुनरुत्पत्तिर्यस्य तं कुरु । उत्पन्नमश्रूर्ध्वीकृतैः पक्ष्मभी रुद्धं तदधिकं चेत्तदधःपतनेऽमङ्गलमिति त्वं निरुन्धीति भावः । उत्पक्ष्मणोरिति विशेषणदानार्थं नयनपदम् । अन्यथा बाष्पस्य तदविनाभावित्वादार्थं पौनरुक्त्यं स्यात् । अत्र हेतुमाह—अस्मिन्निति । खलु यस्मादर्थे । न लक्षितो न दृष्टो नतोन्नतो भूमिभागो यत्र तस्मिन्मार्गे ते तव पदानि विषमीभवन्ति । उच्चावचेषु निपतन्तीत्यर्थः । अत्र यात्रासमयेऽमङ्गलशब्दोच्चारणमपि नोचितमिति तच्छ्रवणेन तस्या आशङ्का भविष्यतीति विषमपदत्वं हेतुत्वेनोक्तम् । पदार्थवाक्यार्थरूपयोः काव्यलिङ्गयोः संसृष्टिः । छेकवृत्त्यनुप्रासौ । वृत्तमनन्तरोक्तम् । क्षीरवृक्षेति प्लक्षादेरुपलक्षणम् । तेन

**शकुन्तला**—(जनान्तिकम्) [1]हळा! पेक्ख दक्खिणदो णळिणीपत्तन्तरिदं वि सहअरं अदेक्खन्ती आदुरा चक्कवाई आरसइ ॥ दुक्करं खु अहं करेमी(त्ति) ॥

**अनसूया**—[2]सहि! मा एव्वं मन्तेहि ॥

[3]एसावि पिएण विणा गमेइ रअणिं विसाददीहअरं ।

---

1 सखि! पश्य दक्षिणतो नळिनीपत्रान्तरितमपि सहचरमपश्यन्ती आतुरा चक्रवाकी आरसति ॥ दुष्करं खल्वहं करोमि (इति)॥

2 सखि मैवं मन्त्रयस्व ॥

3 एषापि प्रियेण विना गमयति रजनीं विषाददीर्घतरां ।

---

**हळेत्यादि ॥** अत्र चक्रवाकीशब्देन पक्षिजातेर्वात्स्यायनादिमदनशास्त्राभिज्ञताधिकाराभावात् सम्भोगमात्रसुखाभिज्ञता सूच्यते ॥ न तु नैपथ्यात्मक क्रियात्मकबहुविधशृङ्गारोचितेति यावत् ॥ तादृशी चक्रवाकी सहचरं प्रियम् ॥ सहचरशब्दप्रयोगेण पक्षिजातेर्विधिनिषेधात्मकशास्त्रपाठानुष्ठानानधिकारतया कर्मपारवश्याभावात् सार्वकालिकसम्भोगादिक्रीडापरता व्यज्यते ॥ न तु कार्यान्तरचिकीर्षया कदापि मनुष्य इव विदेशगमनोद्योगपर इति यावत् ॥ अत एव सहचरशब्दप्रयोगः ॥ न तु कान्तः प्रिय इति प्रयुक्तः ॥ नळिनीपत्रान्तरितं नळिनीपत्रमात्रव्यवहितं न तु भित्यादिव्यवहितं विदेशस्थं वा ॥ अपश्यन्तीत्यनेन दर्शनाभावमात्रमेव किन्तु तदीयप्रतिस्वरादिकं ज्ञायत इत्यर्थः ॥ आरसति ॥ आसमन्ताच्छब्दायते ॥ वर्तमानव्यपदेशेन तस्य बहुविधदुःखाविष्करणं प्रदृश्यते ॥ अहमित्यनेन पूर्वोक्तगुणविलक्षणा स्रक्चन्दनवस्त्रभूषणादिविषयार्हा मानुषी लब्धैकवारप्रियसम्भोगा च । तादृश्यहमित्यर्थो गृह्यते ॥ दुष्करं दुष्कृत्यं अनुचितमिति यावत् ॥ युवतिकृत्यं न भवतीति भावः ॥ करोमि अनुतिष्ठामि ॥ स्ववशगेन्द्रियगणा जीवामीत्यर्थः ॥ प्रियस्य चिरविश्लेषेण मरणे समुचिते सति स्वयं तद्विपरीतमेव करोमीति भावः ॥ मैवमिति ॥ एवमिति उक्तनिर्वेदवचनम् ॥ मेति प्रतिषेधे ॥ कदापि न वदेत्यर्थः ॥

१६ **एसेति ॥** एषा क्षणमपि प्रियविश्लेषासहनशीला तादृश्येषा चक्रवाकीति यावत् ॥ प्रियेण कान्तेन यद्दर्शनादर्शने एव जीवितमरणयोर्हेतू तत्रैव प्रियशब्दप्रयोगः क्रियत इति महाकवीनां सङ्केतः ॥ तादृशप्रियेण विना प्रियसंसर्गमन्तरेणापि ॥ रजनीं

---

छायाधिक्यं ध्वनितम् । प्रशस्तं युक्तं युक्तरूपम् । पश्य । नलिनीपत्रान्तरितमपि सहचरमपश्यन्त्यातुरा चक्रवाक्यारौति दुष्करमहं करोमीति । एतावद्दिनं भर्त्रा विना स्थितास्मीति भावः । सखि, मा एवं मन्त्रय ॥

**एषेति ॥** गाथा । एषा चक्रवाकी क्षणमपि तेन विना तिष्ठन्ती । सापीत्यपिशब्दार्थः । न नाथो न कान्तोऽपि तु प्रियस्तेनापि नागमयत्येव नापि मध्ये रजनीमविच्छेदो

गरुअंवि विरहदुक्खं आसाबन्धो सहावेदि ॥ १६

काश्यपः—शाङ्गरव । (इति)त्वया मद्वचनात्स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः ॥

शार्ङ्गरवः—आज्ञापयत्वत्रभवान् ॥

काश्यपः—

अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम् ।

---

गुर्वपि विरहदुःखमाशाबन्ध(स्सा)स्सहयति ॥

---

चन्द्रातपमलयमारुतादिसन्निधानेनाखण्डितमदनप्रचुराद्यनेकबहुविधक्रीडोचितसमयां निशामित्यर्थः ॥ गमयति बुद्धिपूर्वकं प्रत्यहं नयति ॥ न तु दैवात्कादाचित्कप्रियसंसर्गशून्यारजनीं गमयतीत्यर्थः ॥ दीर्घतरं बहुकालव्यापकं विरहिजनासह्यषड्तुव्यापकमपीत्यर्थः ॥ गुरुकं प्रमाणाधिकं स्मृतिगुणोद्वेगादिक्रमेण मरणान्तफलकमपीत्यर्थः ॥ विरहदुःखं इष्टजन विप्रयोगजनितदुःखम् ॥ आशाबन्धः प्रियसमागमप्रत्याशा सहयति मर्षयति ॥ तथा मेघसन्देशे—"आशाबन्धः कुसुमसदृशं प्राण" मित्यादौ ॥

१७ अस्मानित्यादि ॥ अस्मानिति बहुवचनेन पुत्रीभूतशकुन्तलायाः अनायासेनानुरूपवरप्राप्त्या स्वस्य कृतार्थता सूच्यते ॥ तेन राजकृतगान्धर्वविवाहं प्रति स्वस्य हर्षजनितप्रीतिश्च प्रकाश्यते ॥ तर्हि सर्वत्र कन्यकाया वर्णानुरूपवरः किं दुर्लभ इत्यत आह—संयमधनानिति ॥ संयमधनान् तपोधनानित्यनेन स्वस्य सार्वकालिकात्मस्वरूपमननपरत्वादरण्यवासित्वाच्चानुरूपवरविचारार्थं नानादेशभ्रमणासामर्थ्यं व्यज्यते ॥ किञ्च संयमधनानित्यनेनास्मदसन्निधानेऽपि त्वत्कृतगान्धर्वविवाहादिवृत्तान्तस्तपोमहिम्नाज्ञात इत्यपि ज्ञाप्यते ॥ साधु विचिन्त्य ॥ यद्यपि राज्ञस्सार्वकालिकराज्यपरिपालनपरतन्त्रता । तथाप्यस्मदनुरोधेन क्षणमात्रं समवधाय सम्यग्विशेषेण चिन्तयित्वा ॥ संयमधनानित्यनेन स्वस्य राजनिमित्तकधनवस्त्रादिनैरपेक्ष्यं ज्ञाप्यते ॥ किंतु राज्ञएव तपो-

---

नापि तस्याः तथाशोच्यत्वमिति भावः (?) । रञ्जयति लोकानिति रजनीमात्रम् । अपितु विषादेन दुःखेन दीर्घतराम् । अथ च विषादो येषां ते विषादा विरहिणः । अर्शआद्यच् । तेषां दीर्घां केवलं न । दीर्घतरामपीति पञ्चसु स्थानेष्वपियोज्यः । गुर्वपि विरहदुःखमाशाबन्धः साहयति । अर्थान्तरन्यासः ॥

अस्मानिति ॥ संयम एव धनं येषां तानस्मान्साधु सम्यक्तया विचिन्त्य । मुन्यादिपदत्यागेन संयमधनपदग्रहणमङ्गीकारानङ्गीकारयोर्भयानुग्रहौ दर्शयति । आत्मन उच्चैः कुलम् । साधु विचिन्त्येत्यनुषज्यते । तादृशकुलोत्पन्नस्यालीकप्रतारणादिसम्भावना नास्तीति भावः । अस्यास्त्वयि तां स्नेहप्रवृत्तिं स्नेहप्रवाहम् । आधिक्यमिति यावत् ।

सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतःपरं न खलु तद्वाच्यं वधूबन्धुभिः ॥ १७

धनानुग्रहापेक्षेति भावः ॥ अनेन स्वाश्रमपरिपोषितशकुन्तलायाः तादृङ्नागरिकजनसहवासाभावात् कैतवानभिज्ञतया सौशील्यादिगुणाः प्रकाश्यन्ते ॥ गान्धर्वविवाहं प्रति स्वकृतानुज्ञायां हेतुमाह—उच्चैः कुलमित्यादि ॥ आत्मनः स्वस्य उच्चैःकुलं वंशोन्नतिं साधु विचिन्त्य स्वाभिजात्यकलङ्कभूतपरदाराभिमर्शनकृतघ्नतादिविरहितं कुलं सम्यग्गणयित्वा ॥ आत्मन इत्येकवचनेन कुलाभिजात्यादावद्वितीयत्वं राज्ञस्सूच्यते ॥ उभयोरनुरूपत्वान्मयाप्यनुमतिरेव कृतेति भावः ॥ पुनरपीप्सितार्थसिद्ध्यर्थं हेत्वन्तरमाह—त्वयीत्यादि ॥ स्वारसिकतादृगनुरागातिशयवति त्वयीति यावत् ॥ त्वयिविषये ॥ अस्या अरण्यवासित्वात् कैतवानभिज्ञायाः शकुन्तलाया अस्या इति यावत् ॥ कथमपि कथञ्चित् कृच्छ्रेणेतियावत् ॥ कृच्छ्रत्वं नाम गुरुजनासम्मत्या स्वाच्छन्दिकविवाहे सद्य एवानिष्टजनकं गुरुजनेभ्यः शापमप्यविचार्य कथमपीत्यर्थः ॥ तदेवाह—अबान्धवकृतामिति ॥ अनेन यद्यपि राजर्षिकन्यकायाः राजर्षिवरगामितायाः युक्तत्वात्तत्रापि सन्निहितस्य परित्यागे कारणाभावाच्च अनुरूपवरसन्निधानमेव कन्यकाया विवाहहेतुस्तथापि बान्धवाः कुलमिच्छंतीति न्यायेन विवाहस्य बन्धुजनसम्मत्या भाव्यमिति ज्ञाप्यते ॥ अनुरागवशात् बन्धुजनानप्यविचिन्त्य शकुन्तलया त्वद्विषये प्रवृत्तिः कृतेति भावः ॥ तदेव ज्ञापयति—तामिति ॥ तां त्वदेकवेद्यामनिर्वचनीयामनुभूतामिति यावत् ॥ यद्वा—तामुभयवेद्यामकृत्रिमामुभयोरनुरागविशेषमुभावेव जानीधस्तथैव परस्परं वर्तेयाथामित्यभिप्रायः ॥ स्नेहप्रवृत्तिं स्नेहशब्देन द्रवीभूतचित्तस्य भावविशेषः कथ्यते ॥ तदुक्तम्—"विस्रम्भे परमां काष्ठामारूढे दर्शनादिभिः । यत्र द्रवत्यन्तरङ्गं स स्नेह इति कथ्यत" इति ॥ तस्य प्रवृत्तिस्स्वारसिकनिर्गळव्यापारः मांजिष्ठानुरागविशेषसूचकशरीरकार्श्यवैवर्ण्यादिरित्यर्थः ॥ तादृशीं स्नेहप्रवृत्तिं च साधु विचिन्त्येत्यनुषज्यते ॥ साधु पश्चात्तापपुरस्सरं विचिन्त्य क्षणमपि त्वद्विश्लेषासहां तादृशीमेतावन्तमनेहसं विहाय स्थितमित्यनुशयपूर्वं विशेषेण चिन्तयित्वा ॥ अत्र विचिन्त्येति ल्यप्प्रत्ययेन विशेषवाचकोपसर्गेण च चिन्तायां निर्णयांतत्वमुच्यते ॥ दारेषु कळत्रेषु सत्सु ॥ बहुवचनेन "रत्नहारी तु पार्थिव" इति न्यायेन राजानो बहुवल्लभा इत्यभिधानेन च बहुकळत्रपरिग्रहस्समुचित इति ज्ञाप्यते ॥ निर्धारणे सप्तमी ॥ सामान्यप्रतिपत्तिपूर्वकं कलत्रान्तरसाम्यज्ञानपुरस्सरम् ॥ त्वया अस्मत्सन्देशवाक्यद्वयार्थविशेषचिन्तानिर्णयान्तज्ञानवता त्वयेति यावत् ॥ एकवचनेन स्वारसिकतया स्वकृतानुरागविशेषादिकं स्वयमेव जानासीति सूच्यते ॥ तादृशेन त्वया इयं मत्पोषिता शकुन्तला ॥

साधुविचिन्त्येत्यनुषज्यते । 'प्रवृत्तिः कथिता वृत्तौ प्रवाहोदन्तयोरपि' इति विश्वः । तेनात्र कारकक्रियादीपकम् । तामिति सर्वनाम्ना पूर्वकविरहे तत्तत्कामाद्यवस्थानुभवनम् (?) । ततः समागमजानन्दाम्बुधिमज्जनादि व्यज्यते । एतद्व्यङ्ग्यावकाशदानाय प्रवृत्तिपदम् । अस्यास्त्वयीत्यनेन भवद्दर्शनमारभ्य प्रतिक्षणोपचीयमानरागसागरत्वं ध्वनितम् । अत एव तवास्यामिति नोक्तम् । यद्यपि नायकयोः परस्परानुरागजीवातुरेव रतिस्तथाप्यस्याः प्रेषणेन प्रकृतत्वात्तथोक्तिः । स्नेहप्रवृत्तिं विशिनष्टि—कथमपि वचनेन परद्वारेङ्गितेन वा न बान्धवैः कृतामन्यकर्तृकृतां प्रयत्नेन निषेधता कविनास्याः स्नेहप्रवृत्तेः स्थायित्वं स्थिरीकुर्वता कोऽपि

दृश्या उक्तहेतुभिर्द्रष्टुं योग्या ॥ त्वत्कटाक्षपतनार्हेति यावत् ॥ तर्हि लोके पित्रादिभिः कन्यकाया जामातरं प्रति विशेषप्रतिपत्त्यादिकमेव प्रार्थनीयं तत्कथं सामान्यप्रतिपत्त्यादिकं प्रार्थ्यते? इत्यत आह—अतः परमिति ॥ अतः सामान्यप्रतिपत्तेः परं भिन्नं विशेषप्रतिपत्त्यादिकम् ॥ खलु शब्दो हेत्वर्थकः ॥ यतो हेतोः भाग्यायत्तं जन्मान्तरोपार्जितसुकृतविशेषाधीनं न तु कन्यकायाः कुलाभिजात्यसौन्दर्यविनयादिगुणविशेषायत्तमिति यावत् ॥ अनेन गर्वोक्त्या शकुन्तलायास्सौशील्यादिबहुगुणयोगिता सूच्यते ॥ ततो हेतोः तद्विशेषप्रतिपत्यादिकम् ॥ वधूबन्धुभिः वधूनामाप्तैर्न वाच्यम् ॥ न याच्यमित्यपि पाठः ॥ अत्र श्लोकेऽन्यापि योजना क्रियते ॥ अस्मानिति बहुवचनेन काश्यपगौतमीशार्ङ्गरवादिशिष्या गृह्यन्ते ॥ तादृशेषु बहुष्वस्मासु सत्स्वपि त्वया कोऽपि न पृष्ट इति राज्ञ्यपराधारोपः प्रकाश्यते ॥ तर्हि तात्कालिकसुखप्राप्त्यर्थं कृतपरकन्यकाहरणजनितपापस्य फलं कालान्तरे परलोके अनुभविष्यामि; राज्ञो मम क इदानीं शिक्षक इत्यत आह—संयमधनानिति ॥ अनेन स्वस्य कोपप्रसादयोश्शापानुग्रहाभ्यां सद्यः फलप्रदत्वं व्यज्यते । साधु विचिन्त्यात्मन उच्चैः कुलं साधु विचिन्त्येत्यनेन कळङ्करहितचिरन्तनस्ववंशस्य तपोधनविषयकापराधकारणात् क्षतिकरणं तव नोचितमिति व्यज्यते ॥ आत्मन इत्येकवचनेन स्वकृतशकुन्तलापरिणयरूपवृत्तान्तं स्वयमेव जानासि ॥ न त्वन्यदुष्टजनबोधनात् कृतशकुन्तलासङ्गमकृत्यवानिति स्वस्यैवापराधः ॥ न तु निकटवर्तिनामिति ज्ञाप्यते ॥ तात्कालिकसुखानुभवार्थं यत्किञ्चित् कृतं तदान्तं किमर्थमनुष्ठेयमित्यवज्ञा नोचिता ॥ किन्तु उक्तहेतूनां विशेषप्रतिपत्तिरेवोचितेति भावः ॥ पुनरपि हेत्वन्तरेण विशदयति—त्वयीत्यादि ॥ त्वयीत्येकवचनेनात्मनस्स्वतन्त्वतया स्वकृतं स्वयमेव जानासि ॥ यदि त्वया विशेषप्रतिपत्तिर्न क्रियते शकुन्तलाविषये ॥ तदा त्वत्कृतानुराग विशेषज्ञापकस्तवनिकटवर्त्यन्यजनो नास्तीत्यविदितान्यजनात्मकृत्यताज्ञापनं प्रकाश्यते ॥ अस्याश्शकुन्तलायाः ॥ सम्बन्धे षष्ठी ॥ कथमपि कथञ्चित् ॥ यत्नेनेति यावत् ॥ यदाहोत्पलः—"ज्ञातहेतुविवक्षायामप्यादिकथमन्यभाक् । कथमादितथाप्यन्तंयत्नगौरवबाढयोः" इति ॥ तां त्वदेकवेद्यां शकुन्तलासम्बन्धिनीं यत्नेन त्वत्कृतां तामिति यावत् ॥ कथमपि तामित्यनेन स्वस्यासन्निधानेऽपि शकुन्तलासङ्गमार्थम् ॥ यत्नेन त्वत्कृतानुरागविशेषशपथादिकं सर्वं तपोमहिम्ना ज्ञातमिति परिग्रहबहुत्वेऽपीत्याद्यनुरागविशेषद्योतकशपथवाक्यं दुष्यन्तस्य स्मार्यते ॥ अबान्धवकृतामित्यनेन बन्धुजनासम्मत्या स्वाभिसरणभीरुकायाश्शकुन्तलायाः व्यभिचारित्वदोषापनयनार्थं गान्धर्वविवाहस्य बन्धुजनानपेक्षितया तदानीं दुष्यन्तकथितं "गान्धर्वेण विवाहेन बह्व्यो राजर्षिकन्यका" इत्यादि

---

लोकोत्तरश्चमत्कारातिशयो व्यज्यते । इयं सामान्या साधारणी या प्रतिपत्तिगौरवं तत्पूर्वकं दारेषु स्त्रीषु । बहुवचनेन पूर्वोक्तस्य युक्तता ध्वन्यते । त्वया प्रसिद्धगुणवता सता तादृशकुलोत्पन्नेन सुजनताजन्मना धर्मधुरीणेनेत्यर्थान्तरसंक्रमितम् । दृश्या ज्ञातव्या न तु कर्तव्या । अस्माकं तत्र नियोगासम्भवात् । 'प्रतिपत्तिः पदे प्राप्तौ प्रवृत्तौ गौरवेऽपि च' इति विश्वः । नन्वेतादृशप्रेम्णि कथं सामान्यप्रतिपत्तीत्याद्युक्तमत आह—भाग्यायत्तमिति । अतःपरं वधूबन्धुभिर्न वाच्यम् । यतो वयं वधूबन्धवः । अस्मदुच्यमानं तु पक्षपातितया

**शार्ङ्गरवः**—गृहीतस्सन्देशः ॥

**काश्यपः**—वत्से ! त्वमिदानीमनुशासनीयासि ॥ पश्य । वनौकसोऽपि सन्तो लोक(लौकिक)ज्ञा वयम् ॥

---

दृष्टान्तवाक्यं दुष्यन्तस्य प्रकाश्यते ॥ स्नेहप्रवृत्तिं परिणतानुरागविशेषात् कालाक्षमलक्षणौत्सुक्यविशेषव्यापारं च साधु विचिन्त्येत्यनुषज्यते ॥ अनेन "तपति तनुगात्रि मदनस्त्वा" मित्याद्यनुरागप्रकाशनार्थं फणितदुष्यन्तवाक्यं राज्ञः स्मार्यते ॥ दारेषु कळत्राणां मध्ये ॥ सा त्वच्छपथवाक्यानुरागविशेषमात्रविश्वासवती सेति यावत् ॥ इयं बालेयमिति यावत् ॥ त्वया मान्यप्रतिपत्तिपूर्वकम् ॥ मान्या पूज्या प्रतिपत्तिर्ज्ञानं तत्पूर्वकं तत्पुरस्सरम् ॥ दाराणां मध्ये प्रतिपत्तेर्मान्यत्वं तु पट्टमहिषीभावः । दृश्या द्रष्टुं योग्या ॥ निष्कलङ्के महाकुलीनत्वसौन्दर्यसौशील्यादिगुणविशेषैः ॥ पट्टमहिषीभावेन त्वद्विशेषकटाक्षपतनार्हा ॥ यद्वा ॥ सेयं दारेषु सत्स्वपि अन्यप्रतिपत्तिपूर्वकं मा दृश्या कलत्रान्तरसाम्यगौरवपूर्वकं न दर्शनीयेत्यपि योजयन्ति—प्रतिपत्तिस्तु गौरवे प्राप्तिप्रवृत्त्योः प्रागल्भ्ये प्रतिभाज्ञानयोरपीत्युक्तत्वात् ॥ तर्हि लोके सर्वैर्वधूबन्धुभिस्सामान्यप्रतिपत्तिरेव प्रार्थ्यते तत्कथमिदानीं विशेषप्रतिपत्तिः प्रार्थ्यते? इत्यतआह—अतःपरमिति ॥ अतः विशेषप्रतिपत्तेः परं भिन्नं सामान्यप्रतिपत्त्यादिकमिति यावत् ॥ खलु शब्दो हेत्वर्थकः ॥ यतो हेतोरभाग्यायत्तं दुरदृष्टाधीनम् ॥ त्वया भाग्यायत्तमित्यत्र सन्धावकारप्रश्लेषः कार्यः ॥ अभाग्यायत्तमिति ॥ ततो हेतोस्तत्सामान्यप्रतिपत्त्यादिकं वधूबन्धुभिर्वधूनामिष्टतमैर्जनैरिति यावत् ॥ न वाच्यं न कथनीयं अभाग्यफलत्वान्नप्रार्थनीयमिति यावत् ॥ अत्र श्लोके मालानामालङ्कारः ॥ तदुक्तम्—"ईप्सितार्थप्रसिद्ध्यर्थं क्रियते यत्र सूरिभिः । प्रयोजनान्यनेकानि सा मालेत्यभिसंज्ञिता" इति ॥ अत्र शकुन्तलापरिग्रहे काश्यपेन स्वप्रीतिः दुष्यन्तस्य पुनरभिवृद्धिः तादृग्रूपायाश्शकुन्तलाया लाभः इत्यादीनि बहूनि प्रयोजनानि प्रतिपादितानि ॥

**वत्से इत्यादि** ॥ इदानीं साम्प्रतम् ॥ "पिता रक्षति कौमारे भर्ता रक्षति यौवन" इति न्यायेन पतिगृहगमनसमये प्राप्ते सतीति यावत् ॥ अनुशासनीया निष्कळङ्कास्मत्कुलस्य कळङ्कित्वापातनभिया शिक्षणीया ॥ पश्य विभावय ॥ आमन्त्रणे लोट् ॥ ममाङ्कसमीपे आगच्छेति यावत् ॥ अत्र शिक्षावचनस्य श्रवणार्हत्वात् शृण्विति वक्तव्ये पश्येति दर्शनक्रियाभिधानं श्रोत्रश्रुतं तु यदाकदाचिच्चित्तस्यास्वास्थ्यकाले विस्मृतं स्यात् साक्षान्नयनाभ्यां दृष्टं तु हठाद्विस्मृतं तथा न भवतीति पश्येति प्रयुक्तमित्यभिप्रायः ॥ वनौकसोऽपि अरण्यवासिनोऽपि लोकज्ञाः स्थावरजङ्गमात्मकबहुविधज्ञाः लोकवृत्तान्ताभिज्ञा इति यावत् ॥ तपोमहिम्नेति भावः ॥ लोकशब्देन लोकवृत्तान्तः कथ्यते ॥ यदाह वामनः—'लोकवृत्तं लोक' इति ॥

---

पर्यवसन्नं सदौदासीन्यमेव गमयेदिति भावः । अत्र मयैतन्न वक्तव्यमिति विशेषे प्रस्तुते यत्सामान्यवचनं तेनाप्रस्तुतप्रशंसा । किं तर्हि । तत् भाग्यायत्तं दैवायत्तम् । अथ वधूबन्धुभिरस्माभिरतः परं न वाच्यम् । नियोगस्त्वेन पर्यवसानादिति भावः । अतो भाग्यायत्तं येन भाग्येन युवयोरेतादृशोऽनुरागस्तदधीनमेव सर्वमिति भावः । खलुर्हेत्वर्थस्तेन काव्यलिङ्गमपि । यद्वातःपरं महिषीत्वाभिषेकादिकं भाग्यायत्तं दैवायत्तं तत्खलु निश्चितं वधू-

शार्ङ्गरवः—न खलु धीमतां कश्चिदविषयो नाम ॥

काश्यपः—तत् (सा)त्वमितः परं पतिकुलं प्राप्य ।

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ १७

---

१७ शुश्रूषस्वेति ॥ गुरून् पूजार्हान् शुश्रूषस्व परिचर ॥ सनन्तश्शृणोतिः परिचर्यायां रूढः ॥ "ज्ञाश्रुस्मृदृशांसन" इत्यात्मनेपदम् ॥ "शुश्रूषाश्रोतुमिच्छायां परिचर्याविधानयो"रिति विश्वः ॥ अत्र शकुन्तलायाः काश्यपेन गुरुजनशुश्रूषावैपरीत्यदोषजनितशापात् पञ्चमाङ्के दुष्यन्तस्य शकुन्तलाविषयकस्मरणाभावे बीजमत्रोपन्यस्तमित्यवगन्तव्यम् ॥ एवं सर्ववाक्येषु बीजानुगुण्यं बुद्धिमतोह्यम् ॥ सपत्नीजने प्रियसखीवृत्तिं प्रियसखीव्यापारं चाटुभाषणादिवृत्तिमिति यावत् ॥ वृत्तिमित्यनेन प्रियभाषणादिचेष्टयैव प्रियसखीत्वदर्शनं कर्तव्यम् ॥ न तु मनःपूर्वमिति भावः ॥ सापत्न्यव्यवहारादिकं न प्रदर्शनीयमिति यावत् ॥ विप्रकृतापि विगतं प्रकृतं प्रकृतिर्यस्यास्सा तथोक्ता कोपितापीत्यर्थः ॥ रोषणतया कोपनतया प्रतीपः प्रतिकूलं मागमः मागच्छ ॥ "पतिरेव बुधैः स्त्रीणां देवतेति निगद्यते" इति न्यायात्कोपसमये भर्तुश्चित्तरञ्जनानुकूलव्यवहारादिकमेव कर्तव्यमित्यर्थः ॥ परिजने

---

बन्धुभिर्न वाच्यम् । वचनमात्रेण तदसम्पत्तेरिति भावः । श्रुतिवृत्त्यनुप्रासौ । शार्दूलविक्रीडितं वृत्तम् । न खलु धीमतामिति कण्ववाक्यं प्रत्यर्थान्तरन्यासः । सा त्वमित्यस्य श्लोकेनान्वयः ॥

शुश्रूषस्वेति ॥ गुरूञ्श्वश्रूश्वशुरादीञ्शुश्रूषस्व सेवां कुरु । सपत्नीनां जने समूहे प्रियसखीनामिव वृत्तिं कुरु प्रियसखीवद्वर्तस्व । विप्रकृता न्यक्कृतापि । 'निकारो विप्रकारः स्यात्' इत्यमरः । रोषणतयेर्ष्यया भर्तुः प्रतीपं वैपरीत्यं मा स्म गमो मा यासीः । परिजने सेवकवर्गे भूयिष्ठमतिशयेन दक्षिणानुकूला भव । भाग्येषु सपत्नीदैवेष्वनुत्सेकिन्यस्खलिता । भवेत्यनुषज्यते । अस्या भाग्यं मम नास्तीति दुःखं न कार्यमित्यर्थः । अथ च भाग्येषु निजेष्वनुत्सेकिनी निर्गर्वा । ममैतादृशं सौभाग्यमिति गर्वो न कार्य इत्यर्थः । 'उदो मर्दनोत्क्षेपणगर्वस्खलनेषु' इति गणपाठात् । एवं सति युवतयः स्त्रीमात्रम् । त्वं तु किं पुनरिति भावः । गृहिण्याः पदं स्थानम् । यद्वा गृहिणीति पदमधिकारम् । यान्ति प्राप्नुवन्ति । अन्या वामाः स्त्रियः कुलस्याधयः । भवन्तीत्यर्थः । 'वामौ वल्गुप्रतीपौ वा' इत्यमरः । रूपकमर्थान्तरन्यासो वा । कुलस्याधयः कुलाधिष्ठानानि । वामा वक्राणीत्यर्थः ।

कथं वा गौतमी मन्यते?

**गौतमी**—[1]एत्तिओ एव्व वहूजणस्स उपदेसो ॥ वच्छे! एदं खु सव्वं ओधारेहि ॥

**काश्यपः**—वत्से! परिष्वजस्व मां। सखीजनं च ॥

**शकुन्तला**—[2]ताद। इदो एव्व किं पिअंवदामिस्सा सहीओ णिवत्तिस्सन्ति?

**काश्यपः**—वत्से! इमे अपि प्रदेये? न युक्तमनयोस्तत्रगन्तुं त्वया सह गौतमी यास्यति ॥

**शकुन्तला**—(पितरमाश्लिष्य) [3]कहं दाणिं तादस्स अङ्कादो परीब्भट्ठा मळअत(रू)डुम्मूलिदाविअ चन्दणलदा देसन्दरे जीविदं धारइस्सम्!

**काश्यपः**—वत्से! किमेवं कातरासि!

---

1 एतावानेव वधूजनस्योपदेशः वत्से! एतत्खलु सर्वमवधारय।

2 तात! इत एव किं प्रियंवदामिश्राः सख्यो निवर्तिष्यन्ते?

3 कथमिदानीं तातस्याङ्कात्परिभ्रष्टा मलयत(रू)टोन्मूलितेव चन्दनलता देशान्तरे जीवितं धारयिष्यामि!

---

उपजीविजने ॥ भूयिष्ठमतिशयेन ॥ दक्षिणा अनुकूला ॥ भोगेषु सुखेषु अनुत्सेकिनी अनुत्कण्ठिता अगर्विता भवेत्यनुषज्यते ॥ एवमुक्तप्रकारेण गृहिणीपदं गृहिणीव्यपदेशं यांति व्रजन्ति ॥ वामाः प्रतिकूलाः कुलस्य वंशस्याधयः अपकर्षहेतवः ॥ यथा आधयस्तु देहस्यापकर्षहेतवस्तथा कुलस्येति यावत् ॥ "आधिस्तु व्यसने चित्तदुःखेऽधिष्ठानबन्धयो"रिति वैजयन्ती ॥

---

'आधिर्मानसपीडायां प्रत्याशायां च बन्धने। व्यसने चाप्यधिष्ठाने' इति विश्वः। वृत्तमनन्तरोक्तम्। एतावान्वधूजनस्योपदेशः। जाते पुत्रि, एतत्खलु सर्वमवधारय। तात, इत एव किं प्रियंवदामिश्राः सख्यो निवर्तिष्यन्ते। कथमिदानीं तातस्याङ्कात्क्रोडात् परिभ्रष्टा मलयतरून्मूलिता चन्दनलतेव देशान्तरे परदेशे स्थानान्तरे च जीवितं धारयिष्ये। कथमिदानीमिति सम्बन्धः। उपमया तत्रत्यैर्बहुमानिताया अपि पितृवियोगाविस्मरणं ध्वन्यते ॥

अभिजनवतो भर्तुश्श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला ।
तनयमचिरात्प्राचीवार्कं प्रसूय च पावनं
मम विरहजां वत्से न त्वं शुचं गणयिष्यसि ॥ १८

(शकुन्तला पितुः पादयोः पतति)

काश्यपः—यदिच्छा(मि)स्ति ते तदस्तु ॥

---

१८ अभिजनवत इत्यादि ॥ अभिजनवतः कुलीनस्य श्लाघ्ये पूज्ये गृहिणीपदे पट्टमहिषीस्थाने ॥

यदिति ॥ यत्पट्टमहिषीत्वं सत्पुत्त्रलाभश्च तदस्त्विति आशिषि लोट् ॥

---

अभिजनेति ॥ अभिजनवतः कुलवतः । 'कुलान्यभिजनान्वयौ' इत्यमरः । अत्रैतदनुक्तेरपि सिद्धेस्तात्पर्यानुपपत्त्या लक्षणया सामान्यशब्दो विशिष्टं कुलं लक्षयति । तदुत्पत्तिमत्त्वं त्वर्थाक्षिप्तम् । एतद्दयादानदाक्षिण्यधर्मभीरुत्वादि धर्मशतं व्यनक्ति । अथवाभिजनपदेन तदुत्पन्ना जना लक्ष्यन्ते । तद्वतस्तद्बहुजनवतः । अभितः समन्ततो जनवतः स्वजनवत इति वा । अनेन विशेषणेन सकलबन्धुजनकृत्यचिन्तया गृहिणीगतोऽतिशयो व्यज्यते । एवम्भूतस्य भर्तुः श्लाघ्ये सर्वोत्कृष्टे । तादृशप्रेरणानुमितत्वात् । गृहिणीपदे गृहिणीस्थाने । अथवा गृहिणीलक्षणाधिकारे । अथ च गृहिणीति त्र्यक्षरं पदं तव । जगति गृहिणीपदवाच्या त्वमेवेत्यर्थः । अतः 'गृहिणी गृहमुच्यते' इत्युक्तेस्तदीयं सर्वं गृहं त्वदायत्तमिति भावः । स्थिता चापल्यनिवृत्त्या स्थिरीभूता । अतएव भर्तुरित्युचितपदोपन्यासः । भरतीति भर्ता सकलजगद्भरणशीलस्येति षष्ठ्या गृहिणीगतोऽतिशयो व्यज्यते । तावता किं तत्राह—विभवेति । विभवः सम्पत्तिस्तेन गुरुभिर्गरिष्ठैः । अनेन कृत्यानामनन्यनिर्वाहित्वं सूचितम् । तस्य भर्तुः प्रतिक्षणं कृत्यैः इत्यव्ययबहुवचनाभ्यां विशिष्टकार्याणामन्यतमता ध्वन्यते । आकुला व्यग्रा । स्वगृहकार्यसहस्रनिमग्ना विगलितवेद्यान्तरा भविष्यसीति भावः । अचिराच्छीघ्रं प्राची प्राग्दिगिव त्वं पावनमर्कमिव तनयं प्रसूय चेति चः समुच्चये । स स्वयं पूत इति किं वक्तव्यम् । पावयतीति पावनः । तन्नामग्रहणेनान्येऽपि पावना भवन्तीति भावः । अर्कोपमानत्वेन तनयस्य जगद्विलक्षणतेजस्वित्वं लोकत्रयातिक्रान्तपौरुषत्वं चतुर्दशभुवनगीयमानकीर्तित्वमत एव चक्रवर्तित्वमित्यादि धर्मसहस्रं व्यज्यते । हे वत्से, मम पितुर्विरहजां वियोगजां शुचं न गणयिष्यति । न तु सा न भविष्यति । गृहकार्यव्यग्रतया त्वया शोको न गणनीय इत्यर्थः । पितृवियोगदुःखमविस्मरणीयं प्रकृत्या व्यज्यते । चतुर्थचरणार्थं प्रति पूर्वोक्तद्वयं हेतुत्वेन योज्यम् । उपमासमुच्चयकाव्यलिङ्गश्रुतिवृत्त्यनुप्रासाः । हरिणीवृत्तम् । अनेन सङ्ग्रहलक्षणमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'सामदानार्थसंयोगः सङ्ग्रहः परिकीर्तितः' इति ।

**शकुन्तला**—[1](सख्यावुपेत्य) हळा! दुवे वि मं समं एव्व परिस्सजह ॥

**उभे**—(तथा कृत्वा) [2]सहि । जइ णाम सो राआ पच्चहिण्णाण मन्थरो भवे तदा से इदं स (अत्त) णामहेअं किदं अङ्गुलीअअं दंसेहि ॥

**शकुन्तला**—[3]हळा इमिणा सन्देहेण वो आअम्पिदम्हि ॥

**उभे**—[4]मा भाअहि ॥ अदिसिणेहो पावसङ्की ॥

**शार्ङ्गरवः**—युगान्तरमारूढस्सविता ॥ त्वरतां भवती ॥

**शकुन्तला**—(आश्रमाभिमुखी स्थित्वा) [5]तात कदा णु खु भूओपि तवोवणं पेक्खस्सम् ?

**काश्यपः**—श्रूयताम् ॥

**भूत्वा चिराय चतुरन्तमहीसपत्नी**
**दौष्यन्तिमप्रतिरथं तनयं (निवेश्य) प्रसूय ।**

---

1 सख्यौ! द्वे अपि मां सममेव परिष्वजेथां ॥

2 सखि! यदि नाम स राजर्षिः प्रत्यभिज्ञानमन्थरो भवेत्तदास्मै इदं स्व (आत्म) नामधेयांकितमंगुळीयकं दर्शय ॥

3 सख्यौ। अनेन सन्देहेन वामाकंपितास्मि ॥

4 मा भैषीः ॥ अतिस्नेहः पापशङ्की ॥

5 तात! कदा नु खलु भूयोऽपि तपोवनं द्रक्ष्यामि ?

---

१९ **भूत्वेत्यादि** ॥ चतुरन्तमहीसपत्नी ॥ चत्वारो अन्ता यस्यास्सा ।समस्तेत्यर्थः ॥ साचासौ मही च ॥ सा तथोक्ता तस्यास्सपत्नी भूत्वा ॥ पट्टमहिषी भूत्वेति यावत् ॥

---

द्वे अपि मां सममेकदैव परिष्वजेथाम् । तथा कृत्वेत्येकदा परिष्वज्य । सखि, यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत् । प्रत्यभिज्ञाने तत्तेदन्तावगाहिनि सेयं शकुन्तलेति ज्ञाने मन्थरः शिथिलः । झटित्येतादृग्ज्ञानरहित इत्यर्थः । ततस्तस्येदमात्मनामधेयाङ्कितमङ्गुलीयकं दर्शय । अनेन रूपलक्षणमङ्गमुपक्षिप्तम् । तल्लक्षणं तु दशरूपके—'रूपं वितर्कवद्वाक्यम्' इति । यदीति वितर्कोक्तिः । अनेन वः सन्देहेनाकम्पितास्मि । अनेन सम्भ्रमलक्षणमङ्गमुपक्षिप्तम् । तल्लक्षणं तु दशरूपके—'शङ्कात्रासौ च सम्भ्रमः' इति । मा भैषीः । स्नेहः पापशङ्की । अनेनाधिबललक्षणमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'कपटेनातिसन्धानं ज्ञेयं चाधिबलं बुधैः' इति । युगान्तरं हस्तचतुष्कावधि । 'युगं हस्तचतुष्केऽपि' इति विश्वः । तात, कदा नु भूयस्तपोवनं प्रेक्षिष्ये ॥

**भूत्वेति** ॥ चिराय चिरकालम् । चत्वारः समुद्राः । विशेषणेनैव विशेष्यप्रतिपत्तिः । ते अन्तो यस्याः सा चासौ मही च तस्याः सपत्नी भूत्वा । चतुरुदधिमेखलभूमि-

भर्त्रा तदर्पितकुटुंबभरेण सार्धं
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥ १९

**गौतमी**—[1]जादे । परिहिअदि ते गमणवेला ॥ णिवत्तेहि पिदरम् ॥ अहवा चिरेण वि पुणोपुणो पि एसा एव्वं मन्तइस्सदि ॥ णिवट्टेदु भवम् ॥

**काश्यपः**—वत्से! उपरुध्यते मे तपोऽनुष्ठानम् ॥

**शकुन्तला**—(भूयः पितरमाश्लिष्य) [2]भूओ वि तपच्चरणपीडिदं तादस्स शरीरं अतिमेत्त मह किदे उक्कण्ठिदं हविस्सदि ॥

**काश्यपः**—(सनिश्वासम्)

---

1 जाते! परिहीयते ते गमनवेळा ॥ निवर्तय पितरम् ॥ अथवा चिरेणापि पुनः पुनरेषैवं मन्त्रयिष्यते ॥ निवर्ततां भवान् ॥

2 भूयोऽपि तपश्चरणपीडितं मम कृते तातस्य शरीरमतिमात्रं उत्कण्ठितं भविष्यति ॥

---

दुष्यन्तस्यापत्यं दौष्यन्तिः तमप्रतिरथमप्रतिरथिकम् ॥ अत्र रथशब्देन रथिको लक्ष्यते ॥ शान्ते रागद्वेषादिरहिते ॥

---

वलयोपभोगमुपभुज्येति भावः । दुष्यन्तस्यापत्यं दौष्यन्तिस्तम् । 'अत इञ्'। न विद्यते प्रति संमुखं(खो) रथो यस्य स तम् । प्रतिपक्षाभावात् । 'मात्रार्थे चाभिमुख्ये च प्रतिदानादिषु प्रति' इति विश्वः । अनेन विशेषणद्वयेन महीभारक्षमत्वं ध्वनितम् । निवेश्य स्थापयित्वा । अर्थान्महीसपत्न्याम् । अत्र सपत्नीग्रहणेन तस्या अपि मातृत्वं सूचितम् । यद्यपि सपत्नी तथापि त्वयि सत्यामेव सपत्नभावः । त्वया समर्पिते तु तन्नास्तीति भावः । भर्त्रा सहेति गौणत्वमेतां प्रत्युत्तरदानेनास्याः प्रकृतत्वान्नानुपपन्नम् । अत्र तस्यां महीसपत्नीत्वं तस्यां तन्निवेशनं तस्मिंश्च कुटुम्बभरनिवेशनमिति मालादीपकम् । अत्र यावद्दुष्यन्तधारणं पितृभक्त्या तं प्रति मह्या मातृत्ववर्णनं नानौचित्यमावहति । शान्ते प्रकरणानुसाराद्वयसीति गम्यते । इदमाश्रमविशेषणत्वेनापि । जाते, परिहीयते गमनवेला । निवर्तय पितरम् । अथवा चिरेणापि । पुनःपुनरेवैवं मन्त्रयिष्यति । निवर्ततां भवान् । तपश्चरणेन पीडितं तातशरीरम् । तस्मान्मम कृते अतिमात्रमुत्कण्ठा । मेति निषेधे । उत्कण्ठयालमित्यर्थः । 'क्त्वस्तुमत्तूणतुआणाः' इति क्त्वाप्रत्ययस्य तुमादेशः ॥

**शममेष्यति मे (मम) शोकः**
**कथं नु वत्से त्वया रचितपूर्वम् ।**
**उटजद्वारनिरूढं**
**नीवारबलिं विलोकयतः ! ॥** २०

गच्छ शिवास्ते पन्थानस्सन्तु ॥ (निष्क्रान्ता शकुन्तला सहयायिनश्च)

**सख्यौ**—(शकुन्तलां विलोक्य) [1]हद्धि हद्धि ॥ अन्तरिहिदा अपि सही सउन्दला वणराईए ॥

**काश्यपः**—(सनिश्वासं) अनसूये ! गतवती वां सहचारिणी । निगृह्य शोकमनुगच्छन्तं मां प्रस्थितम् ॥

**उभे**—[2]ताद ! सउन्दलाविरहिदं सुण्णं विअ तवोवणं कहं पविसामो ?

**काश्यपः**—स्नेहप्रवृत्तिरेवन्दर्शिनी (सविमर्शं परिक्रम्य) हन्त भोः ! शकुन्तलां प्रति विसृज्य लब्धमिदानीं स्वास्थ्यम् ॥

---

1 हा धिक् ! हा धिक् ! अन्तर्हिता प्रियसखी शकुन्तला वनराज्या ।
2 तात ! शकुन्तलाविरहितं शून्यमिव तपोवनं कथं प्रविशामः ?

---

२० **शममित्यादि ॥** शमं शान्तिम् ॥ मे रागद्वेषादिरहितस्य मे इति यावत् ॥ कथं केन हेतुना ॥ नु जिज्ञासायाम् ॥

हा धिक् हा धिगिति निर्वेदे ॥

सविमर्शं सविचारम् ॥ हन्त हर्षे ॥ भो इत्यामन्त्रणे ॥ स्वास्थ्यमव्याकुलत्वम् ॥ कुतः कस्मात् ॥

---

**शममिति ॥** वत्से, मम काश्यपस्य । बाल्यादारभ्य त्वत्कृतपरिपालनस्येत्यर्थान्तरसंक्रान्तत्वम् । एवंभूतस्य शोकः कथं नु शममेष्यति । कष्टेन शममेष्यतीत्यर्थः । ईदृशस्त्वया तादृशगुणवत्या तथा सकलनिपुणयेत्यादि द्योतयति । पूर्वं रचितो रचितपूर्वस्तम् । नीवारैस्तृणधान्यैर्बलिं पूजां विलोकयतः । कीदृशं बलिम् । उटजद्वारे विरूढं सञ्जातम् । 'विरूढस्तु सञ्जाताङ्कुरितेऽन्यवत्' इति विश्वः । काव्यलिङ्गानुप्रासौ । हा धिक् हा धिक् । अन्तर्हिता शकुन्तला वनराज्या । तात, शकुन्तलाविरहितं शून्यमिव तपोवनं कथं प्रविशावः । कण्वप्रवेशानन्तरमेतदन्तेन करुणो रसो ध्वनितः । तल्लक्षणं तु—'इष्टबन्धुवियोगश्च स्त्रीनाशो वधबन्धने । विभावाः सम्मताः पुंसामुत्तमानां पराश्रिताः ॥ मध्यमाधमपुंसां तु ते स्युरात्मैकगोचराः । अश्रुपातो मुखे शोषो विलापः परिदेवनम् ॥ स्तम्भो विवर्णता स्रस्तगात्रता प्रलयस्तथा । यत्र सञ्चारिणः स्थायी शोकः स करुणो मतः ॥' इति ॥

कुतः—

अर्थो हि कन्या परकीय एव
तामद्य सम्प्रेष्य परिग्रहीतुः ।
जातो ममायं विशदः प्रकामं
प्रत्यर्पितन्यास इवान्तरात्मा ॥ २१

(इति निष्क्रान्ताः सर्वे)

इति श्रीमहाकविकालिदासकृतौ शाकुन्तलनाटके
चतुर्थोऽङ्कः ॥

---

२१ अर्थो हीत्यादि ॥ कन्या परकीय एवार्थः परस्यैव धनम् ॥ हिः प्रसिद्धौ ॥ अनेन सर्ववर्णसम्मतिरुक्ता ॥ तां तादृशीं परकीयधनभूतां कन्यां अद्येदानीं "भर्ता रक्षति कौमार" इति न्यायेन समये प्राप्ते परिग्रहीतुः पत्युः सम्प्रेष्य प्रस्थाप्य स्थितवतो मम अन्तरात्मा अन्तःकरणं प्रत्यर्पितन्यासः प्रत्यर्पितः प्रतिसमर्पितः न्यासः उपनिधिर्येन स तथोक्तः ॥ प्रकाममतिशयेन विशदः स्वस्थो जातस्संवृत्तः ॥

इति श्रीरमणवेङ्कटाचलेश्वरपादारविन्दसमाराधकवैखानसकुलतिलक
श्रीकौशिकगोत्र श्रीतिरुमलाचार्यपुत्रेण ध्वनिप्रस्थानपरमाचार्याष्ट-
भाषाचक्रवर्तिश्रीनिवासाचार्येण विरचितायां
शाकुन्तलव्याख्यायां चतुर्थोऽङ्कः ॥

---

अर्थ इति ॥ हि निश्चितं कन्यार्थः परकीय एव । उत्पत्त्यनन्तरमेव परकीयत्वेन ज्ञात इत्यर्थः । अद्य परिग्रहीतुः परिणेतुस्तां सम्प्रेष्य ममायमात्मा प्रकाममत्यर्थं विशदो निर्मलो जातः । पूर्वं सामान्यतोऽन्यदीयत्वमुक्त्वा परिग्रहीतुस्तामित्यनेन नियतविषयत्वेन परकीयत्वं वदतावश्यप्रस्थापनीयत्वं ध्वनितम् । इदमेवोत्प्रेक्षायां न्यासेन सह साधर्म्यं ज्ञेयम् । प्रत्यर्पितो न्यासो येनेदृशा इवेत्युत्प्रेक्षा । इन्द्रवज्रा वृत्तम् ॥

इति श्रीमदभिज्ञानशाकुन्तलटीकायामर्थद्योतनिकायां
चतुर्थोऽङ्कः समाप्तः ॥

॥ श्रीरस्तु ॥

# ॥ अभिज्ञानशाकुन्तलम् ॥

## ॥ पञ्चमोऽङ्कः ॥

(ततः प्रविशत्यासनस्थो राजा, विदूषकश्च)

**विदूषकः**—(कर्णं दत्वा) [1]भो वअस्स सङ्गीदसालन्दरे अवहाणं देहि ॥ कळविसुद्धाए गीदीए सर(सं)जोओ सुणीयदि ॥ जाणे तत्तहोदी हंसवदिआ वण्णपरिअअं करेदित्ति ॥

---

1 भो वयस्य सङ्गीतशालान्तरेऽवधानं देहि ॥ कलविशुद्धायां गीत्यां स्वरयोगः श्रूयते ॥ जाने तत्रभवती हंसपदिका वर्णपरिचयं करोतीति ॥

---

कविरिदानीं स्वस्य महाकवित्वप्रदर्शनार्थं शापजसम्मुखविरहं वर्णयिष्यन् कथान्तरमारभते—ततः प्रविशतीत्यादि ॥

**भो वयस्येत्यादि ॥** —"गीतं वाद्यं तथा नृत्तं त्रयं सङ्गीतमुच्यते" इत्युक्तत्वात् ॥ एतत्त्रयं यत्र शालायां तस्याश्शालाया अभ्यन्तरे अन्तराळे गीतिर्नाम रागाद्याश्रयस्सन्दर्भविशेषः ॥ तस्या गीतेः कलविशुद्धत्वं विशेषणम् ॥ यदा । निषादष्षड्जस्य श्रुतिद्वयं संश्रयेत् । तदा स स्वरः काकलीत्युच्यते ॥ यदा गान्धारो मध्यमस्य श्रुतिद्वयं संश्रयेत् ॥ सान्तरकाकली ॥ तदुक्तं—"श्रुतिद्वयं चेत् षड्जस्य निषादस्संश्रयेद्यदा । सा काकली मध्यमस्य गान्धारस्त्वन्तरः स्मृत" इति सैव काकलीकल इत्युच्यते—"काकली तु कले सूक्ष्मे ध्वनौ तु मधुरा स्फुट" इत्युक्तत्वात् ॥ एतादृगव्यक्तमधुरस्वरयोगेन गीतेरत्यन्तश्राव्यता भवति ॥ यदाह—"गीतयः पञ्चशुद्धाद्या भिन्ना गौडी च वेसरा । साधारणी विशुद्धा स्यादवक्रैर्ललितैस्स्वरैः ॥ भिन्ना सूक्ष्मैस्स्वरैर्वक्रैर्मधुरैर्गमकैर्युता । गाढैस्त्रिस्थानगमकैरोहाटीललितैस्स्वरैः ॥ अखण्डितस्थितिस्थानत्रये गौडी मता सताम् । ओहाटी कम्पितैर्मन्द्रैर्मृदुद्रुततरैस्स्वरैः ॥ हकारौकारयोगेन हन्न्यस्ते चुबुके भवेत् । वेगवद्भिस्स्वरैर्वर्णचतुष्केप्यतिरक्तितः ॥ वेगस्वरारागगीतिर्वेसराचोच्यते बुधैः । चतुर्गीतिगतं लक्ष्म श्रिता साधारणी मता ॥ शुद्धादिगीतियोगेन रागाश्शुद्धादयो मताः । पञ्चधा ग्रामरागास्स्युः पञ्चगीति-

---

भो वयस्य सखे, सङ्गीतशालाभ्यन्तरेऽवधानं देहि । कलविशुद्धाया गीतेः स्वरसंयोगः श्रूयते । कला मधुरास्फुटध्वनियुक्ता अनेन सुशारीरमुक्तम् । 'भारी तु ध्वनिमाधुर्यरक्तिगाम्भीर्यमार्दवैः' इत्यादिना सुशारीरस्य गुणा उक्ता रत्नाकरे । अतएवाग्रे 'लक्ष्यते रागभरिता' इति । विशुद्धा शुद्धा नाम गीतिः । ग्रामरागजनिकेत्यर्थः । तस्याः स्वरसंयोगः । तत्सम्बन्धी स्वरालाप इत्यर्थः । तदुक्तं तत्रैव—'गीतयः पञ्च शुद्धाख्या भिन्ना गौडा निवेसरा । साधारणी विशुद्धा स्यादवक्रैर्ललितैः स्वरैः ॥' इति । जाने

राजा—तूष्णीं भव ॥ यावदाकर्णयामि ॥

(आकाशे गीयते)

[1]अहिणवमहुलोलुवो (भवं) तुमं
तह परिचुम्बिअ चूअमञ्जरिं ।

1 अभिनवमधुलोलु(पोभवान्) पस्त्वं तथा परिचुंब्य चूतमञ्जरीं ।

समाश्रयाः" इत्युक्तत्वात् । स्वरयोगइति ॥ यद्यपि स्वरशब्दो नानार्थकः ॥ तथापि षड्जादिष्वेव रूढः ॥ तदुक्तमाञ्जनेयेन—"स्वरशब्दो मयूरादिसमुत्पन्नेषु सप्तसु । षड्जादिष्वेव रूढोऽयमिति नैवाङ्घ्रु वर्तते" इति ॥ गीत्यभ्यासे प्रथमतो वर्णपरिचयः कार्यः ॥ आकाशे गीयत इति ॥ नाट्ये रङ्गमध्ये नेपथ्यव्यतिरिक्तस्थानमाकाशमित्युच्यते ॥

१ अहिणवेत्यादि ॥ अत्र मधुकरवृत्तान्तेन प्रकरणादिसहकृतेन दुष्यन्तवृत्तान्तो ध्वन्यते ॥ अर्थस्तु मधुकरवृत्तान्तकथनद्वारा कृच्छ्रात्पूर्वपरिगृहीततादृग्रूपशकुन्तलाविस्मरणाद्राज्ञ उपालम्भः क्रियते ॥ मधुकरोपमानेन मधुकरस्य यथा नानापुष्परसग्रहणशीलत्वं तथा राजानो बहुवल्लभा इति न्यायेन विविधपद्मिनीजातिस्त्रीसम्भाषणालिङ्गनचुम्बनादिसारवेत्तृता सूच्यते न त्वनागरिकतया स्त्रीरत्नतारतम्यानभिज्ञतेति भावः ॥ अभिनवमधुलोलुपस्सन् ॥ अभिनवपदेन "रत्नहारी तु पार्थिव" इति न्यायेन उपर्युपरि ततोऽधिकाननुभूतादृष्टाश्रुतपूर्वलोकोत्तरयुवतिसम्भोगलम्पटत्वं प्रकाश्यते ॥ मधुपदेन तद्दर्शनमात्रेण सञ्जातमदभावेन तत्सम्पर्कादेः कालाक्षमत्वं प्रतीयते तेन वस्तुसौन्दर्यप्राबल्यादनुरागवृद्धेः कारणमुक्तं लोलुपपदेन अन्तः पुरस्त्रीभ्यश्शकुन्तलायामधिकरूपलावण्यादिगुणबाहुल्यादिदर्शनात् ॥ तद्दर्शनानन्तरं तत्सम्पर्कजनितसर्वकार्यवैमुख्यात् ॥ तत्प्राप्तिनिमित्तकचिन्तया तत्कालजनिततदेकशरणमदनाकुलितत्वादिकं ज्ञाप्यते ॥ त्वमित्यनेन स्वकृतकार्यं स्वयमेव जानासि नान्यइतिद्योत्यते ॥ चूतमञ्जर्युपमानेनचूतमञ्जर्याइतरपुष्पाणीवहठाद्विकासाभावोऽवगम्यते ॥ तथैव षष्ठेऽङ्केवदिष्यति—"चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रज" इति ॥ अनेनगुरुजनासम्मत्या स्वाभिसरणभीरुभावेन नायकसम्पर्कं प्रति हठान्नायिकानुमतिर्न कृतेति ध्वन्यते ॥ चूतमञ्जरीमित्यनेन इतरस्त्रीवैलक्षण्यात्सजातीयोत्कृष्टता सूच्यते ॥ तथा परिचुम्ब्येति ॥ तथेत्यनेनतद्दर्शनानन्तरं विरहपरम्पराजनितस्वशरीरकार्श्यवैवर्ण्याश्रुपातस्तम्भप्रळयादिमरणसध्रीचीनात्मदशानुभवात्तत्सङ्गमासङ्गमयोरेव स्वजीवितसद्भावासद्भावनिमित्तत्वधिया गुरुजनासम्मत्या स्वाभिसरणे सति स्वकुलकळङ्कभूतव्यभिचारित्वदोषशङ्किन्या नायिकायास्स्वाभिसरणार्थविश्वा-

तत्रभवती हंसपदिका वर्णपरिचयं स्थाप्यारोह्यवरोह्यात्मकगानक्रियाभ्यासं करोति । तथा च तत्र—'गानक्रियोच्यते वर्णः स चतुर्धा निरूपितः । स्थाप्यारोह्यवरोही च सञ्चारी इति ॥

अहिणवेति ॥ अभिनवेत्यपरवक्त्रम् । अभिनवमधुलोलुपो भवांस्तथा परिचुम्ब्य चूतमञ्जरीम् । कमलवसतिमात्रनिर्वृतो मधुकर विस्मृतोऽस्येनां कथम् ॥ नूतनपुष्परससतृष्णः । नूतनत्वं प्रत्यग्रत्वेन समयविशेषजातत्वेन च । अत एव तथा तेन प्रकारेण ।

कमळवसंदिमेत्तणिव्वुदो
महुअर! विह्मरिदोऽसि णं कहं?॥ १

कमलवसतिमात्रनिर्वृतो मधुकर विस्मृतोऽस्येनां कथम्?

सार्थं च हेतुत्वेनोक्तं—"गान्धर्वेण विवाहेन बह्व्यो राजर्षिकन्यका" इत्यादिपरिग्रहबहुत्वेऽपीत्यादिवाक्यं च स्मारयित्वा दुष्यन्तस्य तत्कालजनितमदनकातरताया अनिर्वचनीयत्वं प्रकाश्यते॥ परिचुम्ब्येति चुम्बनशब्देन नायकारब्धसम्भोगशृङ्गारः कथ्यते॥ परितस्सर्वविषयेषु चुम्बनं कृत्वेत्यनेन यावता कालेन सुरतप्रस्तावाङ्गीकारः तावत् क्रमेण नायककृतबहुविधानुनयवशीकरणप्रकारचातुरी द्योत्यते॥ तेन नायकस्य कामतन्त्रवैदग्ध्यं नायिकायाः॥ कन्याभावसुलभं मौग्ध्यं च ध्वन्यते॥ यद्वा—सर्वविषयचुम्बनार्थेनाधरश्रवणहस्तनेत्राद्यवयवानां चुम्बनरहस्यश्रवणस्तनमुकुळादिसर्वाङ्गस्पर्शनालिङ्गनसर्वाङ्गदर्शनादिभिर्यथा मनोरथपरिपूर्तिर्भवति। तथा सम्भोगः कृत इति ज्ञाप्यते॥ तेन देशस्य विविक्ततया निरर्गळसुरतक्रिया ध्वनिता। कमलवसतिमात्रनिर्वृतइति कमलस्य रात्रौ सङ्कोचवत्तया दिवामात्रदर्शनीयता सूचिता॥ कमलोपमानेनान्तःपुरस्त्रीणां मानुषशरीरसद्भावात् विकारादिसम्भवात् कतिपयकालसम्भोगार्हत्वं सूचितम्॥ शकुन्तलायास्साक्षादप्सरस्सम्भवत्वेन पूर्वोक्तविकारासम्भवात् सार्वकालिकसम्भोगार्हत्वमुक्तम्॥ एनां लोकोत्तरचमत्कारकारिबहुगुणाधारभूतामेनामिति यावत्॥ कथं केन हेतुना विस्मृतोऽसीति मधुकरवृत्तान्तेन राज्ञ उपालम्भः क्रियते॥ अत्र हेतुर्नामालङ्कारः॥ तदुक्तं—"यत्प्रयोजनसामर्थ्याद्वाक्यमिष्टार्थसाधकम्। समासोक्तं मनोग्राहि स हेतुरिति कीर्तितः" इति॥ यद्वाक्यमिष्टसाधकं यत्प्रयोजनवशात् संक्षेपेणार्थान्तरोपयोगि भवति सहेतुः॥ अत्र मधुकरवृत्तान्तेन पूर्वपरिगृहीतशकुन्तलास्मरणात्॥ आश्रमात् स्वनगरं प्रति सर्वथा नेतव्या॥ चूतमञ्जर्युपमानेन इतरस्त्रीविलक्षणलोकोत्तरबहुगुणवत्तया नायकस्यानुरागविषययोग्यता चेति द्वयमपि संक्षेपेण प्रत्यपादि॥ किञ्चात्रान्योक्त्यलङ्कारेण पताकास्थानमुक्तम् तदुक्तं—प्राकरणिकस्य वस्तुनो भाविनस्सूचनं पताकास्थानकमिति॥ यथा पताका स्वां सेनां सूचयति॥ तद्वदिदमपीति पताकास्थानकम्॥ तद्विविधं समानेतिवृत्तं समानविशेषणं चेति॥ एतच्चान्योक्ति समासोक्त्यलङ्कारभेदाद्भवति॥ अत्र मधुकरवृत्तान्तेन प्रकरणादिसहकृतेन दुष्यन्तवृत्तान्तो ध्वन्यते॥ न तु श्लिष्टशब्देनोच्यते॥

यथा स्वाभिलाषपरिपूर्तिर्भवतीत्यर्थः। चूतमञ्जरीमाम्रमञ्जरीम्। 'मञ्जरी वल्लरी स्त्रियाम्' इत्यमरः। परितः समन्ततश्चुम्बित्वा कमलं सर्वदानुभूतं न त्वपूर्वं चूतमञ्जर्यादि। तत्रापि वसतिमात्रं न तु मध्वास्वादस्तेनापि निर्वृतः सुखित एनां चूतमञ्जरीं कथं विस्मृतोऽसि। अत एव मधुकरेति साभिप्रायम्। हेत्वनुप्रासौ। अत्र सारूप्यनिमित्तया प्रशंसया राज्ञो दुष्यन्तस्य शकुन्तलाविस्मरणस्य प्रस्तुतस्य गम्यत्वादाक्षेपनामाङ्गमुपक्षिप्तम्। तल्लक्षणं दशरूपके—'गर्भबीजसमुद्भेदादाक्षेपः परिकीर्तितः' इति। अथ चानेन तृतीयं पताकास्थानमुक्तम्। तल्लक्षणमुक्तं मातृगुप्ताचार्यैः—'अर्थोपक्षेपणं यत्तु गूढं सविनयं भवेत्। श्लिष्टप्रत्युत्तरोपेतं तृतीयं तन्मतं तथा॥' इति 'मधुव्रते मधुकरः कामुकेऽपि प्रकीर्तितः' इति विश्वः। कमलाया लक्ष्म्या वसतिस्तया निर्वृत इति। 'दीर्घह्रस्वौ

**राजा**—अहो रागपरिवाहिनी गीतिः ॥

**विदूषकः**—[1]किं दाव गीदीए भवदा अवगदो अक्खरत्थो ?

**राजा**—(स्मितं कृत्वा) सकृत् कृतप्रणयोऽयं जनः ॥ तदस्यादेवीं वसुमतीमन्तरेण मदुपालम्भमवगतोऽस्मि ॥ सखे माढव्य! मद्वचनादुच्यतां हंसपदिका 'निपुणमुपालब्धोऽस्मि' इति ॥

**विदूषकः**—[2]जं भवं आणवेदि ॥ (इत्युत्थाय) भो वअस्स गहीदस्स ताए परकीएहिं हत्थेहिं सिहण्डए (ताडीअमाणस्स) अज्झ राहिं वि अ वीदराअस्स णत्थि (दाणिं) मे मोक्खो ॥

1 किं तावत् गीत्या भवताऽवगतोऽक्षरार्थः ?

2 यद्भवानाज्ञापयति ॥ भो वयस्य! गृहीतस्य तया परकीयैर्हस्तैश्शिखण्डके (ताडयमानस्य) ऽप्सरोभिरिव वीतरागस्य नास्ति मे मोक्षः ॥

**अहो इत्यादि ॥** रागपरिवाहिनीति गीतेराश्रयत्वेन रागस्यातिशयेन अभिव्यक्तौ परीवाह इव भवति। यथा जलाधारभूते तटाके जलातिशये सत्युल्कूलप्रवाहो भवति। तद्वदित्यर्थः ॥

**किमित्यादि ॥** किमिति प्रश्ने ॥ तावत् साकल्ये ॥

सकृत्कृतप्रणयः सकृत् एकवारं कृतः प्रणयः विस्रम्भः यस्मिन् स तथोक्तः ॥ अभिनवेत्यादिना एतदन्तेन ॥ भ्रंशो नामालङ्कारो व्यज्यते तदुक्तं—"वाच्यमर्थं परित्यज्य दृष्टान्ताद्यैरनेकधा। अन्यस्मिन्नेव पतनादिह भ्रंशस्स उच्यते" इति ॥ अत्र मधुकरवृत्तान्तरूपं वाच्यार्थं परित्यज्य राज्ञा स्ववृत्तान्तविचारः कृत इति भ्रंशः ॥ किञ्च। नाळिका नाम वीथ्यङ्गमुक्तं तल्लक्षणं—"सोपहासनिगूढार्थप्रहेळिका नाळिका" इति ॥

**तदित्यादि ॥** वसुमतीमन्तरेण मदुपालम्भमवगतोऽस्मीत्यनेन भ्रमरोपालम्भव्याजात् समनन्तरागम्यमानशकुन्तलावृत्तान्तं स्मृतवतो दुष्यन्तस्योपालम्भः कविना कृतः॥ तमजानन् दुष्यन्तोऽस्या अभिधाया अन्यथाभिप्रायमकल्पयदिति ज्ञातव्यम् ॥ निपुणं सप्रौढम् ॥

मिथो वृत्तौ' इत्यनेन ह्रस्वत्वम् । अभिनवं यन्मध्वधरमधु तत्र लोलुप इति सर्वेषां श्लिष्टत्वम् । रञ्जनं रागस्तत्परिवाहिनी । अत्यन्तरञ्जिकेत्यर्थः । अत्र धातुसम्बद्धा न तु गीतिशब्दवाच्या। किं तावद्गीत्या । अवगतोऽक्षरार्थः । सकृदेकवारं कृतः प्रणयो याच्ञा येनैदृशोऽयं जनो हंसपदिकालक्षणः। तस्याः सकाशाद्देवीवसुमतीमन्तरेण विना क्षणमपि न तिष्ठामीति मत्सम्बन्धमुपालम्भमवगतोऽस्मि। क्वचित् 'तदद्य देवीं वसुमतीमन्तरेणोपालम्भमुपाकृतोऽस्मि' इति पाठः सुबोध एव। यद्भवानाज्ञापयति। भो वयस्य, गृहीतस्य तया परकीयैर्हस्तैः शिखण्डके काकपक्षके। कोऽल्पार्थे। ताड्यमानस्य। तया शिखण्डके गृहीतस्येति योज्यम्। अप्सरसा वीतरागस्येव नास्तीदानीं मे मोक्षो मोचनं कैवल्यं च।

**राजा**—गच्छ नागरिकवृत्त्या संज्ञापयैनाम् ।

(इति निष्क्रान्तः)

**विदूषकः**—[1]का गई ॥

**राजा**—(आत्मगतम्) किं नु खलु गीतमेवंविधार्थमाकर्ण्य । इष्टजनविरहादृतेऽपि बलवदुत्कण्ठितोऽस्मि अथवा—

**रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्**
**पर्युत्सुको भवति यत्सुखितोऽपि जन्तुः ।**

---

1 का गतिः ॥

---

नागरिकवृत्त्या नागरिकः प्रवीणः प्रौढाङ्गनासम्भाषणकुशल इति यावत् ॥ तस्य वृत्तिः वक्रोक्तिवैचित्र्येण तद्विडम्बनचातुरी ॥ संज्ञापय आवेदय ॥

**किं नु खल्वित्यादि** ॥ किं नु खल्विति हेतुजिज्ञासायां ॥ एवंविधार्थं उक्तार्थकं ॥ इष्टजनविरहादृते प्रियजनविश्लेषं विना ॥ बलवद्दृढं ॥ उत्कण्ठितः पर्युत्सुकः ॥

२ **रम्याणीति** ॥ जन्तुः जनः सुखितोऽपि इष्टजनसमेतोऽपि रम्याणि सुभगानि ॥ रूपाणीति शेषः ॥ वीक्ष्य ॥ मधुरां मनोहरां । शब्दान् गीतादीन् निशम्य आकर्ण्य ॥ पर्युत्सुकः उत्कण्ठितो भवतीति यत् तस्मात् भावस्थिराणि आत्मनिष्ठानि ॥

---

अप्सरसा गृहीतस्य वीतरागस्येति योज्यम् । श्लेषोपमा । नागरिकवृत्त्येति त्रिपताकस्य मध्यमातर्जनीभ्यां वक्राभ्यामधोमुखं कल्पिताभ्यामित्यर्थः । का गतिः । राजवचनमनुल्लङ्घनीयमिति भावः । 'गीतमाकर्ण्य' इति पाठः । 'गीतार्थमाकर्ण्य' इति पाठे गीतं चार्थश्चेति गीतार्थमाकर्ण्य श्रुत्वा ज्ञात्वेति व्याख्येयम् । इष्टजनविरहादृत इति शापप्रभावाद्वस्तुतस्तस्मादेव बलवदधिकम् ॥

**रम्याणीति** ॥ रम्याणि वस्तूनि वीक्ष्य । विशेषणेनैव विशेष्यावगतेस्तदनुपादानम् । अत एव प्रक्रमभङ्गः । मधुराञ्छ्रुतिसुखदाञ्छब्दान्गीतादीन्निशम्य श्रुत्वा च सुखितोऽपि विरही भवत्येवेत्यपिशब्दार्थः । जन्तुः प्राणिमात्रं पर्युत्सुकीभवत्युत्कण्ठीभवति । रम्याणि वीक्ष्येति प्रसङ्गसङ्गत्योक्तम् । यद्वा । हृदि स्फुरन्तं चूतमञ्जर्यादिकमर्थं पुरः साक्षादिव कुर्वत इतीयमुक्तिः । नूनं निश्चितं तद्भावैर्वासनाभिः स्थिराणि निश्चलानि । जन्मसहस्रैरपि दूरीकर्तुमशक्यानीति भावः । जननान्तरसौहृदान्यन्यजन्मसौहार्दान्यबोधपूर्वं विषयविशेषज्ञानाभावपूर्वं चेतसा स्मरति । यतो जननान्तरसौहृदमत एव पूर्वमिति हेतुत्वेनेह योज्यम् । सामान्यतो जन्मान्तराणामनुरागं स्मृत्वा समुत्सुकत्वं भवतीत्यर्थः । अत्र स्वस्य शकुन्तलाविषये जन्मान्तरीयोऽधुनातनशापाच्छादितोऽनुरागो गम्यः । यतो विशेषे प्रस्तुते सामान्योक्तेरप्रस्तुतप्रशंसा । तेन स्थायिन्या रतेरविच्छेदो ध्वनितः । अत्र नूनमित्युत्प्रेक्षायामिति कश्चित् । तन्न । अत्र जन्मान्तरीयस्मरणं शास्त्रसिद्धमेव । तस्यासम्भवात्सम्बन्धः क्वचिदुत्प्रेक्षणीयः । अत्र सामान्यत उक्तेः क्वचित्फलाभावान्न तदुत्प्रेक्षा ।

तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥ २

(इति पर्याकुलस्तिष्ठति)

जननान्तरसौहृदानि जन्मान्तरप्रियाणि चेतसा मनसा ॥ अबोधपूर्वं अज्ञातपूर्वं ॥ नूनं स्मरतीवेत्युत्प्रेक्षितं ॥ अत्र गीतस्योद्दीपकत्वमुक्तं ॥ तदुक्तं—"सदृशादृष्टचिन्ताद्यैः स्मृतिज्ञातार्थभावनं । देशान्तरेऽनुभूतस्य तथा कालान्तरेऽपि वा । तद्देशादिविशिष्टस्य चिन्तास्मृतिनिरन्तरा" इति ॥ अत्र गीतिश्रवणोद्बुद्धरतिभावव्यसनं च शृङ्गाररसपोषणं भवति ॥

अथ समयविशेषेऽसदुत्प्रेक्ष्यत इति चेत्तदपि न । रसोत्पादकारणस्योक्तेः । तेन काव्यलिङ्गमेव । तयोश्च पदार्थवाक्यार्थरूपत्वात्संसृष्टिः । ननु जननान्तराणां नानाविधानामनन्तानां सम्भवात्कथमेतद्रूपेण स्मरणं तिर्यग्योन्यादिना व्यवधानादिति चेन्न । पातञ्जलशास्त्रसिद्धत्वात् । तथाहि—'ततस्तद्विपाकानुगुणानामभिव्यक्तिर्वासनानाम्' । इदं सूत्रम् । अस्य भोजकृता वृत्तिः—'द्विविधा वासनाः स्मृतिफला जात्यायुर्भोगफलाश्च । जात्यायुर्भोगफला एकानेकजन्मभवा इति पूर्वमेव कृततन्निश्चयः । यास्तु स्मृतिमात्रफलास्ततः कर्मणोऽन्यादृक्शरीरमारब्धं देवमानुषतिर्यगादिभेदं तस्य विपाकस्य या अनुगुणा अनुरूपा वासनास्तासामेव तस्मादभिव्यक्तिर्वासनानां भवति' । अयमर्थः—येन कर्मणा पूर्वं देवतादिशरीरमारब्धं जात्यन्तरशतव्यवधानेऽपि पुनस्तथाविधस्यैव शरीरस्यारम्भे तद्दशायां नरकादिशरीरोपभोगवासना व्यक्तिमायान्ति । आसामेव वासनानां कार्यकारणभावानुपपत्तिमाशङ्क्य समर्थयितुमाह—'जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात्' सूत्रम् । इह नानायोनिषु भ्रमतां संसारिणां काञ्चिद्योनिमनुभूय यदा योन्यन्तरसहस्रव्यवधाने पुनस्तामेव योनिं प्रतिपद्यन्ते, तदा तस्यां पूर्वानुभूतायां योनौ तथाविधशरीरादिव्यञ्जकापेक्षया वासनाः प्रकटीभूता आसन्, तास्तथाविधव्यञ्जकशरीरादिलाभे प्रकटीभवन्ति । जातिदेशकालव्यवधानेऽपि तासां स्वानुरूपस्मृत्यापि फलसाधन आनन्तर्यमेव । कुतः स्मृतिसंस्कारयोरेकरूपत्वात् । तथाहि । अनुष्ठीयमानात्कर्मणश्चित्तसत्त्वेन वासनारूपाः संस्काराः समुत्पद्यन्ते । स च स्वर्गनरकादीनां फलानां चाङ्कुरीभूतः कर्मणां वा यागादिनां शक्तिरूपतयावस्थानं कर्तुर्वा तथाविधभोगभोक्तृत्वरूपं सामर्थ्यम् । संस्कारात्स्मृतिः स्मृतेश्च सुखदुःखोपभोगः, तदनुभवाच्च पुनरपि संस्कारस्मृत्यादयः । एवं च यस्य स्मृतिसंस्कारादयो भिन्नास्तस्याप्यानन्तर्याभावे दुर्लभः कार्यकारणभावः । अस्माकं तु यदानुभव एव संस्कारीभवति संस्कारश्च स्मृतिरूपतया परिणमते तदैकैकस्यैव चित्तस्यानुसन्धातृत्वेन स्थितत्वान्न कार्यकारणभावो दुर्घटः । अतएवात्र श्लोके स्मरणस्य चेतःकर्तृत्वेऽपि पुनस्तदुपादानम् । अतश्चासावेव कविः—'मनो हि जन्मान्तरसङ्गतिज्ञम्' (रघुवंशे ७।१५) इत्याह स्म । भवत्वानन्तर्यं कार्यकारणभावश्च वासनानाम् । यदा तु प्रथममेवानुभवः प्रवर्तते तदा किं वासनानिमित्त उत निर्निमित्त इति शङ्कां व्यपनेतुमाह—'तासामनादित्वं चाशिषो नित्यत्वात्' सूत्रम् । तासां वासनानामनादित्वम् । न विद्यत आदिर्यस्य तस्य भावस्तत्त्वम् । आसामादिर्नास्तीत्यर्थः । कुत इत्याह—आशिषो नित्यत्वात् । येयमाशीर्महामोहरूपा सदैव सुखसाधना

(प्रविश्य कंचुकी)

**कंचुकी**—(निश्वस्य) अहो खल्वीदृशीमवस्थां प्रतिपन्नोऽस्मि ॥

आचार इत्य(व)भिहितेन मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः ।

---

कञ्चुकी सौविदल्लः—"विदुषां संस्कृतभाषा मन्त्रिकंचुकिनामपि" इतिवचनात् संस्कृतभाषा प्रयुक्ता ॥ निश्वस्येति ॥ निश्वासबाहुल्यं तु कंचुकी यस्य स्वावस्था वस्तुस्वरूपज्ञानान्निर्वेदे वर्तते, तदेवाह—अहो इत्यादि ॥ अहो आश्चर्ये ॥ ईदृशीमनुभूतवक्ष्यमाणामवस्थां दशाभेदं प्रतिपन्नोऽस्मि सम्प्राप्तो भवामि ॥

३ **आचार इति** ॥ आचारः कुलधर्मः इत्यवहितेन आप्तैः शिक्षितेन मया अवरोधगृहेषु अन्तःपुरगृहेषु ॥ बहुवचनेन राज्ञो बहुवल्लभतया तत्तत्समस्तयुवतिगृहद्वाराणां स्वस्यैव संरक्षणाधिकारस्सूच्यते ॥ तेन च राज्ञस्स्वकीयविश्वासपात्रता प्रकाश्यते ॥ बहुतिथे बहुसंख्यापूरके काले शैशवकौमारयौवनादिसमये ॥ गते वयोबलात् शुद्धान्तगृहद्वारसंरक्षणविभवकृत्यैरनायासेन नीते सति ॥ अनेन चिरादारभ्य राजगृहावस्थानात् "शीलं संवसता ज्ञेयं तच्च कालेन भूयसा" इति वचनात् राजचित्तवृत्त्यभिज्ञतया

---

मे भूयात्सा मा कदाचन तैर्वियोगो भूदिति यः सङ्कल्पविशेषो वासनानां कारणं तस्य नित्यत्वादनादित्वमित्यर्थ इति । अबोधपूर्वं स्मरतीति शब्दशक्तिमूलो विरोधाभासो व्यङ्ग्यः । रम्याण्येति यत्सुयत्सु इति नूननेति च्छेकवृत्तिश्रुत्यनुप्रासाः । वसन्ततिलका वृत्तम् । औत्सुक्यलक्षणं सुधाकरे—'कालाक्षमत्वमौत्सुक्यमिष्टवस्तुवियोगतः । तद्दर्शनाद्रम्यवस्तुदिदृक्षादेश्च' इति । नन्वत्रौत्सुक्यलक्षणस्य भावस्य शब्दवाच्यत्वं दोष इति चेन्न । अत्र न तथा विभावादेरौत्सुक्यप्रतीतिर्यथा पुनरौत्सुक्यग्रहणात् । एतदभिप्रायेणैव 'न दोषः स्वपदेनोक्तावपि सञ्चारिणः क्वचित्' इत्युक्तम् । क्वचित् 'भावस्थितानि' इति पाठः । सोऽपि साम्प्रदायिक एव । पर्याकुल इति विरहित्वात् । सत्यपि शापे स्थायिन्या रतेरविच्छेदार्थमेतादृगुक्तिः । एवमग्रेऽपि ज्ञेयम् । अन्यथा मध्ये विच्छेदान्महान्रसदोषः स्यात् ॥

**तत इति** ॥ स्वकार्यवशात्सूचनामकृत्वैव कञ्चुकिनः प्रवेशः । कञ्चुकिलक्षणं मातृगुप्ताचार्यैरुक्तम्—'ये नित्यं सत्यसम्पन्नाः कामदोषविवर्जिताः । ज्ञानविज्ञानकुशलाः कञ्चुकीयास्तु ते स्मृताः ॥' इति । ईदृशीमिति वृद्धावस्थाम् ॥

**आचार इति** ॥ अवहितेन सावधानेन मया । शक्तेनापीत्यर्थः । राज्ञोऽवरोधगृहेष्वन्तःपुरेष्वाचार इति रक्षाधिकारिणा वेत्रयष्टिर्गृहीतव्येत्याचाराद्या वेत्रयष्टिर्गृहीता बहुतिथे काले ह्यायुर्लक्षणे गते । 'बहुपूगगणसङ्घस्य तिथुक्' इति तिथुक् । मम सैव वेत्रयष्टिरवलम्बनार्था शरीरावलम्बनप्रयोजना जाता । 'अर्थेन सह नित्यसमासः परवल्लिङ्गता चे'ति समासः स्त्रीलिङ्गता च । कीदृशो मम । प्रस्थाने गमनारम्भे विक्लबा गतिर्गमनक्रिया यस्य । अत्र पूर्वार्धे उक्तनिमित्ता विभावना । असक्तत्वस्य प्रसिद्धकारणस्य

काले गते बहुतिथे मम सैव जाता
प्रस्थानविक्लबगतेरवलम्बना(र्था)र्थम् ॥ ३

भोः कामं खलु धर्मकार्यमनतिपात्यं देवस्य ॥ तथाऽपीदानीमेव धर्मासनादु(त्थिता)त्थाय पुनरुपरोधकारि कण्वशिष्यागमनमस्मै नोत्सहे निवे-(दितुं)दयितुम् ॥ अथवा अविश्रमो हि लोकतन्त्राधिकारः ॥

---

विश्वस्ततया च राज्ञोऽन्तःपुरविहरणाद्युचितानुचितसमयेऽपि स्वस्य प्रवेशनिवेदनादावनर्गळत्वं द्योत्यते ॥ तेन कण्वशिष्यागमननिवेदने स्वस्यावसरानपेक्षित्वं ध्वनितमिति भावः ॥ ममेत्येकवचनेन शुद्धान्तगृहपालनकृत्ये स्वस्यैव प्रेष्यप्रेषकत्वं च ध्वन्यते ॥ नत्वितराधिकारस्यैवान्यद्वारा कृत्यकरणमिति भावः ॥ किञ्च, ममेत्येकवचनेन स्वस्य कळत्रपुत्रशून्यत्वं च प्रकाश्यते ॥ सेति ॥ या पूर्वं राजद्वारनिवारणसामग्रीकतया गृहीता सेति यावत् ॥ अनेन सार्वकालिकवेत्रधारणेन राजगृहएव जन्मक्षेपात् इतराधिकारानियुक्ततया कदापि विश्रमभावो गम्यते ॥ प्रस्थानविक्लबगतेः प्रस्थाने सञ्चारे विक्लबा विह्वला गतिर्गमनं यस्य स तथोक्तः तस्यावलम्बनार्थमादाय जायत इति यावत् ॥ अत्र कंचुकीयस्य तत्त्वज्ञानोपजनितनिर्वेद एव शांतरसस्य स्थायीभावः ॥ अतएव निर्वेदस्य प्रायस्सञ्चारिषु प्रथममुपादानं सर्वैराचार्यैरकारि ॥ सञ्चारिणामपि कदाचित् स्थायिता भवति ॥ स्थायिनामपि कदाचित् सञ्चारिता भवति ॥ यथा वीररसस्य धृतिस्स्थायी भवति ॥ स एव श्रृङ्गाररसस्य सञ्चारी निर्वेदस्य ॥ यदा शान्तरसस्थायित्वं तदा रोमोद्गमानंदाश्रुस्तम्भादिभिरभिनयो योज्यः ॥ तस्यैव यदा विप्रलम्भांगता तदा दैन्यस्वेदश्रमवैवर्ण्यादिभिरभिनयः ॥

**भो इत्यादि ॥** धर्मकार्यं शिष्टजनागमनप्रयोजनश्रवणकरणादिकं कामं यद्यपि अनतिपात्यं अनुल्लङ्घनीयं ॥ लोकतन्त्राधिकारः लोकानां जनानां तन्त्रः प्रयोगः रक्षाकर्म तस्मिन्नधिकारो योगः अविश्रमः विश्रान्तिरहितः ॥

---

निषेधोऽवहितेनेति तद्विरुद्धमुखेनोक्तः। निमित्तं चाचार इत्युक्तम्। उत्तरार्धे वार्धकगमनलक्षणकार्यस्यारम्भे वेत्रयष्टेः सहायतोपादानात्समाहितम्। 'कार्यारम्भे सहायाप्तिः' इति तल्लक्षणात्। अत्र प्रस्थानगतिशब्दयोरन्यतराग्रहणे विह्वलत्वं मनोगतमपि प्रतीयत इत्युभयग्रहणम्। गतिशब्दस्य ज्ञानार्थत्वादपि 'वृद्धस्य विक्लबगतेः' इति वा पठनीयम्। एवमवरोधनियोगकालेन तदप्यर्थपौनरुक्त्यं परिहरणीयम्। त्यतायेति हितेहीतेति गृहीगृहेति गतेगत इति च्छेकवृत्तिश्रुत्यनुप्रासाः। वृत्तमनन्तरोक्तम्। भोः, काममिति प्रकाशानुमता। अनतिपात्यमनतिक्रमणीयम्। न विद्यते विश्रमो यस्य सोऽविश्रमः। लोके भुवने तन्त्राधिकारः प्रधानाधिकारः। विश्रान्तिरहित इत्यर्थः। 'लोकस्तु भुवने जने'। 'तन्त्रं प्रधाने सिद्धान्ते' इत्यमरः। 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' इत्यविश्रमपदे वृद्ध्यभावः ॥

कुतः—

भानुस्सकृद्युक्ततुरङ्ग एव रात्रिंदिवं गन्धवहः प्र(या)वाति ।
शेषस्सदैवाहितभूमिभारः षष्ठांशवृत्तेरपि धर्म एषः ॥ ४

यावन्नियोगमनुतिष्ठामि ॥ (परिक्रम्यावलोक्य च) एष देवः—

---

कुतः प्रश्ने ॥

४ भानुरिति ॥ भानुस्सूर्यः सकृदेकवारमेव ॥ युक्ततुरङ्गः सन्नद्धाश्वः राज्ञस्सूर्यसादृश्यकथनेन भानोर्यथा चक्रवाळावधि तमोनिर्हरणशक्तिमत्त्वं तथा दुष्यन्तस्यापि जनानामज्ञानजनितामार्गप्रवर्तननिवारकत्वेन चक्रवाळपर्यन्तमाज्ञासम्पत्तिर्ध्वन्यते ॥ गन्धवहः पवनः ॥ रात्रिन्दिवमित्यचतुरेत्यादिना निपातः ॥ कालाध्वनोरत्यन्तसंयोगे द्वितीया ॥ प्रवाति अविश्रान्तं वाति ॥ वर्तमानव्यपदेशेन सर्वजनानुभवप्रसिद्धिरुक्ता ॥ पवनसदृशार्थकथनेन पवनगतेर्यथा सर्वत्र निरर्गळत्वं तथा दुष्यन्तरथगतेस्सर्वत्राकुण्ठितत्वं प्रकाश्यते ॥ शेषः फणीन्द्रः ॥ सदा आहितभूमिभारः आहितः निहितः भूमिभारः यत्र स तथोक्तः । शेषस्येव राज्ञोऽपि भूमिभरणसामर्थ्यं ध्वनितम् ॥ षष्ठांशवृत्तेः षष्ठांशः रक्षाशुल्कषड्भागः वृत्तिर्जीवनं यस्य स तथोक्तः ॥ एष लोकतन्त्राधिकारे विश्रमाभावः ॥ धर्मः व्यापारः ॥ अत्र पदानां सदृशार्थादुच्चयालङ्कारः ॥ तदुक्तं—"बहूनां तु प्रयुक्तानां पदानां बहुभिः पदैः । उच्चयस्सदृशार्थो यस्स विज्ञेयः पदोच्चयः ॥" इति ॥

यावदित्यादि ॥ नियोगं शासनम् ॥

---

भानुरिति ॥ भानुः सूर्यः सकृदेकवारमेव युक्ता योजितास्तुरङ्गा येन सः । एतेन तुरङ्गमात्रयोजनेऽप्यस्याविश्रान्तिर्ध्वनिता । एतादृश एवास्त इति शेषः । यस्य तुरङ्गयोजने विश्रान्त्यभावस्तस्यान्यकार्येऽविश्रान्तिः किमु वक्तव्येत्यविश्रान्तगमनं ध्वन्यते । केचिद्रात्रिन्दिवं यातीत्यत्रापि योजयन्ति तन्न सम्यक् । यतः प्रतिवस्तूपमायां प्रतिवाक्यसामान्यधर्मस्य भिन्नपदोपादानत्वमपेक्ष्यते तद्धीयेत । किञ्चैतद्विशेषणोपादानं व्यर्थं स्यात् । भानू रात्रिन्दिवं प्रयातीत्येतावतैवाभिमतार्थसिद्धेः प्रक्रमभङ्गश्चापद्येत । अग्रिमयोर्विशेषणानुपादानात् । गन्धवहो वायुरावहप्रवहादीरात्रिन्दिवं प्रयाति । 'अचतुर-" इति निपातनाद्रात्रिन्दिवमिति सिद्धम् । शेषोऽनन्तः सदैव सर्वदाहितभूमिभारो धृतवसुन्धराभारः । अस्तीति शेषः । सामान्यक्रियानिर्देशादध्याहारदोषाभावः । लट्प्रत्ययो नित्यवृत्तत्वं द्योतयति । प्रजाभिरुपार्जितस्य द्रव्यस्य यः षष्ठोऽशः स वृत्तिर्वर्तनं यस्य तस्य राज्ञः । अपिशब्दः समुच्चये । एष धर्मः स्वीकृतभूमिभारवत्वम् । अत्र भारो रक्षणरूपः सार्वकालिकत्वलक्षणसमानधर्मस्य सकृद्युक्तपदेन रात्रिन्दिवपदेन सदैवपदेन चोक्तेर्मालाप्रतिवस्तूपमा । दुष्यन्तस्येति विशेषे वक्तव्ये सामान्यवचनादप्रस्तुतप्रशंसापि । श्रुत्यनुप्रासः । इन्द्रवज्रावृत्तम् । नियोगं स्वाधिकारं मुनिनिवेदनलक्षणम् ॥

प्रजाः प्रजाः स्वा इव तन्त्रयित्वा
निषेवतेऽशान्तमना विविक्तम् ।
यूथानि संचार्य रविप्रतप्तः
शीतं दिवा स्थानमिव द्विपेन्द्रः ॥ ५

(उपगम्य) जयतु (जयतु) देवः एते खलु हिमवद्गिरेरुपत्यकारण्यवासिनः काश्यपसन्देशमादाय सस्त्रीकास्तपस्विनस्सम्प्राप्ताः श्रुत्वा देवः प्रमाणम् ॥

५ प्रजाः जनान् स्वाः स्वकीयाः प्रजाइव अपत्यानीव ॥ तन्त्रयित्वा तत्तदुचितमार्गे व्यापार्य ॥ शान्तमनाः स्वस्थचित्तः ॥ विवक्तं विजनस्थानं एकान्तमन्तःपुरमित्यर्थः ॥ निषेवते नितरामाश्रयते ॥ वर्तमानव्यपदेशेन विविक्तस्थलाश्रयकालस्याव्यवधानं व्यज्यते ॥ प्रातस्सायङ्कालयो राज्यपालनादिकृत्यकरणचिन्तया मनश्शान्तं न भवति मध्याह्नकाले अन्तःपुरविहरणादिना चित्तं सुखं भवतीति भावः ॥ तत्र दृष्टान्तमाह—

यूथानीत्यादिना ॥ यूथानि गजसमूहान् सञ्चार्य तत्तदभीष्टाहारादिक्रीडासु व्यापार्य दिवा मध्याह्ने रविप्रतप्तो द्विपेन्द्रः शीतं शैत्यजनकं स्थानं वृक्षच्छायादिकं ॥ अत्र विविक्तं निषेवत इति मध्याह्नकालान्तःपुरविहरणकथनाद्राज्ञः स्नानदेवपूजाहारादिकरणेन सुस्थचित्ततया आगामिऋषिभिस्समं सम्भाषणादिकं कर्तुमासायमवकाशद्योतनार्थं शकुन्तलायाः पूर्वानुभूतसुखकरचरणादिरूपलावण्यादेस्सम्यक्प्रदर्शनार्थं चेत्यवगन्तव्यम् ॥ तेन शकुन्तलारूपलावण्यादेरकृत्रिममनोहरत्वं ध्वन्यते ॥ रात्रौ हि मण्डनादिसंस्कारजनितकृत्रिमरूपलावण्यादेरेव सम्यक्प्रदर्शनमिति भावः ॥

उपगम्य उपसर्प्य ॥ प्रमाणं अनन्तरकर्तव्यज्ञः ॥

प्रजा इति ॥ प्रजाः स्वापत्यानीव स्वाः प्रजाः स्वीयलोकांस्तन्त्रयित्वा संव्यवहार्याशान्तमना उद्विग्नमनाः सन्विविक्तं विजनं स्थानं निषेवते । 'प्रजा स्यात्सन्ततौ जने'। 'विविक्तौ पूतविजनौ' इति चामरः। यूथानि सञ्चार्य चारयित्वा । 'चरगतिभक्षणयोः'। रविप्रतप्तः सूर्यतप्तो द्विपेन्द्रो गजो दिवा शीतं स्थानमिव। उपमयोश्छेकवृत्त्यनुप्रासयोश्च संसृष्टिः । श्रुत्यनुप्रासः । उपेन्द्रवज्रावृत्तम्। अत्र दिवेति रात्र्यादिसमयं निवर्तयन्रवितापस्याधिक्यं द्योतयति । 'शान्तमनाः' इति तु च्छेदे रवितप्त इत्युपमानेन सह विरोधः स्यात्। 'एते क्लान्तमनस' इति वक्ष्यमाणेन राजवचनेन विरोधापत्तिश्च । हिमगिरेर्हिमाचलस्य। क्वचित् 'हिमवतो गिरेः' इति पाठः । तत्र हिमं विद्यते यस्मिन्निति यौगिकत्व-

**राजा**—(सादरम्) किं काश्यपसन्देशहारिणः ?

**कंचुकी**—अथ किम् ॥

**राजा**—तेन हि मद्वचना (द्विज्ञाप्य) दुच्यतामुपाध्यायस्सोमरातः अमूनाश्रमवासिनः श्रौतेन विधिना सत्कृत्य स्वयमेव प्रवेशयितुमर्हसि । इति ॥ अहमप्येतान् तपस्विजनसन्दर्शनयोग्ये देशे स्थितः प्रतिपालयामि ॥

**कंचुकी**—यदाज्ञापयति देवः ॥

(इति निष्क्रान्तः)

**राजा**—(उत्थाय) कोऽत्र भोः ॥

**प्रतिहारी**—(प्रविश्य) [1]आणवेदु देवो ॥

**राजा**—वेत्रवति ! अग्निशरणमार्गमादर्शय ॥

**प्रतीहारी**—[2]इदो इदो देवो ॥

(परिक्रामति)

**राजा**—(अधिकारखेदं निरूप्य) सर्वः प्रार्थितमर्थमधिगम्य सुखी संपद्यते जन्तुः राज्ञां तु चरितार्थता तु (दुःखान्तरैव) दुःखोत्तरैव ॥ कुतः—

1 आज्ञापयतु देवः ॥
2 इत इतो देवः ॥

अथकिमित्यङ्गीकारे ॥ अग्निशरणमार्गं अग्निहोत्रगृहमार्गं ॥ निरूप्य अभिनीय ॥ सर्वः सर्वो जनः ॥ प्रार्थितमीप्सितं ॥ अधिगम्य सम्प्राप्य ॥ सुखी सम्पद्यते अव्याकुलो भवति राज्ञां नृपाणां ॥ न तु स्वस्यैकस्यैव ॥ भवतीति यावत् ॥ तु पुनरन्यथा कुतः कस्माद्धेतोरित्यत आह

मङ्गीकृत्य तेन च तन्निवासिनां दुष्करतपश्चरणं तेन गौरवातिशयो द्योत्यत इति परिहर्तव्यमर्थपौनरुक्त्यम् । उपत्यकारण्यं पर्वतासन्नभूमिवनं तद्वासिनः । 'उपत्यकाद्रेरासन्ना भूमिः' इत्यमरः । सोमरात इत्युपाध्यायनाम । श्रौतेन वेदोक्तेन । सत्कृत्य पूजयित्वा । स्वयमेवेत्यनेन गौरवातिशयो द्योत्यते । वेत्रवतीति प्रतिहारीनाम । द्वारदेशस्थितायास्तस्या राज्ञोऽपि तत्रैव संनिधानादप्रवेशः । प्रतीहारीलक्षणं मातृगुप्ताचार्यैरुक्तम्—'सन्धिविग्रहसम्बद्धं नानाकार्यसमुत्थितम् । निवेदयन्ति याः कार्यं प्रतीहार्यस्तु ताः स्मृताः॥' इति । अग्निशरणमग्निगृहम् । 'शरणं गृहरक्षित्रोः' इत्यमरः । इत इतो देवः । दुःखान्तरैव दुःखावधिकैव । 'दुःखोत्तरा' इति पाठे दुःखाधिकेत्यर्थः ॥

औत्सुक्यमात्रमवसाद(य)यति प्रतिष्ठा
क्लिश्नाति लब्धपरिपालनवृत्तिरे(नं)वं ।
नातिश्रमापनयनाय न च श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ॥ ६

(नेपथ्ये)

वैतालिकौ—विजयतां देवः ॥

---

६ **औत्सुक्यमित्यादिना ॥** प्रतिष्ठा आस्पदं राज्यलाभ इत्यर्थः ॥ औत्सुक्यमात्रं तत्तत्पदार्थोत्कण्ठामात्रं ॥ अवसादयति नाशयति ॥ तत्तद्वस्तुलाभे सति तत्तद्विषयकेच्छाया निवृत्तेरिति भावः ॥ लब्धपरिपालनवृत्तिः लब्धस्य प्राप्तस्य राज्यादेः परिपालनाय रक्षणाय वृत्तिर्व्यापारः ॥ एवकारेणानुभवविषयता कथ्यते ॥ क्लिश्नाति ॥ यदि सुखं नास्ति तर्हि सर्वैः कथं राज्यं प्रार्थ्यत इत्यत आह—नातिश्रमापनयनायेति ॥ राज्यमति दुःखनिरसनं कर्तुं न प्रभवतीति यावत् ॥ दिवारात्रं जनविषयकविनयाधानरक्षणभरणादिराज्यपरिपालनचिन्तायाः विद्यमानत्वादिति भावः ॥ यदि राज्यलाभेऽपीतरजनविलक्षणसुखानुभवो नास्ति ॥ तर्हि तल्लाभालाभयोः किं फलमित्यतआह—न च श्रमायेति ॥ श्रमार्थमपि न भवति ॥ विषयाद्युत्कण्ठाया निवृत्तेरिति यावत् ॥ अनुभवैकवेद्यस्सुखदुःखानुभव इति दृष्टान्तेन विशदयति—स्वहस्तधृतदण्डमातपत्रमिवेति ॥ वर्षातपस्पर्शजनितदुःखनिरसनार्थं स्वहस्त एव छत्रधारणे सति वहनपरिश्रमो वर्षातपादिस्पर्शरहितसुखं चेति यावत् ॥

**नेपथ्य इत्यादि ॥** वैतालिकलक्षणं भावप्रकाशे कथितं तथाहि—"तत्तत्प्रहरकथोग्यैरागैस्तत्कालवाचिभिः श्लोकैः ॥ सरभसमेव वितालं गायन्वैतालिको भवति" इति ॥

---

**औत्सुक्येति ॥** प्रतिष्ठा सर्वोत्कृष्टं गौरवम् । 'प्रतिष्ठा स्थानमात्रके । गौरवे' इति विश्वः । सा कर्त्री । एनमित्यग्रे वक्ष्यमाणत्वादस्येति विपरिणस्यते । अस्य राज्ञ औत्सुक्यमात्रं य (याव) द्विषयजन्यामुत्कण्ठामवसाययति समाप्तिं नयति । अन्यजनस्य तु यत्किञ्चिद्विषयिणी समुत्पन्नोत्कण्ठा तथैव तिष्ठति तत्तद्विषयालाभात् । राज्ञस्तु फललाभादुत्कण्ठापरिपूर्तिः । एतावदाभिमानिकं सुखमिति भावः । लब्धस्य प्राप्तस्य फलस्य यत्परितः सर्वतोभावेन पालनं रक्षणं तत्र या वृत्तिर्वर्तना कदाचित्सर्वरात्रिजागरणं तत्रैव कदाचिदच्छिन्नधारावृष्ट्यनुभव इत्यादिकमेनं राजानं क्लिश्नाति । अतः कारणाद्राज्यम् । कर्तृ । न अत्यन्तं यः श्रमस्तदपनयनायेति न अपि त्वतिश्रमापनयनायैव सुखदत्वात् । तथा न श्रमायेति च न । अपि तु श्रमायैव क्लेशदत्वात् । किमिव । स्वहस्ते धृतो दण्डो यस्य तदातपत्रं छत्रमिवेति । अत्र राज्यं पक्षः । श्रमापनयश्रमौ साध्यौ । पूर्वार्धं हेतुः । चतुर्थचरणो दृष्टान्त इत्यनुमानालङ्कारः । उपमानानुमानयोरङ्गाङ्गिभावः सङ्करः । यच्छ्रमापनयनाय तच्छ्रमायेति विरोधाभासः । यथासंख्यमपि । अथ च सम्बन्धेऽसम्बन्धरूपाऽसम्बन्धे सम्बन्धरूपा द्वय्यतिशयोक्तिरपि । श्रमाश्रमेति नयनायेति यनायनेति वा च्छेकवृत्त्यनुप्रासयोः संसृष्टिः । श्रुत्यनुप्रासोऽपि । एकान्तसुखायतनत्वभ्रमेण राज्य आसक्ततया न भवितव्यमित्युपदेशो व्यज्यते । वसन्ततिलकावृत्तम् । अधिकारखेदं निरूप्येत्यादिना यः खेदो निबद्धः सः

प्रथमः—

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते वृत्तिरेवंविधैव ।

७ स्वसुखेत्यादि ॥ प्रतिदिनं दिने दिने न त्वेकदिन इति यावत् ॥ अनेन सार्वकालिकजनसंरक्षणजागरूकता सूच्यते ॥ स्वसुखनिरभिलाषः स्वस्य सुखेषु विषये सुखनिमित्तकतत्तद्दतुयोग्यसार्वकालिकान्तःपुरविहरणादिक्रीडाभेदविषये निरभिलाषः अतिमात्राभिलाषशून्यः ॥ लोकहेतोः प्रजानिमित्तं ॥ अनेन जनसंरक्षणनिमित्तकएव खेदानुभवः ॥ न तु प्रतिपक्षनिमित्तक इति राज्ञः कृतकृत्यतया निष्कण्टकं सार्वभौमत्वं ध्वन्यते ॥ खिद्यसे दिवारात्रं तत्त्वद्वर्णोचितमार्गप्रवर्तकतया दूयसे ॥ वर्तमानव्यपदेशेन अद्यापि खिद्यस इति आतपबाहुल्यात्सञ्चारायोग्यतया सर्वजन्तूनां विश्रमस्थलापेक्षिककाले मध्याह्नेऽपीत्यनवरतजनसंरक्षणैकपरता द्योत्यते ॥ तव राजशब्दश्च आज्ञामात्रं च जागर्ति ॥ सुखानुभवस्तु जनानामेवेति भावः ॥ ते रक्षाशुल्कषड्भागादातुस्तवेति यावत् ॥ त इत्येकवचनेन तवैव नान्यस्येति इतरराजवैलक्षण्यमुक्तम् ॥ वृत्तिर्मरणपर्यन्तं व्यापारः ॥ एवंविधैव सुखदुःखानुभवपूर्वकजनसन्तापशमनपूर्वैव ॥ एतद्दृष्टान्तेन स्फुटयति—अथवा अनुभवतीत्यादिना ॥ अथवा तथाहीति सम्भावनायां ॥ पादपः वृक्षः अचेतनसामान्य इति यावत् ॥ पादपशब्देन बहुजंत्वाधारता प्रकाश्यते ॥ चेतनेतरपुरुषविलक्षणासाधारणत्वद्विधं प्रति सकलजनाधारतायां किमुतेति भावः ॥ मूर्ध्ना शिरसा 'सर्वस्य गात्रस्य शिरः प्रधान'मिति सर्वावयवप्रधानभूतेन शिरसा ॥ तीव्रं क्रूरं ॥ पत्रशाखात्वक्छोषणकरणसमर्थमिति यावत् ॥ उष्णं अनुभवति निर्विकारं वहति ॥ वर्तमानव्यपदेशेनाद्या-

निरुपधिपरोपकारप्रवृत्तानां भवदादीनामेतत्स्वभावान्नायं खेद इति वैतालिकवचसा स्तौति—

स्वसुखेति ॥ नैकाहं न पञ्चषाहमपि तु प्रतिदिनं प्रत्यहम् । निरन्तरमित्यर्थः ॥ त्वं लोकहेतोर्लोककारणात् । लोकनिमित्तमिति यावत् । 'हेतुर्ना कारणं बीजम्' इत्यमरः ॥ खिद्यसे परितप्यसे । तत्रार्थे हेतुमाह—स्वस्मिन्यत्सुखं तत्र निरभिलाषो निर्गतवाञ्छः । प्रासङ्गिकसुखायापि न प्रवृत्तिरिति भावः । अत्र खिद्यस इति 'खिद परितापे' अस्य तौदादिकस्य कर्मकर्तरि प्रयोगः । तथा च वामनः—'कर्मकर्तरीत्यनुवर्तमाने' खिद्यस इति खिद्यत इति च प्रयोगो दृश्यते । सोऽपि कर्मकर्तर्येव द्रष्टव्यो न कर्तरि । अदैवादिकत्वात्खिदेः' इति । दुर्गसिंहस्तु 'खिद दैन्ये' इत्यस्य दैवादिकत्वं मन्यते । तथाच क्षीरतरङ्गिण्याम्—'पदगतावेतदनन्तरमत्रैव खिद दैन्य इति दुर्गः' इति अतएव मल्लभट्टेनाख्यातचन्द्रिकायामुक्तम्—'ताम्यति श्राम्यति ग्लानौ खिन्ते खिन्दति खिद्यते' इति । अथवेति पूर्वाक्षेपे । एवंविधैव ते वृत्तिर्वर्तनम् । हि यस्मात्पादपो वृक्षः । पादांश्चरणान्पाति रक्षतीति च । अत एव न वृक्षादिपदोपादानम् । मूर्ध्नाग्रभागेनाथवोत्तमाङ्गेन । तीव्रमुष्णं मध्याह्नसम्भवमनुभवति । संश्रितानामध उपविष्टानामथ चाश्रितानां छाययातपाभावेन पालनेन च

अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् ॥ ७

द्वितीयः—

नियमयसि विमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय ।
अतनुषु विभवेषु ज्ञातयः सन्तु नाम
त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम् ॥ ८

---

प्यनुभवतीति प्रातः कालादारभ्य सायङ्कालपर्यन्तं निरन्तरतापानुभवस्सूच्यते ॥ राज्ञस्तु मध्याह्ने अन्तः पुरविहरणादिना किञ्चिद्विश्रान्तिरस्ति ॥ वृक्षस्य न तथेति भावः ॥ संश्रितानां जन्तूनां परितापं परितः सर्वावयवतापं ॥ छायया ॥ छाययेत्येकवचनेन प्रभातमध्याह्न-सायंकालेषु स्वस्य मन्दतीव्रातपानुभवसमयेपि स्वकीयच्छायागुणस्यैकरूपता द्योत्यते ॥ शमयति नाशयति ॥ हि शब्दश्चकारार्थः शमयति चेति यावत् ॥ अनेन तीव्रोष्णानुभव-समयस्य संश्रितजन्तुपरितापशमनकालस्य चाव्यवधानं द्योत्यते ॥

८ **नियमयसीत्यादि ॥** आत्तदण्डः गृहीतनीतिः विमार्गप्रस्थितान् विरुद्ध मार्गगतान् अन्यायवर्तिन इति यावत् ॥ नियमयसि निवारयसि ॥ तदुक्तं मानसोल्लासे— "अनुग्रहे निग्रहे च दाने चादानकर्मणि । प्रवृत्तौ च निवृत्तौ च ग्रहणे मोक्षणे तथा । स्वयं समर्थो यस्सोऽयं राजा साक्षान्निरर्गळः" इति ॥ विवादं कलहं प्रशमयसि ॥ रक्षणाय कल्पसे समर्थो भवसि ॥ अनुग्रहस्य राज्ञ एवाधिकारित्वादिति भावः ॥ अतनुषु प्रचुरेषु विभवेष्वैश्वर्येषु सत्सु ज्ञातयः बान्धवास्सन्तु भवंत्विति सम्भावनायाम् ॥ नाम प्रसिद्धौ ॥ किंतैर्निग्रहानुग्रहासमर्थैरिति वाक्यशेषः ॥ प्रजानां जनानां बन्धुकृत्यं विमार्गनियमनेष्ट-प्रापणानिष्टनिवारणादिकं ॥ त्वयि तु त्वय्येव परिसमाप्तम् ॥

---

परितस्तापमौष्ण्यं तापखेदं च शमयतीति । व्यवहारसमारोपात्समासोक्तिः । 'छाया स्यादा-तपाभावे प्रतिबिम्बार्कयोषितोः । पालनोत्कोचयोः' इत्यादि विश्वः । 'तापोऽभितापे दवथौ खेदे च' इत्यजयः । काव्यलिङ्गाक्षेपदृष्टान्ताः । वृत्तिश्रुत्यनुप्रासौ । मालिनी वृत्तम् ॥

**नियमयसीति ॥** आत्तदण्डो गृहीतदण्डः प्राप्ताभिमानश्च । 'अभिमाने ग्रहे दण्डः' इति विश्वः । कुमार्गप्रस्थितानुद्धतान्नियमयसि विनीतान्करोषि । मार्गस्थान्करोषी-त्यर्थः । तत्स्वरूपं भृगुसंहितायाम्—'तदर्थं सर्वभूतानां गोप्तारं धर्ममात्मजम् । ब्रह्मतेजो-मयं दण्डमसृजत्परमेश्वरः ॥' इति । तत्प्रयोगविषये विशेषोऽपि तत्रैव—'स्वराष्ट्रे न्याय-वृत्तिः स्यादुग्रदण्डश्च शत्रुषु । सुहृत्सु तिलवत्स्निग्धो ब्राह्मणेषु क्षमान्वितः ॥' इति । विवादं परस्परकलहं प्रशमयसि । रक्षणाय कल्पसे प्रभवसि भयात् । 'शत्रुभ्यो धनदानेन' इत्यादि रक्षणं बहुप्रकारम् । अतनुषु बह्वीषु सम्पत्सु । नामेति सम्भावनायाम् । ज्ञातयः सन्तु भवन्तु । बन्धुकृत्यकारिण इत्यर्थः ॥ तुः पूर्वतो विशेषे । सति विभवेऽसति च विभवे ।

**राजा**—एते वयं क्लान्तमनसः पुनर्नवीकृताः स्मः ॥

(इति परिक्रामति)

**प्रतीहारी**—[1]एसो अहिणवसम्मज्जणसस्सिरीओ सण्णिहिदहोमधेणू अग्गिसरणालिन्दो आरुहदु देवो ॥

**राजा**—(आरुह्य परिजनांसावलम्बी स्थित्वा) वेत्रवति, किमुद्दिश्य भगवता काश्यपेन मत्स (काश) मीपमृषयः प्रेषिताः स्युः ?

**किं तावद्व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं ?**
**धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम् ?**

---

1 एषोऽभिनवसम्मार्जनसश्रीकः सन्निहितहोमधेनुरग्निशरणालिन्दः ॥ आरोहतु देवः ॥

---

**एतेत्यादि ॥** क्लान्तमनसः श्रमभरेण क्लिष्टमानसाः पुनर्नवीकृताः ॥ वैतालिकयोः प्रियसत्यवचनैः राज्यभरणजनितशोकान्मुक्ता भवामः ॥ तदुक्तं—"शोकान्मुक्तः पुनर्नवः" इति ॥

९ **किमित्यादि ॥** उपोढतपसां सम्प्राप्ततपसां व्रतिनामृषीणां विघ्नैः ईप्सितार्थान् विशेषेण घ्नन्तीति विघ्नाः प्रतिबन्धकाः तैः ॥ तपः स्वधर्मानुवर्तनं ॥ दूषितं नाशितं ॥ किं वितर्के ? धर्मारण्यचरेषु तपोवनवर्तिषु विषये केनचिदज्ञाततपः-

---

प्रजानां प्रजासु विषये। षष्ठीसप्तम्योरभेदाद्बन्धूनां ज्येष्ठबन्धूनां कृत्यममार्गान्निवर्तनं कलहशमनं रक्षणं च तत्त्वयि परिसमाप्तम्। त्वयैव निष्पाद्यते नान्येनेत्यर्थः। अत्र पूर्वार्धार्थो हेतुत्वेनोपात्तः। काव्यलिङ्गव्यतिरेकानुप्रासाः। पूर्वार्धे यमकं च। वृत्तमनन्तरोक्तम्। अनेन च पद्येन पूर्वं लोकहेतोरिति यदुक्तं तदेव विवृतम् । नवीकृताः। अधिकारचिन्तन इति शेषः । अतएवास्माभिस्तत्र 'अशान्तमनाः' इति व्याख्यातम् । यतस्तस्यैवानुवादोऽयम् 'क्लान्तमनसः' इति। अभिनवं नूतनं यत्सम्मार्जनं तेन सश्रीकः सशोभः। संनिहितहोमधेनुरिति। विशेषणद्वयेन पावित्र्यातिशयो द्योत्यते। अग्निशरणालिन्दोऽग्निहोत्रगृहबहिर्द्वारप्रकोष्ठः। 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके' इत्यमरः। स्वभावोक्तिः। तस्य खेदविनोदं द्योतयति। आरोहतु देवः। परिजनांसावलम्बीति खेदानुभाव एव ॥

**किं तावदिति ॥** व्रतिनां नियमवतामतएवोपोढमत्यूढमधिकतपो येषाम् । 'उपोढः कथितोऽत्यूढे समासन्ने विवाहिते' इति धरणिः। ईदृशां तपस्विनाम्। विशेषणेनैव विशेष्यप्रतिपत्तेर्न तदुपादानम् । तपो विघ्नैर्विघ्नकर्तृभी राक्षसादिभिः । साध्यवसानेयं लक्षणा। तस्या विघ्नातिशयः फलं दर्शितम्। किमिति वितर्के। उत धर्मारण्यचरेषु धर्मवनगेषु प्राणिषु जन्तुषु। धर्मपदेन ऋषीणां महत्त्वं सूचयता चेष्टितस्यात्यन्तमनुचितत्वं ध्वन्यते। अतएव केनचित्पामरादिनासत्। वाचापि वक्तुमशक्यमिति भावः। चेष्टितं कृतम्। आहोस्विन्ममापचरितैर्वीरुधां लतानां प्रसवः पल्लवपुष्पादिर्विष्टम्भितः प्रतिबद्धः । 'पुष्पं फलं च

आहोस्वित्प्रसवो ममापचरितैर्विष्टम्भितो वीरुधा-
मित्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥ ९

**प्रतीहारी**—[1]सु (चरिद) अरिदाहिणंदिणो इसिओ देवं (सभाजइदुं) सम्भावेदुं आअदेत्तिं तक्केमि ॥

(ततः प्रविशन्ति गौतमीसहि(ताः) तां शकुन्तलां पुरस्कृत्य मुनयः पुरतश्चैषां पुरोहितः कञ्चुकी च)

**कंचुकी**—(इत इतो भगवन्तः)

**शार्ङ्गरवः**—शारद्वत !

महाभागः कामं नरपतिरभिन्नस्थितिर(हो)सौ
न कश्चिद्वर्णानामपथमपकृष्टोपि भजते ।

1 सुचरिताभिनन्दिन ऋषयो देवं सम्भाव(सभाजयि)यितुमागता इति तर्कयामि ॥

प्रभावेन येन केन चिद्भूतेन ॥ असत् अन्याय्यं ॥ कर्म चेष्टितमाचरितं ? वीरुधां प्रसवः पुष्पफलादिः अपचरितैर्दुराचारैर्विष्टम्भितः प्रतिषिद्धः ? इत्यनेन प्रकारेणारूढबहुप्रतर्कं अधिगतानेकवितर्कं ॥ अपरिच्छेदाकुलं विह्वलं ॥ मे इत्यनेन राज्यव्यापारं प्रति कृतकृत्यस्य मे इति यावत् ॥ दुष्टनिग्रहशिष्टपरिपालनाभ्यामेव महाराजत्वलाभ इति भावः ॥

१० **महाभागेति** ॥ महाभागः महाभाग्यः ॥ अनेन महदैश्वर्यवत्त्वेन कृतकृत्यता कथिता ॥ कामं प्रायेण अभिन्नस्थितिः अविहतमर्यादः ॥ अनेन रक्षा शुल्कषड्भागादातृत्वेन न्यायवर्तित्वं सूचितम् ॥ वर्णानां ब्राह्मणादीनां मध्ये अपकृष्टोऽपि अकिञ्चनोऽपि ॥ अपथममार्गं न भजते ॥ अनेन प्राणिनां निखिलवांछितपूरकतया विनयाधान-

पत्रं च वृक्षाणां प्रसवं विदुः' इति धरणिः । तदुक्तम्—'राज्ञोऽपचारात्पृथिवी स्वल्पसस्या भवेत्किल । अल्पायुषः प्रजाः सर्वा दरिद्रा व्याधिपीडिताः ॥' इति । तपतप इति स्विसवो इति च्छेकानुप्रासवृत्तिश्रुत्यनुप्रासाः । शार्दूलविक्रीडितं वृत्तम् । षष्ठीसप्तम्योरभेदान्न विभक्तिप्रक्रमभङ्गः । विशेषणप्रक्रमभङ्गोऽपि नाशङ्कनीयः । आदौ विशेषणद्वयं ततस्तदभाव इत्येवं क्रमस्य विवक्षितत्वात् । सुचरितनन्दिन ऋषयो देवं सभाजयितुमागतां इति तर्कयामि ॥

**महाभाग इति** ॥ न भिन्ना त्यक्ता स्थितिर्मर्यादा येन स नरपतिः काममतिशयेन महाभागः श्रेष्ठ इति विधेयम् । अहो इत्याश्चर्ये । वर्णानां ब्राह्मणानां मध्येऽपकृष्टो हीनोऽपि कश्चिदपथममार्गं न भजते । 'अपथं नपुंसकम्' इति नपुंसकत्वम् । इति यद्यपि तथापीदं जनाकीर्णं जनव्याप्तं स्थानं शश्वन्निरन्तरं परिचितं विविक्तं विजनस्थानं यस्य तेन मनसोपलक्षितोऽहं मनसा हेतुना वा हुतवहपरीतं गृहमिव

तथापीदं शश्वत्परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव ॥ १०

शारद्वतः—स्था(जा)ने भवान् पुरप्रवेशादित्थंभूतः संवृत्तः ॥ अहमपि—

अभ्यक्तमिव स्नातः शुचिरशुचिमिव प्रबुद्ध इव सुप्तम् ।
बद्धमिव स्वैरगतिर्जनमिह सुखसंगिनमवैमि ॥ ११

---

रक्षणभरणादिसामर्थ्यं ध्वनितम् ॥ अतएव नरपतिरित्यनेन सकलवर्णाश्रमरक्षणकर्तृत्वं व्यज्यते ॥ तथापि इतरनरपतिविलक्षणगुणयुक्तोऽपि शश्वत्परिचितविविक्तेन सार्वकालिकासेवितविजनेन मनसा उपलक्षितः जनाकीर्णं प्रजासङ्कुलं हुतवहपरीतमनलाक्रान्तमिव प्रवेष्टुं दुस्सहमिति यावत् ॥ स्थाने युक्तम् ॥

११ अभ्यक्तमिवेति ॥ शुचिस्सद्वृत्तः ॥ अशुचिमसद्वृत्तम् ॥ सुखसङ्गिनं विषयासक्तम् ॥ सुखसङ्गिनमित्यनेन राजरक्षितप्राणिनामैश्वर्यबाहुळ्यमुक्तम् ॥

---

मन्ये । अत्र पूर्वार्धे यत्कारणमुक्तं विजनस्य सत्सम्यक्त्वं कार्यं तदभावस्तद्विरुद्धमुखेनोक्त इति विशेषोक्तिः । अथ च यदग्निपरीतत्वं कार्यं तत्कारणाभावस्य तद्विरुद्धमतेन पूर्वार्धे उक्तेन विभावना । उभे अप्युक्तनिमित्ते शश्वत्परिचितेत्याद्युक्तेः । साधकबाधकप्रमाणभावात्सन्देहसङ्करः—'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः' इत्युक्तेर्मन्येशब्दस्योत्प्रेक्षाद्योतकत्वेऽप्यत्र न तथा । तत्सामग्र्यभावात् उपमयैव गतार्थत्वात् । तेनात्र मन्येशब्दस्य बुद्धित्वमात्रमर्थः । तदुक्तं राजानकरुचकेन—'अस्याश्चेवादिशब्दवन्मन्येशब्दोऽपि प्रतिपादकः । किन्तूत्प्रेक्षा सामग्र्यभावे मन्येशब्दप्रयोगो वितर्कमेव प्रतिपादयति । यथा—'अहं त्विन्दुं मन्ये' इति अनुप्रासः ! वक्तुर्वैराग्यं ध्वन्यते । शिखरिणी वृत्तम् । अहमपीति श्लोकेनान्वेति ॥

अभ्यक्तमिति ॥ अहं सुखसङ्गिनं जनमीदृशमवैमि । त्वं त्वग्निपरीतं गृहमिव जानासि । अहमप्येतादृशमित्यपिशब्दार्थः । एतादृक्त्वं च विशिष्टोपमारूपकम् । कः कमिव । स्नातोऽभ्यक्तं तैलाभ्यक्तमिव । अनेन पापश्लिष्टत्वं ध्वन्यते । शुचिरशुचिमिवेत्यनेन पतिपत्न्यादिषु स्नेहादिविद्धत्वं ध्वन्यते । प्रबुद्धः सुप्तमिवेत्यनेनाज्ञानविद्धत्वं व्यज्यते । स्वैरगतिर्बद्धमिवेत्यनेन प्रयत्नसहस्रानयने परवशंवदत्वं ध्वन्यते । मालोपमेयम् । तेन पारतन्त्र्यलक्षणो भिन्नोऽत्रावगम्यः सामान्यधर्मः । छेकवृत्त्यनुप्रासौ । 'स्नातोऽभ्यक्तमिव शुचिरशुचिमिव प्रबुद्धः सुप्तमिव स्वैरगतिः संयतमिव' इति पठित्वा प्रक्रमभङ्गद्वयं

**शकुन्तला**—(अनि(नि)मित्तं सूचयित्वा) [1]अम्हहे, किं वामेदरं ण अणं *विप्फुरदि ?

**गौतमी**—[2]जादे, पडिहदममङ्गळं, सुहाइदे भत्तुकुळदेवदाओ वदरन्दु ॥

(इति परिक्रामति)

**पुरोहितः**—(राजानं निर्दिश्य) भोस्तपस्विनः, असावत्रभवान् वर्णाश्रमाणां रक्षिता प्रागेव मुक्तासनो वः प्रतिपालयति । पश्यतैनम् ॥

**शार्ङ्गरवः**—भो महाब्राह्मण ! काममेतदभिनन्दनीयं तथापि वयमत्र मध्यस्थाः कुतः ?

**भवन्ति नम्रास्तरवः फलोद्गमै-**
**र्नवाम्बुभिर्दूरविळम्बिनो घनाः ।**

---

1 अहो ! किं वामेतरं नयनं विस्फुरति ?
2 जाते ! प्रतिहतममङ्गळम् ! शु(सुखा)भानि ते भर्तृकुलदेवता वितरन्तु ॥

---

**महाब्राह्मणेत्यादि ॥** कामं यद्यप्येतत्प्रत्युत्थानादिकं राजपुरोहितत्वादभिनन्दनीयं तथापि वयमत्र प्रत्युत्थानादौ मध्यस्थाः पक्षपातरहिताः ॥ वदामइति शेषः ॥

१२ **भवन्तीति ॥** फलोद्गमैर्हेतुभिः दूरविळम्बिनः अत्यर्थमवनताः समृद्धिभिरैश्वर्यैः अनुद्धता अनहङ्कारिणः ॥ नम्राइति यावत् ॥ एषः नम्रत्वादिः ॥

---

परिहरणीयम् । निमित्तमपशकुनम् । अम्महे इति निर्वेदे । 'अम्महे हर्षे' इति सूत्रे 'हीमाणहे विस्मयनिर्वेदयोः' इति सूत्रान्निर्वेद इत्यनुवर्तते । किं मे वामेतरं दक्षिणं नयनं विस्स्फुरति । 'किं मे वामं दक्षिणं नयनम्' इति पाठे वामं प्रतीपम् । विरोधाभासः । जाते, प्रतिहतममङ्गलम् । सुखानि ते भर्तुः कुलदेवता वितरन्तु । अत्रभवान्पूज्यो वर्णाश्रमाणां रक्षितेत्यनेन भवदादीनामस्मदादीनां च सर्वदा पालनासक्तत्वम् । प्रागेव मुक्तासन इत्यनेन विनयातिशयः । वः प्रतिपालयतीति भक्त्यतिशयो व्यज्यते । महाब्राह्मणेति राजपुरोहितत्वात्तं प्रति मुनेरुक्तिरिति नानौचित्यम् । काममतिशयेनैतद्विनयातिशयत्वादिकमभिनन्दनीयं स्तुत्यं यद्यपि तथापि वयमत्र मध्यस्था निस्पृहाः । एतदस्माकं वर्णनीयं न भवतीति भावः । वर्णनीयत्वाभावे च स्वाभाव्यं हेतुत्वेनोद्दिशति—कुत इति ॥

**भवन्तीति ॥** तरवो वृक्षाः फलानामासमन्ताद्गमो गमनं प्राप्तिस्तैः । अनेन समृद्धिकाष्ठा तेषां द्योतिता । नम्रा अधोमुखा विनीताश्च भवन्ति । अत्र तरुशब्देन सामान्यविशेषभावसम्बन्धेन चूतप्रभृतयो विशेषा लक्ष्यन्ते । तत्सजातीयबहुत्वप्रतिपत्तिश्च

---

* 'विअरेदि ; विकरोति' इति पाठान्तरम् ॥

अनुद्धतास्सत्पुरुषास्समृद्धिभि-
स्स्वभावएवैष परोपकारिणाम् ॥ १२

प्रतीहारी—[1]देव्व, पसण्णमुह(वण्णा)राआ विअ इसिणो दीसन्ति । *ताजा णामि विस्सद्धक(ज्जा इसीओ)ज्जेत्ति ॥

दुष्यन्तः—(शकुन्तलां दृष्ट्वा) अथात्रभव(ति)ती—

कास्विदवकुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।

1 देव । प्रसन्नमुख(वर्णा) रागा इव ऋषयो दृश्यन्ते ॥ तस्माज्जानामि विस्रब्धकार्या (ऋषयः) इति ॥

अथात्रभवतीत्यादि ॥ अत्रभवती सुशीला ॥ अनेनागमनसमये शकुन्तलायाः नम्राननत्वं परपुरुषनिरीक्षणाभावश्च राज्ञा सूच्यते ॥

१३ तत्राप्यवकुण्ठनवतीत्यनेन तापसस्त्री न भवति कन्या काचिदिति सूच्यते ॥ तापस्याः सर्वत्र समबुद्धिभावेन विकाराद्यभावादवकुण्ठनमनुचितमितियावत् ॥ तत्रापि

फलेषु वनस्पतिप्रभृतिषु । तदभावादर्थासङ्गतिः । किं च सत्पुरुषाणां विशिष्टानामेवोपमेयत्वात्तैः सहोपमानतापि न सङ्गच्छते । तर्ह्युत्तरवाक्येऽप्येतद्दोषावकाश इति चेन्न । मेघादिपदत्यागेन घनपदोपादानात् । तथा च व्याख्यास्यते । केचनैतादृशस्थले 'वाच्य एवार्थो न लक्षणा' इति मन्यन्ते । घना मेघा अथ च निबिडाः । नवाम्बुभिरिति वर्षाकालारम्भो ध्वन्यते । तेषां तत्रैव समृद्धत्वाद्दूरविलम्बिनोऽतिशयवर्षुकाः । अथ च विनीता भवन्तीत्यनुषज्यते । अत्र तरुघनयोरचेतनयोर्नम्रत्वदूरविलम्बित्वाभ्यां च वस्तुतो भिन्नाभ्यामभेदेनाध्यवसिताभ्यामतिशयोक्तिः । सत्पुरुषाः समृद्धिभिरनुद्धता नम्रा भवन्तीत्यनुषज्यते । तेन क्रियादीपकम् । विनयस्य साधारणधर्मस्य नम्रदूरविलम्ब्यनुद्धतशब्देनोक्तेर्माला प्रतिवस्तूपमा च । अत्र दुष्यन्तलक्षणे विशेषे प्रस्तुते सत्पुरुषस्य वचनादप्रस्तुतप्रशंसापि । स्वभाव इत्यादिस्तु हिशब्दानुपादानेऽप्यर्थान्तरन्यासः । 'क नासि शुभप्रदः' इतिवत् । हेत्वनुप्रासौ च । वंशस्थं वृत्तम् । 'देव, प्रसन्नमुखवर्णा दृश्यन्ते । जानामि विस्रब्धं शान्तमक्रूरं कार्यं येषां ते तादृशा ऋषयः । 'विस्रब्धस्तूद्धटे व्यर्थे शान्तविश्वस्तयोरपि' इति विश्वः ॥

का स्विदिति ॥ स्विदिति वितर्के । 'स्विदिति प्रश्ने वितर्के च' इत्युक्तेः । सशिरोमुखप्रावरणमवकुण्ठनं तद्वती । अतएव नातिपरिस्फुटे शरीरलावण्ये यस्याः सा । मध्यमसमासः । इदमनूद्यम् । तपोधनानां मध्ये का स्विदिति विधेयम् । अतएवैतन्मात्र उपमा । पाण्डुपत्राणां मध्ये किसलयं कोमलपल्लवमिवेति । अस्याश्च भिन्नलिङ्गत्वेऽपि

* तह जाणामि ॥ ताविस्सद्धकज्जाएव्व; तथा जानामि तस्माद्विस्रब्धकार्याएव ॥

मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥ १३

प्रतीहारी—[1]देव्व! कुदूहलगब्भो (पहिदोन) मे *तक्को प(सरदि)सीददि ॥ (णं) दंसणिज्जा उण से आकिदी लक्खी अदि ॥

राजा—भवतु, अनिर्व(र्णनीयं) परकलत्रं ॥

शकुन्तला—(हस्तमुरसि कृत्वा, आत्मगतं) [2]हि अअ, किं एव्वं वेवसि? अज्जउत्तस्स हावं (ओहारि अ) अणवधारिअ ॥ धीरं दाव होहि ॥

1 देव! कुतूहलगर्भो (पहितोन) मे * तर्कः प्र(सरति)सीदति ॥ (ननु)दर्शनीया पुनरस्या आकृतिर्लक्ष्यते ॥

2 हृदय! किमेवं वेपसे? आर्यपुत्रस्य भावम(वधार्य) नवधार्य धीरन्तावद्भव ॥

नातिपरिस्फुटशरीरलावण्येत्यनेनापन्नसत्त्वेति व्यज्यते ॥ आसन्न प्रसवसमयतया शरीरलावण्यमत्यर्थं न दृश्यत इति भावः ॥ एतादृश्याः स्वनिकटमागमनं किमर्थकमिति कास्विदिति वितर्के ॥ तत्र दृष्टान्तमाह—किसलयमित्यादिना ॥ पाण्डुपत्राणां रागरहितशुष्कपर्णानां मध्ये किसलयमिव कोकिलादिभिस्स्पृहणीयं रागयुक्तपल्लवमिव ॥

देवेत्यादि ॥ तर्को विचारः कुतूहलगर्भः ॥ अरण्ये परिमिताहारादि क्लिष्टतपस्विनामेतादृशरूपलावण्याद्यतिशयवत्या सहागमनजनिततर्कस्त्वाश्चर्यगर्भ इति यावत् । तदेव विशदयति—दर्शनीयेति ॥ दर्शनीया स्पृहणीया ॥ निरुपपदेन स्त्रीणामपि वस्तुसौन्दर्यबलात् स्पृहणीयेति व्यज्यते ॥ न तु पुरुषाणामेवेति भावः ॥ भवत्वित्यङ्गीकारे ॥ सकलजनस्पृहणीया तादृशाकृतिरेवेत्यङ्गीकारः ॥

हिअयेत्यादि ॥ भावोऽभिप्रायः ॥ परकलत्रमिति सामान्येनोक्तत्वात् मा वेपस्वेति यावत् ॥

कोमलत्वादेः साधारणधर्मस्य गम्यत्वात्सहृदयमनोनुरञ्जकत्वमेव । हेत्वनुप्रासौ । ननु नातिपरिस्फुटेत्यादौ शरीरमात्रग्रहणेऽप्युभयलाभ इति चेत्सत्यम् । स्यादेवं यदि निषेधमात्रे तात्पर्यं स्यात्किंत्वत्र विधौ तात्पर्यम् । अतएवातिपर्योरुपादानम् । तेनेषद्व्यक्ते इत्यर्थः । अत्र चोभयग्रहणमन्तरेण विवक्षितार्थालाभात् । यत आद्यमात्रोपादाने द्वितीयाप्राप्तिः । द्वितीयमात्रग्रहणे कनकचम्पकाभतनुवर्णाप्तिः । लावण्यलक्षणं सुधाकरे—'मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु लावण्यं तदिहोच्यते' इति । एवम्भूतैतदवलोकनेन स्थायिन्या रतेरनुसन्धानम् । देव, कुतूहलेन गर्भे मध्य उपहितो युक्तो न मे तर्कः प्रसरति । त्वत्परिगृहीतेन पूर्वत्वेन कुतूहलगर्भत्वं प्रभुसमक्षत्वात्तुन्यानात्वं (?) चाप्रसरणे हेतुः । क्वचिद्गतपुस्तके 'कुतूहलगब्भोपहद' इत्यादिकः पाठः । क्वचित्पुस्तके तु नास्त्येवायं पाठः । ननु दर्शनीया सुन्दरापुनरस्या आकृतिर्लक्ष्यते । भवत्विति निषेधे । 'अस्तु भवतु पूर्यत इति निषेधे' इत्युक्तेः । अनिर्वर्णनीयमद्रष्टव्यम् । हस्तमुरसि कृत्वेति स्वभावोक्तिः हृदय, किमेवं वेपसे । आर्यपुत्रस्य भावं चित्ताभिप्रायमवधार्य धीरं तावद्भव ॥

* 'तक्को मे पसरादि; तर्को मे प्रसरति' इति पाठान्तरम् ॥

**पुरोहितः**—(पुरो गत्वा) देव, एते विधिवदर्चितास्तपस्विनः ॥ कश्चिदेषामुपाध्यायसन्देशोऽस्ति ॥ तं देवः श्रोतुमर्हति ॥

**राजा**—अवहितोऽस्मि ॥

**ऋषयः**—(हस्तमुद्यम्य) विजयस्व राजन् ॥

**राजा**—अखिलानभिवादये वः ॥

**ऋषयः**—स्वस्ति भवते इष्टेन युज्यस्व ॥

**राजा**—अपि निर्विघ्नतपसो मुनयः ?

**ऋषयः**—

**कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।**
**तमस्तपति घर्मांशौ कथमाविर्भविष्यति ?** १४

**राजा**—अर्थवान् खलु मे राजशब्दः अथ भगवान् लोकानुग्रहाय कुशली काश्यपः ?

---

१४ **कुतइत्यादि** ॥ सतां सज्जनानां न दुष्टानां रक्षितरि परिपालके ॥

अर्थवान् रञ्जनाद्राजेति राजशब्दार्थवान् ॥ यद्यपि राजशब्दो राजदीप्ताविल्यर्थात् ॥ कनिन्प्रत्ययान्तः ॥ न तु रञ्जेः ॥ तथापि धातूनामनेकार्थत्वादुपपद्यते ॥ अथेति प्रश्ने । कुशलीति ॥ कुशलप्रश्नस्तु* "ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयं । वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च" इति मनुवचनादित्यवगन्तव्यम् ॥

---

**कुत इति** ॥ त्वयि रक्षितरि सति कुतो धर्मक्रियाविघ्नः । सर्वमेवैतद्विधेयम् । त्वं रक्षिता । त्वयि रक्षितरि सर्वे सन्तः । तेषां क्रियामात्रविघ्नोऽपि न सम्भाव्यते सुतरां धर्मक्रियाविघ्न इत्यर्थः ॥

**तम इति** ॥ घर्मांशौ सूर्ये उदयाद्रिमारूढ एव तमोनाशः । अपि तु तस्मिन्सुतरामाविर्भूते तदभाव इत्यर्थः । दृष्टान्तालङ्कारः हेत्वनुप्रासौ । अर्थवान्सप्रयोजनः । तापयुक्तत्वादिति भावः । लोकानुग्रहाय जनानुग्रहाय । भुवनानुग्रहाय चेत्यर्थः । 'लोकस्तु भुवने जने' इत्यमरः । त्रिभुवनानुग्राहकत्वेन लोकोत्तरा तपःसिद्धिर्ध्वनिता । तदभिप्रायेणैवोत्तरयन्ति—

(ऋषयः) शार्ङ्गरवः—स्वाधीनकुशलाः सिद्धिमन्तः ॥ स भवन्तमनामयप्रश्नपूर्वमिदमाह—

राजा—किमाज्ञापयति भगवान् ?

शार्ङ्गरवः—यन्मिथस्समयादिमां मदीयां दुहितरं भवानुपायंस्त,तन्मया प्रीतिमता युवयोरनुज्ञातम् ॥

कुतः ?

त्वमर्हतां प्राग्रसरः स्मृतोऽसि(य)नः
(च्छ)शकुन्तला मूर्तिमतीव सत्क्रिया ।

---

यन्मिथइत्यादि ॥ मिथस्समयात् ॥ परस्परकृतसङ्केतात् ॥ गान्धर्वविवाहादिति यावत् ॥ इमामनागरिकाम् ॥ दुहितरं वात्सल्यविषयभूताम् ॥ भवान् सकलवर्णाश्रममर्यादापरिपालको राजा भवानित्यर्थः ॥ भवच्छब्दप्रयोगस्तु जामातृभूतदुष्यन्तं प्रति पूज्यवाचकः ॥ उपायंस्तेति यत् तत्कर्म ॥ मयेत्यनेनारण्यवासित्वादनुरूपवरसङ्घटनार्थं नानादेशभ्रमणकरणासमर्थेन मयेति व्यज्यते ॥ प्रीतिमता अनायासेन अनुरूपवरप्राप्त्या परितोषवता ॥ प्रीतिकरणे उभयोरनुरूपत्वमेव हेतुरिति यावत् ॥ अत एवोक्तम्—युवयोरिति ॥ एतदेव विशदयति—तत्तस्माद्धेतोरनुज्ञातमिति ॥

कुत इत्यादिना ॥

१५ त्वमिति ॥ अर्हतां कुलाभिजात्यादिमतां पूज्यानां प्राग्रसरः मुख्यतमः ॥ त्वमित्येकवचनेन पूज्याग्रगण्यतायामद्वितीयत्वं व्यज्यते ॥ सत्क्रिया सौशील्यादिः समानयन् ॥ सम्यग्योजयन् ॥ चिरायाद्यसृष्टि कर्मारभ्य वर्तमानम् ॥ वाच्यं असमानगुणवधूवरसङ्घटनाजनितापवादं न गतः ॥ अद्य शकुन्तलादुष्यन्तसङ्घटनेन प्राप्त इत्यर्थः ॥ अत्र

---

स्वाधीनेति । अनामयप्रश्नपूर्वमिति तस्य क्षत्रियत्वात् । तदुक्तं भृगुसंहितायाम्—'ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम् । वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च' इति ' मिथःसमयात् । गान्धर्वेण विवाहेनेत्यर्थः । उपायंस्त विवाहितवान् । 'उपाद्यमः स्वकरणे' इत्यात्मनेपदम् ॥

त्वमिति ॥ यद्यस्मात्त्वमर्हतां पूज्यानां प्राग्रसरो मुख्यः स्मृतोऽसि । लोकैरिति शेषः । क्वचित् 'स्मृतोऽसि नः' इति पाठः । सरतीति सरः । 'नन्दिग्रहिपचादिभ्यः' इत्यत्र पचादेराकृतिगणत्वादच् । ततः प्रकर्षेणाग्रे सरतीति प्राग्रसरः । संज्ञाया अभावात् 'हलदन्तात्' इत्यादिना लुङ् न । 'त्वमर्हतां प्राग्रहरः' इति वा पाठः । 'परार्घ्याग्र्यप्राग्रसर' इत्याद्यमरः । यद्यस्माच्छकुन्तला मूर्तिमती शरीरधारिणी । सती पूज्या चासौ क्रिया च सत्क्रिया । इवेत्युत्प्रेक्षा । अनया चाखिलजनपूज्यत्वमस्या ध्वनितम् । अतएव

समानयंस्तुल्यगुणं वधूवरं
चि(रस्य)राय वाच्यं न गतः प्रजापतिः ॥ १५

तदियमिदानीमापन्नसत्त्वा प्रतिगृह्यतां सहध(र्म)र्माचरणायेति ॥

**गौतमी**—[1]अज्ज, किं वि वत्तुकामम्हि ॥ ण खु मे वअणाव(सरो) आसो अत्थि ॥ कहं (त्ति) वि अ?

णावेक्खिओ गुरुअणो तुए इमाए ण पुच्छिआ बन्धू ।

1 आर्य ! किमपि वक्तुकामास्मि ॥ न खलु मे वचनाव (सरो)काशोऽस्ति ॥ कथमि(ति)व ? नापेक्षितो गुरुजनस्त्वयानया न पृष्टा बन्धवः ।

वर्तमानार्थकाद्यादिपदानुपादानात् प्रजापतिर्बुद्धिपूर्वकानुरूपवरसङ्घटनया लोकापवादं न गत इति न । किन्तु दैवान्नगत इति प्रजापतेरपि अनुकूलविध्यन्तरापेक्षा ध्वन्यते ॥ अत्र समालङ्कारः ॥ तदुक्तम्—* "समं योग्यतया योगो यदि सम्भावितः क्वचित्" इति ॥ इदमनयोश्श्लाघ्यमिति योग्यतया सम्बन्धस्य नियतविषयमध्यवसानं चेत्समं भवति ॥ प्रकृते शकुन्तलादुष्यन्तयोस्सम्बन्धस्य समत्वकथनात् समं भवति ॥

अज्जेत्यादि ॥

१६ **णावेक्खिओ इति** ॥ चरिते विवाहव्यापारे * "कन्या वरयते रूपं माता वित्तं पिता श्रुतं । बान्धवाः कुलमिच्छन्ती"ति न्यायेन बहुजनानुज्ञापेक्षिते

तुल्यगुणत्वम् । तत्तस्मादित्यर्थेन तच्छब्देनान्वयः । 'न' इति पाठे तूभावप्यर्थौ । तुल्यगुणं समानगुणं वधूवरं समानयन्संयोजयन् । चिरस्य चिरकालेन प्रजापतिर्वाच्यं निन्दां न गतो न प्राप्तः । 'वाच्यं वक्तव्यमित्येतौ प्रवर्तेते प्रपादने । वचोहे कुत्सिते हीने दूषणेऽभिधयोदिते' इति धरणिः । चिरस्येति विभक्तिप्रतिरूपकमव्ययम् । 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः' इत्यमरः । अन्यत्र तु यत्र वधूवरं मेलयति तत्र तत्रातुल्यगुणम् । जगतीदमेवेति भावः । अतएव चिरस्येत्युक्तिः । प्रजापतिरिति साभिप्रायम् । समहेत्वनुप्रासाः । वंशस्थं वृत्तम् । 'स्मृतोऽसि सत्क्रियेव यन्मूर्तिमती शकुन्तला' इति पठित्वा क्रमलक्षणो दोषः परिहरणीयः । आपन्नसत्त्वा गर्भवती । 'आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी' इत्यमरः ॥ धर्मचरणायेत्यनेन विधिवदूढत्वं व्यज्यते । आर्य, किमपि वक्तुकामास्मि । न मे वचनावसरोऽस्तीति भविष्यदाक्षेपः । तस्यैवोपादानं कथमिति ॥

**णावेक्खिओ इति** ॥ नापेक्षितो गुरुजनोऽनया न खलु पृष्टश्च बन्धुजनः । क्वचित्पुस्तके 'इमाए तुए पुच्छिदो [ण] बन्धुजणो' इति पाठः । त्वया पृष्टो न बन्धुजन इत्यर्थः । उभयोरप्यपराधाविष्करणम् । एक्कक्मे परस्परस्मिन् व्व एव चरिते भणामि किमेकमेकम् । परस्परानुरागेण भवभ्द्यामिदं विहितम् । तत्रैकः पर्यनुयोज्यो न भवतीति भावः । 'एक्कक्कमण्णोण्ण' इति देशीकोशः । 'णव्वे अवि अव्वे अवधारणे' इति सूत्रेण

एक्कक्कं एव्व चरिदे भणामि किं एक्कएक्कस्स ॥ १६

शकुन्तला—(आत्मगतम्) [1]किं णु खु अज्जउत्तो फणादि ?

राजा—किमिदमुपन्यस्तम् ?

शकुन्तला—(आत्मगतम्) [2]पावओखु वअणोवण्णासो ॥

शार्ङ्गरवः—तत्कथं किमिदं नाम? ननु भवन्त एव नितरां लोक-(वृत्तान्त) तन्त्रनिष्णाताः ॥

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशङ्कते ।

---

एकैकमेव चरिते भणामि किमेकैकस्य ॥

1 किं नु खल्वार्यपुत्रः भणति ?

2 पावकः खलु वचनोपन्यासः ॥

---

विवाहकर्मणीत्यर्थः ॥ अतएवोक्तम् ॥ नापेक्षितो गुरुजनो बन्धव इति ॥ एकैकमेव केवलावेव युवाम् ॥ एकैकस्य किं फणामः ॥ न किमपि वक्तव्यमस्ति ॥ मिथस्समयं युवामेव जानीधः ॥ तथैव परस्परं वर्तेथामित्यभिप्रायः ॥

तत्कथमिति ॥ "किमिदमुपन्यस्त"मिति यदुक्तं । तत्कथमिति हेतुप्रश्ने ॥ लोकतन्त्रनिष्णाताः लोकसिद्धान्तनिपुणाः—"तन्त्रं कुटुम्बकृत्ये स्यात्कारणेऽपि परिच्छदे । शास्त्रे प्रधाने सिद्धान्ते तन्तुवाये गदोत्तमे" इति विश्वः ॥

१७ सतीमित्यादि ॥ सतीमपि साध्वीमपि । तर्हि साध्व्यास्सर्वदावस्थानं दुष्टं किं? इत्यत आह—ज्ञातिकुलैकसंश्रयामिति ॥ अत्राप्यपिशब्दोऽनुषज्यते ॥ ज्ञातीनां जननपोषणकारणभूतपितॄणां कुलं एकः केवलस्संश्रयो यस्यास्सा तथोक्ता ॥ एकग्रहणेन पितृगृहे कादाचित्कावस्थानं न दुष्टमिति व्यज्यते । तर्हि किंरूपभर्तृमत्याएव पितृगृहाव-

---

व्वकारोऽवधारणे । एकस्येति 'क्वचिद्द्वितीयादेः' इति द्वितीयार्थे षष्ठी । गाथेयम् । तेन 'इमाए' इत्येकारस्य 'एओ सुद्धापआवसाणमि लहू' इति लघुत्वम् । किं नु खल्वार्यपुत्रो भणति । पावकोऽग्निः खलु वचनोपन्यास इति भिन्नरूपकम् । क्वचित् 'सावलेपः' इति पाठः । निष्णाताः कुशलाः । 'निष्णातः कुशलेऽपि च' इत्यजयः । 'निनदीभ्यां स्नातेः कौशले' इति णत्वम् ॥

सतीमिति ॥ जनो लोको भर्तृमतीं विद्यमानधवां प्रमदां सतीं पतिव्रतामपि ज्ञातिकुलं पितृगृहं तत्संश्रयामथ च सगोत्रगणसंश्रयामन्यथा दोषयुक्तत्वेन विशङ्कते । अनौचित्यपरिहाराय कविना दोषादिपदत्यागेनान्यथापदं दत्तम् । 'ज्ञातिः सगोत्रे पितरि

अतस्समीपे परिणेतुरिष्यते
(प्रियाऽप्रिया) तदप्रियापि प्रमदा स्वबन्धुभिः ॥ १७

राजा—किञ्चात्रभवती मया परिणीतपूर्वा ?

शकुन्तला—(सविषादम्) (आत्मगतम्) [1]हि अअ, सम्पदं जुत्तं दे आ(सङ्का)दङ्क आसी ॥

शार्ङ्गरवः—

किं कृतकार्यद्वेषो धर्मं प्रति विमुखता कृतावज्ञा ?

---

1 हृदय । साम्प्रतं युक्तं ते आ(शङ्का) तङ्क आसीत् ॥

---

स्थानं शङ्कास्पदं ? इत्याशङ्क्याह—भर्तृमतीमपीति ॥ स्त्रीत्वसाफल्यहेतुभूतसम्भाषणालिङ्गन-चुम्बनसम्भोगगर्भोत्पत्त्यादिकारणभूतभर्तृमतीमपि ॥ मतुप्प्रत्ययेन प्रशस्ततरकान्तवतीत्वं सूच्यते ॥ जनः बन्धुशत्रुमध्यस्थभूतलोकः ॥ न तु शत्रुमात्रजनः ॥ अन्यथा अन्यप्रकारेण ॥ असतीमिति यावत् ॥ विशङ्कते ॥ यद्यपि अनुरूपभर्तृमतीत्वं । तथापि सार्वकालिक-पितृगृहावस्थानादसतीति विशेषेण तर्कयति ॥ वर्तमानव्यपदेशेन सकलजन संवादउक्तः ॥ अतः कारणात् ॥ प्रमदा युवतिः ॥ न तु वृद्धा ॥ स्वबन्धुभिः स्वस्य हितैषिभिराप्ततमैः परिणेतुः भर्तुस्समीपे इष्यते वांछयते ॥ सहधर्मचारिणी भूत्वा तया भर्तृसमीपस्थया भाव्यमिति वांछयत इति यावत् ॥ तर्हि भर्तुरपि अप्रिया चेत् किं कर्तव्यं? इत्यतआह—तदप्रियापि अनिष्टापीत्यर्थः ॥

आत्मगतमित्यादि ॥ आतङ्को भयम् ॥

१८ किमित्यादि ॥ कृते निर्वर्तिते कार्ये शकुन्तलापरिणयव्यापारे द्वेषः असहनत्वं किमिति प्रश्ने—"सप्रत्यवायदुर्लभनिषेधविषयश्च यो विषयः । कामस्स्वभाव-

---

कुलं जनपदे गृहे । सजातीयगणो गोत्रः' इति च विश्वः । अतः कारणात्प्रियाप्रिया वा । अर्थाद्भर्तुः । प्रमदा स्त्रीमात्रम् । अथ च प्रकृष्टो मदस्तारुण्यमदो यस्याः सैतादृशी स्वबन्धुभिर्वधूबन्धुभिः परिणेतुः समीप इष्यते । 'प्रियाप्रिया च' इति समीचीनः पाठः । 'तदप्रियापि' इति पाठे तस्य भर्तुरप्रिया । अपिशब्दात्प्रियापीति व्याख्येयम् । अत्र शकुन्तलायास्त्वत्समीपे स्थितिर्योग्येति विशेषे प्रस्तुते यत्सामान्यवचनं तेनाप्रस्तुतप्रशंसाहेत्वनुप्रासौ । वृत्तमनन्तरोक्तम् । अत्र स्त्रीसामान्ये वक्तव्ये यत्प्रमदेति विशेषवचनं तेन विशेषपरिवृत्तलक्षणं दूषणमिति चेन्न । शब्दशक्त्युद्भावध्वनेः सत्त्वात्तदभिप्रायेणैव व्याख्यातम् । अनेनार्थविशेषण-नामा नाट्यालङ्कार उपक्षिप्तः । तल्लक्षणं तु—'उक्तस्यार्थस्य यत्तु स्यादुत्कीर्तनमनेकधा । उपालम्भस्वरूपेण तत्स्यादर्थविशेषणम् ॥' इति । हृदय, सांप्रतं त आशङ्का ॥

किमिति ॥ कृतं यत्कार्यं गान्धर्वो विवाहस्तत्र द्वेषः किम् । धर्मं प्रति विमुखता किम् । कृते विदितेऽनुभूतेऽवज्ञा किम् । यावदनुभूतं तावदेव तद्दुर्लभमिति भावः । 'कृतं

**राजा**—कुतोऽयमसत्कल्पनाप्रश्नः ?

**शार्ङ्गरवः**—

**मूर्च्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु ॥** १८

**राजा**—विशेषेणाधिक्षिप्तोऽस्मि ॥

**गौतमी**—[1]जादे ! मुहुत्तं माळज्जेसु अवणइस्सं दाव दे अवकुण्ठणं तदो तुमं भट्टा अहिजाणस्सदि ॥ (यथोक्तं करोति)

---

1 जाते ! मुहूर्तं मालज्जस्व ॥ अपनयिष्यामि तावत्तेऽवकुण्ठनम् ॥ ततस्त्वां भर्ताऽभिज्ञास्यति ॥

---

वामः प्रसरति तत्रैव दुर्वारः" इति न्यायेन तात्कालिकसुखार्थं यत्किञ्चित्कृतं तत्किमर्थमान्तमनुष्ठेयमिति स्वप्रयोजने निवृत्ते सति तत्र गुणाभावात् जुगुप्सया द्वेषः किमिति भावः ॥ धर्मं प्रति विमुखता वैमुख्यम् ॥ किमिति प्रश्ने ॥ विध्युक्तगान्धर्वविवाहेन धर्मप्रजार्थं परिणीय तत्परित्यागेनाद्यप्रभृति तव धर्मेच्छा नास्ति किं इति यावत् ॥ अवज्ञा अवधीरणा कृता किं? एते तपस्विनः राज्ञो मम कथं सम्बन्धिन इत्यवमानना कृता किमित्यर्थः ॥ कुतः कस्मात्कारणात् असत्कल्पनाप्रश्नः असतः अविद्यमानार्थस्य कल्पनया सम्पादनेन कृतः प्रश्नः ॥

१८ **मूर्च्छन्तीति** ॥ अमी विकाराः कृतकार्यद्वेषादयः मूर्च्छन्ति आप्नुवन्ति ॥ वर्तमानव्यपदेशेन त्वय्यनुभवरूपेण दृष्टा इति भावः अधिक्षिप्तः सोपहासं न्यकृतः ॥

---

युगेऽपि पर्याप्ते विहिते' इति विश्वः । असत्कल्पनामुत्तरार्धेन निरस्यति—ऐश्वर्यमत्तेषु सम्पदुद्धतेषु प्रायेण बाहुल्येनामी विकारा उक्ता मूर्च्छन्ति वर्धन्ते । 'मूर्च्छा मोहसमुच्छ्राययोः' इति । आदिकारकदीपकसंशयहेत्वर्थान्तरन्यासानुप्रासाः। अनेन तोटकं नामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'संरम्भवचनप्रायं तोटकं त्विह संज्ञितम्' इति । जाते पुत्रि, मुहूर्तं मा लज्जस्व । अपनेष्यामि तावत्तेऽवगुण्ठनम् । ततस्त्वां भर्ताभिज्ञास्यति परिचेष्यति । यथोक्तमवगुण्ठनापनयनम् । इत आरभ्य षष्ठाङ्कसमाप्तिपर्यन्तमवमर्शसन्धिः । तल्लक्षणं तु सुधाकरे—'यत्र प्रलोभनक्रोधव्यसनाद्यैर्विमृश्यते । बीजादौ गर्भनिर्भिन्नः सोऽवमर्श इतीर्यते ॥' इति । अत्र शापलक्षणव्यसनेनावमर्शः यथा 'इदमुपनतम्' इत्यादि प्रकरीनियताप्त्यानुगुण्यादत्राङ्गकल्पना । 'अपवादोऽर्थसम्फेटो विद्रवद्रवशक्तयः । द्युतिप्रसङ्गौ छलनं व्यवसायो निरोधनम् । प्ररोचनं विचलनमादानं च त्रयोदश ॥' इति । अत्राङ्गानां लक्षणं व्याख्यानावसरे तत्र तत्र वक्ष्यामः । प्रकरीलक्षणं भावप्रकाशिकायाम्—'शोभायै वैदिकादीनां यथा पुष्पाक्षतादयः । अथर्तुवर्णनादिस्तु प्रसङ्गे प्रकरी भवेत् ॥' इति । यथात्रैव षष्ठेऽङ्के 'ततः प्रविशति चूताङ्कुरम्—' इत्यादिना 'नेपथ्ये' इत्यन्तेन । अनेन तु 'फलं तु कल्प्यते यस्याः परार्थायैव केवलम् । अनुबन्धविहीनानां प्रकरी श्रूयते यथा ॥' इति लक्षणानुसारेण मातलिवृत्तान्तं प्रकरीवृत्तमाहुस्तत्र । सन्धिसमाप्तिविषये तस्योद्देशादङ्गानां

राजा—(शकुन्तलां निर्वर्ण्य आत्मगतम्)

इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्न वेत्यव्यवस्यन् ।
भ्रमर इव विभाते कुन्दमन्तस्तुषारं
न च खलु परिभोक्तुं नैव शक्नोमि हातुम् ॥ १९

(इति विचारयन् स्थितः)

(प्रतीहारी) परिजनः—(जनान्तिकम्) [1]अम्हो! धम्मावेक्खिदा भत्तुणो ॥ ईरिसं णाम सुहोवणदं रुव्वं दक्खिअ को अण्णो विआरेदि ?

1 अहो! धर्मा(पे)वेक्षिता भर्तुः ॥ ईदृशं नाम सुखोपनतं रूपं दृष्ट्वा कोऽन्यो विचारयति ?

१९ इदमित्यादि ॥ इदमित्यनेन सर्वावयवप्रत्यक्षता कथिता ॥ उपनतमुपस्थितम् ॥ अक्लिष्टकान्ति अनवद्यसौन्दर्यम् ॥ "अनेन रत्नहारी तु पार्थिव" इति न्यायेनापरित्याज्यत्वमुक्तम् ॥ अव्यवस्यन् अनिश्चिन्वन् ॥ कुन्दं कुन्दकुसुमम् ॥ अन्तस्तुषारमित्यनेन भ्रान्तिहेतुरुक्तः अत्र विपर्ययो नामालङ्कारः ॥ तदुक्तम्—"......तद्विपर्ययो विचारइव विपर्ययः । विचारस्यान्यथाभावः तथा दृष्टोपयोगतः ॥ सन्देहात्कल्प्यते वस्तु स विज्ञेयो विपर्ययः" दृष्टोपयोगिनो वस्तुनस्सन्देहादन्यथाकल्पनं विपर्ययः ॥ अत्र दुष्यन्तस्य शकुन्तलां प्रति परिग्रहसन्देहात् विपर्ययः ॥

अम्हो इत्यादि ॥

तदनुगामित्वं नायाति । नियताप्तिलक्षणमादिभरते—'नियतां तु फलप्राप्तिं यदा भावेन पश्यति । नियतां तु फलप्राप्तिं स गुणः परिचक्षते' इति । निर्वर्ण्य दृष्ट्वा ॥

इदमिति ॥ एवमुपनतमयत्नप्राप्तम् । न क्लिष्टा कान्तिर्यस्य तत् । अनेन प्रथमं तारुण्यं ध्वनितम् । इदं रूपं प्रथमपरिगृहीतं स्यान्न वा स्यादिति व्यवस्यन्विचारयन् । 'अभ्यवस्यन्' इति पाठे स्वव्यवसायं न जानन् । खलु निश्चयेन । परिभोक्तुं न शक्नोमि निश्चयेन हातुं नैव शक्नोमीत्येवंप्रकारेण रतेरनुसन्धानं ध्वनितम् । कः किमिव । विभाते प्रभाते भ्रमरः । अन्तस्तुषारो हिमं यस्य तादृक्कुन्दपुष्पमिव । उपरि हिमस्याच्छादकस्य शापस्थानीयत्वात्त्यागाभावः । ससन्देहोपमानुप्रासाः । अत्र विभात इत्युक्तेस्तदनन्तरं रविकिरणैर्हिमे नीते मकरन्दभोगोऽवश्यः । एवमिहाप्यभिज्ञानदर्शनेन शापे गते तत्स्वीकारोऽवश्यमिति द्योतयन्त्योपमया रतेः स्थायित्वदार्ढ्यं ध्वनितम् । मालिनीवृत्तम् । एतेन संशयनामकं भूषणमुपक्षिप्तम् । तल्लक्षणं तु—'अनिश्चयान्तं यद्वाक्यं संशयः स निगद्यते' इति । विचारयन्नित्युत्क्षिप्तैकभ्रूभावादिना । अहो आश्चर्ये । धर्मापेक्षिता भर्तुः । ईदृशम् । नाम प्राकाश्ये । प्रकटं सुखोपनतं रूपं दृष्ट्वा कोऽन्यो विचारयति ।

शार्ङ्गरवः—किमिदं जोषमास्यते ॥

राजा—भोस्तपोध(नाः)न ! चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि ॥ तत्कथमिमामभिव्यक्तसत्त्वलक्षणां प्रत्यात्मानं क्षेत्रिणमाशङ्कमानः प्रतिपत्स्ये ?

शकुन्तला—(अपवार्य)(सविषादं । आत्मगतम्) (अज्जस्स) [1]परिणए एव्व सन्देहो कुदो मे दाणिं दूराहिरोहिणी आसा ?

शार्ङ्गरवः—मा तावत् ॥

कृताभिमर्शामनुमन्यमानः
सुतां त्वया नाम मुनिर्विमान्यः ।

1 (आर्यस्य) परिणय एवं सन्देहः ॥ कुतो इदानीं मे दूराधिरोहिण्याशा ?

जोषं तूष्णीं "तूष्णीं जोषं भावे नूनमित्यव्ययेषु" हलायुधः ॥ क्षेत्रिणं कलत्रवन्तम् ॥ आशा ॥ जातेति शेषः ॥ मातावदित्यादि ॥ तावत्साकल्ये ॥ परिग्रहापरिग्रहरूपशकुन्तलाविषयकासद्भवदुक्तवृत्तादिकं सर्वमित्यर्थः ॥ माङ् निषेधे ॥

२० कृतेति ॥ सुतां सदसद्व्यवहाराभ्यां स्वकुलकीर्तिकलङ्ककारणभूतां पुत्रीं त्वया कृताभिमर्शां कृतस्पर्शां कृतसङ्ग्रहणामित्यर्थः । अनुमन्यमानः अनायासेनानुरूपवरप्राप्तिर्जातेति बहुमन्वानः मुनिः मननान्मुनिरिति सार्वकालिकात्मस्वरूपमननेन

जोषं तूष्णीम् । अभिव्यक्तसत्त्वलक्षणां प्रकटगर्भचिह्नाम् । क्षेत्रं पत्नी यस्यासौ क्षेत्री तं क्षेत्रिणम् । 'क्षेत्रं पत्नीशरीरयोः' इत्यमरः । एतादृशमात्मानं शङ्कमानः । यत इयं गर्भिणी मया चेदधुना प्रतिगृह्येत तत्तदाहं क्षेत्री स्यां न तु बीजी । अत एतज्जातापत्यं नौरसमपि तु क्षेत्रजम् । तच्चौरसाद्धीनमिति शङ्का । अथ चान्येनोढायाः परिग्रहे मत्क्षेत्रत्वमेव स्यान्न तु धर्मपत्नीत्वमिति शङ्का । 'क्षेत्रियम्' इति पाठे परदारासक्तम् । 'क्षेत्रियं क्षेत्रजतृणे परदाररतेऽपि च' इति विश्वः । कथमिमां प्रतिपत्स्येऽङ्गीकरिष्यामि । अपवार्येति । 'रहस्यं कथ्यतेऽन्यस्य परावृत्त्यापवारितम्' इति । आर्यस्य परिणय एव सन्देहः । कुत इदानीं मे दूराधिरोहिण्याशा । दूरमत्यर्थं तत्र गत्वा महिषीपदं प्राप्स्यामीत्याद्यधिरोढुं शीलं यस्याः सा । मा तावदिति श्लोकेन सम्बध्यते ॥

कृतेति ॥ त्वयेत्येवमपराधं कृत्वाप्यधुना स्मरणक्लेशाभाववतेत्यर्थान्तरसङ्क्रमितम् । कृतोऽभिमर्शो बलाद्धर्षणं यस्याः सा । अनेन सातिशयापराधकृत्त्वं ध्वन्यते । ईदृशीं सुतामनुमन्यमानोऽनुमोदमान इत्यनेनैवं सापराधेऽपि त्वयि मुनित्वेन तादृशकृपा युज्यत इति ध्वनितम् । अत एव मुनिः । तावत्साकल्येन । नामेति क्रोधे । मा विमान्यो न

मुष्टं प्रतिग्राहयता स्वमर्थं
पात्रीकृतो दस्युरिवासि येन ॥ २०

**शारद्वतः**—शार्ङ्गरव ! विरम त्वमिदानीं ॥ शकुन्तले ! वक्तव्यमुक्तमस्माभिः सोऽयमत्रभवानेवमाह ॥ दीयतामस्मै प्रत्ययप्रतिवचनम् ॥

**शकुन्तला**—(अपवार्य) (आत्मगतम्) [1]एदं अवत्थंदरं गदे तारिसे अणुराए किं वा सुमरिदेण ? अत्ता दाणिं मे सोअणिज्जो त्ति ववसिदं (एदं) (प्रकाशं) अय्यउत्त (इत्यर्धोक्ते) संसइदे दाणिं परिणए ण एसो समुदाआरो ॥

---

1 इदमवस्थान्तरं गते तादृशेऽनुरागे किंवा स्मारितेन ? आत्मेदानीं मे शोचनीय इति व्यवसितमेतत् ॥ आर्यपुत्र (इत्यर्धोक्ते) संशयित इदानीं परिणये नैषसमुदाचारः ॥ पौरव ! न

---

लोकवृत्तान्तानभिज्ञः काश्यपः ॥ नामावधारणे ॥ मुनिरेवेति यावत् ॥ विमान्यः असद्वृत्त-इव तिरस्कार्यः ॥ विमान्यतायां हेतुमाह—मुष्टमित्यादिना ॥ मुष्टं चोरितम् ॥ न तु स्वारसिकतया दत्तम् ॥ स्वं स्वकीयं न तु परकीयं अर्थम् ॥ "अर्था बहिश्चराः प्राणा" इति न्यायेन त्यागभोगेष्टापूर्तादिकारणहेतुभूतं धनं प्रतिग्राहयता देही देहमपि वात्रागत इत्यभिधानाद्विलम्बे सति समुचितकालदेशद्रव्यातिक्रमधिया दानरूपेणाङ्गीकारयता धनिना दस्युरिव बहुविधदण्डार्हश्चोरइव येन मुनिना पात्रीकृतः दानार्हीकृतः ॥ त्वमिति विशेष्यपदानुपादानात् कृतघ्नजननामोच्चारणायोग्यताभिप्रायः ॥ समुनिरिति सम्बन्धः ॥

**अय्यउत्तेत्यादि** ॥ पौरवेति तत्कृतकृतघ्नत्वयोग्यवर्णनाविस्तरसंरम्भेण फणितिः ॥ तव कुलप्रसिध्या विश्वसनीयस्य ॥ तादृशानुरागप्रकटनवतस्तवेति यावत् ॥ न युक्तं

---

विमाननीयः । अपि तु माननीय एव । सुताभिमर्शलक्षणोऽपराधः सोढः, विमाननालक्षणस्तु न सोढव्य इति दण्ड उक्तः । तेन सूक्ष्मालङ्कार उक्तः । केचित्तु निषेधमेव विधेयत्वेन मन्यन्ते तन्न समीचीनम् । निषेधनियोगस्य मध्यस्थेन राजकीयेन वा वक्तुमुचितत्वात् न मुनिपक्षीयैः । अत एव निबर्हणान्ते 'राजा—अतः खलु मम नातिक्रुद्धो मुनिः' इति । अथ च तस्योचिता विमाननेत्याह—मुष्टमिति । स कः येन त्वं दस्युश्चौर इव पात्रीकृतोऽसि । कीदृशेनेव । येन मुष्टं चोरितं स्वमर्थं प्रतिग्राहयता त्वदधीनं कारयता पुरुषेणेवेति विशेषणेनैव विशेष्यलाभः । यथा चौर्येणापहृतं द्रव्यं पुनस्तस्मा एवार्पणमगृह्णन्विमाननां जनयति तथेत्यर्थः । क्वचित् 'मुष्टं स्वमर्थम्' इति पाठः । तदा चोरितमित्यर्थः । एवमपराधिनः कन्यादानेन सन्तोषार्थं प्रवृत्तस्य स सन्तोषो नास्ति । परं विमाननालक्षणानर्थोत्पादाद्विषमालङ्कारः । इवशब्दो वाक्यार्थोपमाने । मन्यमान्येति स्युसिये इति छेकवृत्त्यनुप्रासौ च । तृतीयोपजातिरिन्द्रवज्रोपेन्द्रवज्रयोः । प्रत्ययजनकं विश्वासजनकं प्रतिवचनमुत्तरम् । मध्यमपदलोपी समासः । इदमवस्थान्तरं गते तादृशेऽनुरागे किं वा स्मारितेन । आत्मेदानीं ते शोचनीय इति व्यवसितमेतत् । आर्यपुत्र इत्यर्धोक्ते । संशयित इदानीं नैष समुदाचारः ।

पोरव ! ण जुत्तं णामदे (तह) पुरा अस्समपदे सहवोत्ताणहि अअं इमं जणं समअपुव्वं पदारिअ सम्पदं ईरिसेहिं अक्खरेहिं पच्चाचक्खिदुम् ॥

युक्तं नाम ते पुराश्रमपदे स्वभावोत्तानहृदयमिमं जनं समयपूर्वं प्रतार्य। साम्प्रतमीदृशैरक्षरैः प्रत्याख्यातुम् ॥

कृतघ्नतया विश्वस्तजनवञ्चनं न योग्यम् ॥ नामावधारणे ॥ युक्तमेव न भवतीत्यर्थः ॥ पुरेति कालज्ञापनेन चिरविश्लेषादन्तःपुरस्त्रीगणापहृतचित्ततया मां विस्मृतोऽसीति ज्ञाप्यते ॥ आश्रमपदे शान्तिप्रधानरागद्वेषादिरहितजनावस्थानयोग्यधर्मारण्ये ॥ दुष्टजनप्रवेशानर्हविशेषप्रदेश इति यावत् ॥ बहुयुवतिप्राप्तिसम्भावितसामान्यनगरप्रवेशादौ राज्यपरिपालनभ्रमणकाले रत्नहारी तु पार्थिव इति न्यायेन कामवशाद्यत्किञ्चित्कृतकार्यं राजानो बहुवल्लभा इति न्यायेन पुनःपुनः स्त्रीरत्नसम्पर्काद्विस्मृतं भवति ॥ वरयुवति प्राप्त्यनुचितविलक्षणविशेषप्रदेशे कृतकार्यं कथं विस्मृतमिति भावः ॥ विस्मरणकार्यं स्वस्या एव दोष इत्याह—स्वभावोत्तानहृदयमिति ॥ अरण्यवासित्वादनागरिकतया परकृतवञ्चनानभिज्ञत्वेन त्वद्वचनश्रवणमात्रविश्वस्तचित्तम् ॥ अनेन तदा स्वस्याः कन्याभावसुलभमप्रागल्भ्यं प्रति निन्दा ध्वन्यते ॥ जनमिति ॥ अरण्ये मृगजातिभिस्सह वर्धिततया तादृग्विदग्धनागरिककन्यकाजनसहवासाभावात् जननमात्रफलकम् ॥ जनमित्येकवचनेन विविक्ते एकाकिनीं मामेव वञ्चितवानसि ननु मत्पित्रादीन् वञ्चयित्वा तदननुज्ञया मां परिणीतवानसीति भावः ॥ किञ्च जनशब्देन त्वदपरिग्रहेण इतः परं भर्तृपितृकुलभ्रष्टता स्वस्यास्सूच्यते ॥ समयपूर्वं सङ्केतपुरस्सरम् ॥ प्रतिज्ञापुरस्सरं च ॥ अनेन यद्यपि त्वत्कृतवञ्चनाफलस्य अत्र लोके राज्ञस्तव शिक्षकजनो न विद्यते ॥ तथापि शपथपरित्यागजनितदोषस्य परलोकानुभवभीतिर्नास्ति किं? इति व्यज्यते । प्रतार्य प्रकर्षेण वञ्चयित्वा। प्रतारणायाः प्रकर्षकथनेन विश्लेषासहानुरागप्रकटनार्थम् ॥ "एकैकमत्र दिवसे दिवसे मदीयं नामाक्षरमि" त्यादिबहुस्त्रीविलक्षणपट्टमहिषीभावकरण "परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे" इत्यादिराजकथितबह्वाश्वासकरणवञ्चनावचनचातुरी सूच्यते ॥ साम्प्रतमिदानीं स्वप्रयोजने निर्वृत्ते सतीत्यर्थः ॥ ईदृशैः लोकविलक्षणतदानीन्तनानुरागप्रकटनानुचितैरक्षरैः मर्मव्यधाकारिवर्णसमूहैः प्रत्याख्यातुं निराकर्तुं न युक्तमिति सम्बन्धः ॥

पौरवेति राजवंश उत्पन्नो राजेत्यत्यन्तवचनचातुरीं धत्ते। न युक्तम्। नामेति कुत्सायाम्। 'नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने' इत्यमरः। तथा पुराश्रमपदे स्वभावोत्तानहृदयमित्यनेनात्मनोऽतिमुग्धत्वं तेन च परवञ्चनानभिज्ञत्वं परात्मजनविवेकशून्यत्वं ध्वनितम्। इमं जनं समयपूर्वं सङ्केतपूर्वम्। गान्धर्वेण विवाहेनेत्यर्थः। 'गान्धर्वः समयान्मिथः' इति स्मरणात्। अथ च समयपूर्वं शपथं कृतवानसीत्यर्थः। अथ च समयपूर्वं कालनियमपूर्वं त्रिचतुरदिनमध्ये पञ्चदिनमध्ये वा पुरुषः प्रेष्यत इति प्रकारेण । अत एव वक्ष्यति— 'एकैकमत्र दिवसे दिवसे मदीयं नामाक्षरं गणय गच्छसि यावदन्तम्। तावत्प्रिये मदवरोधगृहप्रवेशं नेता जनस्तव समीपमुपैष्यतीति ॥' इति। अथ च समयपूर्वं ज्ञानपूर्वं प्रतार्य। 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । ईदृशैरतिक्रूरैर्हृदयविदारकैरक्षरैः प्रत्याख्यातुं न युक्तमिति सम्बन्धः। इदं प्रत्याख्यानं वाङ्मात्रेण, न तत्त्वतोऽग्रे परिग्रहस्य वक्ष्यमाणत्वादिति रतेरनुसन्धायकक्वेरक्षरैरित्युक्तिः ॥

**राजा**—(कर्णौ पिधाय) शान्तं पापं शान्तं पापम् ॥

व्यपदेशमाविलयितुं किमीहसे जनमिमं च पातयितुं ?
कूलङ्कषेव सिन्धुः प्रसन्नमम्भस्तट(तरुं)रुहं च ॥ २१

**शकुन्तला**—[1]होदु ॥ जइ परमत्थदो परपरिग्गहसङ्किणा तुए एव्वं पवुत्तं । अहिण्णाणेण इमिणा तुह (आसङ्कं) सन्देहं अवणइस्सम् ॥

**राजा**—उदारः कल्पः ॥

**शकुन्तला**—(मुद्रास्थानं परामृश्य) [2]हद्धि हद्धि! अङ्गुळिअअसुण्णा मे अङ्गुळि ॥

(सविषादं गौतमीमवेक्षते)

**गौतमी**—[3]णूणं (दे) सक्कावदारब्भन्दरे सईती(त्थसविलं)त्थं वन्दमाणाए तुहहत्थादोपब्भट्ठं अङ्गुळीअअम् ॥

---

1 भवतु ॥ यदि परमार्थतः परपरिग्रहशङ्किना त्वयैवं प्रवृत्तं । अभिज्ञानेनानेन तव सन्देहमपनेष्यामि ॥

2 हा धिक्! हा धिक्! अङ्गुळीयकशून्या मेऽङ्गु(ळिः) ळी ॥

3 नूनं शक्रावताराभ्यन्तरे शचीतीर्थं वन्दमानायास्तव हस्तात्प्रभ्रष्टमङ्गुळीयकम् ॥

---

२१ **व्यपदेशमित्यादि** ॥ व्यपदेशं परदाराभिमर्शविमुखकुलप्रसिद्धिमाविलयितुं कलुषयितुं इमं जनमात्मानं पातयितुं पतितं कर्तुं किमोहसे इच्छसि किं? इति प्रश्ने । तत्र दृष्टान्तमाह—कूलङ्कषेवेत्यादि ॥ कूलङ्कषा उत्कूलप्रवाहा मर्यादालङ्घिनीति यावत् ॥

उदारः कल्पः उन्नतः प्रकारः सन्देहापनयनक्षमइत्यर्थः ॥

---

**व्यपदेशमिति** ॥ व्यपदिश्यतेऽनेनेति व्यपदेशः कुलमाविलयितुं मलिनीकर्तुमिमं जनं मल्लक्षणं पातयितुं च पतितं कर्तुं किमीहसे चेष्टसे । त्वं त्विहागमनेनैव पतितासीति णिचा ध्वन्यते । कूलङ्कषा तटसङ्घर्षिणी सिन्धुर्नदी प्रसन्नमम्भो यथा कलुषयति तटतरुं च पातयति तद्वदित्युपमा । अत्र भिन्ने अपि गुणक्रिये अतिशयोक्त्याभेदेनाध्यवसिते । अत्रोपमेये प्रकृतमन्तर्वर्ति विशेषणम् । अस्त्वेवेत्युपमाने कूलङ्कषेति विशेषणम् । पूर्वार्धे गुणक्रिययोः समुच्चयः । 'दोषप्रसंख्यापनयादपवादस्तु स स्मृतः' इति । भवतु पूर्यताम् । अनेन दोषप्रख्यापनेनेत्यर्थः । यदि परमार्थतः परपरिग्रहशङ्किना त्वयैवं वक्तुं प्रवृत्तम्, ता तर्ह्यभिज्ञानेन मुद्रिकारूपचिह्नेन तवाशङ्कामपनेष्यामि । उदारः कल्पो मुख्यो न्यायः । 'कल्पः स्यात्प्रत्यये न्याये' इति विश्वः । महान्विश्वासो वा । हा धिक् । अङ्गुलीयकशून्या मेऽङ्गुलिः । नूनं ते शक्रावताराभ्यन्तरे शचीतीर्थसलिलं वन्दमानायाः 'प्रभ्रष्टमङ्गुलीयकम् ।

**राजा**—(सस्मितम्) इदं तत् । प्रत्युत्पन्नमति स्त्रैणमिति यदुच्यते ॥

**शकुन्तला**—[1]एत्थ दाव विहिणा दंसिदं पहुत्तणम् ॥ अवरं दे कहयिस्सम् ॥

**राजा**—श्रोतव्यमिदानीं संवृत्तम् ॥

**शकुन्तला**—[2]णं एक्कस्सिं दिअहे णोमालिआमण्डवे णळिणीपत्तभाअणगदं उदअं तुहहत्थे सण्णिहिदं आसि ॥

**राजा**—शृणुमस्तावत् ॥

---

1 अत्र तावद्विधिना दर्शितं प्रभुत्वम् ॥ अपरं ते कथयिष्यामि ॥

2 नन्वेकस्मिन् दिवसे नवमालिकामण्टपे नळिनीपत्रभाजनगतमुदकं तव हस्ते सन्निहितमासीत् ॥

---

स्त्रैणं स्त्रीजातिः ॥ प्रत्युत्पन्नमति प्रत्युत्पन्ना तात्कालिकी मतिर्यस्य तत्तथोक्तम् ॥ यदुच्यते । लोकैरिति शेषः ॥ तदद्यानुभवात् सत्यमिति यावत् ॥ अनेन प्रत्युत्पन्नमतिर्नाम सन्ध्यङ्गमुक्तमित्यवगन्तव्यम् ॥ तदुक्तं—"तात्कालिकी मतिर्या स्याद्दोषे परिजिहीर्षया । प्रत्युत्पन्नमतिस्सा "इति ॥

**श्रोतव्यमित्यादि ॥** इदानीं साम्प्रतं सन्देहापनयनार्थं दर्शनीयांगुळीयके गते । श्रोतव्यं श्रोतुमुचितं संवृत्तं सम्पादितम् ॥

**णमित्यादि ॥** नन्विति सम्बोधने ॥ एकदिवसे ॥ एकपदेन पुनरपि दिवसान्तरसंसर्गाभावान्मां विस्मृतोऽसीति ज्ञाप्यते ॥ दिवसपदेन सर्वावयवप्रदर्शनेन त्वमेवेति निश्चितज्ञानात् त्वन्निकटागमनं न तु पुरुषान्तरसाम्यभ्रान्त्यागमनमिति भावः ॥ द्वावप्यारण्यकाविति मृगसाम्यकथनेन नागरिकप्रौढाङ्गनासंसर्गाभावात् सम्भोगसमये स्वस्याः कामतन्त्रसामर्थ्याभावान्नायकारब्धश्रृङ्गारस्सूचितः ॥

---

प्रत्युत्पन्नमति स्त्रैणं स्त्रीसमूह इति यज्जगति प्रसिद्धं तदिदं परिदृश्यमानम् । 'तात्कालिकी तु प्रतिभा प्रत्युत्पन्नमतिः स्मृता' इति प्रत्युत्पन्नलक्षणं सुधाकरे । अत्र तावद्विधिना दर्शितं प्रभुत्वम् । अपरं ते कथयिष्यामि । श्रोतव्यमिदानीं संवृत्तमिति भवतीभिः कल्पनासहस्रं विधायालीकवचनोपन्यासः कर्तव्यः । स चेन्मया न श्रोतव्यो ममाश्रवणापराध एव स्यादिति प्रयोजनाभावेऽपि श्रवणमात्रे विधिरिति संवृत्तपदद्योत्यम् । नन्वेकस्मिन्दिवसे नवमालिकामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते संनिहितमासीत् ।

**शकुन्तला**—[1]तक्खणं (सोमे) मह पुत्तकिदओ दीहापङ्गो णाम हरिण (मिअ)पो दओ उवट्ठिदो । तदो तुए दाव पुडमं एसो पिबदु त्ति अणु अम्पिणा उपच्छन्दिदो उअएण ॥ णउण सो दे अपरिचआदो हत्थब्भासं उवगदो ॥ पच्चा तस्सिं एव्व मए गहीदे सलिले किदो (णेण) देण पणओ ॥ त(दा)दो (तु) इद्धं पहसिदोसि—सव्वोसगन्देसु विस्ससदि ॥ दुवे वि खु एत्थ आरण्ण आत्ति ॥

**राजा**—एवमादिभिरात्मकार्यनिर्वर्तिनीनां योषितामनृत(मय)वाङ्मधुभिराकृष्यन्ते विषयिणः ॥

**गौतमी**—[2]महाभाअ । णारुहसि एव्वं मन्तेदुम् ॥ तवोवणसंवड्ढिदो अणहिण्णो अअं जणो कअइअवस्स ॥

**राजा**—अयि तापसवृद्धे !

---

1 तत्क्षणं (समे) मम पुत्रकृतको दीर्घापाङ्गो नाम हरिण(मृग)पोतक उपस्थितः ॥ तदा त्वया तावत्प्रथममेष पिबत्वित्यनुकम्पिनोपच्छन्दित उदकेन ॥ न पुनरेष तेऽपरिचयाद्धस्ताभ्याशमुपगतः ॥ पश्चात्तस्मिन्नेव मया गृहीते सलि(लोऽनेन)ले कृतस्तेन प्रणयः ॥ त(दा)त इ(त्वमि)त्थं प्रहसितोऽसि—'सर्वस्सगन्धेषु विश्वसिति द्वावपि खल्वत्रारण्यकाविति ॥

2 महाभाग ! नार्हस्येवं मन्त्रयितुम् । तपोवनसंवर्धितोऽनभिज्ञोऽयं जनः कैतवस्य ॥

---

**एवमित्यादि** ॥ योषितां न तु शकुन्तलाया एकस्या एव भवति ॥ विषयिणः विषयशीलाः ॥

---

तत्क्षणे स मे पुत्रकृतको दीर्घापाङ्गो नाम मृगपोतक उपस्थितः । त्वयायं तावत्प्रथमं पिबत्वित्यनुकम्पिनोपच्छन्दितोऽभ्यर्थित उदकेन । न पुनस्तेऽपरिचयाद्धस्ताभ्याशमुपगतः । पश्चात्तस्मिन्नेव मया गृहीते सलिलेऽनेन कृतः प्रणयः प्रीतिः । तदा त्वमित्थं प्रहसितोऽसि । सर्वः सगन्धेषु स्वयूथ्येषु विश्वसिति । द्वावप्यत्रारण्यकाविति । आत्मकार्यस्य निर्वर्तिनीनां सम्पादिकानां ललनानाम् । विशेषणादेव विशेष्यप्रतिपत्तेः । अत्रानृतमयवाङ्मधुभिरित्येकदेशविवर्तिरूपकम् । तेन तासां लतात्वं विषयिणां कामुकानां भ्रमरत्वं रूप्यत इति ज्ञेयम् । महाभाग, नार्हस्येवं मन्त्रयितुं वक्तुम् । तपोवनसंवर्धितोऽनभिज्ञोऽयं जनः कैतवस्य ॥

स्त्रीणामशिक्षितपटुत्वममानुषीषु
सन्दृश्यते किमुत याः प्रतिबोधवत्यः ।
प्रागन्तरिक्षगमनात्स्वमपत्यजात-
मन्यैर्द्विजैः परभृताः खलु पोषयन्ति ॥ २२

---

२२ स्त्रीणामित्यादि ॥ स्त्रीणां कामिनीनां न तु शकुन्तलाया एकस्या एव भवति; अशिक्षितपटुत्वं—"नासंवत्सरवासिने ब्रूयादि"ति न्यायेन यस्यकस्यचित्तद्विद्यानिपुणजनस्य सहवासशुश्रूषादिभिरुपदेशराहित्येन पटुत्वं गूढवञ्चनाकरणप्रकारचातुर्यम् ॥ अमानुषीषु मनुष्यजातिव्यतिरिक्तेषु तिर्यग्जातिष्विति यावत् ॥ बहुवचनेन दैवादेकत्र दृष्टमिति सम्भावनया सर्वत्र नारोप्यते ॥ किन्तु बहुस्थलेष्विति भावः ॥ संदृश्यते सम्यक् स्फुटं समस्तलोकसम्मत्या विभाव्यते ॥ वर्तमानव्यपदेशेन पुराणादिप्रसिद्धिर्न भवति । किं त्वद्यापि दृश्यत इति भावः ॥ याः स्त्रियो बोधवत्यः—"ज्ञानं विशेषो गदितो नराणा"मिति न्यायेन ताः प्रत्यशिक्षितकैतवपाटी यस्य इत्यत्र किमाश्चर्यमित्यर्थः ॥ 'अप्रसिद्धं प्रसिद्धेन बोधनीय'मिति न्यायादुक्तार्थं दृष्टान्तेन विशदयति—परभृताः कोकिलाः स्वं स्वकीयं अपत्यजातं पुत्रसमूहं । अन्यैर्द्विजैरन्यजातीयैः पक्षिभिर्वायसैरित्यर्थः । पोषयन्ति वर्धयन्ति ॥ खलु प्रसिद्धौ ॥ अनेन सर्वलोक उक्तः ॥ अत्र विच्छेदकारकबीजानुगुणं काव्यार्थोऽपि द्योत्यते ॥ तथाहि । अन्तरिक्षगमनात् प्रागूदुष्यन्तस्य मातलिना सह स्वर्गगमनात्पूर्वं स्वमपत्यजातं स्वकीयं पुत्रं अन्यैर्द्विजैर्मारीचादिभिः पोषयन्तीति प्रकृतार्थं न परित्यज्यते । अत्र हेत्ववधारणं नाम सन्ध्यङ्गमुक्तम् ॥ उक्तं च—"निश्चयो हेतुनार्थस्य मतं हेत्ववधारण"मिति ॥ अत्र परभृतनिदर्शनोपबृंहितेन स्त्रीत्वहेतुना मृषाभाषणलक्षणस्यार्थस्य निश्चयाद्धेत्ववधारणं भवति ॥

---

स्त्रीणामिति ॥ स्त्रीणां मध्येऽमानुषीषु मानुषव्यतिरिक्तासु । वञ्चकवागादिव्यवहाररहितास्वपीति भावः । तास्वप्यशिक्षितपटुत्वमनुपदिष्टकौशलम् । अर्थाद्वञ्चने सम्यग्दृश्यते । तेनैतिह्यभ्रान्तिज्ञाननिरासः । याः प्रतिबोधवत्यो वागादिव्यवहारकुशलास्ताः किमु वक्तव्याः । तासामनुपदिष्टवञ्चकत्वकौशलं किमु वक्तव्यमित्यर्थः । खलु ह्यर्थे । परभृता इति साभिप्रायम् । कोकिलाः । 'वनप्रियः परभृतः' इत्यमरः । अन्तरिक्षगमनादाकाशगमनादुड्डयनात्प्राक्स्वं स्वीयमपत्यजातमर्भकसमूहम् । 'जातं जात्यौघजन्मसु' इति विश्वः । अन्यैर्द्विजैः पक्षिभिः प्रसिद्धा काकैः परभृतः परितः सर्वप्रकारेण पोषयन्ति । अत्र शकुन्तलालक्षणे विशेषे प्रस्तुते स्त्रीसामान्यस्योक्तत्वादप्रस्तुतप्रशंसा । किमुतेत्यनेन व्यतिरेकः । अर्थान्तरन्यासोऽपि । त याः त्यः इति मना मन्यैरिति छेकवृत्त्यनुप्रासाः । अनेन हेत्ववधारणनामकं सन्ध्यन्तराङ्गमुपक्षिप्तम् । तल्लक्षणं तु रसार्णवसुधाकरे—'निश्चयो हेतुनार्थस्य मतं हेत्ववधारणम्' इति । अत्र परभृतादिदृष्टान्तेन स्त्रीत्वेन हेतुना मृषाभाषणलक्षणस्यार्थस्य

**शकुन्तला**—(सरोषं) [1]अणज्ज । अत्तणो हिअआणुमाणेण सव्वं पेक्खसि । को दाणिं अण्णो धम्मकञ्चुअप्पवेसिणो तिणच्छण्णकूवोवमस्स तुह अणुकिदिं प(डिवदि)विस्सदि ॥

**राजा**—(आत्मगतं) सन्दिग्धबुद्धिं मां कुर्वन्नकैतव इवास्याः कोप उपलक्ष्यते ॥ तथाह्यनया—

**मय्येव विस्मरणदारुणचित्तवृत्तौ**
**वृत्तं रहः प्रणयमप्रतिपद्यमाने ।**

---

[1] अनार्य । आत्मनो हृदयानुमानेन सर्वं पश्यसि ॥ क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं (प्रतिपत्स्यते) पश्यति ॥

---

**अणज्जेति ॥** अनार्येति स्वप्रयोजनमात्रपरतया परदुःखकरणशीलेति संरम्भसम्बोधनम् ॥ यस्तु कुटिलाशयस्स स्वभिन्नमपि समस्तं जनं कुटिलमेव पश्यतीत्यर्थः ॥ इदानीं साम्प्रतं स्वप्रयोजने निवृत्ते सतीत्यर्थः ॥ धर्मकञ्चक प्रवेशिनइत्यनेन लोकविश्वासार्थं परस्त्रीपरिग्रहविमुखताभिनयः क्रियते अन्तर्धर्मो नास्तीति भावः ॥ तृणच्छन्नकूपोपमस्येत्यनेन विश्वस्तजनघातार्थं प्रच्छन्नदुश्शीलत्वं सूच्यते ॥

**संदिग्धबुद्धिमित्यादि ॥** अकैतव इव अकृत्रिमइव ॥

**२३ मयीति ॥** विस्मरणदारुणचित्तवृत्तौ विस्मरणेन कृतकार्यस्य संस्कारपर्यन्तं स्मरणराहित्येन दारुणा परस्त्रीस्पर्शदोषबुद्ध्या सङ्ग्रहणरूपदयाकरणवैमुख्येन क्रूरा चित्तवृत्तिर्यस्य स तथोक्तस्तस्मिन् ॥ अनेन यद्यपि मम सङ्ग्रहेच्छा विद्यते । तथापि चित्ते तु तद्विषये स्वारसिकवृत्तिर्नभवतीति व्यज्यते ॥ रहोवृत्तं रहस्सञ्जातं प्रणयं प्रेमविषयमप्रतिपाद्यमाने मयि विषये कुटिलयोर्वक्रयोः भ्रुवोः भेदात् भङ्गात् अनेन भ्रुवोर्वक्रताया । उपरि भेदकथनेनाकृत्रिमतयातिशयितकोपो व्यज्यते ॥ यथाह भरतः—"उत्क्षेपः पातनं चैव भ्रुकुटी चतुरं भ्रुवोः । कुञ्चितं रेचितं चैव सहजं चैव सप्तधा ॥ भ्रुवोस्सहजविक्षेपाद्भ्रुकुटी

---

निश्चयाद्धेत्ववधारणम् । अनार्य, आत्मनो हृदयानुमानेन पश्यसि जानासि । यथा तव हृदयं वञ्चनापरं तथान्यहृदयान्यपि जानासीत्यर्थः । क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते । कोऽन्य इति सम्बन्धः ॥

**मयीति ॥** अतिरुषाधिकक्रोधयाधिकक्रोधेन वात एवातिलोहिताक्ष्याऽत्यारक्तनयनया । विगतं स्मरणं यस्य तदत एव दारुणं यच्चित्तं तेन वृत्तिर्वर्तनं यस्य तस्मिन्नत एव रह एकान्ते वृत्तं सम्पन्नं प्रणयं स्नेहमप्रतिपद्यमानेऽजानाने । मय्येवेत्येवकारेण कोपस्य तात्त्विकत्वं ध्वनितम् । कुटिलयोर्वक्रयोर्भ्रुवोर्भेदाद्भ्रूभङ्गात्स्मरस्य कन्दर्पस्य शरासनं धनुर्भग्न-

भेदाद्भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवातिरुषा स्मरस्य ॥ २३

(प्रकाशम्) भद्रे । प्रथितं दुष्यन्तचरित्रम् ॥ तथापीदं न ल(क्षये)क्ष्यते ॥

शकुन्तला—[1]सुट्ठु दाव (अत्त) सच्छन्दचारिणी किदम्हि ॥ जा अहं इमस्स (पुरुवंस) पच्चएण मुहमहुणो हिअअ(ट्ठिअ)विसस्स हत्थब्भासं उवगदा । (इति पटान्तेन मुखमावृत्य रोदिति)

शार्ङ्गरवः—इत्थमात्मकृतं चापलमप्रतिहतमात्मानं दहति ॥

---

1 सुष्टुताव(दत्र)त्स्वच्छन्दचारिणी कृतास्मि । याहमस्य (पुरुवंश) प्रत्ययेन मुखमधोर्हृदय-(स्थित) विषस्य हस्ताभ्याशमुपगता ॥

---

परिकीर्तिता । क्रोधस्थानेषु दीप्तेषु योजयेद्भ्रुकुटीं बुधः" इति । भ्रुवोर्मूलसमुत्क्षेपात् भ्रुकुट्याः कुटिलत्वं भवतीत्यर्थः ॥ अतिलोहिताक्ष्येति अत्यर्थमरुणाक्ष्या ॥ अनेन कृत्रिमश्चे-त्कोपस्तदाक्ष्णोरतिलोहितत्वं भवतीति प्राक्तनदृष्टान्तापह्नवजनितरोषेणातिलोहितत्वं भवती-त्यकृत्रिमएव कोपइति व्यज्यते ॥ अतिरुषा अत्यर्थकोपतया ॥ स्मरस्य स्त्रीपुरुषयो-स्संयोगकारणभूतस्य शरासनं प्रधान साधनं चापं भग्नमिव त्रुटितमिव ॥ यद्यपि स्वविषय-काकृत्रिमानुरागातिशयात्तिरस्कारजनितकोपजनित भ्रूभेदो न वस्तुसौन्दर्यबलात् स्वीकरणा-शाजनकस्तथापि प्राक्तनवृत्तान्तस्मरणाभावेन परस्त्रीबुद्ध्या तद्दर्शनजनितविकारो न जायत-इति भावः ॥

भद्रइत्यादि ॥ भद्रे प्रसन्नमुखि! प्रथितं प्रसिद्धं चरितं । तथापि प्रसिद्धमपि इदं परिणयरूपचरितं न लक्ष्यते ॥ न केनापि प्रमाणेनावगम्यते ॥

अस्य पूरुवंशस्य ॥ इत्थमित्यादि ॥ इत्थमनुभूयमानप्रकारेण आत्मकृतं पित्रा-द्यनुज्ञां विना स्वकृतं चापलं अनालोचितं कर्म ॥

---

मिवेत्युत्प्रेक्षा । अनया च तथास्याः कोपो यथोपायशतैरप्यनुनीयमाना कोपं न मुञ्चेत्, तावत्कामस्य शरासनं भग्नमेव व्यर्थत्वमेतदनुनयाभावादिति तात्त्विकः कोप इति वस्तु ध्वन्यते । अनेन च स्थायिन्या रतेरनुसन्धानम् । काव्यलिङ्गम् । रणरुणेति वृत्तौ वृत्तमिति प्रग्रेति स्मरस्येति च्छेकानुप्रासो वृत्त्यनुप्रासश्च । वृत्तं तयोर्वसन्ततिलकम् । 'शकुन्तला—सरोषम्' इत्यादिनैतदन्तेन संफेटं नामाङ्गमुपक्षिप्तम् । तल्लक्षणम्—'रोषप्रथितवाक्यं तु सम्फेटः परिकीर्तितः' इति । इदं वञ्चकत्वम् । सुष्ठु तावदत्र स्वच्छन्दचारिणी कृतास्मि याहमस्य पुरुवंशे प्रत्ययो विश्वासस्तेन मुखमधोर्हृदयस्थितविषस्य । तत्र स्वत्वं द्योतयितुं स्थितपदम् । विषस्येत्यनेन कापट्यनिगरणादतिशयोक्तिः । हस्ताभ्याशं करसमीपमुपगता । विशेषणद्वयेनातिखलस्वभावत्वं ध्वनितम् । आत्मकृतं चापलं कदाचिद्दैवानुकूल्येन सम्यक्तया परिणमति । प्रतिहतं केनचिद्रुद्धं सद्दहति ॥

अतः परीक्ष्य कर्तव्यं विशेषात्सङ्गतं रहः ।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥ २४

राजा—अयि भोः किमत्रभवतीप्रत्ययादेवास्मान् सं(यु)भृतरो(दो)षाक्ष(रैः)रेण वचसा क्षिणुथ ?

शार्ङ्गरवः—(सासूयम्) श्रुतं भवद्भिरधरोत्तरम् ॥

---

२४ अतइति ॥ अत उक्तकारणात् ॥ कर्तव्यं कर्तुमर्हं कर्म परीक्ष्य इष्टजनैस्सहालोच्य कर्तव्यं । रहस्सङ्गतं एकान्तसङ्गमः ॥ विशेषात् विशेषेण परीक्ष्य अनेन सममिदं योग्यमयोग्यं वेति नानाप्रकारेण विचार्य ॥ कर्तुमुचितम् ॥ वैपरीत्ये दोषं दर्शयति—अज्ञातहृदयेष्विति ॥ "शीलं संवसता ज्ञेयं तच्च कालेन भूयसा" इत्यनवगतस्वरूपेषु जनेषु सौहृदं मैत्रम् ॥ एवं राजनि यथा ॥ तथा वैरी भवति ॥ तदप्यहितं भवतीत्यर्थः ॥

अयीत्यादि ॥ अत्रभवतीप्रत्ययादेव शकुन्तलावचनमात्रविश्वासादेव ॥ एवकारेण वचनविश्वासमात्रमेवान्यत् ज्ञापकप्रमाणान्तरं नास्तीत्यर्थः ॥ क्षिणुथ नाशयथ । दूषयथेत्यर्थः ॥ अनेन ओजोनाम सन्ध्यङ्गमुक्तम् ॥ तदुक्तं—"अधिक्षेपाद्यसहनमोजः प्राणात्ययेष्वपी"ति ॥ अत्र राज्ञा शार्ङ्गरवाधिक्षेपासहनमयि भो इत्याक्षेपोक्त्या प्रकटीकृतम् ॥

श्रुतमित्यादि ॥ अधरोत्तरं अधरस्य निकृष्टस्य ममेत्यर्थः ॥ उत्तरं प्रतिवचनम् ॥ भवद्भिरिति बहुवचनमुपहासे ॥ अहं निकृष्टस्त्वमेव पूज्यइत्यर्थः ॥

---

अत इति ॥ अतः कारणात्सङ्गतं मैत्र्यं परीक्ष्य कर्तव्यम् । रह एकान्ते सङ्गतं विशेषात्परीक्ष्य कर्तव्यमित्यनुषज्यते । अत्र शकुन्तलादुष्यन्तयोः सङ्गतस्य कर्तव्ये विशेषे प्रस्तुते यत्सामान्यसङ्गतमात्रस्याप्रस्तुतस्य वचनं साऽप्रस्तुतप्रशंसा । अज्ञातहृदयेषु व्यवहारादिनाज्ञातचित्तेषु सौहृदं मैत्री वैरी भवति । अयं वैधर्म्येणार्थान्तरन्यासः । अत्रभवतीप्रत्ययात्पूज्याविश्वासात् । भवद्भिर्येयं पूज्यैव । तद्वचनविश्वासादित्यर्थः । एवकारेण युक्त्यन्तरनिरासः । अस्मानिति पुरुवंशोत्पन्नान्सर्वधर्मनिष्ठानिन्द्रादिभिरप्युपचारेण गृहीतानित्यादिधर्मशतं व्यनक्ति । सम्यक्, न त्वीषत् । युतः सम्पृक्तः, न तु स्पृष्टः दोषो येषु तान्यक्षराणि येषु वचनेषु तैर्वचनैरिति विशेष्यमुन्नेयम् । क्षिणुथ हिंस्थ । अधरं हीनं च तदुत्तरं चाधरोत्तरम् । स्वदोषाज्ञानादिति भावः । 'अधरमधस्तात्प्रथममिदमुत्तरमूर्ध्वं न किञ्चिदिष्यती' ति (?) न ज्ञायत इति भावः । 'अधरो दन्तवसनेऽनूर्ध्वे हीनेऽधरोऽन्यवत्' इति विश्वः ॥

आ जन्मनश्शाठ्यमशिक्षितो य-
स्तस्याप्रमाणं वचनं जनस्य ।
परातिसन्धानमधीयते यै-
र्विद्येति ते सन्तु किलाप्तवाचः ॥ २५

राजा—भो भो सत्यवादिन्! अभ्युपगतं तावदस्माभिरेवम् ॥ किं-पुनरिमामतिसन्धाय लभ्यते?

---

२५ तदेवाह—आजन्मनइत्यादि ॥ आजन्मनः जन्मारभ्य ॥ शाठ्यं परवञ्चनाचातुर्यम् ॥ अशिक्षितः अरण्यवासित्वाद्दुष्टजनसहवासाभावादनुपदिष्टः ॥ तस्य तादृग्रागद्वेषादिरहितस्य जनस्यानागरिकस्य वचनमप्रमाणं प्रमानिश्चायकं न भवति ॥ परातिसन्धानं "रत्नहारी तु पार्थिव" इति न्यायेन परवञ्चनं यैर्विद्येति जीवनोपायशास्त्रमिति अधीयते पठ्यते ॥ ते किल तएव आप्तवाचः प्रमाणगिरः सन्तु भवन्त्वित्यर्थः ॥

सत्यवादिन्निति ॥ तपस्वी भवान् कथमसत्यं वदतीति यावत् ॥ तावत् सर्वम् ॥ सार्वकालिकपरवञ्चनानैपुण्यमेव जीवनोपायविद्येति यदुक्तं तत्सर्वमित्यर्थः ॥ अस्माभिरिति बहुवचनेन स्वस्य नागरिकतया परोक्तिवैचित्र्याभिज्ञता नैपुण्यं सूच्यते ॥ वयं तादृशा एव भवाम इति भावः ॥ इमामनागरिकां तापसीं अतिसन्धाय स्वप्रयोजनार्थं प्रतार्य ॥ इमामित्यनेन शकुन्तलाव्यतिरिक्तस्थलेऽन्यत्र यत्किञ्चित्प्रयोजनवशाद्राज्ञो मम परातिसन्धानं सम्भावयन्तु ॥ प्रकृते तदभावात् प्रतारणया किं प्रयोजनमिति यावत् ॥

---

आ जन्मन इति ॥ यो जन आ जन्मनो जन्मन आरभ्य शाठ्यं धौर्त्यमशिक्षितः । स्वेनान्येन वेत्यर्थः । तस्य जनस्य वचनमप्रमाणम् । यैर्जनैः परातिसन्धानं परवञ्चनं विद्येति विद्यारूपत्वेन । यथा विद्या सद्गुरोः सत्सम्प्रदायात्सुदिने मङ्गलपूर्वकमनध्यायनिवृत्तिपूर्वकं नियततात्मभिस्तद्वदियमप्यधीयते न तु शिक्ष्यते । त आप्तवाचः सत्यवचनाः किलेति सम्भावनायाम् । 'किलशब्दस्तु वार्तायां सम्भाव्यानुनयार्थयोः' इति विश्वः । अत्र शकुन्तलावचनं सत्यं दुष्यन्तवचनमसत्यमिति विशेषे प्रस्तुते यत्सामान्यवचनं सा वैधर्म्येणाप्रस्तुतप्रशंसा । अथवाप्रमाणमपि तु न, त आप्तवाचोऽपि तु नेति काकौ साधर्म्येणैवाप्रस्तुतप्रशंसा । रूपकानुप्रासौ च । चतुर्थ्युपजातिः । 'शकुन्तला—सुट्ठु दाव' इत्याद्येतदन्तेन द्रवो नामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'गुरुव्यतिक्रमो वस्तु विज्ञेयोऽथ द्रवस्तु सः' इति । सत्यवादिन्निति सोल्लुण्ठम् । अतिसन्धाय वञ्चयित्वा । 'राजा—भोः सत्यवादिन्' इत्यादिना 'न श्रद्धेयम्' इत्यन्तेनाक्षमा नाम नाट्यालङ्कारो निबद्धः । तल्लक्षणम्—'अक्षमा सा परिभवः स्वल्पोऽपि न विषह्यते' इति ॥

शार्ङ्गरवः—विनिपातः ॥

राजा—विनिपातः पौरवैः प्रार्थ्यत इति न श्रद्धेयमेतत् ।

शारद्वतः—(शार्ङ्गरव किमुत्तरेण)

शार्ङ्गरवः—(भो राजन्) (किमुत्तरोत्तरेण)? अनुष्ठितो गु(रोस्सन्दे)रुनिदेशः प्रतिनिवर्तामहे वयम् ॥

तदेषा भवतः कान्ता त्यज वैनां गृहाण वा ।
उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी ॥ २६

गौतमि । गच्छाग्रतः ॥ (इति प्रस्थिताः)

शकुन्तला—[1]कहं दाव इमिणा किदवेण विप्पलद्धम्हि ; तुम्हे वि मं परिदेविणिं परिच्च अह ॥ (इत्यनुप्रतिष्ठते)

गौतमी—(स्थित्वा) [2]वच्छ सङ्गरव, अणुगच्छदि इअं णो करुण परिदेविणी सउन्दळा ॥ पच्चादेसपरुसे भत्तुम्हि किं वा मे पुत्तिआ करे(दु)दि ?

---

1 कथं तावदनेन कितवेन विप्रलब्धाऽस्मि ; यूयमपि मां परिदेविनीं परित्यजथ ॥

2 वत्स शार्ङ्गरव ! अनुगच्छतीयं नः करुणपरिदेविनी शकुन्तला ॥ प्रत्यादेशपरुषे भर्तरि किं वा मे पुत्त्रिका करो(तु)ति ?

---

विनिपातः धर्मप्रजार्थं स्वीकृतसहधर्मचारिणीपरित्यागेन प्रत्यवायः ॥ गुरुनिदेशः काश्यपस्याज्ञा ॥

२६ तदित्यादि ॥ कान्ता सहधर्मचारिणी ॥ दारेषु कळत्रेषु ॥ सर्वतोमुखी गुणदोषाभ्यामुपादेयहेयादिनानारूपा ॥ प्रभुता स्वातन्त्र्यम् ॥ उपपन्ना प्रत्यवायाभावायुक्ता ॥ हि धर्मशास्त्रप्रसिद्धिरित्यर्थः ॥

---

तदिति ॥ तदित्युपसंहारे । एषा भवतः कान्ता । एनां त्यज वा गृहाण वा । अर्थान्तरन्यासमाह—उपेति । सर्वतोमुखी त्यागे ताडने स्वीकारे दान इत्यादि । तेन त्वं यथेच्छं कुर्विति भावः । कथमनेन कितवेन धूर्तेन विप्रलब्धास्मि । यूयमपि मां परित्यजथ । तत्कथमिति सम्बन्धः । वत्स शार्ङ्गरव, अनुगच्छतीयं खलु नोऽस्मान्करुणपरिदेविनी शकुन्तला । प्रत्यादेशपरुषे निराकृतिनिष्ठुरे । 'प्रत्यादेशो निराकृतिः' इत्यमरः । भर्तरि किं वा मे पुत्रिका करोतु ।

शार्ङ्गरवः—(सरोषं सन्निवृत्त्य) आः पुरोभा(गे)गिनि! किमिदं स्वातन्त्र्यमवलम्बसे?

(शकुन्तला भीता वेपते)

शार्ङ्गरवः—शकुन्तले!

यदि यथा वदति क्षितिपस्तथा
त्वमसि किं पितुरु(त्कुल)त्पथया त्वया?
अथ तु वेत्सि शुचि व्रतमात्मनः
पतिकुले तव दास्यमपि क्षमम्॥ २७

तिष्ठ तिष्ठ साधयामो वयम्॥

राजा—भोस्तपस्विन्! किमत्रभवतीं विप्रलम्भसे?

---

पुरोभागिनि दोषमात्रदर्शिनि॥ तिरस्काररूपदोषमेव गृह्णासि॥ अपरित्याज्यभर्तृत्वगुणं न गणयसीत्यर्थः॥ स्वातन्त्र्यं स्वच्छन्दवृत्तिम्॥

२७ यदीत्यादि॥ क्षितिपो राजा॥ अनेन क्षितिप एव न्याय्यान्याय्यविचाराभ्यां निग्रहानुग्रहकर्ता॥ स एवं करोति चेदस्माभिः किं कर्तव्यमिति भावः॥ यथा वदति मदीयकळत्रं न भवतीति॥ तथा त्वमसि॥ यदि तस्य भार्या न भवसि चेदसती चेदिति यावत्॥ तदा उत्पथया स्वकुलकळङ्कभूतयाऽसत्पथगामिन्या त्वया॥ पितुः॥ "पिता रक्षति कौमारे" इति न्यायेन इतः पूर्वं त्वत्पोषणैकपरस्य काश्यपस्य॥ किमित्याक्षेपे॥ न किमपि प्रयोजनमस्तीत्यर्थः॥ तर्हि स एव पतिरिति निश्चितज्ञानवत्यप्यहं तेनैव तिरस्कृता चेत् किं विधेयं? इत्याशङ्क्याह—अथत्विति॥ अथानन्तरं॥ तु प्रकारान्तरमस्ति॥ आत्मनस्स्वस्य व्रतं चरितं शुचि शुद्धम्॥ अव्यभिचरितमिति यावत्॥ "शुचिश्शुद्धेऽनुपहते शृङ्गाराषाढयोरपि" इति विश्वः॥ वेत्सि भ्रमराहित्येन जानासि॥ दास्यमपि दासीकर्मापि क्षमं युक्तम्॥ येन केनापि प्रकारेण साध्व्या पतिकुल एव स्थातव्यम्॥ कालान्तरे क्रमेण भर्ताङ्गीकरिष्यतीति भावः॥

---

पुरोभागे दोषदर्शिनि। 'दोषैकदृक्पुरोभागी' इत्यमरः॥ यदीति॥ क्षितिपो राजा यथा वदति तथा त्वमसि तदा उत्कुलयातिक्रान्तकुलमर्यादया त्वया पितुः किं प्रयोजनमित्यर्थः। तुः पूर्वतो व्यतिरेके। अथात्मनः शुचि पवित्रं व्रतं नियमं वेत्सि यदि तदा पतिकुले भर्तृगृहे तव दास्यमपि क्षमं समीचीनम्। हेत्वनुप्रासौ। द्रुतविलम्बितं वृत्तम्॥

कुमुदान्येव शशाङ्कस्सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ २८

**शार्ङ्गरवः**—यदि (यदा तु) पूर्ववृत्तमन्यासङ्गाद्विस्मृतो भवान् ॥ त(दा क)त्कथमधर्मभीरुः ?

**राजा**—(पुरोहितं प्रति) भवन्तमेवात्र गुरुलाघवं पृच्छामि ॥

---

**कुमुदानीत्यादि** ॥ शशाङ्को निशाकरः कुमुदान्येव एकसरस्स्थितान्यपि स्वास्तमयोदयाभ्यां सङ्कोचविकासवन्ति कुमुदान्येव बोधयति ॥ सूर्यास्तमयप्राप्तिधिया न तु पङ्कजानि ॥ सविता सूर्यः चन्द्रे असङ्गते पङ्कजान्येव ॥ कुमुदानां पङ्कजानामेकत्राव-स्थानेऽपि पङ्कजान्येव बोधयति ॥ वर्तमानव्यपदेशेन सर्वलोकप्रसिद्धिरुक्ता ॥ वशिनां जितेन्द्रियाणाम् ॥ न तु ममैकस्यैव ॥ परपरिग्रहसंश्लेषपराङ्मुखी अन्यकळत्रसङ्गम-विमुखी ॥ हिरवधारणे ॥

पूर्ववृत्तं पूर्वकृतचरित्रं । अन्यासङ्गात् पुनः कळत्रान्तरसङ्गममधिगम्य ॥ अत्र परि-ग्रहापरिग्रहविषये ॥

---

**कुमुदानीति** ॥ नापराणीत्युभयत्रैवकारार्थः । हि निश्चितं वशिनां जितेन्द्रि-याणां वृत्तिर्वर्तनं परस्यान्यस्य परिग्रह आयातं वस्तु कलत्रं च तस्याश्लेषः सम्पर्कस्त-स्मात्सम्यगतिशयेन पराङ्मुखी निवर्तनशीला । परकलत्रपराङ्मुखत्वं नापि तु तत्सम्पर्क-पराङ्मुखत्वम्, तदपि तन्मात्रं नापि तु सम्यगिति । तेन सम्शब्दः पराङ्मुखविशेषण-तया योज्यः । 'परिग्रहः परिजने पत्न्याम्' इति विश्वः । अत्र दुष्यन्तशकुन्तलानङ्गीकारे विशेषे प्रस्तुते सामान्यवचनेनाप्रस्तुतप्रशंसा । पूर्वार्धवैधर्म्येण मालादृष्टान्तालङ्कारः । अत्र पूर्वमुपमेयं पश्चात्तत्प्रतिबिम्बत्वेनोपमानं निबद्धव्यमिति नायं नियमः । 'दृष्टान्तः पुनरे-तेषां सर्वेषां प्रतिबिम्बनम्' इति लक्षणात् । उदाहृतं च रुचकेन—'अब्धिर्लङ्घित एव वानरभटैः किं त्वस्य गम्भीरतामापातालनिमग्नपीवरवपुर्जानाति मन्थाचलः । देवीं वाच-मुपासते हि बहवः सारं तु सारस्वतं जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः' इति । अत्र ज्ञानाख्यधर्मेणौपम्यं वा किं बिम्बभावेन वेति । कश्चित्त्वालङ्कारिकः पूर्वार्धे वैधर्म्येण मालाप्रस्तुतप्रशंसोत्तरार्धे तत्समर्थनरूपोऽर्थान्तरन्यास इत्यवदत्तन्न । यतोऽयमप्रस्तुते विशेषः सामान्यं बोधयेदिति वक्तव्यं तत्र प्रस्तुतस्य विशेषरूपत्वादेव । नापि तयोः कार्यकारणभावः । नाप्यत्र सारूप्यं तादृशधर्माभावात्कुमुदानीति पङ्कजा-नीति नपुंसकोपादानाच्च । तेन पूर्वोक्तमेव साधु । ननु तवापि कथं बिम्बप्रतिबिम्बभाव इति चेदुच्यते । वशिनः शशाङ्कसवितारौ प्रतिबिम्बत्वेनोपात्तौ । परपरिग्रहस्य कुमुदपङ्कजे पराङ्मुखस्य वैधर्म्येण विकास इति सर्वं समञ्जसम् । अङ्कपङ्केति न्येवन्येवेति परपरीति छेकवृत्त्यनुप्रासौ । एतदभिप्रायेणैव शार्ङ्गरववचनम् 'यदा तु—' इति । अन्यस्यालौकिकस्य शापस्य सङ्गः सक्तिः सम्बन्धस्तस्मात् । अथ चान्यस्या वसुमत्या देव्याः प्रसङ्गात् । अथवान्यस्या लोकोत्तराया राजलक्ष्म्याः सङ्गादित्यादि योज्यम् । विस्मृतं विद्यते यस्य स

मूढस्स्यामहमेषा वा वदेन्मिथ्येति संशये ।
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः ॥ २९

पुरोहितः—(विचार्य) यदि तावदेवं क्रियताम्

राजा—अनुशास्तु मां पुरोहितः (भवान्) ॥

पुरोहितः—अत्रभवती तावदाप्रसवान्मम गृहे तिष्ठतु ॥ कुत इदमुच्यत इति चेत् । त्वं साधुभिरादिष्टपूर्व एव 'प्रथमं चक्रवर्तिनं जनयिष्यसी'ति ॥ स चेन्मुनिदौहित्रस्तल्लक्षणोपपन्नो (भविष्यति) भवेत्ततः प्रति(अभि) नन्द्य शुद्धान्तमेनां प्रवेशयिष्यसि ॥ विपर्यये(तु)पितुरस्यास्समीपगमन(मव)मुपमुपस्थितमेव ॥

राजा—यथा गुरुभ्यो रोचते ॥

पुरोहितः—वत्से ! अनुगच्छ माम् ॥

शकुन्तला—[1]भ अवदि वसुहे । देहि मे विवरं ॥

(इति रुदती निष्क्रान्ता सह पुरोधसा तपस्विजनैश्च)

(राजा शापव्यवहितस्मृतिश्शकुन्तलामेव चिन्तयति)

(नेपथ्ये)

(आश्चर्यमाश्चर्यं)

---

1 भगवति वसुधे, देहि मे विवरम् ॥

---

२९ **मूढ इत्यादि** ॥ अहं वा मूढः कृतकार्यस्मरणाभावेनाज्ञः ॥ एषा वा मिथ्या असत्यं स्वप्रयोजनार्थं वदेत् ॥ इति उक्तं कल्पद्वयप्रकारेण संशये सम्भाविते सति ॥ परस्त्रीस्पर्शपांसुलः कामवशात् परकळत्रसङ्गम पापीयान् ॥

भगवति वसुधे ! देहि मे विवरम् ॥ सीताया इव विवरं देहीति यावत् ॥

---

विस्मृतः । अर्शआदित्वादच् । विस्मरणयुक्त इत्यर्थः । अनेनोत्प्रासनामा नाट्यालङ्कार उपक्षिप्तः । तल्लक्षणं तु—'उत्प्रासनं रूपहासो योऽसाधौ साधुमानिनि' इति ॥

**मूढ इति** ॥ आहो पक्षान्तरे । 'पांसुलः' पुंश्चलः' इति विश्वः । 'राजा—भोः सत्यवादिन्' इत्यादिनैतदन्तेन विरोधनामकमङ्गमुपक्षिप्तम् । 'उत्तरोत्तरवाक्यं तु विरोध इति संज्ञितः' इति । अनुशास्तु शिक्षयतु । शुद्धान्तमन्तःपुरम् । भगवति वसुधे, देहि मे विवरं छिद्रम् । प्रवेशायेत्यार्थम् । शापव्यवहितस्मृतिरिति कविवचनमनुवादेऽन्तर्भूतम् ॥

राजा—(आकर्ण्य) किं नु खलु स्यात् ?

पुरोहितः—(प्रविश्य) (सविस्मयं) देव । अद्भुतं खलु संवृत्तम् ।

राजा—किमिव ?

पुरोहितः—देव । परावृत्तेषु कण्वशिष्येषु ।

सा निन्दन्ती स्वानि भाग्यानि बाला
बाहूत्क्षेपं क्रन्दितुं च प्रवृत्ता ।

राजा—किं (च) ततस्ततः ?

पुरोहितः—

स्त्रीसंस्थानं चाप्सरस्तीर्थमारा-द्
उत्क्षिप्यैनां ज्योतिरेकं तिरोऽभूत् ॥ ३०

(सर्वे विस्मयं रूपयन्ति)

राजा—भगवन् ! प्रागपि सोऽस्माभिरर्थः प्रत्यादिष्ट एव ॥ किं वृथा तर्केणा(न्वि)कृष्यते । विश्राम्यतु भवान् ॥

पुरोहितः—(विलोक्य) विजयस्व ॥ (इति निष्क्रान्तः)

---

३० सेति ॥ बाहूत्क्षेपं बाहू उत्क्षिप्य ॥ अप्सरस्तीर्थमिति तस्य तीर्थस्य नाम ॥ आरादन्तिके ॥ आक्षिप्यादाय ॥

---

सा निन्दन्तीति ॥ यतो बालात एव बाहूत्क्षेपं यथा स्यात्तथा क्रन्दितुं प्रवृत्तेति बालास्वभावोक्तिः । इदं ज्ञातमेवेति राजा पृच्छति—किं चेति । स्त्रीति । स्त्री-संस्थानं ललनाकारम् । तेजोरूपत्वेन स्पष्टमदृश्यमानमत एव संस्थानशब्दप्रयोगः । देवेन नीतापि स्त्र्याकारेणैवेति परपुरुषासंस्पर्शित्वं ध्वनितम् । एकं केवलं ज्योतिरेनामाराद्दूरा-दुत्क्षिप्याप्सरस्तीर्थं शचीतीर्थं जगामेति सम्बन्धः । क्रिययोः समुच्चितत्वात्समुच्चयालङ्कारः । हेत्वनुप्रासश्च । शालिनीवृत्तम् । 'नेपथ्ये' इत्याद्येतदन्तेन शक्तिर्नामाङ्गमुपाक्षिप्तम् । तल्लक्षणं तु—'विरोधप्रशमो यस्तु सा शक्तिरिति कीर्तिता' इति । अनेनाद्भुतरसोऽपि ध्वनितः । तल्लक्षणम्—'दुर्लभाभीष्टसम्प्राप्तिः खेचराणां विलोकनम् । एते यत्र विभावाः स्युरनुसञ्चारिणस्त्वमी ॥ स्तम्भः स्वेदश्च रोमाञ्चः प्रलयो गद्गदं वचः । आवेगसम्भ्रमौ

राजा—वेत्रवति ! पर्याकुलोऽस्मि शयनभूमिमार्गमादेशय ॥

प्रतीहारी—[1]इदो इदो देवो ॥ (इति परिक्रामति)

राजा—(आत्मगतम्)

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयां ।
बलवत्तु दूयमानं प्रत्याययतीव मे हृदयम् ॥ ३१

(इति निष्क्रान्ताः सर्वे)

इति श्रीमहाकविकालिदासकृतौ शाकुन्तलनाटके
पञ्चमोऽङ्कः ॥

---

1 इत इतो देवः ॥

---

शयनभूमिमार्गमादेशय आदर्शय ॥ अनेन सर्वकार्यानुत्साह उक्तः ॥

३१ **काममित्यादि ॥** प्रत्यादिष्टां निराकृतां मुनेस्तनयां शकुन्तलां परिग्रहं कळत्रत्वेन स्वीकृतां ॥ कामं यद्यपि न स्मरामि । तथापि मे हृदयं तु बलाद्दूयमानं निराकरणेनाधिकतरं क्लिश्यमानं प्रत्याययतीव तत्परिग्रहवृत्तान्तस्मरणाभावेऽपि वासनाबलात्तत्परित्यागनिमित्तहृदयसन्तापबाहुल्येनानुमीयत इति भावः ॥ अत्र शकुन्तलाप्रत्यादेशेन वस्तुविच्छेदे सति दुष्यन्तस्य चित्तक्षोभ एव पुनः प्राप्तिं प्रति बिन्दुरित्यवगन्तव्यम् ॥ इतिहासस्येव साक्षाद्विस्मरणं नायिकापकर्षहेतुतया रसपरिपोषणं न भवतीति शापरूपविस्मरणं कविना कल्पितम् ॥

इति श्रीरमणवेङ्कटाचलेश्वरपादारविन्दसमाराधकवैखानसकुलतिलक
श्रीकौशिकगोत्र श्रीतिरुमलाचार्यपुत्रेण ध्वनिप्रस्थानपरमाचार्याष्ट-
भाषाचक्रवर्ति श्रीनिवासाचार्येण विरचितायां
शाकुन्तलव्याख्यायां पञ्चमोऽङ्कः ॥

---

जाड्यमिति यत्राथ विस्मयः ॥ स्थायी तमद्भुतं प्राह' इति । पर्याकुलत्वं शापावसानस्य नैकट्यात् । इत इतो देवः ॥

**काममिति ॥** काममतिशयेन प्रत्यादिष्टां निराकृतां मुनेस्तनयां परिग्रहं पत्नीं न स्मरामि । तु पुनः बलवदधिकं दूयमानं मे मम हृदयं प्रत्याययति विश्वासमुत्पादयतीवेत्युत्प्रेक्षा । अनया स्थायिन्या रतेरनुसन्धानं ध्वनितम् । पीडायाः कारणस्य स्मरणस्याभावेऽपि पीडेति विभावनालङ्कारः । अनुमानालङ्कारोऽपि । तत्प्रत्यायनस्य साध्यत्वं हृदयपीडाहेतुत्वादनुमानम् । तदुक्तम्—'यत्साध्यसाधनयोर्वचः' इति तल्लक्षणात् । अनेन प्रसङ्गनामाङ्गमुपक्षिप्तम् । तल्लक्षणम्—'प्रसङ्गश्चैव विज्ञेयो गुरूणां कीर्तनं हि यत्' इति । अत्र मुनेस्तनयेति गुरुकीर्तनम् ॥

इति श्रीमदभिज्ञानशाकुन्तलटीकायामर्थद्योतनिकायां पञ्चमोऽङ्कः समाप्तः ॥

॥ श्रीरस्तु ॥

# ॥ अभिज्ञानशाकुन्तलम् ॥

## ॥ पञ्चमषष्ठाङ्कमध्ये प्रवेशकः ॥

(ततः प्रविशति नागरिकस्यालः ; पश्चाद्बद्धं पुरुषमादाय रक्षिणौ च)

**रक्षिणौ**—(ताडयित्वा) [1]अम्हे कुम्भीळअ । कहेहि कहेहि कहिं तुए एशे मणिबन्धणुक्किण्णामहे एळाअकीए अङ्गुळीअए शमाशादिदे ?

**पुरुषः**—(भीतिनाटितकेन) [2]पशीदन्तु भावमिश्शा ॥ हगे ण ईरिश कम्मकाळी ॥

---

1 अहो कुम्भीलक ! कथय कथय कुत्र त्वयैतन्मणिबन्धनोत्कीर्णनामधेयं राजकीयमङ्गुळीयकं समासादितम् ?

2 प्रसीदन्तु भावमिश्राः ॥ अहं नेदृशकर्मकारी ॥

---

कविरिदानीं कथासङ्घटनार्थं प्रवेशकं नामार्थोपक्षेपकं प्रस्तौति—**ततः प्रविशतीत्यादिना**—नागरिकस्यालः नगरे नियुक्त इति नागरिकः ॥ तत्र नियुक्त इति ठक्प्रत्ययः ॥ नगरपालक इति यावत् ॥ तस्य स्यालः पत्नीभ्राता ॥ ताडयित्वा ॥ बद्धम् ॥ पुरुषमिति शेषः ॥ कुम्भीलकश्चोरः ॥ मणिर्बध्यतेऽस्मिन्निति मणिबन्धनं मणिस्थापनस्थानम् ॥ तत्रोत्कीर्णं व्यक्तं नामधेयं दुष्यन्तस्येति शेषः ; यस्य तत्तथोक्तम् ॥ रक्षिणोरतिनीचपात्रत्वान्मागधी भाषा प्रयुक्ता ॥ तदुक्तं—"पैशाची मागधी वा स्यात् पिशा-

---

नागरिको नगररक्षाधिकृतः । श्यालो राजश्यालः । कोष्ठपाल इति यावत् । अले अरे कुम्भीलआ कुम्भीरक चौर । 'कुम्भीरको गण्डपदस्तस्करश्च मलिम्लुचः' इति नाममाला । 'आचाक्षेपे' इति मागध्यां वररुचिसूत्रेण सम्बुद्धावाकारादेशः । कथय कुत्र त्वया एशे एतन्मणिबन्धनोत्कीर्णनामधेयं मणेर्बन्धनं सुवर्णेन प्रत्युप्तीकरणं तत्रोत्कीर्णं व्यक्तीकृतं नामधेयं यत्र तत्तथा लाअकीए राजकीयं अङ्गुलीअए अङ्गुलीयकं शमाशादिए समासादितम् । 'मागधी राक्षसादेः स्यात्' इति भरतोक्तेः । आदिग्रहणेन शकारधीवरादीनामपि ग्रहणादत्रैषां मागध्युक्तिः । तत्र 'रसोर्लशौ' इति सूत्रेण रेफस्य लो दन्त्यस्य तालव्यः । 'अत एत्स्यात्' इत्यनेन प्रथमैकवचनस्यैकारः । प्रसीदन्तु भावमिश्राः । 'मान्यो भावस्तु वक्तव्यः' इत्युक्तेर्भावेति सम्बोधनम् । असौ नीचः सुतरां ग्रामीण इति तेन मिश्रपदं गौरवार्थमुक्तम् । हगे अहम् । 'वयमोर्हगे' इति सूत्रेणाहमित्यस्य हगेआदेशः । नेदृशकर्मकारी ।

**रक्षिणोः प्रथमः**—[1]किं खु शोभणे बम्हणेत्ति कलिअ र(ज्ञा)ण्णा पडिग्गहे दिण्णे ?

**पुरुषः**—[2]शुणह दाणिं ॥ हगे शक्कावदाळ (ब्भन्तराळ) तित्थवाशी धीवळे ॥

**द्वितीयः**—[3]पाडच्चळ । किं अम्हेहिं जादी दे पुच्छिदा ?

**स्यालः**—[4]सू अअ, कहेदु सव्वं अणुक्कमेण मा णं अन्तळा पडिबद्धेह ॥

**उभौ**—[5]जं आवुत्ते आणवेदित्ति (इति तूर्ष्णीं तिष्ठतः)

**स्यालः**—[6]कहेहि कहेहि ॥

**पुरुषः**—[7]हगे जालुग्गळादीहिं मच्छबन्धणो वा एहिं कुडुम्ब भळणं कळेमि ॥

---

1 किं खलु शोभनो ब्राह्मण इति कृत्वा राज्ञा प्रतिग्रहो दत्तः ?

2 शृणुतमिदानीम् ॥ अहं शक्रावता (राभ्यन्तराळ) रतीर्थवासी धीवरः ॥

3 पाटच्चर ! किमस्माभिर्जातिस्ते पृष्टा ?

4 सूचक ! कथयतु सर्वमनुक्रमेण मैनमन्तरा प्रतिब(न्धय)ध्नीतम् ॥

5 यदावुत्त आज्ञापयति ॥

6 कथय कथय ॥

7 अहं जालोद्गारादिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि ॥

---

चात्यन्तनीचयो "रिति ॥ ळायकीए इत्यत्र स्रोश्लाविति रेफस्य ळकारः ॥ अङ्गुळिअए इत्यत्र लिङ्गमतन्त्रमिति सूत्रात्पुंलिङ्गता ॥ शमाशादिदे इत्यत्र मागध्यां शौरसेनीवदित्यादेशात्तकारस्य दकारः ॥

---

किं शोभनो ब्राह्मण इति कलयित्वा ज्ञात्वा रज्ञा राज्ञा प्रतिग्रहो दत्त इति सोपहासम् । मागध्याम् 'प्यन्यज्ञक्षां ञ्जः' इति सूत्रेण ञ्जः । सुणधदाणिं शृणुतेदानीम् । इह 'हचोर्हध' इति धः । 'इदानीमो दाणिम्' इति दाणिमादेशः । अहं शक्रावताराभ्यन्तरालवासी धीवरः । शक्रावतार इति तीर्थनाम । तत्सम्बन्धाद्ग्रामनामापि । एतदेव पूर्वाङ्के शचीतीर्थशब्देनोक्तम् । पाटच्चर चौर । 'दस्युः पाटच्चरः स्तेनः' इति हैमः । किमस्माभिर्जातिः पृष्टा । सूचकेति रक्षिणोरेकतरस्य नाम । कथयतु सर्वमनुक्रमेण । मैनमन्तरे मध्ये प्रतिबन्धय । यदावुत्त आणवेदि आज्ञापयति । 'दिरिचेचोः' इति दिः । 'भगिनीपतिरावुत्तः' इत्यमरः । कथय । अहके अहम् । 'अहमर्थेऽहके हगे' इत्युक्तेः । जालोद्गालादिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि । जालमानायः ।

स्यालः—(विहस्य)[1] विसुद्धो दा(णिं) व दे आजीवो ॥

पुरुषः—[2] भट्टा सुणोदु ॥

[3] शहए किल जे विणिन्दिए ण हु शे कम्म विवज्जणी अए ।
पशुमाळणकम्म दाळुणे अणुअम्पामिदु एव्व शोत्तिए ॥ १

स्यालः—[4] तदो तदो ॥

पुरुषः—[5] अह एक्कदिअशे खण्डशो लोहिदमच्छे मए कप्पिदे (दाव) तश्श उदळब्भन्तळे इदं ळदनभाशुळं अङ्गुलीअअं दक्खिअपचा अश्श विक्कअस्स दंशअन्ते हगे गहीदे भाव मिश्शेहिं माळेह वा मुञ्चेह वा अअंसे आअमो ॥

---

1 विशुद्ध (इदानीं) स्तावत्त आजीवः ॥

2 भर्तः श्रृणोतु ॥

3 सहजं किल यद्विनिन्दितं न खलु तत्कर्म विवर्जनीयम् ।
पशुमारणकर्मदारुणः अनुकम्पामृदुरेव श्रोत्रियः ॥

4 ततस्ततः ॥

5 अथैकदिवसे खण्डशो लोहितमत्स्यो मया कल्पितः ॥ तस्योदराभ्यन्तरे इदं रत्नभासुरमङ्गुलीयकं दृष्ट्वा पश्चादस्य विक्रयाय दर्शयन्नहं गृहीतो भावमिश्रैः ॥ मारयत वा मुञ्चत वा ॥ अयमस्यागमः ॥

---

'उज्झलो वडिअंसम्मिअ' इति देशीकोशे। विशुद्ध इदानीमाजीवः ॥

शहजे इति ॥ सहजं किल यद्विनिन्दितं न खलु तत्कर्म विवर्जनीयम् । धीवरस्य मत्स्याजीवे विशेषे प्रस्तुते सामान्यमुक्तमित्यप्रस्तुतप्रशंसा । अनुकम्पा कृपा तया मृदुरेव श्रोत्रियो दारुणं पशुमारणं न कर्म विवर्जयति यथा तथा मम सहजं कर्म विवर्जनीयं न भवतीति वैधर्म्यदृष्टान्तः । व्व इवार्थे। तदोपमा। यथा श्रोत्रियश्छान्दसो वैदिकं दारुणं पशुमारणकर्मापि विवर्जयति । क्रतुषु हिंसाया विहितत्वात्सहजम्। विनिन्दितमिति बौद्धादिभिः। एकस्मिन्दिवसे खण्डशो रोहितमत्स्यः रोहित इति मत्स्यः रोहित इति मत्स्यसंज्ञा । मया कप्पिदे कल्पितः खण्डितः । 'कल्पनं कर्तनं कृतौ' इति विश्वः । यावत् तस्योदराभ्यन्तर इदं रत्नभासुरमङ्गुलीयकं दृष्ट्वा पश्चादहं तस्य विक्रयाय दर्शयन्गृहीतो भावमिश्रैः। मारयत वा मुञ्चत वा । अयमस्याङ्गुलीयकस्यागमः प्राप्तिस्तद्वृत्तान्तः । विक्रयायेति चतुर्थी 'षष्ठी' इति षष्ठ्या नियमेन प्राप्तौ

स्यालः—[1]जाणुअ। विस्सगन्धी (गोहादी) घोळाकिदी। मच्छबन्धो एव्वणिस्संसअं॥ अङ्गुळीअअदंसणं से विमरिसिदव्वं ता ळाअवुळं एव्व गच्छम्हो॥

रक्षिणौ—[2]तह गच्छ अळे गं(ड)धिभेअअ॥ (सर्वे परिक्रामन्ति)

स्यालः—[3]सूअअ। इमं गोवुरदुवारे अप्पमत्ता पडिवाळेह॥ जाव इमं अङ्गुळीअअं जहागमणं भट्टिणो णिवेदिअ तदो से सासणं पडिच्छिअ णिक्कमामि॥

उभौ—[4]पविशदु आवुत्ते शामिप्पशादाअ॥ (इति निष्क्रान्तः स्यालः)

प्रथमः—[5]जाणुअ, चिराअदि खु आवुत्तो॥

द्वितीयः—[6]णं अवशळोवशप्पणीआ ळाआणो।

प्रथमः—[7]जाणुअ, फुळन्ति मे हत्था इमश्श वज्झश्श शुमणशम्पिणद्धुम्॥ (इति पुरुषं निर्दिशति)

---

1 जानुक। विस्रगन्धिर्घोरा (दी) कृतिर्मत्स्यबन्ध एव निस्संशयम्॥ अङ्गुळीयकदर्शनमस्य विमर्शितव्यं तस्माद्राजकुलमेव गच्छामः॥

2 तथा। गच्छ (अ) रे ग्रन्थि (गण्ड) भेदक॥

3 सूचक। इमं गोपुरद्वारे अप्रमत्तौ प्रतिपालयतम्॥ यावदिदमङ्गुलीयकं यथागमनं भर्तुर्निवेद्य ततोऽस्य शासनं प्रतीक्ष्य निष्क्रमामि॥

4 प्रविशत्वावुत्तः स्वामिप्रसादाय॥

5 जानुक। चिरायति खल्वावुत्तः॥

6 नन्ववसरोपसर्पणीया राजानः॥

7 जानुक। स्फुरतो मे हस्तावस्य वध्यस्य सुमनसः पिनद्धुम्॥

---

'तादर्थ्ये' इति विकल्पेन चतुर्थ्येकवचनम्। जानुकेति द्वितीयपुरुषनाम। विस्रगन्धी। 'विस्रं स्यादामगन्धि यत्' इत्यमरः। गोधादी गोधाशनो मत्स्यबन्धो धीवर एव निःसंशयम्। अङ्गुलीयकदर्शनमस्य विमर्शयितव्यम्। राजकुलमेव गच्छामः। तह तथा। गच्छ। अग्रे गच्छेत्यर्थः। अरे गण्डभेदक चौर। सूचक, इमं गोपुरद्वारे। 'पुरद्वारं तु गोपुरम्' इत्यमरः। तत्राप्रमत्तौ सावधानौ प्रतिपालयतं रक्षतं यावदिममङ्गुलीयकं यथागमनं। भर्तुरिति चतुर्थ्यर्थे षष्ठी। तेन भर्त्रे निवेद्य ततः शासनमाज्ञां प्रतीक्ष्य गृहीत्वा। निष्क्रमामि। प्रविशत्वावुत्तः स्वामिप्रसादाय। जानुक, चिरायते खल्वावुत्तः। नन्ववसरोपसर्पणीया राजानः। फुल्लन्ति प्रस्फुरतो मम हस्तौ अस्य वहस्स वधार्थं सुमनसः कुसुमानि पिनद्धुं परिधापयितुम्। 'आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत्' इत्यमरः।

**पुरुषः**—[1]णालुअदि भावे अकाळणमाळणेऽहो(भावि)दुम् ॥

**द्वितीयः**—(विलोक्य) [2]एशे अम्हाणं शामी (पत्थहत्थे)गेह्निअ ळाअशाशणं (पडिच्छिअ) इदो मुहं देक्खदि ॥ तदो तुमं गिद्धबळी भविश्शशि ॥ (शुणोमुहं वा देक्खिस्सिसि)

**स्यालः**—(प्रविश्य) [3]सूअअ, मुञ्चिअदु एशे जालोवजीवी उपवण्णो किळ से अङ्गुळीअअश्श आअमो ॥

**(सूचकः) प्रथमः**—[4]जह आवुत्ते फणादि ॥

**द्वितीयः**—[5]एशे जमशदणं पविशिअ पडिणिव्वुत्ते ॥

(इति पुरुषमुन्मु(परिमु)क्तबन्धनं करोति)

**पुरुषः**—(स्यालं प्रणम्य) [6]भट्टा। तुम्ह (अह कीलिशे) केळए मे जीविदे ॥

**स्यालः**—[7]एशे भट्टिणा अङ्गुळीअअमुळ्ळशम्मिदो अत्थो पारितोसिओ पदाविदो ॥

(इति पुरुषायार्थं प्रयच्छति)

---

1 नार्हति भावः अकारणमारणे भवि(भावयि)तुम् ॥

2 एषोऽस्माकं स्वामी (पत्रहस्तो) गृहीत्वा राजशास (नं प्रतीक्ष्ये) नमितोमुखं (दृश्यते) पश्यति ॥ ततस्त्वं गृध्रबलिर्भविष्यसि ॥ (शुनो मुखं वा द्रक्ष्यसि)

3 सूचक । मुच्यतामेष जालोपजीवी ॥ उपपन्नः किलास्याङ्गुळीयकस्यागमः ॥

4 यथावृत्तः फणति ॥

5 एष यमसदनं प्रविश्य प्रतिनिवृत्तः ॥

6 भर्तः। (अथकीदृशो) युष्मदीयं मे (आजीवः) जीवितम् ॥

7 एष भर्त्राङ्गुळीयकमूल्यसम्मितार्थः पारितोषिकः प्रदापितः ॥

---

'चतुर्थ्याः षष्ठी तादर्थ्ये च' इत्यनुवर्तमाने 'वधाडाइश्च वा' इति सूत्रेण चतुर्थ्येकवचनस्य षष्ठ्येकवचनम् । तेन वहस्सेति सिद्धम् । 'वज्झस्स' वध्यस्येत्यसाम्प्रदायिकः पाठः। नार्हति भावोऽकारणमारणं भावयितुम्। 'ततः प्रविशति' इत्याद्येतदन्तेन विद्रवनामकमङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'वधबन्धादिकोपस्तु विद्रवः परिकीर्तितः' इति। एषोऽस्माकं स्वामी पत्रहस्तो राजशासनं प्रतीक्ष्येतोमुखो दृश्यते । गृध्रबलिर्भविष्यसि, शुनो मुखं द्रक्ष्यसि वा । सूचक, मुच्यतामेष जालोपजीवी। उपपन्नः खल्वङ्गुलीयकस्यागमः । यथावृत्तो भणति । एष यमसदनं प्रविश्य प्रतिनिवृत्तः। अथ कीदृशो म आजीवः। एष भर्त्राङ्गुलीयकमूल्यसम्मितः प्रसादोऽपि दापितः। मोचनमपिशब्दः समुचिनोति। स्वं धनम्। 'स्वोऽस्त्रियां धने' इत्यमरः।

**पुरुषः**—(सप्रणामं परिगृह्य) [1]भट्टा । अणुग्गहिदम्हि ॥

**सूचकः**—[2]एशे णाम अणुग्ग (हे)हीदे जे शूळादो अवदाळिअ हत्थि क्न्दे पडिट्ठाविदे ॥

**जानुकः**—[3]आवुत्त । पारितोसिअं एव्व (पलिदोशं) कहेदि तेण-अङ्गुळीअअएण भट्टिणो शम्मदेण होदव्वन्ति ॥

**स्यालः**—[4]ण तस्सिं महालुइं ळ(रदनं) भट्टिणो बहुमदंत्ति तक्केमि ॥ तस्स दंसणेण कोवि अहिमदो भट्टिणा जणो सुम(राविदो)रिदो ॥ जं मुहुत्तअं पकिदिगम्भीळोवि पज्जस्सुणअणो आसी ॥

**सूचकः**—[5]शेविदं णाम आवुत्तेण ?

**जानुकः**—[6]णं भणाहि इमस्स(कए)किदे म(च्छिआभत्तु)च्छसत्तुणोत्ति ॥

(पुरुषमसूयया पश्यति)

**पुरुषः**—[7]भट्टा(लक) । इदो अद्धं तुम्हाणं शुमणोमुल्लअं होदु ॥

---

1 भर्तः । अनुगृहीतोऽस्मि ॥

2 एष नामानु (ग्रहो) गृहीतः ॥ यश्शूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः ॥

3 आवुत्त । पारितोषिकमेव (परितोषं) कथय(ति) तेनाङ्गुळीयकेन भर्तुस्सम्मतेन भवितव्यमिति ॥

4 न तस्मिन् महार्हे रत्नं भर्तुर्बहुमतमिति तर्कयामि ॥ तस्य दर्शनेन कोऽप्यभिमतो भर्त्रा जनः (स्मारितः) स्मृतः ॥ यन्मुहूर्तं प्रकृतिगम्भीरोऽपि पर्यश्रु (पर्युत्सुक) नयन आसीत् ॥

5 सेवितं नामावुत्तेन ?

6 ननु फण अस्य कृते म(त्स्यिकभर्तु)त्स्यशत्रोरिति ॥

7 भ(ट्टारक)र्तारः । इतोऽर्धं युष्माकं सुमनोमूल्यं भवतु ॥

---

भर्तः, अनुगृहीतोऽस्मि । एष नामानुग्रहो यच्छूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः । परितोषं कथय । समृच्छ्यादित्वादात्वम् (?) तेनाङ्गुलीयकेन भर्तुः सम्मतेन भवितव्यम् । न तस्मिन्महार्हे रत्नं भर्तुर्बहुमतमिति तर्कयामि । तस्य दर्शनेन भर्तुरभिमतो जनः स्मारितः । मुहूर्तं प्रकृतिगम्भीरोऽपि पर्युत्सुकनयन आसीत् । सेवितं नामावुत्तेन । सेवा दर्शितेत्यर्थः । ननु भण । अस्य कृते मात्स्यिकभर्तुः । मत्स्येन जीवन्तीति मात्स्यिकास्तेषां भर्तुरस्य पुरुषस्य कृते सेवितम् । धनप्राप्तिरस्यैतन्निष्ठेति सेवनमेतदर्थमेव जातमिति भावः । अत एवासूयया पश्यतीति । भट्टारक, इतोऽर्धं युष्माकं सुमनोमूल्यं भवतु ।

**जानुकः**—[1]ए(त्तके)दं जुज्जइ ॥

**स्यालः**—[2]धीवळ । महत्त(रोतुमं) ळपिअवअस्सो दाणिं मे सम्वुत्तो ॥ कादम्बरीसक्कीअं अम्हाणं पुडमसोहि(म)दं इच्छीअदु ॥ ता सोंडि आपणं एव्व पविसामो ॥

**पुरुषः**—[3]तह ॥

(इति निष्क्रान्ताः सर्वे)

(प्रवेशकः)

(ततः प्रविशत्याकाशयानेन सानुमती नामाप्सराः)

**सानुमती**—[4]णिव्वत्तिदं मए पज्जाअणिव्वत्तणिज्जं अच्छरातित्थसण्णिज्झं जाव साहुजणस्स अहिसेअकाळोत्ति ॥ सम्पदं इमस्स राएसिणो वुत्तंन्तं पच्छक्खीकरिस्सं मेणआसम्बन्धेण सरीरहूदा मे सउन्दळा ॥ ताए दुहिदु-

---

1 ए(ताव)तद्युज्यते ॥

2 धीवर । महत्तर (स्त्वं) प्रियवयस्य इदानीं मे संवृत्तः ॥ कादम्बरी (सखित्व) साक्षिकमस्माकंप्रथम (शोभिमत) सौहृदामिष्य(ते)ताम् ॥ तस्माच्छौण्डिकापणमेव (गच्छामः) प्रविशामः ॥

3 तथा ॥

4 निर्वर्तितं मया पर्यायनिर्वर्तनीयमप्सरस्तीर्थसान्निध्यम् ॥ यावत्साधुजनस्याभिषेककाल इति ॥ साम्प्रतमस्य राजर्षेर्वृत्तान्तं प्रत्यक्षीकरिष्यामि॥ मेनकासम्बन्धेन शरीरभूता मे शकुन्तला॥

---

तथेति निष्क्रान्तास्सर्वे ॥ अत्राङ्गुलीयकप्रदर्शनार्थो धीवरप्रसङ्गः ॥ इति पञ्चमषष्ठाङ्कमध्ये प्रवेशकः ॥

---

सुमनोमूल्यं पुष्पमूल्यमिति विनयोक्तिः । एतावद्युज्यते । प्रियवयस्यक इदानीं मे संवृत्तः । कादम्बरी मदिरा तत्सखित्वमेकत्र पानेनास्माकं प्रथमशोभिमतमद्ययावत्पूर्वं न जातमिष्यते । तच्छौण्डिकापणमेव गच्छामः । प्रवेशक इति । प्रवेशकलक्षणं तु सुधाकरे—'यन्नीचैः केवलं पात्रैर्भाविभूतार्थसूचनम् । अङ्कयोरुभयोर्मध्ये स विज्ञेयः प्रवेशकः ॥' इति । 'अङ्कयोरुभयोर्मध्ये' इत्यनेन प्रथमाङ्कनिषेधः । क्वचित्पुस्तके 'तृतीयः प्रवेशकः' इति पाठः । तत्र विष्कम्भद्वयं तृतीयचतुर्थयोरङ्कयोः षष्ठे तृतीयः प्रवेशक इत्यर्थः । निर्वर्तितं मया पर्यायनिर्वर्तनीयमप्सरस्तीर्थसांनिध्यं यावत्साधुजनस्याभिषेककाल इति । 'पर्यायोऽवसरे क्रमे' इत्यमरः । तत्र गङ्गायामप्सरस्तीर्थं नाम तीर्थमस्ति । तत्र यावत्सज्जनस्नानकालमेकैकस्मिन्दिवस एकैकयाप्सरसा सन्निहितया स्थातव्यमिति नियमः । तस्मिन्दिने सानुमत्या तत्कार्यं कृतमित्यर्थः । साम्प्रतमस्य राजर्षेरुदन्तं वार्ताम् । 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्' इत्यमरः । प्रत्यक्षीकरिष्यामि । मेनकासम्बन्धेन-शरीरभूता मे शकुन्तला ।

णिमित्तं आदिट्ठपुव्वम्हि ॥ (समन्तादवलोक्य) किं णु खु उच्छवकाले वि निरुच्छवारम्भं विअ एदं राअउलं दिस्सइ अत्थि मे विहवो पणिधाणेन सव्वं परिण्णादुं ॥ किन्दु सहीए आअरो मए माणइदव्वो ॥ होदु इमाणं दाव उज्जानपालिआणं तिरक्खरिणीपडिच्छण्णा पस्सपरिवट्टिणी भविअ उवळम्भिस्सं ॥ (नाटयेनावतीर्य स्थिता)

(ततः प्रविशति चूताङ्कुरमवलोकयन्ती चेटी । अपरा च पृष्ठतस्तस्याः)

**प्रथमा**—

[1]चूअं हरिसिअपिअअं (आतम्य हरिअ पाण्डुर)
जीविदस(त्तं)रिसं वसन्दमासस्स ।

---

तया [illegible]दुहितृनिमित्तमादिष्टपूर्वास्मि ॥ किं नु खलूत्सवकालेऽपि निरुत्सवारम्भमिवैतद्राजकुलं दृश्यते ॥ अस्ति मे विभवः प्रणिधानेन सर्वं परिज्ञातुम् ॥ किन्तु सख्या आदरो मया मानयितव्यः ॥ भवतु अनयोस्तावदुद्यानपालिकयोस्तिरस्करिणीपरिच्छन्ना पार्श्ववर्तिनी भूत्वोपलप्स्ये ॥

1 चूतं हर्षितपिककं (आताम्रहरितपाण्डुर) जीवितस(त्यं)दृशं वसन्तमासस्य ।

---

उत्सवकालेऽपि हर्षोत्पादकसमयेऽपि ॥ तदुक्तं—“उत्सूते हर्षमित्येष उत्सवः परिकीर्तित” इति ॥

१ **चूअमित्यादि** ॥ अत्र चूतशब्देन मदनस्यामोघास्त्ररूपाम्रकलिकाभिधीयते ॥ हर्षितपिककमित्यनेन पिकानां पञ्चमस्वरोद्गमप्रतिबन्धकशिशिरकाले नीते सति स्वाभिमतास्वादनद्रव्यसम्पत्तिमद्वसन्तत्वागमनसूचकतया चूतकलिकाया हर्षकारणत्वमिति यावत् ॥ अनेन मदनस्य सामग्रीसम्पत्त्या इतरधुंविलक्षणबलोत्कर्ष उक्तः ॥ षट्चरणचरणभग्नमित्यनेन चूतकलिकायाश्चिरादपि येन केनापि मदनप्रतिबन्धकहेतुना स्वारसिकविकासाभावात् मकरन्दास्वादनत्वरया भ्रमरचरणैर्दलितम् ॥ चरणैरित्यनेन मुखक्रिय-

---

तया च दुहितृनिमित्तमादिष्टपूर्वास्मि । किं नु खलु ऋतूत्सवारम्भेऽपि निरुत्सवारम्भमिव राजकुलं दृश्यते । अस्ति मे विभवः सामर्थ्यं प्रणिधानेन सर्वं परिज्ञातुम् । किन्तु सख्या मेनकाया आदरो मया मानयितव्यः । भवतु अनयोरेवोद्यानपालिकयोस्तिरस्करिणी प्रतिच्छन्नान्तर्धानविद्यया प्रतिच्छन्ना पार्श्ववर्तिनी भूत्वोपलप्स्ये । नाट्येनेति गङ्गावतरणेन । तल्लक्षणं तु—‘अङ्घ्र्युत्क्षेपनिक्षेपावनुप्रोन्नतसन्नतौ । भजेतां विपताकौ चेदेवमेव शिरस्तदा ॥ गङ्गावतरणम्’ इति । णिव्वट्टिदम् । इत्याद्येतदन्तेन सानुमत्यात्मश्लाघायाः कृतत्वाद्विचलनं नामाङ्गमुपक्षिप्तम् । तल्लक्षणं दशरूपके—‘विकत्थनो विचलनम्’ इति । ततः प्रविशतीति । उद्यानपालिकयोरिति सूचितत्वात्तयोः प्रवेशः ॥

**आतम्मेति** ॥ आताम्रहरितपाण्डुरजीवित सत्यं वसन्तमासस्य । दृष्टोऽसि चूतकोरक ऋतुमङ्गल त्वां प्रसादयामि ॥ अत्र प्रथमसम्बोधनेन स्वभावोक्तिः । सत्यमिति

सच्चळणचळणभग्गं (दिष्ठोसि चूदकोरअ)
उदुमङ्ग(ल तुमं पसाएमि)ळं विअ पेक्खामि ॥ १

द्वितीया—[1]सहि परहुदिए! किं एदं एआइणी मन्तेसि ?

प्रथमा—[2]महुअरिए! चूअकळिअं दक्खिअ उम्मत्तिआ खु परहुदिआ होदि ॥

---

षट्चरणचरणभग्नं (दृष्टोऽसि चूतकोरक) ऋतुमङ्ग(ल त्वां प्रसादयामि) ळमिव पश्यामि॥

1 सखि परभृतिके ! किमेतदेकाकिनी मन्त्रयसे ?

2 मधुकरिके! चूतकलिकां दृष्ट्वोन्मत्ता खलु परभृतिका भवति ॥

---

माणविरहिजनपरमोद्दीपकविविधझङ्कारकरणं सूच्यते॥ जीवितसदृशमित्यनेन इतरपुष्पाण्यवयवभूतानि । चूतं तु प्राणसममिति यावत् ॥ वसन्तमासस्य सकलपुष्पाद्याधारभूततया पुष्पापचयादिविविधक्रीडाकरणसमुचितकालस्य ॥ मङ्गलमिव शोभनमिव हर्षकारणमिवेति यावत् ॥

( व्याख्यानान्तरम् )

ऋतुमङ्गळमिव ॥ उद्दीपकतया मानिन्या मानखण्डकस्य वसन्तर्तोर्मङ्गळमिव विघ्ननिवारकमिव ॥ यथा मङ्गलं सर्वत्राद्यं तथा वसन्तस्यापि चूतमित्यर्थः ॥ अनेन वसन्तस्याद्यदशा व्यज्यते॥ तदेवाह—हर्षितपिककमित्यादिना॥ अभिमतवसन्तर्त्वागमनसूचनादानन्दितकोकिलम् ॥ जीवितसदृशं प्राणसमम् ॥ वसन्तस्य सर्वस्वमित्यर्थः ॥ वसन्तस्य साधनीयं सर्वं चूतेनैव साध्यमिति भावः॥ षट्चरणचरणभग्नमित्यनेन चूतानां कोरकादिसद्भावेन मकरन्दपानाग्रहेण त्रुटितमिति भावः॥

---

शपथे। 'सत्यं च शपथे तथ्ये' इति विश्वः। वसन्तमासयोर्जीवितेति रूपकम्। सत्स्वपीतरेषु प्रसूनेषु तदङ्कुरेण ऋतोरुच्छ्वसितत्वमिव गम्यत इति रूपणम्। क्वचित् 'जीवितसर्वम्' इति पाठः। तदा प्राकृते पूर्वनिपातानियमात्सर्वजीवितेति । अन्यत्र 'वसन्तमासस्स जीअसव्वस्स' इति पाठः । जीवितरूपं सर्वस्वमित्यर्थः । अत्र जीवितपदेन 'यावत्तावज्जीविते' इति सूत्रेण विकारस्य लोपे 'जीअं' इति रूपम् । सत्स्वपीतरेषु पुष्पेषु त्वमेवोत्कृष्टतममिति भावः। ऋतुमङ्गलेत्यपि रूपकम्। प्रथमपरिदृश्यमानत्वादृतौ मङ्गलं सर्वत्र मङ्गलेषु प्रथमं परिजृम्भमाणत्वादृतौ मङ्गलं सर्वेष्वृतुषु वसन्तस्योत्कृष्टत्वं त्वयैव कृतमिति । ऋतुश्चासौ मङ्गलश्चेति कार्यकारणयोरभेदोपचारात् । परभृतिकायाः कोकिलायाश्चूताङ्कुरप्रसादनं युक्तमेव। अत्र 'तुमम्' इति पाठः प्रामादिकः। पञ्चमगणस्य पञ्चमात्रिकत्वापत्तेः। द्वितीयैकवचनादेशे 'तुह' इति पाठेऽपि चरमेऽर्धे पञ्चमके क्लेशमुखालाद्यतिरुक्ता (?) सा विहन्येत । तस्मात् 'तुमम्' इति पाठोऽन्याय्यः। 'तुंतुंतुमन्तुवन्तुहतुएअमा' अनेन सूत्रेण सप्तादेशा अपि भवन्ति। परभृतिके, किमेकाकिनी मन्त्रयसे। मधुकरिके, चूतकलिकां दृष्ट्वोन्मत्ता परभृतिका भवति। छलात्कोकिलेत्यर्थः।

**द्वितीया**—(सहर्षं त्वरयोपगम्य) [1]कहं उपट्ठिदो महुमासो !

**प्रथमा**—[2]महुअरिए ! तुह दाणिं काळो एसो मदविब्भमगीदाणं ॥

**द्वितीया**—[3]सहि ! ओलम्बेसु मं जाव अग्गपादट्ठिआ भविअ (चूदकलिअं गेण्हिअ कामदेवच्चणं करेमि) कामदेवच्चणस्स चूअङ्कुरावचअं करेमि ॥

**प्रथमा**—[4]जइ मह वि अद्धं अच्चणफळस्स ॥

**द्वितीया**—[5]अ (कहिदे) फणिदे वि एव्वं एदं सम्पज्जइ जदो एक्कं एव्वणो जीविदं दुहा ठिदं सरीरं (सख्यावलम्बिता चूताङ्कुरं गृह्णाति) अम्हहे ! अप्पडिबुद्धो वि चूदप्पसवो एत्थ बन्धणभङ्गसुरही होदि ॥

---

1 कथमुपस्थितो मधुमासः !

2 मधुकरिके ! तवेदानीं काल एष मदविभ्रमगीतानाम् ॥

3 सखि ! अवलम्बस्व माम् ॥ यावदग्रपादस्थिता भूत्वा (चूतकलिकां गृहीत्वा कामदेवार्चनं करोमि) कामदेवार्चनाय चूताङ्कुरापचयं करोमि ॥

4 यदि ममाप्यर्धमर्चनफलस्य ॥

5 अ(कथि) फणितेऽप्येवमेतत्सम्पद्यते ॥ यत एकमेव नौ जीवितम् ॥ द्विधा स्थितं शरीरम् । अहो । अप्रतिबुद्धोऽपि चूतप्रसवोऽत्र बन्धनभङ्गसुरभिर्भवति ॥

---

कथमित्याश्चर्ये ॥ मधुमास इत्यनेन मलयपवनसहकारान्तरकोकिलालापाद्यलंकृतो मास इति भावः ॥ उपस्थितः आगतः ॥ विरहिजनवधसामग्रीसम्पन्नः काल आगत इति भावः ॥

**अम्हहे इति ॥** हर्षे निपातः ॥ अप्रतिबुद्धः अविकसितः ॥ बन्धनस्य वृन्तस्य भङ्गेन सुरभिः ॥

---

कथमुपस्थितो मधुमासः । मधुकरिके, तवेदानीं काल एष मदविभ्रमगीतानाम् । छलाभ्रमरीत्यर्थः । सखि, अवलम्बस्व मां यावदग्रपादस्थिता भूत्वा चूतकलिकां गृहीत्वा कामदेवार्चनं करोमि । यदि ममापि खल्वर्धमर्चनफलस्य । अकथितेऽप्येतत्सम्पद्यते, यत एकमेव नो जीवितं द्विधा स्थितं शरीरम् । अये, अप्रतिबुद्धः कोमलोऽपि चूतप्रसव एत्थ अत्र वसन्तारम्भे । 'एसो' इति पाठ एषः । बन्धने वृन्ते भङ्गस्तत्र सुरभिर्भवति । 'सन्दाने च तथा वृन्ते मायायां बन्धनं स्मृतम्' इति रुद्रः ।

(कपोतं कृत्वा)

---

**कपोतं कृत्वेति ॥** कपोतो नाम संयुक्तहस्तविशेषः ॥ यदाह भरतः—"उभाभ्यामपि हस्ताभ्यामन्योन्यं पार्श्वसङ्ग्रहात् । हस्तः कपोतको नाम कर्म चास्य निबोधत"- इति ॥ एष विनयाभ्युपगमे प्रणामकरणे गुरोश्च सम्भाष इति ॥ प्रसङ्गात् हस्तभेदाश्च निरूप्यन्ते ॥ "पताकस्त्रिपताकश्च तथा वैकर्तरीमुखः । अर्धचन्द्रोह्यराळश्च शुकतुण्डस्तथैवच ॥ मुष्टिश्च शिखराख्यश्च कपित्थः कटकामुखः । सूच्यास्यः पद्मकोशश्च सर्पको मृगशीर्षकः ॥ लाङ्गूल कोलपद्मश्च चतुरो भ्रमरस्तथा । हंसास्यो हंसपक्षश्च सदंशो मुकुळस्तथा ॥ ऊर्णनाभस्ताम्रचूडश्चतुर्विंशदिमे कराः । असंयुतास्संयुताश्च गदतो मे निबोधत ॥ अञ्जलिश्च कपोतश्च कर्कटस्स्वस्तिकस्तथा । कटको वर्धमानश्च उत्सङ्गो निषधस्तथा ॥ डोळः पुष्पपुटश्चैव तथा मकरएवच । गजदन्तोऽवहित्थश्च वर्धमानस्तथैवच ॥ एते च संयुता हस्ता मया प्रोक्तास्त्रयोदश । वृत्तहस्तांस्ततश्चोर्ध्वं गदतो मे निबोधत ॥ चतुरश्रौ तथोद्वृत्तौ तदा तलमुखौ स्मृतौ । स्वस्तिकौ विप्रकीर्णौ चाप्यराळकटकामुखौ ॥ अविद्धवक्त्रौ सूच्यास्यौ रेचितावर्धरेचितौ । उत्तानवञ्चितौ चापि पल्लवौ च तथा करौ ॥ नितम्बौ चापि विज्ञेयौ केशबद्धौ तथैव च । (ग्रन्थपातश्लोकः ॥) पक्षवञ्चितकौ चैव पक्षप्रद्योतकौ तथा ॥ ज्ञेयौ गरुडपक्षौ च दण्डपक्षौ तथैव च । (ग्रन्थपातः ॥ श्लो ॥) उरोमण्डलिनौ चैव ह्युरःपार्श्वार्धमण्डलौ ॥ मुष्टिकस्वस्तिकौ चापि (ग्रन्थपातः ॥ श्लो ॥) ललितौ वलितौ तथा । सप्तषष्टिकराह्येते नामतोऽभिहिता मया ॥" एतेषां स्वरूपमुच्यते ॥ अत्र पताकस्य सर्वहस्तप्रकृतित्वात् त्रिपताकादीनां पताकविकारत्वादादौ पताकस्योपादानम् ॥ पताकस्त्रिपताकश्चेत्यादावेकवचनप्रयोगस्तु बहुष्वर्थेष्वेकैकस्य विनियोगदर्शनात् ॥ अञ्जल्यादिषु संयुतहस्तेष्वेकवचननिर्देशस्तु संयुतत्वनियमार्थः ॥ वृत्तहस्तेषु चतुरश्रावित्यादिद्विवचनप्रयोगेण द्वयोरपि प्राधान्यं लक्ष्यते ॥ नृत्तहस्तानामभिनयहस्तेषु कथनं तदङ्गताख्यापनाय ॥ अत एव सप्तषष्टिकरा इति मिळित्वा संगृह्याह ॥ प्रकरणपाठे मिळित्वा निर्देशादङ्गाङ्गिभावो ज्ञेयः ॥ मयाभिहिता इत्यनेन मतान्तराण्यपि विद्यन्त इति स्वशास्त्रस्याप्ततमत्वप्रदर्शनार्थम् ॥ तत्र कर्तृबाहुल्यं सूच्यते ॥ तथाहि—"सङ्गीतार्थं पुरा ब्रह्मा भरतः काश्यपश्शिवः । मतङ्गो याष्टिको दुर्गा शक्तिश्शार्दूलकोहळौ ॥ विशाखिलो दत्तिलश्च कम्बळोऽश्वरतस्तथा । वायुर्विश्वावसू रम्भार्जुनौ नारदतुम्बुरू ॥ आञ्जनेयो मातृगुप्तो रावणो नन्दिकेश्वरः । स्वातिर्गणो देवराजः क्षत्तूराजश्चराहळः । रुद्रसेनोऽथ भूपालो भोजो भूवल्लभस्तथा ॥ परमर्दी च सोमेशो जगदेकमहीपतिः । व्याख्यातारो भारतीये लोलटोद्भटशङ्कुकाः ॥ भट्टोऽभिनवगुप्तश्च श्रीमत्कीर्तिधरोऽपरः । अन्येऽपि बहवः पूर्वे चक्रुस्तन्त्राण्यनेकशः ॥" मतान्तरे त्रयो हस्ताः ॥ मिळित्वा सप्ततिः ॥ ते त्रयो हस्ता मदीये माळविकाग्निमित्रव्याख्याने द्रष्टव्याः ॥ प्रकृतमनुसरामः ॥

---

कपोतहस्तमिति । तल्लक्षणं सङ्गीतरत्नाकरे—'कपोतोऽसौ करो यत्र श्लिष्टमूलाग्रपार्श्वकः । प्रणामे गुरुसम्भाषे' इति ॥

[1]तुं(तुमं)सि मए चूदंकुर दिण्णो कामस्स गहीदधणुअस्स ।
*प(हि अजन)रिकुविदजुवइळक्खो पञ्चब्भ हिओ सरो होहि ॥

(इति चूताङ्कुरं क्षिपति)

1 त्वमसि मया चूताङ्कुर दत्तः कामाय गृहीतधनुषे ।
प(थिकजन) रिकुपितयुवतिलक्ष्यः पञ्चाभ्यधिकश्शरो भव ॥

२ तुमित्यादि ॥ चूताङ्कुर ॥ विरहिजनप्राणहरणब्रह्मास्त्रभूतामोघास्त्ररूपेति यावत् ॥ गृहीतधनुष इत्यनेन यथा युद्धार्थिनां युद्धवीराणां शरत्कालो विहितः ॥ तद्वत् भुवनत्रयविजिगीषोः कामस्यापि मलयमारुतकोकिलालापादिसामग्रीसम्पत्तिमद्वसन्तकाल एव समुचितसमयः ॥ अतएव युद्धार्थं चापग्रहणमिति यावत् ॥ कामाय विरहिजनान्तकभूताय ॥ मयेत्यनेन स्वस्याः स्त्रीत्वादात्मगौरवसंरक्षणार्थं नायकनिमित्तकासाम्मुख्यासम्भाषणारहस्यश्रवणाचुम्बनादिजनितासह्यान्तर्दुःखानुभवज्ञानवत्या मयेति यावत् ॥ दत्तः ॥ स्त्रीपुंसयोस्सङ्घटने कामस्यैवासाधारणप्रभुत्वं निश्चित्य बुद्धिपूर्वकं समर्पितः ॥ दानप्रयोजनमाह—परीत्यादि ॥ परितः नायककृतचाटूक्तिपादपतनादिसर्वानुनयप्रकारेणापि ॥ कुपिता मानेर्ष्यावती ॥ युवतिः यौवनमध्यवर्तिनी ॥ लक्ष्यं समुचितं शरव्यं यस्या भेद्यभेदकशरस्य स तथोक्तः ॥ पञ्चाभ्यधिकः ॥ स्वेन सहारविन्दाशोकनवमल्लिकानीलोत्पलेषु पञ्चम अभ्यधिकः ॥ "समानानामुत्तमश्लोको अस्तु" इति न्यायेन श्रेष्ठः ॥ अमोघव्यापार इति यावत् ॥ शरो भव मृदुत्वरूपकुसुमभावं विहाय मर्मभेदनसमर्थतीक्ष्णतरलोहादिमयसायको भव ॥ अनेन चूतव्यतिरिक्तारविन्दादिचतुर्णां वसन्तव्यतिरिक्तसमयेषु परिकुपित युवतिमानखण्डनसामर्थ्याभावादुद्यानपालिकायास्तेषु सुकुमारकुसुमत्वप्रतीतिस्सूच्यते ॥ इतः परं वसन्ते प्राप्ते चूताङ्कुरप्रादुर्भावात् युवत्या मानरक्षणं कर्तुं न शक्यमिति भावः ॥

(व्याख्यानान्तरं चूताङ्कुरेत्यनेन अस्युद्दीपकतया अमोघास्त्रत्वमुच्यते ॥ गृहीतधनुष इत्यनेन विद्यमानशराणां कुण्ठितत्वात् समर्थशरप्रतीक्षया केवलधनुष्पाणिस्सन् तिष्ठतीति व्यज्यते ॥ मया दत्तोऽसीति वर्तमानव्यपदेशेन नूतनत्वप्रतीत्या अनुपक्षीणसामर्थ्यं व्यज्यते ॥ परिकुपितयुवतिलक्ष्य इति ॥ परिकुपितयुवतिः लक्ष्यं शरव्यं यस्य स तथोक्तः ॥ पञ्चाभ्यधिकः पञ्चभ्यश्शरेभ्योऽभ्यधिकः व्यतिरिक्तः ॥ साध्यसाधकइत्यर्थः ॥ भवेति विधौ लोट् ॥ अयमभिप्रायः ॥ राजप्रतिरुद्धवसंतोत्सवमज्ञातवतीति उपनतेऽपि वसन्तकाले मदनप्रचाराभावात् मदनस्य शरास्सर्वे मोघाइति मत्वा त्वं पञ्चभ्यश्शरेभ्यो व्यतिरिक्तः साध्यसाधको

तुमं सीति ॥ त्वमसि मया चूताङ्कुर दत्तः कामाय गृहीतधनुषे । गृहीतधनुष इत्यनेन सर्वदा सन्नत्वं ध्वनितम् । पथिकजनयुवतिलक्ष्यः पञ्चाभ्यधिकः शरो भव। अत्र पञ्चाभ्यधिकत्वे शरस्यासम्बन्धे सम्बन्धलक्षणातिशयोक्तिः । अपटीक्षेपेणेति तिरस्कारिणीतिरस्कारेणेत्यर्थः । 'नासूचितस्य पात्रस्य प्रवेशो निर्गमोऽपि च' इत्युक्तेरत्र कञ्चुकिनः

* 'पहिअजणजुवइळक्खो' इति पाठान्तरम् ॥
'पथिकजनयुवतिलक्ष्य' ,,

(प्रविश्य पटाक्षेपेण कुपितः कञ्चुकी)

**कञ्चुकी**—मा तावदनात्मज्ञे! देवेन प्रतिषिद्धे वसन्तोत्सवे त्वमाम्र-कलिकाभङ्गं (कि)मारभसे !

**उभे**—(भीते) [1]पसीददु अज्जो अगहीदत्था(ओ)वअम् ॥

**कञ्चुकी**—न किल श्रुतं युवाभ्यां यथा वासन्तिकैस्तरुभिरपि देवस्य शासनं प्रमाणीकृतं ; तदाश्रयिभिः पत्रिभिश्च ?

1 प्रसीदत्वार्यः ॥ अगृहीतार्थे आवाम् ॥

भवेत्युक्तवती ॥ साधकत्वं कुपितनायिकानायकयोर्मेळनकरणम् ॥ अत्र केनचित्पञ्चाभ्यधिक इत्यत्र पञ्चसु शरेषु अभ्यधिकश्श्रेष्ठ इति व्याख्यायि ॥ तदसङ्गतम् ॥ तथासति गृहीत-धनुष इत्यनेन केवलं धृतचापस्सन् त्वां प्रतिपालयति ॥ तस्मात्तद्व्यतिरिक्तेभ्यश्चतुर्भ्यश्शरेभ्यः श्रेष्ठो भवेत्येतादृशार्थो लभ्यते ॥ तथाचेन्मदनस्य कादाचित्कपञ्चशरत्वापत्तिः ॥ तथा-भ्युपगमे। यस्मिन् ऋतौ पञ्चस्वेकमपि प्रसूनं नास्ति। तदा पञ्चशरत्वानुपपत्तिः ॥

**प्रविश्येत्यादि** ॥ पटाक्षेपेण यवनिकापनोदनेन ॥

अगृहीतार्थे अगृहीतस्सार्वकालिकोद्यानावस्थानादनवगतः अर्थः निमित्तं याभ्यां ते तथोक्ते वासन्तिकैः वसन्तसम्बन्धिभिः जलप्रदानदोहदादिराहित्येऽपि निखिलवृक्षलतानां प्रसरन्नूतनकिसलयाङ्कुरपुष्पोत्पत्त्यादिकारणभूतवसन्तकालसम्बन्धिभिरिति भावः ॥ तरुभि-र्वृक्षैः स्थावराचेतनरूपैरिति यावत् ॥ बहुवचनेन बहुस्थलप्रदर्शनेन मद्वचसि विश्वासो विधेय इति व्यज्यते ॥ तदाश्रयिभिः तदुपजीविभिः पत्रिभिः पक्षिजातिभिरपीति यावत् ॥ प्रमाणीकृतं राजा कालस्य कारणमिति धिया तरुभिस्तदुपजीविभिरप्यङ्गीकृतम् ॥

सूचनाभावादपटीक्षेपेण प्रवेशः। तत्र कुपितत्वं हेतुः। कञ्चुकिलक्षणं पूर्वमुक्तम्। मा तावदिति भिन्नं वाक्यं निषेधे। अनात्मज्ञे स्वभावानभिज्ञे। देवेन प्रकरणाद्राज्ञा दुष्यन्तेन। किमारभसे किमर्थमारम्भं करोषि। त्वयाप्यधुनारम्भ एव क्रियते। सोऽपि किमर्थमिति भावः। इदमेव कोपकारणम्। प्रसीदत्वार्यः। अगृहीतार्थे अगृहीतनिषेधवस्तुस्वरूपे आवाम्। वासन्तिकैरेतत्कालोद्गतपुष्पैस्तरुभिरपि चेतनैस्तु। प्रमाणीकृतमेव। अचेतनैरपीत्य-पिशब्दार्थः। शासनमाज्ञा। 'शासनं नृपदत्तोर्व्यां शास्त्राज्ञालेखशास्तिषु' इति हैमः। प्रमाणीकृतमिति गम्योत्प्रेक्षा। वक्ष्यमाणानां वस्तुस्वाभाव्यादेव तथात्वात्। अथवाऽसम्बन्धे सम्बन्धरूपातिशयोक्तिश्च। राजाज्ञायास्तत्त्वतोऽसम्बन्धात्। तदेव दर्शयति—

तथा हि—

चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः
सन्नद्धं यदपि स्थितं कुरवकं तत्कोरकावस्थया ।

---

४ चूतानामित्यादि ॥ चूतानां वसन्तप्राणभूततया मदनतूणीररूपाम्रवृक्षाणां ॥ बहुवचनेन वृक्षदोषात् क्वाचित्कैककोरकविकासाभावो न किन्तु सर्ववृक्षाणां देवशासनाङ्गीकारस्सूच्यते ॥ कलिका परमोद्दीपकतया विरहिजनवधब्रह्मास्त्ररूपः कोरकः ॥ एकवचनेनाद्वितीयतया पुष्पत्वसजातीयोत्कृष्टता ध्वन्यते ॥ चिरनिर्गतेति—चिरपदोपादानेन चूतकलिकायास्सकलपुष्पराजतया धीरोदात्तप्रकृतिवत् हठाद्विकासाभावोऽवगम्यते ॥ चिरनिर्गततादृक्कोरकः ॥ स्वं स्वकीयं कालप्राप्तमिति यावत् ॥ रजः विरहिलोकस्फुलिङ्गकल्पं ॥ न बध्नाति न प्रकटयति ॥ वर्तमानव्यपदेशेन प्रत्यक्षानुभवः प्रकाश्यते ॥ कलिकायाः मदनविकारजनकस्वनिर्गमप्रयोजनं विकासाभावान्न भवतीति भावः ॥ यत्कुरवकं वसन्तदेहभूततया मदनस्य द्वितीयतूणीरभूतकुरवककुसुमं ॥ सन्नद्धमपि मदनविकारप्रतिबन्धकचिरमुकुळभावासहिष्णुतयेव विकासोन्मुखमपि कोरकावस्थया स्थितं ॥ विकसनराहित्येन मदनविकाराजनकतया शाणादावनुल्लीढा तीक्ष्णशरभावेन चापे प्रयोगानर्हतया स्थितमिति भावः ॥ भिन्नजातीयकुसुमशरावस्थानतूणीरभूताम्रकुरवकवृक्षद्वयोपादानेन मदनस्य सव्यसाचित्वं ध्वन्यते ॥ शिशिरे जलक्रीडाङ्गलेपनाद्यनुचितशिशिरतौ ॥ कोकिलपञ्चमस्वरोद्गमप्रतिबन्धकसमय इति यावत् ॥ पुंस्कोकिलानां ॥ मदनस्य

---

तथाहीति । **चूतानामिति** ॥ चूतानां कलिका मञ्जरीति जात्यभिप्रायेणैकवचनम् । कलिकाशब्दो बाधितमुख्यार्थोऽभिनवोद्गतसाधर्म्यान्मञ्जरीं लक्षयति । अविकासितत्वं च फलं ज्ञेयम् । चिरनिर्गता शिशिरान्तप्रोद्भिन्नापि । स्वं स्वीयम् । आत्मीयमिति यावत् । अत्यावश्यकत्वं ध्वनितम् । रजः परागं न बध्नाति । न दृष्टं करोतीत्यर्थः । यथा काचन बाला प्रौढतया रजोदर्शनं न यातीति समासोक्तिरपि । संनद्धमपि वृन्ताद्बहिर्निर्गतमपि । संनद्धशब्दो बाधितमुख्यार्थः सन्यः संनद्धः स युद्धाय बहिर्निर्गच्छतीति बहिर्निर्गमनसाम्यात्कुरवकं लक्षयन्नतिशोभावत्त्वं ध्वनयति । यत्कुरवकं शोणकुरटकं पुष्पमिति जातावेकवचनम् । 'तत्र शोणे कुरवकः' इत्यमरः । तत्कोरकावस्थया कलिकावस्थया स्थितम् । अत्र कोरकत्वं न जहातीति कार्याभावे वक्तव्ये तद्विरुद्धत्वेनोक्तिः । गतेऽपि शिशिरे वसन्तारम्भसमये पुंस्कोकिलानां रुतं शब्दितं कण्ठेषु स्खलितिम् । तथाऽस्फुटः कोकिलस्वनो जात इत्यर्थः । अत्र च चिरनिर्गतादेः कारणस्योक्तेः कार्यस्य परागादेर्निषेधान्मालाविशेषोक्तिः । नन्वत्र विरोधवाचकापिशब्दश्रवणाद्विरोधाभास एवास्त्विति चेन्न । 'कर्पूर इव दग्धोऽपि शक्तिमान्यो जने जने । हरतापि तनुं यस्य शम्भुना न हृतं बलम् ॥' इत्यादौ सत्यप्यपिशब्दे विशेषोक्तेर्दर्शनात् । उक्तं च राजानकरुचकेन—'कार्याभावेनेहोपक्रान्तत्वाद्बलवता कारणसत्ताया एव बाध्यमानत्वं न तु तया कार्याभावस्येत्यन्योन्यबाधानुप्राणिताद्विरोधालङ्काराद्भेदः इति । ननु दग्धत्वस्य शक्तिमत्त्वं शक्तिमत्त्वस्य विषयं परित्यज्यैवोत्सर्गस्य दग्धत्वं तनुहरणत्वस्य बलहरत्वं तस्य तनुहरणत्व-

कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं
शङ्के संहरति स्मरोऽपि चकितस्तूणार्धकृष्टं शरम् ॥ ४

सानुमती—[1]णत्थि एत्थ सन्देहो ॥ महप्पहावो खु राएसी ॥

प्रथमा—[2]अज्ज ! कदि दिअहाइ गदाइ अम्हाणं मित्तावसुणा रट्ठिएण

1 नास्त्यत्र सन्देहः ॥ महाप्रभावः खलु राजर्षिः ॥

2 आर्य ! कति दिवसानि गतान्यावयोर्मित्रावसुना राष्ट्रियेण (भट्टिणीपादमूलं) प्रेषितयोः

निर्गमनसञ्चारयुद्धादितत्तत्कालोचितजङ्गमवीरवाद्यभूतानां ॥ रुतं कूजितं स्खलितं ॥ उत्पत्तिसमये पञ्चमस्वरशून्यं गद्गदितं ॥ स्मरोऽपि निरर्गळव्यापारोऽपीत्यर्थः ॥ तूणार्धकृष्टं प्राप्तकालसामग्रीलक्ष्यतया धनुष्यनुसन्धानात् तूणीरभूतचूतकुरवकाभ्यां निर्गलितयोरपि कलिकाकुसुमयोर्विकसनरजोमकरन्दप्रादुर्भावराहित्येन मदनविकाराभावादर्धाकृष्टत्वमुत्प्रेक्षितं ॥ शरं ॥ दूरादूरलक्ष्यवेधनसमर्थं बाणं चकितः रूपलावण्यादिना स्वाधिकदुष्यन्ताज्ञापरिपालनधिया भीतः ॥ संहरति भीत्या सर्वाङ्गकंपहस्तशैथिल्यधैर्याभावादिभिः प्रतिक्षिपति ॥ वर्तमानव्यपदेशेन अद्यापि विविधमदनविकारजनकवसन्तपरिपोषदशायामपि दुष्यन्तप्रतिषिद्धवसन्तोत्सवेन बालाभावान्मन्दं मन्दं संहरतीति व्यज्यते ॥ शङ्के दुष्यन्तस्यामानुषप्रभावतयैतत्सर्वं भवतीति तर्कयामि ॥ (व्याख्यानान्तरं) चिरनिर्गतापीत्यनेन चूतकलिकाया अचिराद्विकासो नास्तीति लभ्यते ॥ यत्कुरवकं सन्नद्धमपि विकासोन्मुखमपि शिशिरे शिशिरर्तौ गतेऽपि रुतं कूजितं स्खलितं गद्गदितं पञ्चमस्वरशून्यं निर्गतमित्यर्थः ॥ शरं संहरति प्रतिक्षिपति ॥ सर्वेषां मदनविकारः प्रतिबद्ध इति भावः ॥

मित्यन्योन्यबाधकत्वं प्रतीयत एवेति चेत्सत्यम् । तर्हि यथा विरोधे सत्यपि भिन्नविषयत्वेनासङ्गतेर्न विरोधाभासत्वमेवं कारणाभावे कार्यसत्त्वे तत्र च सति तदभाव इत्येवंरूपविषयद्वयपरित्यागेनैव तस्य विषय इति ज्ञेयम् । अपवादविषयं परित्यज्यैवोत्सर्गस्य प्रवृत्तेः । दृश्यते चैतद्व्यतिरिक्तविषयतैवास्य 'जडयति च तापं च कुरुते' 'विशालैरपि भूरिशालैः' 'कुपतिमपि कलत्रवल्लभम्' इत्यादाविति सर्वं निरवद्यम् । स्वभावोक्तिश्च । चकितो भीतः स्मरोऽपि तूणार्धकृष्टं तूणीरादर्धनिष्कासितं शरं संहरतीति शङ्के इत्युत्प्रेक्षायाम् । अत्र भीतत्वं शरसंहरणमुभयमुत्प्रेक्ष्यम् । कामस्य प्रसूनशरत्वाद्वसन्तपुष्पाणामसकलोत्पन्नत्वादियमुत्प्रेक्षा । अस्यां च पूर्ववाक्यत्रयं हेतुत्वेन योज्यम् । काव्यलिङ्गम् । स्थिस्थेति कुरकोरेति रेपुंरोपीति छेकश्रुतिवृत्त्यनुप्रासाः । शार्दूलविक्रीडितं वृत्तम् । नास्ति सन्देहः । महप्रभावो राजर्षिः तयोः स्त्रीस्वाद्यथाश्रुतग्राहितया नायकप्रभावातिशयवर्णनीयतया चैवमुत्तरम् । आर्य । कति दिवसान्यावयोर्मित्रावसुना राष्ट्रियेण भट्टिनीपादमूलं

पेसिआणं भट्टि(णी)णो पादमू(लं पेसिदाणं)लादो एत्थ चरंदीणं ? इ(त्थं)दं च (णो) णाम पमदवणस्स सअळं पडि(पालन)कम्म अप्पिदम् ॥ ता (आअन्तु-अदाए) अस्सुदपुव्वो अम्हेहिं एसो वुत्तन्तो ॥

**कंचुकी**—भवतु, न पुनरेवं प्रवर्तितव्यम् ॥

**उभे**—[1]अज्ज ! कोदूहळं णो होइ ॥ जइ इमिणा जणेण सोदव्वं, कहेदु अज्जो ॥ किं णिमित्तं भट्टिणा वसन्तूसवो पडिसिद्धो ?

**सानुमती**—[2]उस्सवप्पिआ खु माणुसा, गुरुणा काळणेण होदव्वम् ॥

**कंचुकी**—बहुळीभूतमेतत्किं न कथ्यते ? किमत्रभवत्योः कर्णपथं नायातं शकुन्तलाप्रत्यादेशकौलीनम् ?

**उभे**—[3]सुदं रट्ठिअमुहादो जाव अङ्गुळीअअदंसणम् ॥

**कंचुकी**—तेन ह्यल्पं कथयितव्यम् ॥ यदैव स्वाङ्गुळीयकदर्शनादनुस्मृतं देवेन 'सत्यमूढपूर्वा मया तत्रभवती रहसि शकुन्तला मोहात्प्रत्यादिष्टा' इति तदाप्रभृत्येव पश्चात्तापमुपगतो देवः ॥

---

भर्तुः पादमूलादत्रचरन्त्योः ? इदं च नाम प्रमदवनस्य सकलं प्रतिकर्मार्पितम् ॥ तस्मादश्रुतपूर्व आवाभ्यामेष वृत्तान्तः ॥

1 आर्य ! कुतूहलं नौ भवति ॥ यद्यनेन जनेन श्रोतव्यं । कथयत्वार्यः ॥ किं निमित्तं भर्त्रा वसन्तोत्सवः प्रतिषिद्धः ?

2 उत्सवप्रियाः खलु मानुषाः ॥ गुरुणा कारणेन भवितव्यम् ॥

3 श्रुतं राष्ट्रियमुखाद्यावदङ्गुळीयकदर्शनम् ॥

---

**बहुळीभूतमित्यादि ॥** कौलीनं शकुन्तलानिराकरणहेतुना लोकापवादः ॥

---

प्रेषितयोः । कतिचिद्दिनानीत्यन्वयः । इत्थं च नौ प्रमदवनस्य पालनकर्म समर्पितम् । तदागन्तुकतयाश्रुतपूर्व आवाभ्यामेष वृत्तान्तः । भवतु । यज्जातं तज्जातमित्यर्थः । आर्य, कौतूहलं नौ । यद्यनेन जनेन श्रोतव्यम् । अस्य श्रवणयोग्यमित्यर्थः । तत्कथयत्वयं किंनिमित्तं भर्त्रा वसन्तोत्सवः प्रतिषिद्धः । उत्सवप्रियाः खलु मनुष्याः । गुरुणा कारणेन भवितव्यम् । प्रत्यादेशो निराकृतिस्तल्लक्षणं यत्कौलीनं लोकवादः । 'स्यात्कौलीनं लोकवादे' इत्यमरः । श्रुतं राष्ट्रियमुखाद्यावदङ्गुलीयकदर्शनम् । म इति मया । तथा च वामनः—'तेमेशब्दौ निपातौ त्वयामयेत्यर्थे' इति । यदैव स्मृतं देवेन तदाप्रभृतीत्यन्वयः ॥

तथा हि—

रम्यं द्वेष्टि यथापु(रा)रं प्रकृतिभिर्न प्रत्यहं सेव्यते
शय्याप्रान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः ।
दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा
गोत्रेषु स्खलितस्तदा भवति च व्रीडाविलक्षश्चिरम् ॥ ५

---

५ **रम्यमित्यादि** ॥ रम्यं नृत्तगीतस्रक्चन्दनवनितादिदृश्यश्राव्यधार्योपभोगार्हस्वभावमनोहरं वस्तु ॥ एकवचनेन राज्ञस्तद्विषयकद्वेष्यभावपरा काष्ठा सूच्यते ॥ द्वेष्टि ॥ विरहपरम्पराजनितदुःखानुभवात् दुःखिते मनसि सर्वमसह्यमिति न्यायेन तस्य विपरीतबुद्धिजनकतया न सहते ॥ रम्यवस्तुविद्वेषेण विषयनिवृत्तिर्व्यज्यते ॥ तया च निर्वेदः ॥ अनेन उद्वेगो नामदशा कथिता । तदुक्तं "मनसः कम्पउद्वेगः कथितस्तत्र विक्रियाः । चित्तसन्तापनिश्वासौ द्वेषस्सर्वत्र वस्तुषु" इति ॥ यथापुरं पूर्वं यथा तथा प्रकृतिभिरमात्यैः ॥ प्रजाभिर्वा ॥ प्रत्यहं न सेव्यते ॥ चित्तपारवश्यान्नान्वास्यते ॥ सार्वकालिकतदेकतानचित्तत्वेन कदा वा शकुन्तलाप्राप्तिर्भविष्यतीति चिन्ताजनितालसतया ताभिस्समभिष्टानिष्टालोचनमपि न क्रियत इति यावत् ॥ अनेन जडता ध्वनिता ॥ तदुक्तं—"इदमिष्टमनिष्टं तदिति वेत्ति न किञ्चन । नोत्तरं भाषते प्रश्ने नेक्षते न शृणोति च । यत्र ध्यायति निस्संज्ञं जडता सा प्रकीर्तिता" इति ॥ क्षपाः सौधादिविविधक्रीडोचितचन्द्रमलयानिलालंकृता रात्रिः ॥ शय्याप्रान्तविवर्तनैः विप्रलम्भजनितसर्वाङ्गसन्तापेनान्यकान्तालिङ्गनाभावात् शय्याप्रान्तपर्यावर्तनैः उन्निद्र एव अरत्या निद्राशून्य एव ॥ विगमयति ॥ न तु तत्तादृक्कामकलाविदग्धकामिनीभिस्समं चन्दनाद्यङ्गलेपनकुसुमधारणसम्भाषणालिङ्गनचुम्बन विविधसुरतप्रणयकलहात्मगौरवमानरक्षणक्षणवैमुख्यपादप्रणामानिमिषप्रेमवीक्षणादि नानाक्रीडापरिश्रमजनितग्लान्यवशस्वारसिकप्राप्तनिद्रया क्षपाः विगमयतीति भावः ॥ शय्यापर्यावर्तनैस्सन्तापः । तेन च व्याधिलक्षणा मानसी पीडा ॥ निद्राभावेन विषादः चिन्ता वा ॥ क्षपा इत्यनेन इन्दुमलयानिलादिष्वौग्र्यं ॥ अनेन व्याधिर्नामावस्था सूचिता ॥ तदुक्तं—"अतीष्टसङ्गमाभावाद्व्याधिस्सन्तापलक्षण" इति ॥

---

**रम्यमिति** ॥ रम्यं स्रक्चन्दनचन्द्रपादादिकं द्वेष्टि । चक्षुषापि न पश्यतीत्यर्थः । 'यावद्रम्यमुज्ज्वलं च' इत्युक्तेः । प्रकृतिभिरमात्यैः पुरा पूर्वं यथा तथा न सेव्यते । पूर्वं तु कार्यापेक्षितयाधुना त्ववसरापेक्षमित्यर्थः । पूर्वं प्रत्यहमधुना न तथा यथापूर्वं प्रत्यहमित्युभयं विधेयम् । शय्यानाम् । न शय्ययाः प्रान्तेषु । न मध्ये । यानि विवर्तनानि परिलुण्ठनानि । न स्वापः । तैरुन्निद्रो गतनिद्र एवेति पूर्वत्र हेतुत्वेन योज्यम् । क्षपा निशाः । न तु निशाम् । विगमयतीति विरुद्धं यथा स्यात्तथातिवाहयति । न तु गच्छति । यदन्तःपुरेभ्यो देवीभ्यो दाक्षिण्येनात्यन्तानुरोधेन । 'दाक्षिण्यं नाम बिम्बोष्ठि बैम्बिकानां कुलव्रतम्' इत्युक्तेः । एतेनात्यावश्यकत्वं ध्वनितम् । उचितामित्यवश्यापेक्षणीयत्वं ध्वनितम् । ईदृशीं वाचं ददाति । तदा गोत्रेषु नामसु । 'गोत्रं तु नाम्नि च' इत्यमरः । स्खलितोऽन्यनामग्रहे कृतान्यनामग्रहः संश्चिरमतिकालं व्रीडया लज्जया विलक्षो विस्मयान्वितो भवति । 'विलक्षो विस्मयान्वितः'

**सानुमती**—[1]पिअं मे पिअं मे ॥

**कंचुकी**—अस्मात्प्रभवतो वैमनस्यादुत्सवः प्रत्याख्यातः ॥

**उभे**—[2]जुज्जइ जुज्जइ ॥

(नेपथ्ये) [3]एदु एदु भवम् ॥

**कंचुकी**—(कर्णं दत्वा) अये, इत एवाभिवर्तते देवः ॥ स्वकर्मानुष्ठीयताम् ॥

**उभे**—[4]तह ॥

(इति निष्क्रान्ते)

---

1 प्रियं मे प्रियं मे ॥
2 युज्यते युज्यते ॥
3 एत्वेतु भवान् ॥
4 तथा ॥

---

अन्तःपुरेभ्यः अन्तः पुरकान्ताभ्यः ॥ आकारगोपनार्थं दाक्षिण्येन सर्वासु समभावप्रकटनेन ॥ यदा यस्मिन् काले उचितां तत्कालयोग्यां वाचं वचनं ॥ न तु वाक्यं ॥ तीव्रपदकदम्बात्मकत्वात् ग्लान्यावचनमात्रमुच्चारितमिति भावः ॥ ददातीति वर्तमानव्यपदेशेनोन्मादप्राप्त्या बुद्धिपूर्वकोच्चारणाभावादुक्तमेव पुनः पुनर्वदतीति व्यज्यते ॥ तदा तस्मिन् काले गोत्रेषु नामधेयेषु स्खलितः विपर्यस्तः ॥ अयथावादिशकुन्तलानामवादीत्यर्थः ॥ चिरं व्रीडाविलक्षणः व्रीडया लज्जया विगतलक्षः कर्तव्यशून्य इति भावः ॥ च शब्दः क्रियासमुच्चयार्थः ॥ अन्तःपुराणां दाक्षिण्यादनुचितवाक्प्रदानादवहित्थं ॥ गोत्रस्खलनेन मोहः ॥ तेन चोन्मादः ॥ तदुक्तं—"सर्वावस्थासु सर्वत्र तन्मनस्कतया सदा । अतस्मिन् तदिति भ्रान्तिरुन्मादः परिकीर्तित" इति ॥ "व्रीडावैलक्षण्येन शङ्काविबोधो वा ॥ (साहित्यटीका) अनेन श्लोकेन गोत्रस्खलितं नाम सन्ध्यङ्गमुक्तं ॥ तदुक्तं—तद्गोत्रस्खलितं विदुः । प्रियानुस्मरणादन्याह्वानमन्याभिधानत" इति ॥ स्फुटमेवैतत् ॥

**पिअं मे इत्यादि ॥** अस्मात्कारणात् । प्रभवतः प्रभोः ॥ उत्सवः ॥ प्रत्याख्यातः निराकृतः ॥ अनेन छलनं नाम सन्ध्यङ्गमुक्तम् ॥ छलनं चावमाननं अवमाननं नाम प्रत्याख्यानं ॥ अत्रोत्सवप्रत्याख्यानमवमाननम् ॥

---

इत्यमरः । अहं राजा दुष्यन्तो ममाप्येतादृश्यवस्थेति स्वमनस्येव सविस्मय इत्यर्थः । अत्र पश्चात्तापादिके कारणे वक्तव्ये यत्तत्कार्यस्य रम्यद्वेषादेर्वचनं तत्पर्यायोक्तम् । काव्यलिङ्गं च । पुराप्रेति प्रप्रेति क्षक्षीति छेकवृत्त्यनुप्रासौ । वृत्तमनन्तरोक्तम् । प्रियं मे । अस्माद्वैमनस्यादिति व्यधिकरणे पञ्चम्यौ । अस्मात्कारणात्प्रभवतः समर्थात् अधिकादित्यर्थः । वैमनस्यादुद्वेगात् । युज्यते 'प्रविश्यापटीक्षेपेण' इत्याद्येतदन्तेन द्युतिनामकमङ्गमुपक्षिप्तम् । तल्लक्षणं दशरूपके—'तर्जनोद्वेजने द्युतिः' इति । एतु एतु भवान् : तह इति तथेति ।

( ततः प्रवि(शति)ष्टः पश्चात्तापसदृशवेषो राजा, विदूषकश्च, प्रतीहारी च )

**विदूषकः**—[1]एदु एदु भवम् ॥

**कंचुकी**—(राजानमवलोक्य) अहो ! सर्वास्ववस्थासु रमणीयत्वमाकृतिविशेषाणाम् ॥ तथाहि—एवमुत्सुकोऽपि प्रियदर्शनो देवः ॥

**प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठार्पितं**
**बिभ्रत्काञ्चनमेकमेव वलयं श्वा(सो)सापरक्ताधरः ।**
**चिन्ताजागरणप्रतान्तनयनस्तेजोगुणादात्मन-**
**स्संस्कारोल्लिखितो महामणिरिव *क्षीणोऽपि नालक्ष्यते ॥** ६

1 एत्वेतु भवान् ॥

६ **प्रत्यादिष्टेत्यादि** ॥ प्रत्यादिष्टः निरस्तः ॥ विशेषमण्डनस्य विशिष्टालङ्करणस्य विधिः करणं येन स तथोक्तः ॥ वामप्रकोष्ठार्पितं सव्यकूर्परमणिबन्धमध्यभागन्यस्तं पुरुषस्यैककटकधारणं दक्षिणहस्तेनैव कर्तव्यं ॥ अत्र वामहस्तधारणं तु शकुन्तलाविरहसम्भ्रान्तचित्तत्वेनेति भावः ॥ काञ्चनं स्वर्णमयं ॥ न तु रत्नखचितं ॥ एकमेव ॥ इतरपुरुषविलक्षणार्थं बिभ्रत् ॥ तेजोगुणात् ॥ एकवचनेन गुणस्याद्वितीयत्वं व्यज्यते ॥ संस्कारोल्लिखितः शाणोल्लीढः ॥ क्षीणोऽपि स्वाभिलाषालम्बनभूतनायिकाविरहपरम्पराजनितदुःखानुभवात् कृशोऽपि ॥ संलक्ष्यते ॥ पूर्वावस्थापेक्षया दर्शनीयो भवति ॥ अनेन कार्श्यं नामावस्थान्तरमुक्तं ॥ चिन्ताजागरश्वासास्तु वाच्यतयैवोक्ताः ॥

प्रतीहारीलक्षणमुक्तं प्राक् । अहो आश्चर्ये । सर्वावस्थास्वित्यर्थान्तरन्यास एवमित्यादेरुत्तरवाक्यार्थस्य समर्थकः । सर्वासु यदा यादृश्यो या उपस्थितास्तासु तादृरूप्येण रमणीयत्वमित्यर्थः । उत्सुक उत्कण्ठितः । विरह्यपीत्यर्थः । एतदवस्थायां अन्यत्र प्रियदर्शनत्वमपिशब्दद्योत्यम् । अतएवार्थान्तरन्यासे विशेषपदम् । तथाहीत्युभयपरामर्शः । स एव पद्ये वाच्येन पूर्वांशस्य व्यङ्ग्येनोत्तरांशस्येति ज्ञेयम् ॥

**प्रत्यादिष्टेति** ॥ प्रत्यादिष्टो निराकृतो विशेषमण्डनस्य प्रक्षेप्यस्याङ्गुलीयककुमुदादेर्विधिर्धारणविधिर्येन सः । अनेन ' अङ्गान्यभूषितान्येव प्रक्षेप्याद्यैर्विभूषणैः । येन भूषितवद्भान्ति तद्रूपमिह कथ्यते ' इति रूपं ध्वनितम् । वामस्य प्रकोष्ठस्य मणिबन्धोर्ध्वभागस्यार्पितं दत्तम् । ' प्रकोष्ठे विस्तृतकरे रूपकक्षान्तरेऽपि च । कूर्परादधरे चापि ' इति विश्वः । काञ्चनमेवेत्यन्यासंस्पृष्टत्वेनातिशीतलत्वं ध्वनितम् । वलयमित्येकवचनं द्वितीयस्य वोढुमसामर्थ्यात् । बिभ्रत् । अभ्यस्तत्वान्न नुम् । वामग्रहणेन बिरुदार्थमवश्यं धारणमुक्तम् । अत एकं मुख्यं सर्वदा सत्त्वात् । ' एके मुख्यान्यकेवलाः ' इत्यमरः । अत एव वामप्रकोष्ठस्यार्पितं दत्तमिति भूतत्वं च । एतन्मात्रेणैव विशेषो ध्वनितः । श्वासेन विरहित्वादुष्णेनोपरक्तः पाटलो न तु रूक्षोऽधरो यस्य सः । तादृशस्यैव शोभायुक्तत्वं च ध्वनितम् ।

* क्षीणोऽपि संलक्ष्यत इति पाठो व्याख्यातः ॥

**सानुमती**—(राजानं दृष्ट्वा) [1]ठाणे खु पच्चादेसविमाणिदावि, इमस्स किदे सउन्दळा किळम्मदि ॥

**राजा**—(ध्यानमन्दं परिक्रम्य)

**प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम् ।**

---

1 स्थाने खलु प्रत्यादेशविमानितापि । अस्य कृते शकुन्तला क्लाम्यति ॥

---

**ध्यानमन्दमित्यादि ॥** शकुन्तलाचिन्तया शनैः परिक्रम्य ॥ (साहित्यटीका) अनेन शून्यदृष्टिता व्यज्यते ॥ विषयालोकनेऽपि तद्विषयप्रवृत्तेरसम्भवात् ॥

७ **प्रथममिति ॥** हतहृदयमिति हृदयशब्देन स्वात्माभिधीयते ॥ विबुद्धमिति ज्ञानाधारताप्रतिपादनादात्मन एव ज्ञानाधारत्वात् । अनेनात्मावमानरूपो निर्वेद उक्तः ॥ आत्मन्यक्कारस्य कारणमाह—प्रथममित्यादिना ॥ सारंगाक्ष्या मृगाक्ष्या ॥ अनेन पूर्वानुभूततादृशकटाक्षावलोकनादीनां स्मरणं व्यज्यते ॥ प्रियये्त्यनुरागविषयता सूचिता ॥ प्रतिबोध्यमानमपि सुप्तमिति ॥ जाग्रतोऽपि गाढसुषुप्तिदशायामिव प्रतिबोधो न जात इत्यर्थः ॥ अनेन तत्तादृग्रूपवत्या स्वानुरागावलम्बनभूतया तया तथा तथा प्रतिबोधनेऽपि

---

चिन्तया शकुन्तलागतया यज्जागरणं तेन प्रकर्षेण तान्ते म्लाने नयने यस्य सः । जागरणेन रक्तप्रान्तत्वं तेन च शोभातिशययोगित्वं च ध्वनितम् । एषु स्वभावोक्तिः परिकरालङ्कारश्च । आत्मनस्तेजोगुणाद्दीप्तिलक्षणात्क्षीणोऽपि कृशोऽपि क्षीणत्वेन नालक्ष्यते । क इव । संस्कारार्थमुल्लृष्टो महामणिरिव । महाशब्देन जात्यत्वं सर्वगुणविशिष्टत्वं महत्त्वं च ध्वनितम्, यथा शाणोल्लिखितो महामणिः स्वतेजसा क्षीणो न दृश्यते तद्वदित्युपमा । अनेन महामण्युपमानेनास्य क्षीणत्वेऽप्यन्तः सारता सर्वदा दृश्यमानत्वेऽप्यवितृप्तता च ध्वनिता । प्रत्रेति दृष्टेति तान्तेति क्षीश्येति च्छेकश्रुतिवृत्त्यनुप्रासाः । अथ चिन्तेति सङ्कल्पः, जागरेति निद्राच्छेदः, क्षीण इति तनुता, प्रत्यादिष्टेति विषयनिवृत्तिः, इति कामावस्था अपि सूचिताः । वृत्तमनन्तरोक्तम् । अथ चानेन नायकसात्त्विकगुणेषु माधुर्यनामा गुण उपक्षिप्तः । तल्लक्षणं तु—'तन्माधुर्यं यत्र गात्रदृष्ट्यादेः स्पृहणीयता । सर्वावस्थासु सर्वत्र' इति । अन्ये आचार्याः प्रवासविप्रलम्भेऽन्याः कामदशा आहुः—'अङ्गेष्वसौष्ठवं चैव पाण्डुता कृशतारुचिः । अधृतिः स्यादनालम्बस्तन्मयोन्मादमूर्च्छना । मृतिश्चेति क्रमाज्ज्ञेया दश स्मरदशा इह ॥' इति । 'प्रत्यादिष्ट—' इत्यादिनाङ्गेष्वसौष्ठवम्, 'क्षीणः' इत्यनेन कृशता, 'रम्यं द्वेष्टि यथा पुरा' इति पूर्वपद्येऽरुचिः । 'अरुचिर्वस्तुवैराग्यम्' इत्युक्तेः । दाक्षिण्येत्यादिना धृतिः । 'सर्वत्रारागिता धृतिः' इत्युक्तेः । स्थाने युक्तं खलु प्रत्यादेशेन निराकरणेन विमानिताप्यस्य कृते शकुन्तला क्लाम्यतीति । तत्स्थान इत्यन्वयः । ध्यानमन्दमित्यनेनालम्बनतोक्ता । 'अनालम्बनता वापि शून्यता मनसः स्मृता' इत्युक्तेः ॥

**प्रथममिति ॥** सारङ्गो हरिणस्तस्येक्षणे इवेक्षणे यस्यास्तया । अनेन तद्दर्शनमात्रेण प्रतिबोध उचित इति ध्वन्यते । तत्रापि प्रिययात्यन्तहृद्यया शकुन्तलया प्रतिबोध्यमानमपि । स्वत एव प्रतिबोध उचितः स नास्त्यपि तु प्रयत्नेनापि प्रतिबोध्यमानं सुप्तं मोहमुपागतम् ।

अनुशयदुःखायेदं हतहृदयं सम्प्रति विबुद्धम् ॥ ७

**सानुमती**—[1]णं ईरिसाइ तपस्सिणीभाअहेआइ ॥

**विदूषकः**—(अपवार्य) [2]लङ्घिदो एसो भूओवि सउन्दलावाहिणा ॥ ण आणे कहं चिइच्छिदव्वो भविस्सदित्ति ॥

**कंचुकी**—(उपगम्य) जयतु देवः ॥ महाराजप्रत्यवेक्षिताः प्रमदवनभूमयः ॥ यथाकाममध्यास्तां विनोदनस्थानानि महाराजः ॥

**राजा**—वेत्रवति, मद्वचनादमात्यमार्यपिशुनं ब्रूहि ॥ चिरप्रबोधनान्न सम्भावितमस्माभिर्धर्मासनमध्यासितुम् ॥ यत्प्रत्यवेक्षितं पौरकार्यमार्येण तत्पत्रमारोप्य दीयतामिति ॥

**प्रतीहारी**—[3]जं देवो आणवेदि ॥ (इति निष्क्रान्ता)

---

1 नन्वीदृशानि तपस्विनीभागधेयानि ॥
2 लङ्घित एष भूयोऽपि शकुन्तलाव्याधिना ॥ न जाने कथं चिकित्सितव्यो भविष्यतीति ॥
3 यद्देव आज्ञापयति ॥

---

स्वकृतकार्यस्मरणभावेनाज्ञानस्य परा काष्ठोक्ता ॥ तादृशसुखप्राप्तिदशायामज्ञानमेको दोषः ॥ सम्प्रति तदसन्निहितकाले बोधनं तु केवलमनुशयेन दुःखजननाय ॥ न तु सुखायेति भावः ॥ पूर्वमज्ञानादकार्यं कृत्वा विवेकात् पश्चात्तापोऽनुशयः ॥ अनुशयदुःखायेत्यनेन तत्सम्पादनोपायाभावस्सूचितः ॥ उपायवत्त्वेऽनुशयाभावात् ॥ दुःखजननेन धैर्याभाव उक्तः ॥ धीरस्य महत्यपि विनिपाते दुःखाभावात् ॥ ध्यानमन्दमिति शून्यदृष्टिता कथिता ॥ विषयावलोकनेऽपि तद्विषयप्रवृत्त्यसम्भवात् ॥ (साहित्यटीका) अथवा सारं मनोहरं गच्छत इति सारङ्गे अक्षिणी यस्यास्सा तथोक्ता ॥

---

अत एव हतहृदयं दुष्टहृदयं सम्प्रत्यधुनानुशयदुःखाय पश्चात्तापदुःखाय विबुद्धम् । अत्र पूर्वार्धे विशेषोक्तिः । अत्र प्रतिबोधाभावस्तविरुद्धेन सुप्तपदेनोक्तः । उत्तरार्धे विभावनोपमानुप्रासौ च । नन्वीदृशानीति राजोक्तानुवादः । तपस्विन्या अनुकम्पार्हाया भागधेयानि भाग्यानि । 'तपस्वी चानुकम्पार्हः' इत्यमरः । लङ्घित एष भूयोऽपि शकुन्तलाव्याधिना शकुन्तलायाः सकाशाद्यो व्याधिस्तेन । अथवा रूपकम् । शकुन्तलैव व्याधिरुद्वेगदायित्वात् । न जाने कथं चिकित्सितव्यो भविष्यतीति । प्रत्यवेक्षिताः प्रमदवनभूमयः इति राज्ञो निःशङ्कसञ्चारार्थं प्रत्यवेक्षणमिति नीतिः । 'विज्ञेयं प्रमदवनं नृपस्तु यस्मिन्शुद्धान्तैः सह रमते पुरोपकण्ठम्' इति हलायुधः । चिरकालेन प्रबोधनाज्जागरणात् । यद्देव आज्ञापयतीति ।

**राजा**—वातायन, त्वमपि नियोगमशून्यं कुरु ॥

**कंचुकी**—तथा ॥

(इति निष्क्रान्तः)

**विदूषकः**—[1]किदं भवदा दाणिं णिम्मक्खिअम् ॥ सम्पदं सिसिरे तावच्छेअरमणिज्जे इमस्सिं पमदवणुद्देसे सुहं अत्ताणं रमइस्ससि ॥

**राजा**—(निश्वस्य) वयस्य, रन्ध्रोपनिपातिनोऽनर्था इति यदुच्यते तदव्यभिचारि वचः ॥ कुतः ?

**मुनिसुताप्रणयस्मृतिरोधिना**
**मम च मुक्तमिदं तमसा मनः ।**

---

1 कृतं भवतेदानीं निर्मक्षिकम् ॥ साम्प्रतं शिशिरे तापच्छेदरमणीयेऽस्मिन् प्रमदवनोद्देशे सुखमात्मानं रमयिष्यसि ॥

---

**वातायन इति ॥** तस्य कञ्चुकिनो नामधेयं ॥

**वयस्येत्यादि ॥** वयस्यशब्देन त्वमेव प्रकृतदुःखप्रतीकारहेतुर्नान्य इति भावः ॥ तदुक्तं—"समानशीलव्यसनो गुह्याख्यानैकभाजनं । विपत्प्रतिक्रियाभिज्ञो वयस्यः परिकीर्तित"इति ॥ रन्ध्रे छिद्रे स्वास्थ्याभावे सति उपनिपतन्तीति ते तथोक्ताः अनर्थाः आपद इति यदुच्यते ॥ लोकेनेति शेषः ॥ तद्वचः तद्वचनं ॥ एकवचनेन सर्वलोकैककण्ठयता व्यज्यते ॥ अव्यभिचारि अविपर्यासि अनुभवप्रमाणेनान्यथा न भवतीत्यर्थः ॥ निश्वस्येति ॥ दुःखपरम्पराजनितश्वासः कण्ठोक्तः ॥ रन्ध्रोपनिपातिनोऽनर्थाइति दैन्यम् ॥

८ तदेवोपपादयति—**मुनिसुतेत्यादिना** ॥ मुनिसुतेत्यनेन शापानुग्रहाभ्यां सद्यएवानिष्टशुभजनककाश्यपाधीनतया तक्षकशिरोरत्नप्राप्तिरिव दुर्लभस्त्रीरत्नप्राप्तिस्सूच्यते ॥ तादृश्याः प्रणयः गाढानुरागः ॥ तस्य स्मृतिः ॥ वस्तुसौन्दर्यबलात् गाढानुभवाच्च सार्वकालिकस्मरणं ॥ तद्रोधिना संस्कारपर्यन्तं प्रतिबन्धकेन ॥ तमसा अज्ञानेन ॥ इदं यन्मनः तया प्रतिबोध्यमानमपि कृतकार्यस्मरणाभावात् स्मरणरहितं ॥ तादृगिदं मन इति तस्मिन्निन्दा व्यज्यते ॥ मुक्तं परित्यक्तं ॥ तदा प्रणयविशेषकृतसम्भोगादिविविधक्रियाः स्मर्यंते

---

वातायनेति कञ्चुकिनाम । नियोगमधिकारम् । कृतं भवता निर्मक्षिकम् । सांम्प्रतं शिशिरातपच्छेदरमणीये । नाप्यत्यन्तं शिशिरं नाप्यातपः । अस्मिन्प्रमदवनोद्देश आत्मानं रमयिष्यसि । रन्ध्रोपनिपातिनः 'छिद्रेष्वनर्था बहुलीभवन्ति' इत्युक्तेः ॥

**मुनीति ॥** मुनिसुतायां शकुन्तलायां । राज्ञो मुनिसुतात्वेन प्रत्यभिज्ञानात्तथोक्तिः । यः प्रणयः प्रेमा तस्य स्मृतिस्तस्या रोधिना तमसा मोहेनेदं मम मनो मुक्तम् ।

मनसिजेन सखे प्रहरिष्यता
धनुषि चूतशरश्च निवेशितः ॥ ८

विदूषकः—[1]चिट्ठ दाव ॥ इमिणा दण्डकट्ठेण कन्दप्पवाहिं णा (सइ-स्सम्) सेमि ॥ (इति दण्डमुद्यम्य चूताङ्कुरं पातयितुमिच्छति)

राजा—(सस्मितं) भवतु ॥ दृष्टं ब्रह्मवर्चसम् ॥ सखे कोपविष्टः प्रियायाः किञ्चिदनुकारिणीषु लतासु दृष्टिं विलोभयामि ?

विदूषकः—[2]णं आसण्णपरिचारिआ चउरिआ भवदा सन्दिट्ठा

1 तिष्ठ तावत् ॥ अनेन दण्डकाष्ठेन कन्दर्पव्याधिं नाशयामि ॥

2 नन्वासन्नपरिचारिका चतुरिका भवता सन्दिष्टा "माधवीमण्डपे इमां वेळामतिवाह-

इति भावः ॥ अतएव प्रहरिष्यता मनसिजेन सदा सन्निहितेनेत्यर्थः ॥ अनेन मदनस्य प्राबल्यमुक्तम् ॥ चूतशरश्च निवेशित इति अमोघास्त्ररूपत्वेनातिशय उक्तः ॥ धनुषि गोप्य-भावेऽपि प्रयोक्तुः प्रयोगार्हायुधविशेषभूतचापे निवेशितः स्थापितः ॥ परमोद्दीपकोद्यान-चूतकलिकादर्शनाच्चरमावस्थैव भविष्यतीति भावः ॥

चिट्ठेत्यादि ॥ पूर्वं वयस्यशब्दप्रयोगेण त्वमेव मदनजनितप्रकृतदुःखनिरसन-करणकुशलइति राजवचनस्य दण्डकाष्ठप्रहारेण विनान्यदुपायान्तरं न जानामीत्युत्तरं दत्तमिति भावः ॥ (साहित्यटीका) कन्दर्पव्याधमिति मदनस्य किरातोपमानेन निर्दयत्व-मुच्यते ॥

भवत्वित्यङ्गीकारे ॥ ब्रह्मवर्चसं ब्रह्मतेजोविशेषः ॥ दृष्टं—"इदं ब्राह्ममिदं क्षात्त्रं शापादपि शरादपि" इति न्यायेन अनुभूतम् ॥ (साहित्यटीका) ब्रह्मवर्चसं वसिष्ठादीनामिव तेजः दृष्टम् ॥ भवतु तथा कुर्वित्यर्थः ॥

सखे इत्यादि ॥ अनुकारिणीषु लतास्वित्यनेन विरहिजनविनोदस्थानमुक्तम् ॥ तदुक्तं—विरहिणां चत्वारि विनोदस्थानानि—"तत्सादृश्यं तत्प्रतिकृतिस्तदङ्गसंस्पृग्वात-स्तत्स्वप्नश्च "इति ॥

प्रहरिष्यता मनसिजेन कन्दर्पेण धनुषि चूतशरो निवेशितश्च । मम तद्वियोगो वसन्तकालश्च प्रादुरभूदित्यर्थः । चावेककालत्वं द्योतयतः । समुच्चयालङ्कारः । भोजेन तु 'अदृष्टादपि स्मरणे स्मरणालङ्कारः' इत्युक्त्वा तदलङ्कारः इदमुदाहृतम् । अनुप्रासश्च । द्रुतविलम्बितं वृत्तम् । तिष्ठ तावत् । अनेन दण्डकाष्ठेन कन्दर्पव्याधिं नाशयामि । कन्दर्परूपो व्याधिर्यस्मादिति कन्दर्पव्याधिशब्देन चूताङ्कुर उक्त इति ज्ञेयम् । नन्वासन्ना परिचारिका चतुरिका भवता सन्दिष्टा । परिचारिकालक्षणं मातृगुप्ताचार्यैरुक्तम्—"संवाहने च गन्धे च तथा चैव प्रसाधने । तथाभरणसंयोगमाल्यसङ्ग्रथनेषु च ॥ विज्ञेया नामतः सा तु नृपतेः परिचारिका"॥

"माहवी मण्डवे इमं वेळं अदिवाहइस्सम् ॥ तहिं मे चित्त फळ (अगदं) ए सहत्थळिहिदं तत्तहोदीए सउन्दळाए पडिकिदिं आणहे" त्ति ॥

**राजा**—ईदृशं हृदयविनोदस्थानम्! तमेव मार्गमादेशय ॥

**विदूषकः**—[1]इदो इदो भवम् ॥

(राजा परिक्रामति सानुमती अनुगच्छाति)

**विदूषकः**—[2]एसो मणिसिळापट्ट(अ)सणाहो माहवीमण्डओ उवआररमणिज्जदाए णिस्संसअं साअदेण विअ णो पडिच्छइ ॥ तापविसिअ णिसीददु भवम् ॥ (उभौ प्रवेशं रूपयित्वोपविष्टौ)

**सानुमती**—[3]ळदा (संसिदा) सण्णिहिदा दक्खिस्सं दाव सहीए पडिकिदिम् ॥ तदो से भट्टिणो बहुमुहं अणुराअं णिवेदइस्सम् ॥

(इति तथा कृत्वा स्थिता)

**राजा**—सखे! सर्वमिदानीं स्मरामि शकुन्तलायाः प्रथमवृत्तान्तम् ॥ कथितवानस्मि भवते च ॥ स भवान् प्रत्यादेशवेळायां मत्समीपमुपगतो नासीत् ॥ पूर्वमपि न त्वया कदाचित्सुकथासु संकीर्तितं तत्रभवत्या नाम ॥ किम (कच्चिद) हमिव विस्मृतवानसि त्वमपि ?

---

यिष्ये ॥ तत्र मम चित्रफल (कगतां) के स्वहस्तलिखितां तत्रभवत्याश्शकुन्तलायाः प्रतिकृतिमानय" इति ॥

1 इत इतो भवान् ॥

2 एष मणिशिलापट्ट (क) सनाथो माधवीमण्डप उपचाररमणीयतया निस्संशयं स्वागतेनेव नौ प्रतीच्छति ॥ तस्मात्प्रविश्य निषीदतु भवान् ॥

3 लता (संश्रिता) सन्निहिता द्रक्ष्यामि तावत्सख्याः प्रतिकृतिम् ॥ ततोऽस्यै भर्तुर्बहुमुखमनुरागं निवेदयिष्यामि ॥

---

इति । माधवीमण्डपे वासन्तीमण्डप इमां वेलामतिवाहयिष्ये । तत्र मे चित्रफलकगतां स्वहस्तलिखितां तत्रभवत्याः शकुन्तलायाः प्रतिकृतिमानयेति । ईदृशं हृदयविनोदनस्थानमिति प्रश्नः । तत्तस्मात्तमेव मार्गं माधवीलतामण्डपमार्गमादेशय । इत इतो भवान् एष मणिशिलापट्टकसनाथो माधवीलतामण्डप उपहारः । पुष्पोपहारस्तेन रमणीयता तया निःसंशयं स्वागतेनेव नौ आवां प्रतीच्छति । तत्प्रविश्य निषीदतु भवान् । लतासंश्रिता द्रक्ष्यामि तावत्सख्याः प्रतिकृतिम् । ततस्तस्या भर्तुर्बहुमुखमनेकप्रकारमनुरागं निवेदयिष्यामि । इदानीं शकुन्तलायाः सर्वं प्रथमवृत्तान्तं स्मरामीति सम्बन्धः । प्रत्यादेशवेलायां निराकरणसमये ।

**विदूषकः**—[1]ण विसुमरामि ॥ किन्दु सव्वं कहिअ अवसाणे तुए परिहासविअप्पो एसो ण भूदत्थो त्ति आचक्खिदम् ॥ मए वि मिप्पिण्डबुद्धिणा तह एव्व गहीदम् ॥ अहवा भविदव्वदा बळवई ॥

**सानुमती**—[2]एव्वं एदम् ॥

**राजा**—(ध्यात्वा) सखे! परित्रायस्व माम् ॥

**विदूषकः**—[3]भो किं एदं? अणुववण्णं खु ईरिसं तुइ ॥ कदावि सप्पुरुसा सोअ (वत्तव्वा) पत्तप्पाणो ण होन्ति ॥ णं पवादेवि णिक्कम्पा गिरिणो ॥

**राजा**—वयस्य! निष्कारणनिराकरणविक्लबायाः प्रियायाः समवस्थामनुस्मृत्य बलवदशरणोऽस्मि ॥ सा हि—

1 न विस्मरामि ॥ किन्तु सर्वं कथयित्वावसाने त्वया परिहासविजल्प एषः न भूतार्थ इत्याख्यातम् ॥ मयापि मृत्पिण्डबुद्धिना तथैव गृहीतम् ॥ अथवा भवितव्यता बलवती ॥

2 एवमेतत् ॥

3 भोः किमेतत्? अनुपपन्नं खल्वीदृशं त्वयि ॥ कदापि सत्पुरुषाश्शोक (वक्तव्या) पात्रात्मानो न भवन्ति ॥ ननु प्रवातेऽपि निष्कम्पा गिरयः ॥

**णविसुमरामीत्यादि ॥** मृत्पिण्डबुद्धिना परच्छलोक्त्यनभिज्ञातया प्लवमानस्थूलबुद्धिनेति यावत् ॥

**वयस्येत्यादि ॥** निष्कारणनिराकरणविक्लबायाः स्वपरित्यागं प्रति यं कञ्चित् स्वकृतापराधं विना निराकरणेन दुःखपरवशायाः प्रियायाः स्वाभिलाषविषयभूतायास्समवस्थां स्वनिमित्तकव्यसनाभिभूतशोच्यदशाम् ॥ अनुचिन्त्य प्रत्यादेशसमयजनिततदीयावस्थाभेदान्मुहुर्मुहुश्चिन्तयित्वा ॥ बलवद्दृढम् ॥ अशरणोऽस्मि जीवितधारणे उपायरहितो भवामि ॥ (साहित्यटीका) निष्कारणनिराकरणविक्लबायाः प्रियाया इत्यनेन तस्यास्साकूतावलोकन मन्दगमनादीनामनुभूतत्वात् स्मरणम् ॥

न विस्मरामि । किं तु सर्वं कथयित्वाऽवसाने पुनः त्वया 'परिहासविजल्प एष न भूतार्थः सत्यार्थ' इति । 'बृत्ते क्ष्मादावृते भूतम्' इत्यमरः । आख्यातम् । मयापि मृत्पिण्डबुद्धिना तथैव गृहीतम् । अथवा भवितव्यता खलु बलवती । एवमेवैतत् । भोः । किमेतत् । अनौचित्यमित्यर्थः । अनुपपन्नं खल्वीदृशं त्वयि सर्वदा धीरे राज्ञि स्वयं दुष्यन्ते । कदापि सत्पुरुषाः शोकवक्तव्या न भवन्ति । शोके जातेऽन्येन वक्तव्या न भवन्तीत्यर्थः । अप्रस्तुतप्रशंसा । तत्र दृष्टान्तमाह—ननु प्रवातेऽप्यतिशयितवातेऽपि निष्कम्पा गिरयः । निराकरणेन विक्लबाया विह्वलायाः । बलवदधिकम् ॥

इतः प्रत्यादेशात्स्वजनमनुगन्तुं व्यवसिता
*तत(मुहु)स्तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।
पुनर्दृष्टिं बाष्पप्रसरकलुषामर्पितवती
मयि क्रूरे यत्तत्सविषमिव शल्यं दहति माम् ॥ ९

९ इत इति ॥ इतः स्वस्मात् प्रत्यादेशात् किमिदमुपन्यस्तं व्यपदेशमाविलयितुमित्यादिवाक्यैर्न्यक्कारं प्राप्य ॥ ल्यब्लोपे पञ्चमी ॥ स्वस्मात् प्रत्यादेशादिति वक्तव्ये इत इत्यनेन तादृक्छकुन्तलापरित्यागेनात्मनिन्दा व्यज्यते ॥ अतस्तदनभिधानमिति भावः ॥ स्वजनमनुगन्तुं व्यवसितेति ॥ स्वजनपदेन स्वजनप्रतियोगिशत्रुभूते स्वस्मिन् शकुन्तलायाः— "शत्रुः किं न वदेदसत्" इति न्यायेन बहुपारुष्यवाक्यानुभवस्सूच्यते ॥ अनुगन्तुम् ॥ व्यवसिता उद्युक्ता ॥ न त्वनुगता ॥ गमनव्यवसायमात्रकथनेन तादृक्प्रत्यादेशदशायामपि स्वस्मिन् शकुन्तलाया भर्तृत्वापरित्याज्यबुद्धिस्सूच्यते ॥ ततः पश्चात् ॥ गुरुशिष्ये ॥ "आः पुरोभागि"नीत्यादिना "पितुरुत्पथया त्वये"त्यादिना च तिष्ठेत्युच्चैर्वदति सति मृदुभाषणार्हस्वजनभावं विहाय विपरीतपरुषवाक्यमालपति सति ॥ गुरुसम इत्यनेन हितवचनप्रदानात्तद्वाचनस्यानुल्लङ्घनीयता प्रकाश्यते ॥ पुनः ॥ प्रतिकूले तव दास्यमपि क्षममिति कथितगुरुशिष्यवचनं प्रमाणीकृत्य पश्चादपीतियावत् ॥ क्रूरे कृतकार्यस्मरणाभावेन स्वनिमित्तकव्यसनाभिभूतजनविषयकदयाकरणाभावाद्दारुणे ॥ मयीति ॥ "भर्ता रक्षति यौवन" इति न्यायेन सकलभोगानुभवकारणभूते मयीति यावत् ॥ दृष्टिमित्यनेन ॥ एवमादिभिरात्मकार्यनिर्वर्तिनीनां योषितामित्यादिवाक्यैस्तद्वचस्यप्रामाण्यारोपात् पुनर्दृष्ट्यर्पणमुक्तम् ॥ एकवचनेन पौरवकुलानुचितकृतघ्नतां करोषीति मय्येकदृष्ट्यर्पणम् ॥ त्वां परित्यज्य गमिष्यतीति भिया गुरुशिष्ये एकदृष्ट्यर्पणमिति भावः ॥ बाष्पप्रसरकलुषां अकृत्रिमदुःखपरम्पराजनितबाष्पनिर्गमाविलां अर्पितवतीति यत् । तत् सविषमिव विषलिप्तमिव ॥ विषं यथा रसादिशुक्रपर्यन्तेषु धातुषु प्रसर्पन्नाशु मारकं व्यवायिविकाषिगुणद्वययोगाद्विकारः प्रत्यङ्गव्यापी भवति तद्वदिति भावः ॥ तदुक्तम्—"व्यवायी देहमखिलं व्याप्य पाकाय कल्पते । विकाषी विकषन् धातून् सन्धिबन्धान्विमुञ्चति" इति ॥ शल्यं शरः ॥ "शल्यं शङ्कौ शरे वंश" इति विश्वः ॥ विषलिप्तबाणविद्धस्य यादृशस्सर्वावयवसन्तापस्तादृशस्स्वस्य भवतीति भावः ॥ यदाह—"कार्श्यं तु प्रथमे वेगे द्वितीये वेपथुं तथा । दाहं तृतीये हिक्कां तु चतुर्थे सम्प्रयोजये" दिति ॥

साहित्यटीका ॥ इतः प्रत्यादेशात् मम कलत्रं न भवसीति मयोच्यमाना सती स्वस्मान्न्यक्कारमधिगम्य ॥ भर्तृविमानितायाः स्त्रियाः पितृकुलमेव शरणमिति धिया

इत इति ॥ अनुगन्तुं व्यवसिता प्रयत्नं कुर्वाणा मुहुरनन्तरमुच्चैस्तिष्ठेति गुरोः पितुः शिष्यस्तस्मिन्गुरुसमे कण्वसमे वदति सति पुनरनन्तरं बाष्पस्याश्रुणः प्रसर आधिक्यं तेन कलुषामाविलां दृष्टिं । क्रूरे कठिने । इदं व्यङ्ग्यावकाशदानाय । यथा—'तद्गेहं नतभित्तिमन्दिरम्' इत्यादौ । मयि निर्घृणहृदये परोपकारानिरते तादृशनिरुपाधिवञ्चकेऽलीकधर्म-

* "स्थिता तिष्ठेत्युच्चै" रिति पाठान्तरम् ॥

**सानुमती**—[1]अम्हो! ईरिसी सकज्जपरदा णाम ॥ इमस्स सन्दावेण अहं रमामि ॥

**विदूषकः**—[2]हा, अत्थि मे तक्को, केणवि आआसचारिणा तत्तहोदी-अवणीदेत्ति ॥

**राजा**—कः पतिदेवतामन्यः परा(मर्ष्टु)मृष्टुमुत्स(हेत)हते ? मेनका किल तव सख्या जन्मप्रतिष्ठेति श्रुतवानास्मि ॥ तत्सहचारिणीभिस्तां हृतां मे हृदयमाशङ्कते ॥

**सानुमती**—[3]सम्मोहो खु विम्हअणिज्जो ॥ ण प्पडिबोहो ॥

---

1 अहो! ईदृशी स्वकार्यपरता नाम ॥ अस्य सन्तापेनाहं रमे ॥
2 हा। अस्ति मे तर्कः। केनाप्याकाशचारिणा तत्रभवत्यपनीतेति ॥
3 सम्मोहः खलु विस्मयनीयो न प्रतिबोधः ॥

---

स्वजनमनुगन्तुं व्यवसितोद्युक्ता॥ गुरुसमे पितृसदृशे गुरुशिष्ये ॥ ततस्तत्रैव राजनिकट एवेत्यर्थः॥ "यदि यथा वदति क्षितिप" इत्यादिना "आः पुरोभागिनि" इत्यादिना च। तिष्ठेत्युच्चैर्वदति सति॥ गुरुसमइत्यनेन शिष्यवचनस्य करणीयत्वमुच्यते ॥ पुनः पश्चात् बाष्पप्रसरकलुषामुभयत्र न्यक्कारात्परम्पराजनितदुःखेनाप्रतिहतनिस्सरणबाष्पेणाविलां दृष्टिम्॥ क्रूरे कृतकार्यविस्मरणेन दारुणचित्ते ॥ मयीत्यनेन रम्यवस्तुन्यक्कारेणात्मनोऽव-माननं सूच्यते॥ यत् दृष्टेरर्पणं तत्सविषं झटिति ईप्सितसिद्ध्यर्थं विषकल्पम् बाष्पं न भवति ॥ विषमेवेत्यर्थः ॥ शल्यमिव मां दहति भस्मीभावमन्तरेणापि मां ज्वलयति॥ जीवितविषये निराशं करोतीत्यर्थः॥ दृष्टिमित्येकवचनेन दृष्टिद्वयार्पणे सति क्षणमपि जीवितुं न शक्यत इति द्योत्यते॥

---

कञ्चुक इत्यर्थान्तरसंक्रमितवाच्यम्। अर्पितवती यत्तन्मां दहति। अत्र दृष्टेर्दाहकत्वा-सम्भवान्मुख्यार्थबाधे कार्यकारणसम्बन्धात्तापं लक्ष्यस्तदतिशयं व्यञ्जयतीति दहतिपदम-त्यन्ततिरस्कृतवाच्यम्। किमिव। सविषं विषाक्तं शल्यमिव। 'शल्यं शङ्कौ शरे वंशे कम्बिकायां च तोमरे' इति विश्वः। उपमानुप्रासौ। तादृशदृष्टेस्तादृशेऽर्पणात्समं च। गुरुशिष्ये गुरुसम इत्यत्र कथितपदत्वं न शङ्कनीयम्। तात्पर्यभेदेन लाटानुप्रासार्थमेव तथा प्रयुक्तत्वात्। उत्तरत्र पदे वचनस्याकारित्वभयकारणत्वद्योतनादितात्पर्यमवगन्तव्यम्। शिखरिणी वृत्तम्। अम्महे आश्चर्ये। ईदृशी स्वकार्यपरतेत्यर्थान्तरन्यासः। अस्य सन्तापेनाहं रमे मम सन्तोष इत्यर्थः॥ सन्तापे सन्तोष इति विषमम्। एतद्वाक्यार्थसमर्थकः पूर्वोक्तोऽ-र्थान्तरन्यासः। यथा यथास्य तापस्तथा तथा शकुन्तलानयनोपायं प्रति प्रयत्नवान्भविष्य-तीत्याशयः। अस्ति मे तर्कः। केनापि तत्रभवत्याकाशचारिणा नीतेति। पतिदेवतां पतिव्रतां परामष्टुं स्प्रष्टुम्। जन्मप्रतिष्ठा जन्मस्थानम्। 'प्रतिष्ठा स्थानमात्रके' इति विश्वः। संमोहः खलु विस्मयनीयोऽस्वभावत्वात्। न प्रतिबोधः। स्वाभाव्यात्तस्येत्यर्थः। यद्येवमस्ति

**विदूषकः**—[1]जइ एव्वं, अत्थि समाअमो कालेण तत्तहोदीए ॥

**राजा**—कथमिव ?

**विदूषकः**—[2]ण खु मादापिदरा भत्तुविओअदुक्खिदं दुहिदरं चिरं दक्खिदुं पारेंति ॥

**राजा**—वयस्य !

स्वप्नो नु ! माया नु ! मतिभ्रमो नु !
क्लिष्टं नु ! तावत्फलमेव पुण्यम् ।

---

1 यद्येवम् । अस्ति समागमः कालेन तत्रभवत्याः ॥
2 न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं चिरं द्रष्टुं पारयतः ॥

---

१० **स्वप्नइत्यादि ॥** तदित्यनेन पञ्चमाङ्कप्रतिपादितं शकुन्तलादर्शनसंभाषणादिकं परामृश्यते ॥ तद्दर्शनादिकम् ॥ स्वप्नः सुप्तिदशायामनुभूतवरयुवतिदर्शनसम्भाषणादिज्ञानं;. न तु जाग्रदवस्थायां साक्षाद्बुद्धिपूर्वकानुभूतज्ञानम् ॥ नु वितर्के ॥ यथा स्वप्ने तथ्यमिवानुभूतं जाग्रदवस्थायां न दृश्यते तद्वदित्यर्थः ॥ माया ऐन्द्रजालिकं यथा यः कश्चिदैन्द्रजालिकविद्यानिपुणः वरयुवतिदर्शनसम्भाषणादिकमुत्पाद्य तथ्यमिवानुभावयति; पुनस्तस्मिन् गते सति दर्शनादिकमप्यस्तङ्गतमेव भवति; तद्वदित्यर्थः ॥ मतिभ्रमः मिथ्याध्यवसायः ॥ यथा आदर्शप्रतिबिम्बितवस्तुनि तत्वबुद्ध्या प्रवृत्त्यध्यवसायस्तद्वत् ॥ चिरपरिचयादवज्ञा भवतीति न्यायेन आदर्शभूतान्तःपुरस्त्रीषु वैमनस्यात्तास्वारोपितस्त्रीरत्नान्तरदर्शनाद्यनुभवज्ञानम् ॥ किमिति भावः ॥ पुण्यं पूर्वजन्मान्तरोपार्जित-

---

खलु समागमः कालेन तत्रभवत्याः पूज्यायाः । न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं द्रष्टुं पारयतः शक्नुतः । न खल्विति सम्बन्धः ॥

**स्वप्न इति ॥** तच्छकुन्तलालक्षणं वस्त्वसन्निवृत्त्यै पुनर्विवर्तनाभावाय । अनेनोत्कण्ठातिशयो व्यज्यते । अतीतं गतम् । तव स्वप्नादिभिश्चतुर्भिर्वितर्कैरत्यन्तासम्भावनीयदर्शनीयत्वं व्यज्यते । तव 'अदृष्टमप्यर्थमदृष्टवैभवात्करोति सुप्तिर्जनदर्शनातिथिम्' इत्युक्तेः । स्वप्ने सम्भाव्यत एतदिति स्वप्नो न्विति पूर्ववितर्कः । स्वप्नश्चेत्स्याज्जाग्रदवस्थायां नानुभूयत इत्यत आह—माया न्विति । मन्त्रतन्त्राभ्यामसतः प्रकटनं माया तस्याः कपटघटितत्वाद्विषयसत्त्वाभाव इति भावः । स्यादेवं यद्यधिष्ठानं न प्रतीतं स्यादत आह—मतिभ्रमो न्विति । तेनान्याधिष्ठाने शकुन्तलाभ्रम इत्यर्थः । स्यादेवं यदि व्यवहारक्षमत्वं न स्यादत आह—तावत्फलमत एव क्लिष्टं पुण्यं न्विति । यावान्व्यवहारः सम्भाषणादिर्जातस्तावदेव फलं यस्य तत्क्लिष्टमत्यल्पम् । तादृशः कश्चिदत्युत्कृष्टो धर्मः पूर्वजननेऽत्यल्प

असन्निवृत्त्यै तदतीतमे(ते)व
मनोरथानामतटाः प्रवाहाः ॥ १०

विदूषकः—[1]मा एव्वं. णं अङ्गुलीअअं एव्व णिदंसणं अवस्सम्भाविणो अत्थस्स अचिन्तणिज्जो समाअमो होदित्ति ॥

राजा—(अङ्गुलीयकं विलोक्य) अये, इदं तदसुलभस्थानभ्रंशि शोचनीयम् ॥

तव सुचरितमङ्गुलीय नूनं
प्रतनु ममेव विभाव्यते फलेन ।

---

1 मैवं । नन्वङ्गुळीयकमेव निदर्शनमवश्यम्भाविनोऽर्थस्य अचिन्तनीयस्समागमो भवतीति ॥

---

सुकृतविशेषः ॥ तावत्फलमेव तद्दर्शनमात्रफलजनकमेव ॥ क्लिष्टं परिसमाप्तम् ॥ असन्निवृत्त्यै पुनरावृत्त्यै तद्दर्शनमतीतमेव अतिक्रान्तमेव ॥ मनोरथानां इतःपरं तत्प्राप्तौ सत्यां तदीयप्रत्यादेशदुःखनिरसनचुम्बनालिङ्गनसम्भाषणरहस्यश्रवणपुष्पापचयाद्याकांक्षाविशेषाणां प्रवाहाः स्रोतांसि ॥ परंपरेति यावत् अतटाः स्ववेगप्रतिबन्धकसेतुराहित्येन निरर्गळाभवन्तीत्यर्थः ॥

अये इत्यादि ॥

११ तवेति ॥ सुचरितं सुकृतविशेषः ॥ प्रतनु अत्यल्पम् ॥ फलेन प्रयोजनेन ॥

---

एवाचरितः । यस्य तादृगल्पं फलमित्यर्थः । सन्देहालङ्कारः । अतःपरमेते त्वयोच्यमाना मया वा आशास्यमाना मनोरथाः । नामेत्यलीके । अलीका मनोरथा इत्यर्थः । ते तटप्रपाता इति भिन्नरूपकम् । यथा वर्षासमये गङ्गादेस्तटा ओघेन पीड्यमाना अहमहमिकया पतन्ति । एकः पतति तदुपर्यन्यस्तदुपरीतरः । एवं मनोरथानामेके विलीयन्तेऽन्य उत्पद्यन्ते तेऽपि विलीयन्ते तदितरे उत्पद्यन्त इत्यर्थः । 'प्रपातस्त्वतटो भृगुः' इति कोशात्पुनरुक्तवदाभासः । नुमानुमेति तमेमेतेति छेकवृत्त्यनुप्रासौ । द्वादश्युपजातिरिन्द्रवज्रोपेन्द्रवज्रयोः । मैवम् । नन्वङ्गुलीयकमेव निदर्शनमुदाहरणम् । अवश्यंभाव्यचिन्तनीयः समागमो भवतीति । विदूषकः—'जइ एव्वम्' इत्यादिनैतदन्तेन रोचना नामाङ्गमुपक्षिप्तम् । तल्लक्षणं दशरूपके—'सिद्धामन्त्रणतो भाविदर्शिका स्यात्प्ररोचना' इति । न सुलभमसुलभं तच्च तत्स्थानं च तस्माद्भ्रंशोऽस्यास्ति तत् । शकुन्तलाङ्गुलिभ्रंशीत्यर्थः । अतएव शोचनीयम् ॥

तवेति ॥ हे अङ्गुलीय, नूनं निश्चितं तव सुचरितं पुण्यं ममेव प्रतन्वल्पं विभाव्यते ज्ञायते । अतीन्द्रियस्य धर्मस्य प्रतनुत्वं कथं ज्ञातुं शक्यत इत्यत आह—फलेनेति । अत्यल्पफलत्वेन हेतुनेत्यर्थः । ममेवेति सहोपमा । तेन ममापि पुण्यमल्पं तवापीत्यर्थः । तस्य स्वस्याल्पपुण्यत्वे हेतुः पूर्वं दर्शितः । अस्याल्पपुण्यत्वे हेतुमाह—अरुणेति । यस्मात्तस्या विजितत्रिभुवनसुन्दर्या मयि निर्व्याजमनुरक्तायाः पुरः परिस्फुरन्त्या इवाङ्गुलीषु पुरुषाङ्गुलीयस्य स्थूलत्वात्कदाचित्कनिष्ठिकायां तत्र शिथिलं सदन्या-

अरुणनखमनोहरासु तस्या-
श्च्युतमसि लब्धपदं यदङ्गुलीषु ॥ ११

सानुमती—[1]जइ अण्णहत्थगदं भवे सच्चं एव्व शोअणिज्जं भवे ॥

विदूषकः—[2]भो ! इअं णाममुद्दा केण उग्घादेण तत्तहोदीए हत्थसंसग्गं पाविदा ?

सानुमती—[3]मम वि कोदूहळेण आकारिदो एसो ॥

---

1 यद्यन्यहस्तगतं भवेत्सत्यमेव शोचनीयं भवेत् ॥

2 भोः ! इयं नाममुद्रा केनोद्धातेन तत्रभवत्या हस्तसंसर्गं प्रापिता ?

3 ममापि कौतूहलेनाकारितएषः ॥

---

अरुणाश्च नखैर्मनोहराश्च तासु ॥ अङ्गुलीष्विति बहुवचनेन स्वविश्लेषानन्तरं शकुन्तलायाः प्रतिदिनं शरीरकार्श्येनोत्तरोत्तरस्थूलप्रत्यङ्गुलिसमर्पणमिति भावः ॥

उद्धातेन उद्योगेनेत्यर्थः ॥

आकारितः आहूतः प्रेरित इत्यर्थः ॥

---

ङ्गुलौ तत्रापि तथाविधमितराङ्गुल्यामिति बहुवचनाभिप्रायः। प्रेमातिशयेन वा सर्वाङ्गस्पृष्टिकेव सर्वाङ्गुलीषु निक्षेपः । यद्वा विरहातिकृशतया मुकुलीकृतासु पञ्चस्वङ्गुलीषु विन्यासाद्बहुवचनोपपत्तिः। तथा चाभियुक्ताः—'तस्याः किञ्चित्सुभग तदभूत्तानवं त्वद्वियोगाद्येनाकस्माद्वलयपदवीमङ्गुलीयं प्रयाति' इति। लब्धपदं महता भाग्योदयेन यथाकथञ्चित्प्राप्तस्थित्यपि सच्च्युतमसि। कीदृशीष्वङ्गुलीषु । अरुणा नखा यासु ताः। नखेति तलस्याप्युपलक्षणम् । ताश्च ता मनोहराश्च नातिस्थूला नातिकृशा नातिह्रस्वा नातिदीर्घा न वक्रा न सरला इत्यर्थः । एतेन स्वयोग्यत्वं ध्वनितम् । उक्तं च सामुद्रे स्त्रीलक्षणे—'नातिह्रस्वा नातिदीर्घा न स्थूला न कृशा अपि। अवक्राः सरला रक्तनखा रक्ततला अपि। कोमलाः सितबिन्द्वाढ्या भङ्गुरा दीप्तिमन्नखाः। तादृगङ्गुलयो यस्याः सा भवेद्राजवल्लभा ॥' इति । अनुमानकाव्यलिङ्गानुप्रासाः । ननु ममेवेतिवत् 'कमलमिव मुखं मनोज्ञमेतत्' इत्यादावपि सहोपमा किं न स्यादिति चेदुच्यते । प्रकृतमुपमेयमप्रकृतमुपमानमिति साधारणी स्थितिः । यत्रोभयमपि प्रकृतमिवशब्दप्रयोगश्च तत्र सहोपमेति रहस्यम्। यथा—'आदाय शेषामिव भर्तुराज्ञाम्' इत्यादावुभयस्यापि प्रकृतत्वेन विधेयत्वात् । अन्यत्र त्वतिशायकत्वेनाप्रकृतस्योपमानस्यानुवाद्यत्वात् । इयं च साधारणधर्मस्य वाच्यत्व एव सम्भवतीत्यपि ज्ञेयम्। पुष्पिताग्रा वृत्तम्। यद्यन्यहस्तगतं भवेत्सत्यं शोचनीयं भवेत्। नाममुद्रा केनोद्धातेन केनोपक्रमेण। 'उद्धातः कथ्यते धीरैः स्खलिते समुपक्रमे' इति धरणिः । तत्रभवत्याः शकुन्तलाया हस्ताभ्याशं हस्तैकक्यं प्रापिता । त्वया तस्यै किमर्थं दत्तेति वचनेऽनौचित्यप्रसङ्गादेतादृगुक्तिः। ममापि। त्वया तस्यै किमर्थं दत्तेति वचनेऽनौचित्यप्रसङ्गादेतादृगुक्तिः। ममापि ,कौतूहलेनाकारित एषः।

**राजा**—श्रूयताम् ॥ तदा स्वनगराय प्रस्थितं मां प्रिया सबाष्पमाह—कियच्चिरेणार्यपुत्रः प्रतिपत्तिं दास्यतीति ॥

**विदूषकः**—[1]तदो तदो ॥

**राजा**—पश्चादिमां नाममुद्रां तदङ्गुलौ निवेशयता मया प्रत्यभिहिता ॥

**एकैकमत्र दिवसे दिवसे मदीयं**
**नामाक्षरं गणय गच्छति यावदन्तम् ।**
**तावत्प्रिये मदवरोधगृहप्रवेशं**
**नेता जनस्तव समीपमुपैष्यतीति ॥** १२

(तच्च दारु(णात्मना)णेन मोहान्मया नानुष्ठितम् )

**सानुमती**—[2]रमणिओ खु अवही विहिणा विसंवाइदो ॥

**विदूषकः**—[3]अह कहं धीवळखण्डिअस्स लोहिअमच्छस्स उदरब्भन्तरे आसि ?

---

1 ततस्ततः ॥
2 रमणीयः खल्ववधिर्विधिना विसंवादितः ॥
3 अथ कथं धीवरखण्डितस्य लोहितमत्स्यस्योदराभ्यन्तरे आसीत् ?

---

प्रतिपत्तिं प्राप्तिम् ॥

१२ **एकैकमित्यादि** ॥ अत्र नाममुद्रायाम् ॥ नामाक्षरं दुष्यन्तेत्यक्षरत्रयम् ॥ अवरोधगृहप्रवेशं शुद्धान्तगृहप्रवेशम् ॥

---

आकारित इवेति गम्योत्प्रेक्षा । ममाप्येतच्छ्रवणे कौतूहलमासीत्, तदेवानेन पृष्टमिति भावः । कियच्चिरेण कियता विलम्बेन । प्रतिपत्तिम् । वार्तामिति यावत् । 'प्रतिपत्तिः प्रवृत्तौ स्यात्' इति धरणिः ॥

**एकैकमिति** ॥ अत्र मुद्रिकायां दिवसे दिवसे मदीयमेकैकं नामाक्षरं गणय । यावत्तद्गणनमन्तं गच्छति । यावद्गणनसमाप्तिरित्यर्थः । त्रिचतुरैर्दिनैरिति भावः । हे प्रिये, ममावरोधगृहमन्तःपुरं तत्र प्रवेशस्तं नेता प्रापयिता जनस्तव समीपमुपैष्यतीति । मयापि प्रत्यभिहितेति सम्बन्धः । छेकवृत्त्यनुप्रासौ काव्यलिङ्गं च । वसन्ततिलका वृत्तम् । मया विस्मृततादृशस्नेहो दुर्जनधुरन्धरेणेत्यादि व्यज्यते । दारुणात्मनेति तादृशव्यङ्ग्यावकाशदानाय । रमणीयः खल्ववधिर्विधिना दैवेन शापलक्षणेन च विसंवादितः । कथं धीवरकल्पितस्य कैवर्तखण्डितस्य रोहितमत्स्यस्योदराभ्यन्तर आसीत् ।

**राजा**—शचीतीर्थे वन्दमानायास्तव सख्या हस्ताद्गङ्गास्रोतसि परिभ्रष्टम् ॥

**विदूषकः**—[1]जुज्जइ जुज्जइ ॥

**सानुमती**—[2]तदो तवस्सिणीए सउन्दळाए अधम्मभीरुणो इमस्स राएसिणो परिणअसन्देहो ॥ अहवा कुदो ईरिसो अनुराओ अहिण्णाणं अवेक्खदि ? कहंविअ एदं ?

**राजा**—उपालप्स्ये तावदिदमङ्गुलीयकम् ॥

**विदूषकः**—(आत्मगतम्) [3]गहीदो अणेण पन्था उम्मत्ताणम् ॥

**राजा**—

**कथं नु तं बन्धुरकोमलाङ्गुलिं**
**करं विहायासि निमग्नमम्भसि ?**

---

1 युज्यते युज्यते ॥

2 ततस्तपस्विन्यां शकुन्तलायामधर्मभीरोरस्य राजर्षेः परिणयसन्देहः ॥ अथवा कुत ईदृशोऽनुरागोऽभिज्ञानमपेक्षते ? कथमिवैतत् ?

3 गृहीतोऽनेन पन्था उन्मत्तानाम् ॥

---

**१३ कथं न्वित्यादि ॥** अम्भसि ॥ कथं कस्मात्कारणात् ॥ न्विति प्रश्ने ॥ बन्धुरं कोकिलादिभिरनुपहततयाऽखण्डितसुन्दरम् ॥ कोमलं नवीनतया मृदु ॥ तेन रागवत्ता सूच्यते ॥ तादृक्पल्लवमिव स्पृहणीयाङ्गुलिर्यस्य स तथोक्तः ॥ कोमलपदेनावस्थिति-

---

शचीतीर्थमिति गङ्गायां शक्रावतारापरपर्यायस्तीर्थविशेष उच्यते । युज्यते । अतएवाङ्गुलीयकादर्शनादेव तपस्विन्या अनुकम्पार्हायाः शकुन्तलाया अधर्मभीरोरस्य राजर्षेः परिणये सन्देह आसीत् । अथवेदृशोऽनुरागोऽभिज्ञानमपेक्षते । कथमिवैतत् । शापाज्ञानादस्या ईदृश्युक्तिः । उपालप्स्येऽस्योपालम्भं करिष्ये । अनेनोन्मादः । गृहीतोऽनेन पन्था उन्मत्तानाम् ॥

**कथमिति ॥** न्विति प्रश्ने । बन्धुराः सुन्दराः कोमला अङ्गुलयो यत्र तम् । 'बन्धुरं सुन्दरे रम्ये' इति विश्वः । एतद्विशेषणप्रयोजनमेतत्पूर्वतरपद्ये निरूपितम् । तं रक्तोत्पलच्छविमतिमृदुलं मया वारंवारं स्वहृदयन्यस्तं येनातिप्रीत्या तव धारणं कृतं पुर इव परिस्फुरन्तं करं विहाय त्यक्त्वा । अनेन बुद्धिपूर्वकस्त्याग उक्तो न मोहाद्भ्रंशः । कथमम्भसि निमग्नमसि । त्वं त्वलङ्करणं तेन तव दृश्यमेव प्रयोजनं तत्करस्थमपि दृश्यमेव स्थितं सद्यदम्भसि नितरां मग्नमदृश्यत्वं गतमिति कथम् । एवं तत्करत्यागस्तत्राप्यदृश्यत्वगमनमित्युपालम्भद्वयम् । अत्र चेतनव्यवहारारोपात्समासोक्तिः । सा च

अथवा ।

* अचेतनं नाम गुणं न लक्षये
मयैव कस्मादवधीरिता प्रिया ? १३

विदूषकः—(आत्मगतम्) [1]आः ! अहं खु बुहुक्खाए खादिदव्वोम्हि ॥

राजा—अकारणपरित्यागानुशयतप्तहृदयस्तावदनुकम्प्यतामयं जनः पुनर्दर्शनेन ॥

---

1 आः ! अहं खलु बुभुक्षया खादितव्योऽस्मि ॥

---

सुखकरत्वमुक्तम् ॥ अचेतनं रम्यपदार्थपरिग्रहापरिग्रहानभिज्ञहेतुं । गुणम् ॥ पाषाणादेरिव हृदयराहित्यज्ञानाभावादिकं मयैव चेतनरूपेणैव कस्मादवधीरितेति गुणपरित्यागकारणात् अचेतनत्वादिकं न लक्षये न कलये ॥

**आइत्यादि ॥** आः इति पीडायां निपातः (साहित्यटीका) बुभुक्षया शकुन्तलां प्रति रिरंसया ॥ राज्ञ इति शेषः ॥ अहं खलु अहमेव खादितव्यः शकुन्तला दुर्लभा ॥ निकटेऽन्यः कोऽपि न विद्यते ॥ शकुन्तलाधिया मामेव ग्रहीष्यतीति पलायनचिन्ता व्यज्यते ॥

---

गुरुत्वात्स्वाभाविको जलपातस्तत्कर्तृत्वेनोच्यत इति स्वाभाविककृत्रिमयोरभेदाध्यवसायादतिशयोक्तिगर्भा । अथवेति वृत्ताक्षेपालङ्कारः । नामेति प्रसिद्धौ । अचेतनं कर्तृ गुणं सौन्दर्यादिकं प्रेमादिकं च न लक्षयेदित्यर्थान्तरन्यासः । त्वया त्वचेतनत्वादिदं कृतं, मया तु सचेतनेनाप्यत्यनुचितकारिणा त्वां प्रति किं वक्तव्यम् । मयैवेत्येवशब्दार्थः । कस्मात् । अकारणकमित्यर्थः । स्त्रीमात्रं न भवत्यपि तु प्रिया, अवधीरिता तिरस्कृता न तु त्यक्ता, त्यक्तायाः पुनरुपादाने महापुरुषस्यानौचित्यप्रसङ्गात् । अवधीरणाकारणाभावे तदुत्पत्तेर्विभावना । श्रुत्यनुप्रासवृत्त्यनुप्रासयोः सङ्करः । वंशस्थं वृत्तम् । कथं बुभुक्षया खादितव्योऽस्मि । असावुन्मत्तः अतएव विषयान्तरसञ्चाराभावान्मया भोजनार्थं गन्तुमशक्यमिति भावः । अथ चाहं यथा बुभुक्षया भक्षितव्यस्तथायमपि तया भक्षितव्य इत्ययमप्यर्थः । प्रकरणबलाद्बुभुक्षेति स्त्रीलिङ्गनिर्देशाच्च । कस्मादवधीरिता प्रियेत्यत्र प्रियास्मरणात्सङ्कल्पोपनीतां प्रत्याह ॥

**अकारणेति ॥** अकारणं कारणराहित्येन यः परित्यागस्तेनानुशयः पश्चात्तापस्तेन तप्तं हृदयं यस्य सः । अत्र परित्यागश्चेत्कथं कारणाभावः कारणाभावश्चेत्कथं परित्याग इति विरोधो नाशङ्कनीयः । अत्र कारणशब्देन प्रसिद्धं नायिकापराधरूपं गृहीतं तदेव त्यागे कारणं दृष्टचरमिति । अनेन चित्रफलकहस्तायाश्चतुरिकायाः सूचनम् । सूचिताया एवापटीक्षेपेण प्रवेशोऽतित्वरासूचनाय । अपटी जवनिका । 'अपटी काण्डप-

---

* "अचेतनानामगुणं न लक्षय" इति पाठान्तरम् ॥

**चतुरिका**—(प्रविश्य पटाक्षेपेण) [1]इअं चित्तगदा भट्टिणी ॥ (इति चित्रफलकं दर्शयति)

**विदूषकः**—[2]साहु वअस्स साहु ॥ महुरावत्थाणदंसणिज्जो भावाणुप्पवेसो ॥ खलदि विअ मे दिट्ठी णिण्णुण्णदप्पदेसेसु ॥

**सानुमती**—[3]अहो! एसा राएसिणो वट्टिआणिवुणदा ॥ जाणे सही मे अग्गदो वट्टदित्ति ॥

**राजा**—

यद्यत्साधु न चित्रे स्यात्क्रियते तत्तदन्यथा ।

---

1 इयं चित्रगता भट्टिनी ॥

2 साधु वयस्य साधु ॥ मधुरावस्थानदर्शनीयो भावानुप्रवेशः ॥ स्खलतीव मे दृष्टिर्निम्नोन्नतप्रदेशेषु ॥

3 अहो! एषा राजर्षेर्वर्तिकानिपुणता ॥ जाने सखी मेऽग्रतो वर्तत इति ॥

---

१४ **यद्यदित्यादि ॥** यद्यदित्यनेन वीप्सायां जङ्गमस्थावरात्मकचेतनाचेतनद्वयं गृह्यते ॥ तयोर्मध्ये यद्यत्साधु न स्यात् अवयवसमुदायशोभावर्णौज्ज्वल्यादिना दर्शनीयं न भवेत् ॥ तत्तद्वस्तु चित्रे आलेख्यकर्मणि ॥ अन्यथा क्रियते स्थावरजङ्गमात्मकस्य ब्रह्मसृष्टपदार्थस्य स्वभावरमणीया रमणीयतया अन्यथा कर्तुमशक्यत्वात् चित्रस्य तु लेखकभावनापरितोषावधि पुनः परिमृज्य लिखितुं शक्यत्वाच्च साधु क्रियत इत्यर्थः ॥

---

टीका प्रतिसीरा जवनिका तिरस्करिणी' इति हलायुधः । 'इयं चित्रगता भट्टिनी' इत्यनेन यद्राज्ञा पुनर्दर्शनं याचितं तदनया भङ्ग्या कविना सम्पादितम् । अत एव पश्चात् 'चित्रफलकं दर्शयति' इत्युक्तिः । साधु वयस्येति भिन्नं वाक्यम् । मधुरं सुन्दरं यदवस्थानमाकृतिस्तया दर्शनीयो हृद्यो भावानुप्रवेशोऽभ्यन्तरीकरणम् । सुन्दराकारतया भावाविर्भावो रम्यतर इत्यर्थः । स्खलतीव दृष्टिर्निम्नोन्नतप्रदेशेषु । अनेन मधुराकृतित्वमेवोक्तम् । यथा प्रत्यक्षदृष्टायामाकृतौ निम्नोन्नतेषु दृष्टिः स्खलति तथा चित्रेऽपीति महदालेख्यकौशलमिति भावः । किं बहुना सत्यानुप्रवेशं कथालावण्यं कौतूहलं मे जनयति एतदेवानुसन्धायाह सानुमती—अहो इति । अहो आश्चर्ये । एषा राजर्षेर्निपुणता । अहं जाने सखी शकुन्तलाग्रतो मे वर्तत इति । जाने इति सम्बन्धः ॥

**यदिति ॥** चित्रे यद्यत्साधु न स्यात्तत्तदन्यथा क्रियते यद्यपि तथापि तस्या लावण्यं किञ्चिदनिर्वचनीयया च रेखया चित्रार्थं तूलिकाविहितया अन्यथा क्रियते । अथ च शोभाविशेषेणान्वितम् । संमार्ज्य संमार्ज्य भूयो भूयो लिख्यमानमपि शोभां नातिक्रामतीति

तथापि तस्या लावण्यं रेखया किञ्चिदन्वितम् ॥ १४

सानुमती—[1]सरिसं एदं पच्चादावगुरुणो सिणेहस्स अणवलेवस्स अ॥

विदूषकः—[2]भो दाणिं तिण्णिओ तत्तहोदीओ दिस्सन्ति ॥ सव्वाओदंसणिज्जाओ ॥ कदमा एत्थ तत्तहोंदी सउन्दळा ?

सानुमती—[3]अणहिण्णो खु (ईदिसस्सरूवस्स) सहीरूवस्स ॥ मोहदिट्ठी अअं जणो ॥

राजा—त्वं ताव (त्कतमां)त्कां तर्कयसि ?

विदूषकः—[4]तक्केमि, जा एसा सिढिल (केस) बन्धुव्वुत्तकुसुमेण केसन्तेण उब्भिण्णसेअबिन्दुणा वअणेण विसेसदो ओसरिदाहिं बाहाहिं

1 सदृशमेतत्पश्चात्तापगुरोः स्नेहस्यानवलेपस्य च ॥

2 भोः इदानीं तिस्रस्तत्रभवत्यो दृश्यन्ते सर्वा दर्शनीयाः ॥ कतमाऽत्र तत्रभवती शकुन्तला?

3 अनभिज्ञः खलु (ईदृशस्य रूपस्य) सखीरूपस्य ॥ मो (ह)घदृष्टिरयं जनः ॥

4 तर्कयामि । यैषा शिथिल (केश) बन्धोद्वृत्तकुसुमेन केशान्तेनोद्भिन्नस्वेदबिन्दुना वदनेन

वर्तमानव्यपदेशेन सर्वलोकसंवाद उक्तः ॥ तथापि चित्रस्य साधुत्वसम्पादकत्वप्रसिद्धावपि ॥ तस्यास्स्वभावरमणीयायाश्शकुन्तलायाः लावण्यं सर्वावयवसौन्दर्यं रेखया लेखेन किञ्चिदन्वितमीषदेव सङ्गतम् ॥ न तु विद्यमानं समग्रमिति यावत् ॥ तस्याः रूपलावण्यादिकं चित्रेऽपि लिखितुमशक्यमिति भावः ॥ ग्रन्थगौरवभिया योजनान्तरं न क्रियते ॥

तक्केमीत्यादि ॥ बाहुभ्यामुपलक्षितेत्यर्थः ॥

भावः । अथ च शोभया रेखयान्वितमिति विरोधाभासः । लावण्यलक्षणमुक्तं प्राक् । रेखालक्षणं सङ्गीतरत्नाकरे—'शिरोनेत्रकरादीनामङ्गानां मेलने सति । कायस्थितिर्यतो नेत्रहरा रेखा प्रकीर्तिता ॥' इति । सदृशमेतत्पश्चात्तापेन गुरोरधिकस्य प्राप्तस्यैवाधिकत्वम् । स्नेहस्यानवलेपस्य निर्दोषस्य । स्वाभाविकस्येत्यर्थः । भोः, इदानीं तिस्रस्तत्रभवत्यो दृश्यन्ते । सर्वाश्च दर्शनीयाः । कतमा तासां मध्ये तत्रभवती शकुन्तला । अनभिज्ञः खल्वीदृशस्य रूपस्य मोहदृष्टिर्मुग्धदृष्टिरयं जनः । तर्कयामि यैषा शिथिलितकेशबन्धनोद्भ्रान्तकुसुमेन केशान्तेनोद्भिन्नस्वेदबिन्दुना वदनेन विशेषतोऽधिकामपसृताभ्यां नतांसाभ्यां बाहुभ्यां

(उवलक्खिदा) ओसेअसिणद्धतरुणपल्लवस्स चूदपाअवस्स पस्से इसि परिसन्ताविअ आलिहिदा, एसा तत्तहोदीसउन्दला ॥ इअराओ सहीओत्ति ॥

राजा—निपुणो भवान् ॥ अस्त्यत्र मे भावचिह्नम्—

स्विन्नाङ्गुलिविनिवेशो रे(खाप्रा)खोपान्तेषु दृश्यते मलिनः ।
अश्रु च कपोलपतितं लक्ष्यमिदं व(र्ति)र्णिकोच्छ्वासात् ॥ १५

चतुरिके ! अर्धलिखितमेतद्विनोदस्थानं ॥ तस्मात् गच्छ व(र्ति)र्णिकास्तावदानय ॥

---

विशेषतोऽपसृताभ्यां बाहाभ्यां (उपलक्षिता) अवसेकस्निग्धतरुणपल्लवस्य चूतपादपस्य पार्श्वे ईषत्परिश्रान्तेवालिखिता । एषा तत्रभवती शकुन्तला । इतरे सख्याविति ॥

---

**अस्तीत्यादि ॥** भावचिह्नं दर्शनीयानां तिसृणां मध्ये शकुन्तलाज्ञापकं चिह्नमस्ति ॥ चित्रलेखनसमये स्वानुरागालम्बनभूतोत्तमनायिकायास्सर्वावयवरूपलावण्यादिस्मरणजनितसात्विकभावजनितचिह्नमस्तीत्यर्थः ॥ कुतः कस्मात्कारणात् ॥

१५ रेखाप्रान्तेषु अङ्गोपाङ्गप्रत्यङ्गादिविभागज्ञापकतत्तद्वर्णोचितमषीहरितादिरेखापर्यन्तेषु स्विन्नाङ्गुलिविनिवेशः ॥ नायिकास्मरणजनितस्वेदयुक्ताङ्गुलीनां विनिवेशः स्पर्शस्थानं मलिनः प्रसरत्स्वेदजलसम्पर्कवशात् मलीमसो दृश्यते ॥ स्फुटं विभाव्यते । अश्रु च तदीयप्राप्तिदुर्घटत्वप्रत्यादेशादिस्मरणजनितदुःखपरम्पराजनितनेत्रजलं च ॥ वर्णिकोच्छ्वासात् वर्णिकायाःसितासितहरितादिवर्णिकाया उच्छूनत्वाद्धेतोः कपोलपतितं आलेख्यस्यकपोले पतितम् ॥ लक्ष्यं विभाव्यम् ॥ चित्रनिर्माणसमये नेत्रजलप्रादुर्भावेन हस्तशैथिल्यविलम्बेन तत्र किञ्चिद्वर्णाधिक्यं भवति ॥ तस्मादुच्छूनतेति यावत् ॥ वर्तिकोच्छ्वासादित्यपि पाठः ॥

---

भुजाभ्यामवसेकस्निग्धतरुणपल्लवस्य चूतपादपस्य पार्श्वे ईषत्परिश्रान्तेव । अत्र पूर्वं तृतीयान्तत्रयं हेतुत्वेन योज्यम् । आलिखिता सा शकुन्तला । इतरे सख्यौ । भावेन सात्विकभावेन कृतं चिह्नं भावचिह्नम् । मध्यमपदलोपी समासः । 'तावच्चिह्नम्' इति पाठे सुबोधमेव ॥

**स्विन्नेति ॥** स्विन्ना या अङ्गुलयः सात्विकभावात्तासां विनिवेशः स्थितिः । रेखाप्रान्तेषु तत्रैकचित्तपटसंयोगान्मलिनो दृश्यते । मलिनत्वं स्वेदादेव चित्रपटोद्घर्षणात् । कपोलपतितं लिखिताकृतिकपोलप्राप्तमश्रु मम सात्त्विकभावेनोत्पन्नं चेदं वर्तिका चित्रपटे लेपविशेषस्तस्योच्छ्वास उच्छूनता तस्मात् । 'पटलेपे पक्षिभेदे तूलिकायां च वर्तिका' इत्यजयः । अनुमानानुप्रासौ । अनेन हेतुलक्षणं भूषणमुपक्षिप्तम् । तल्लक्षणं तु—'स हेतुरिति निर्दिष्टो यत्साध्यार्थं प्रसाधकम्' इति । वर्तिकां तूलिकाम् ।

**चतुरिका**—[1]अज्ज माढव्व, ओलम्बसु चित्तफलअं, जाव वण्णिआसमुग्गअं गेह्णिअ आअच्छामि ॥

**राजा**—अहमेवैतदवलम्बे ॥

(इति यथोक्तं करोति) (चतुरिका निष्क्रान्ता)

**राजा**—

साक्षात्प्रियामुपगतामपहाय पूर्वं
चित्रार्पितामहमिमां बहु मन्यमानः ।
स्रोतोवहां पथि निकामजलामतीत्य
जातस्सखे प्रणयवान्मृगतृष्णिकायाम् ॥ १६

**विदूषकः**—(आत्मगतं) [2]एसो अत्तभवं णदिं अदिक्कमिअ सच्चंमिअतिह्णिआं संकंतो ॥ (प्रकाशं) भो वअस्स ! अवरं किं एत्थ ले(लि)हिदव्वम् ?

---

1 आर्य माढव्य अवलम्बस्व चित्रफलकम् । यावद्वर्णिकासमुद्गकं गृहीत्वा आगच्छामि ॥

2 एषोऽत्रभवान् नदीमतिक्रम्य सत्यं मृगतृष्णिकां संक्रान्तः ॥ भो वयस्य ! अपरं किमत्र ले(लि)खितव्यम् ?

---

१६ **साक्षादित्यादि** ॥ प्रियां शृङ्गारमनोरथसमुचितविषयभूताम् ॥ इह चित्रफलके ॥ स्रोतोवहां नदीम् ॥ प्रणयवान् याच्ञावान् ॥

---

आर्यं माढव्येति विदूषकसंज्ञा । अवलम्बस्व चित्रफलकं यावदागच्छामि ॥

**साक्षादिति** ॥ पूर्वमव्यवहितसमये । न तु कालान्तरे । अन्यथोपगतामिति प्रकृतिप्रत्ययार्थेनार्थपौनरुक्त्यं स्यात् । केवलं नारीमात्रं न, अपि तु प्रियाम् । साक्षात्प्रत्यक्षेण । 'साक्षात्प्रत्यक्षतुल्ययोः' इत्यमरः । उप समीपे गतां प्राप्ताम् । न त्वाभासमात्रेण न चाश्रुतागमनाम् । अथ च प्रत्यक्षेण प्रियामिति ज्ञातामपहायावगणय्य । न तु त्यक्त्वा । त्यक्तस्य पुनरुपादाने महापुरुषस्यानौचित्यप्रसङ्गात् । पुनरनन्तरं चित्रार्पितां लिखितामिमां पुरतो दृश्यमानां बहु मन्यमान आदरेणावलोकमानः । पथि मार्गे निकामजलां सम्पूर्णोदकां स्रोतोवहां नदीम् । अथच यतो निकामजलामतः स्रोतोवहां प्रवहद्रूपामिति वा योज्यम् । अतीत्यातिक्रम्य मृगतृष्णिकायां मरुमरीचिकायां प्रणयवान्प्रीतियुक्तो जातः । हेतुनिदर्शनाश्रुतिवृत्त्यनुप्रासाः । मुपमपेति मन्यमान इति च्छेकानुप्रासोऽपि । अपहाय बहुमन्यमान इत्यनयोर्निर्हेतुकत्वं नाशङ्कनीयम् । शापस्य तन्मोक्षेण विरहस्य प्रकरणलभ्यत्वात् । वसन्ततिलकावृत्तम् । एषोऽत्रभवान्नदीमतिक्रम्य मृगतृष्णिकां संक्रान्तः । अयमेतस्या

**सानुमती**—[1]असंसअं जो जो पदेसो सहीए अहिरुइदो तंतं आलिहिदुकामो हवे ॥

**राजा**—श्रूयताम् ॥

**कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी**
**पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः ।**
**शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः**
**शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥** कु. सं. ३. ३५ १७

1 असंशयं यो यः प्रदेशः सख्या अभिरुचितः तं तमालिखितुकामो भवेत्?

१७ **कार्येत्यादि** ॥ सैकतलीनहंसमिथुना सैकतेषु विविधक्रीडोचितपुलिनेषु ॥ लीनानि क्रीडार्थं संसक्तानि हंसमिथुनानि इतरपक्षिविलक्षणरमणीयगतिशब्दवर्णयुक्तहंसद्वन्द्वानि यस्यास्सा तथोक्ता ॥ अनेन पुलिनविहरणवेतसगृहवासजलक्रीडादिलीलासमुचितप्रदेश इति ज्ञाप्यते ॥ पुलिनशब्देन तत्र विहरणे सशीकरपवनस्पर्शस्सूच्यते ॥ हंसमिथुनशब्देन पक्षिजातेस्सार्वकालिकक्रीडया परमोद्दीपकत्वमुक्तम् ॥ तां मालिनीमभितः ॥ पादाः प्रत्यन्तपर्वताः ॥ अनेन गिरिगह्वरकुञ्जनिर्झरादिषु परस्परात्मगोपनगम्यप्रदेश इति प्रतीयते ॥ निषण्णहरिणा इत्यनेन विजातीयमृगकुलावस्थानात् निरर्गळक्रीडोचितविविक्तप्रदेश इति ज्ञाप्यते ॥ शाखालम्बितवल्कलस्येत्यनेन धर्मारण्यत्वसूचकत्वमुक्तम् ॥ वामनयनमिति ॥ स्त्रीजातेर्वामभागस्य मन्मथकळाधिष्ठानत्वात् वामनयनमित्युक्तम् ॥ इच्छामीति कण्डूतिक्रियायाश्चित्रे लिखितुमशक्यत्वादिच्छामीत्युक्तम् ॥

कथं निवर्तनीयो भविष्यतीत्याशयः । पूर्वं उन्मत्तानां पन्था अनेन गृहीत इत्युक्तेः । भोः, अपरं किमत्र लिखितव्यम् । यो यः प्रदेशः सख्याः सम्बन्धी मेऽभिरूपः सुन्दरस्तं तमालिखितुकामो भवेत् ॥

**कार्येति** ॥ अनेन पद्येनाश्रमस्थं पूर्वानुभूतं तदानींतनमुद्दीपनं विभावगणं स्मरति । ते च स्मृताः सम्भ्रमप्रवासहेतुकं विरहमेव पोषयन्ति । सैकते लीनं हंसमिथुनं यस्याः सा । अनेनोद्दीपकत्वातिशयो व्यज्यते । मालिनीनाम्नी स्रोतोवहा नदी कार्या । स्रोतोवहेत्यनेन जलवाहित्वम् , तेन स्वभावापरित्यागः, तेन रमणीयत्वं तेन चोद्दीपकत्वं व्यज्यते । मालिनीमभित इत्यभितोयोगे द्वितीया । गौरीगुरोर्हिमवतः । अनेन कन्यापितृत्वेन तद्दुःखानुभवात्तत्प्रदेशेऽविघ्नितसंकेतत्वं द्योत्यते । निषण्णहरिणा इत्यनेनात्यन्तविविक्तत्वम् । तेन भृशमुद्दीपकत्वम्, तेन च सुरतक्षमत्वं ध्वन्यते । पावना इत्यनेन शुचित्वेन रम्यत्वेन पर्यवसानम् । पादाः प्रत्यन्तपर्वताः । कार्या इत्यनुषज्यते । शाखास्वालम्बितानि वल्कलानि वृक्षत्वचो यस्य । अनेनाश्रमपथानतिदूरत्वेन तस्याः शालीनत्वं ध्वनितम् । तस्य तरोरधः कृष्णमृगस्य कृष्णसारस्य शृङ्गे । वामनयनमिति स्त्रीस्वभावत्वात् । कण्डुयमानां मृगीं निर्मातुमिच्छामि । अत्र कण्डूयनं शृङ्गारानुभावसूचकं घर्षणमात्रम् । अनेनाप्युद्दीपकत्वं ध्वनितम् । पूर्वं कार्येत्युक्त्वा निर्मातुमिच्छामीत्युक्तिस्तु घर्षणस्य लेखनायोगात् । तेनैतद्-

**विदूषकः**—(आत्मगतं) [1]जइ एव्वं णूणं णेण (जह अहं देक्खामि) पूरिदव्वं चित्तफळअं *ळम्बकुचाणं तावसाणं (कदम्बेहिं)सद्धेण ॥

**राजा**—वयस्य ! अन्यच्च शकुन्तलायाः प्रसाधनमत्र विस्मृतमस्माभिरभिप्रेतम् ॥

**विदूषकः**—[2]किं विअ ?

**सानुमती**—[3]वणवासस्स अ सोउमारस्स (अविणअस्स) अ जं अनुसरिसं तं भविस्सदि ॥

**राजा**—

कृतं न कर्णार्पितबन्धनं सखे
शिरीषमागण्डविलम्बिकेसरं ।

1 यद्येवं । (यथाहं पश्यामि) नूनमनेन पूरयितव्यं चित्रफलकं लम्बकूर्चानां तापसानां (कदम्बैः) सार्थेन ॥

2 किमिव ?

3 वनवासस्य च सौकुमार्यस्य (अविनयस्य) च यदनुसदृशं तद्भविष्यति ॥

अत्र न केवलं शकुन्तलारूपलावण्याद्यतिशयेन तदनुरागातिशयो जातः किन्तु रमणीयदेशकालविभावेनापि श्रृङ्गारो मूर्धन्यस्संवृत्त इति भावः ॥

(साहित्यटीका) कृष्णमृगस्य श्रृङ्गे ॥ वामनयनं स्वकीयं सव्यनेत्रं कण्डूयमानां मृगीं निर्मातुमिच्छामि ॥

**जइइत्यादि** ॥ सार्थः समूहः ॥

१८ **कृतमित्यादि** ॥ कर्णे केशपाशसम्मर्दनानर्हप्रदेशे अर्पितं न्यस्तं बन्धनं वृन्तं यस्य तत्तथोक्तम् ॥ वा शब्दस्समुच्चये ॥

पीच्छामि । न वस्तुतः कर्तव्यमिति भावः । स्वभावोक्तिः । लीनलिनीति गौरीगुरोरिति मृगमृगीमिति मनमानामिति च्छेकवृत्तिश्रुत्यनुप्रासाः गौरीगुरोरिति प्रसङ्गोपादानादुदात्तालङ्कारश्च । शार्दूलविक्रीडितं वृत्तम् । यथाहं पश्यामि । पूरितव्यमनेन चित्रफलकं लम्बकूर्चानां तापसानां कदम्बैः समूहैः प्रसाधनमलंकरणम् । अभिप्रेतमभिमतम् । किमिव । वनवासस्येत्यनेन पुष्पादिकम्, सौकुमार्यस्य चेत्यनेन कुसुमानामपि यत्कोमलतरं तदेकद्वित्रिधारणं च, अविनयस्य चेत्यनेन शेखरादिव्यावर्तनं व्यज्यते । यत्सदृशं भविष्यति ॥

**कृतमिति** ॥ अत्र कर्णशब्देन स्वस्य तेन भूषणत्वं बोधयता नैकट्यात्कर्णशिरोन्तरालदेशो लक्ष्यते । तेन परस्परोपकारकारणादन्योन्यालङ्कारो व्यङ्ग्यः । तत्रार्पितमारोपितं बन्धनं वृन्तं यस्य तत् । गण्डं मर्यादीकृत्य विलम्बिताः केसरा यस्य तत् । एतेन केवलं कर्णं न भूषयति, अपि तु गण्डमपीति व्यज्यते । शिरीषं शिरीषपुष्पं न कृतम् । हे सखे, शिरीष-

* "ळम्बकुचाणं तावसीणं ॥ छा—लम्बकुचानां तापसीनां ॥ " इति पाठान्तरम् ॥

न वा शरच्चन्द्रमरीचिकोमलं
मृणालसूत्रं रचितं स्तनान्तरे ॥ १८

**विदूषकः**—[1]भो किं णु खु तत्तहोदी रत्तकुवलअ(पल्लक)दळसोहिणा अग्गहत्थेण मुहं आवरिअ चकिदचंकिदा विअठिदा ॥ (सावधानं निरूप्य) आः एसो दासीएउत्तो कुसु(मरस)मासवपाडच्चळो अत्तहोदीए वअणं अदिळंघदि दुट्ठमहुअरो ॥

**राजा**—ननु । निवार्यतामेष दुष्टः ॥

**विदूषकः**—[2]भवं एव्व अविणीदाणुसासी इमस्स वारणे पहविस्सदि ॥

**राजा**—युज्यते ? अयि भोः कुसुमलताप्रियातिथे ! किमितः परिपतनखेदमनुभवसि ?

---

1 भोः किं नु खलु तत्रभवती रक्तकुवलय(पल्लव)दळशोभिनाग्रहस्तेन मुखमावृत्य चकितचकिता स्थिता। आः एष दास्याः पुत्रः कुसु(मरस)मासव पाटच्चरोऽत्र भवत्या वदनमतिलंघते दुष्टमधुकरः ॥

2 भवानेवाविनीतानुशास्यस्य वारणे प्रभविष्यति ॥

---

पदेन कोमलत्वं ध्वनयतान्यत्तदयोग्यमिति तस्याः सुकुमाराङ्गत्वं व्यज्यते । शिरीषकेसरमध्ये तत्र तस्यैव समावेशयोग्यत्वात् । एतेन तत्स्तनयोरतिपीवरतया परस्परोत्पीडनत्वम्, तेनालिङ्गनयोग्यत्वम्, तेन च तदप्राप्त्या स्वस्याधन्यत्वादि व्यज्यते । रचितं न चेति सम्बन्धः। अत्राप्यन्योन्यशोभाहेतुत्वे नान्योन्यालङ्कारो व्यङ्ग्यः । क्रिययोः समुच्चितत्वात्समुच्चयालङ्कारः । एकाधिकरणत्वेनापि तस्येष्टत्वात् । उपमा च । श्रुतिवृत्त्यनुप्रासयोः सङ्करः । शिरीसरेति रीचिरचीति त्रन्तरे इति छेकानुप्रासोऽपि । 'श्लेषानुप्रासयमकचित्रेषु शसयोर्न भित्' इत्याद्युक्तेः । वंशस्थं वृत्तम् । किं नु तत्रभवती रक्तकुवलयस्य पल्लवः पत्रं तद्वच्छोभिना । यद्वा रक्तौ कुवलयपल्लवौ तद्वच्छोभिना अग्रहस्तेन मुखमपवार्य चकितचकितेव स्थिता किं न्विति सम्बन्धः । एष दास्याः पुत्रः कुसुमरसपाटच्चरः पुष्पमधुचोरः । अनेनैवापराधेन दण्ड्योऽपराधान्तरे च सुतरां दण्डनीय इति व्यज्यते । यस्याः कस्याश्चिन्न, अपि त्वत्रभवत्याः पूज्याया वदनमभिलङ्घति । मधुकर इति साभिप्रायम् । राज्ञस्तु तद्देश एव तिष्ठामीति बुद्ध्या नन्वित्याद्युक्तिः । विदूषकस्तु चित्रगतस्य वारयितुमशक्यत्वादिति सोल्लुण्ठं स्वभावोक्तिमाह—भवानेवाविनीतानां शासितास्य वारणे प्रभविष्यति । राजा तु तादृक्त्वबुद्ध्यैव प्रत्युत्तरयति—युज्यत इति । कुसुमग्रहणं लतायाः सद्भावसूचनार्थम् । कुसुमयुक्ता लता कुसुमलतेति मध्यमपदलोपी समासः । तस्या अपि प्रियोऽतिथिर्न तु यः कश्चिदतिथिस्तस्य सम्बोधनम् । यत्र तु सा तादृशी लता तत्र परिपतनमुचितम् । अनुभवसि नात्र नातिथिस्त्वं सुतरां न प्रियातिथिस्त्वम् परिपतनरूप एव खेदस्तमनुभवसि न तु मधुलवलाभोऽपीति भावः । चित्रलिखितायां तत्पुष्पे भ्रमर्यपि लिखिता तामुद्दिश्यैवेत्युक्तिः ॥

एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता ।
प्रतिपालयति मधुकरी न खलु मधु विना त्वया पिबति ॥ १९

सानुमती—[1]अज्ज खु अहिजादं वारिदो एसो ॥

विदूषकः—[2]पडिसिद्धावि वामाखु एसा जादी ॥

राजा—एवं भोः न मे शासन(ने)मनुतिष्ठसि श्रूयतां तर्हि ॥

अक्लिष्टबालतरुपल्लवलोभनीयं
पीतं मया सदयमेव रतोत्सवेषु ।

---

1 अद्य खल्वभिजातं वारित एषः ॥
2 प्रतिषिद्धापि वामा खल्वेषा जातिः ॥

---

१९ साहित्यटीका ॥ **एषेत्यादि** ॥ तृषिता पिपासितापि ॥ खलु यतः कारणात् ॥ मधु मकरन्दं त्वया विना न पिबति ॥ ततः प्रतिपालयति ॥ तृषितायाः प्रतिपालनं युक्तं न भवति ॥ तत्रैव गच्छेति भावः ॥

**एवमित्यादि** ॥ एवं मृदुमार्गेण शासनमाज्ञां नानुतिष्ठसि ॥ सम्प्रति श्रूयतां तीक्ष्णशासनमेव भविष्यतीत्यर्थः ॥

२० तदेवाह—**अक्लिष्टेत्यादिना** ॥ अक्लिष्टबालतरुपल्लवलोभनीयमनुपहत बालतरुपल्लवस्पृहणीयम् ॥ बिम्बाधरम् ॥ रतोत्सवेषु ॥ बहुवचनेन मनोरथ कल्पितबहुविध-

---

**एषेति** ॥ कुसुमनिषण्णेत्यनेन तवायत्नसाध्यं स्थानमिति भावः । अनुरक्तेत्यनेन तव तत्रोचितं गमनमिति ध्वन्यते । तृषिताभिलाषवत्यपि मधुकरी स्वाभाव्यात्सती विद्यमाना पतिव्रता च मधुकरी भवन्तं प्रतिपालयतीति प्रेमातिशयः त्वया विना मधु न पिबति । अत्र चित्तन्यस्तायाः स्वाभाविकस्य पानाभावस्य त्वया विनेति कृत्रिमस्य वाऽभेदाध्यवसायादतिशयोक्तिः । अथवा माधवीलतायां तादृशीं मधुकरीं दृष्ट्वैषेत्युक्तिः । अत्र तृषितत्वं कुसुमोपर्युपवेशनादेव । नायिकानायकव्यवहारसमारोपात्समासोक्तिः । सती पतिव्रता । मधुकरीति भिन्नरूपेणैकदेशविवर्तिरूपकमपि । मधुमध्विति च्छेकवृत्त्यनुप्रासाः । अद्याधुनाभिजातं न्याय्यं यथा स्यादेवं खल्वेष वारितः । 'अभिजातः स्मृतो न्याय्ये' इति विश्वः । प्रतिषिद्धापि वामैषा जातिरिति विदूषकवचनं सोल्लुण्ठमेव । राज्ञोऽपि पूर्ववदेव । शासन आज्ञायाम् ॥

**अक्लिष्टेति** ॥ अक्लिष्टः केनापि न मृदितो बालो नूतनस्तरोः पल्लवस्तद्वल्लोभनीयं सुन्दरम् । अत्र तारुण्यं वक्तुं तरुपदोपादानम् । यद्वा बालो यस्तरुस्तस्य पल्लवः । अक्लिष्टश्चासौ बालतरुपल्लवश्चेति । एतेन कोमलत्वलौहित्यातिशयो व्यज्यते । प्रियाया बिम्बाधरं बिम्बसदृशमधरमिति मध्यमपदलोपी समासः । तथा च वामनः—'बिम्बाधर इति वृत्तौ मध्यमपदलोपि (?) न्याम्' इति । रतोत्सवेषु तया सह रतमुत्सवरूपमित्यर्थः । तेषु

बिम्बाधरं स्पृशसि चेद्भ्रमर प्रियाया-
स्त्वां कारयामि कमलोदरबन्धनस्थम् ॥ २०

विदूषकः—[1]एव्वं तिक्खदण्डस्स किं वा ण भाइस्सदि ?

---

1 एवं तीक्ष्णदण्डस्य किं वा न भेष्यति ?

---

क्रीडास्सूच्यन्ते ॥ अन्तःकरणबाह्यकरणव्यापाररोधिसुखदशायामपीति भावः ॥ सदयमेव सुकुमारवस्तुनो दयाविषयत्वात् दयासहितमेव ॥ हे भ्रमर! सौरभमधुवस्त्वेकरसिक! त्वां तादृग्विधं। कमलोदरबन्धनस्थं शकुन्तलामुखसौरभादिगुणहीनकमलोदरे कारागृहस्थानभूते बन्धनस्थं स्वेच्छागमनरहितं कारयामि—"राजा कालस्य कारण" मिति न्यायेन स्वस्य चन्द्रवंशीयतया च कर्तुं शक्नोमि ॥ वर्तमानव्यपदेशेन दिवसपरिणामसमयस्सूच्यते ॥ रात्र्यागमनात् प्रागेव गत्वा भ्रमर्या सह कमलोदरे प्रविशेति भावः ॥

(साहित्यटीका) रतोत्सवेऽपि सम्भोगकल्याणेऽपि ॥ रतोत्सवेष्विति पठन्ति ॥ तदसङ्गतम् ॥ बहुरतोत्सवानुभवे सति रसो न विद्यते ॥ आदराभावात् ॥ ततः रतोत्सवेऽपीति ॥ अपिशब्दः प्रमत्तदशायामप्यनिर्णयत्वद्योतकः ॥ सदयमेव दयासहितमेव ॥ पीतं सुकुमारवस्तुनो दयाविषयत्वाद्दन्तक्षतादिकं न कृतमिति भावः ॥ मयेत्यनेन नानाविधकरणप्रभुत्वं द्योत्यते ॥ कमलोदरबन्धनस्थम् ॥ कमलोदरमेव बन्धनं बन्धनस्थानं कारागृहमिति यावत् ॥ तत्रस्थं तत्रावस्थितिमन्तं कारयामि ॥ स्वस्य प्रभुत्वात्कारयामीत्युक्तं न तु करोमीति ॥ अत्र भ्रमरस्य कमलोदरावस्थानमनुकूलमेव कथं तीक्ष्णदण्डे पर्यवस्यतीति नाशङ्कनीयम् ॥ अनुभूतलोकोत्तरशकुन्तलामुखसौरभस्य कमलसौरभमेवोद्वेजकमिति कमलोदरावस्थानमेव कारागृहावस्थानमित्यभिप्रायः ॥ तेन कमलात् शकुन्तलामुखस्यातिसुरभित्वं द्योत्यते ॥

एव्वमित्यादि ॥ तिक्खदण्डस्स ण भाइस्सदि इत्यत्र क्वचिदासादेरिति पञ्चमीस्थाने षष्ठी ॥ "दण्डोऽस्त्री शासने राज्ञां हिंसायां लगुडे दम" इति वैजयन्ती (साहित्य-

---

मयोत्कण्ठातिशयवतापि सदयं स्वादं स्वादं च पीतं न तु निर्दयं तद्दष्टम्। तेनातिकोमलत्वं ध्वनितम्। अथ च पीतमप्यक्लिष्टबालतरुपल्लवलोभनीयमिति विधेयं विशेषणम्। तेन भ्रमरस्यास्पर्शेऽपि हेतुत्वं तेन भ्रान्तिमानलङ्कारो व्यज्यते। हे भ्रमर, त्वं चेत्तं स्पृशसि तदा कमलस्योदरे बन्धनस्थं त्वां कारयामि। अनेन सूर्यस्यापि निजाज्ञाकारित्वं ध्वन्यते। स्वाभाविकस्य तस्य स्वप्रयोजकत्वव्यापारेणोक्तेरतिशयोक्तिश्च। प्रतिनायकव्यवहारसमारोपात्समासोक्तिः। उन्मत्तावस्थावर्णनादनौचित्यं न। कमलोदरे जलमध्ये बन्धनस्थामिति श्लेषोऽपि। हेतुरूपकोपमानुप्रासाः। वसन्ततिलकं वृत्तम्। एवं तीक्ष्णदण्डस्य किं न भेष्यति। एष तावदुन्मत्तः। अहमप्येतस्य सङ्गेनेदृशा वर्णा अक्षराणि यस्य स इव संवृत्तः। सोल्लुण्ठोत्तरदानेन सहजतयोन्मत्तावस्थायां पर्यवसानादिति भावः। भोः, चित्रं खल्वेतत्। 'राजा—युज्यते' इत्यादिनैतदन्तेन भ्रान्तिर्नाम सन्ध्यन्तराङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'भ्रान्तिर्वि-

(प्रहस्यात्मगतं) [1]एसो दाणिं उम्मत्तओ ॥ अहं वि एदस्स संसग्गेण ईरि (सवण्णोविअ) सोम्हि सम्वुत्तो (प्रकाशम्) भो चित्तं खु एदं !

राजा—कथं ? (चित्रम्)

सानुमती—[2]अहं वि दाव दाणिं अणवगदत्था(व) किं उण जह लिहि-दाणुभावी एसो ॥

राजा—वयस्य । किमिदमनुष्ठितं पौरोभाग्यम् ।

दर्शनसुखमनुभवतस्साक्षादिव तन्मयेन हृदयेन ।
स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता ॥ २१

(इति बाष्पं विकिरति)

1 एष इदानीमुन्मत्तः ॥ अहमप्येतस्य संसर्गेणेदृशोऽस्मि संवृत्तः ॥ भोः चित्रं खल्वेतत् !
2 अहमपि तावदिदानीम(व)नवगतार्था किं पुनर्यथालिखितानुभाव्येषः ॥

टीका) एसो इत्यादि ॥ ईदृशोऽस्मि संवृत्तः ॥ राज्ञ इव स्वस्यापि चित्रफलके शकुन्तला-बुद्धिरेव जातेत्यर्थः ॥

अहमिति ॥ यथालिखितानुभावी ॥ लिखितां शकुन्तलामनतिक्रम्यानुभवत्य-वगच्छति ध्यायतीति यथालिखितानुभावी ॥

वयस्येति ॥ पुरोभागी दोषैकदर्शी ॥ तस्य कर्म पौरोभाग्यम्—"गुणवचन-ब्राह्मणादिभ्यः कर्मणि च" ति ष्यञ्प्रत्ययः ॥ नस्तद्धित इति टिलोपः ॥

२१ दर्शनसुखमित्यादि ॥ साक्षात्त्वतः॥ तन्मयेन शकुन्तलामयेन चित्री-कृता अचित्ररूपा चित्रीकृता ॥

ख) पर्ययज्ञानं प्रसङ्गस्याविनिश्चयात्' इति । अहमपीदानीमवगतार्था । चित्रमिति ज्ञानं ममाप्यधुना जातमित्यर्थः । किं पुनर्यथालिखितानुभाव्येष विदूषकः । 'राजा—ननु वार्यता-मेष धृष्टः' इत्यादिना 'बन्धनस्थम्' इत्यन्तेन तन्मयत्वप्रवासविप्रलम्भकामदशावस्था सूचिता । "तन्मयं तत्प्रकाशो हि बाह्याभ्यन्तरतस्तथा' इति तल्लक्षणात् । पौरोभाग्यं दोषदर्शित्वम् । 'दोषैकदृक्पुरोभागी' इत्यमरः ॥

दर्शनेति ॥ तन्मयेन शकुन्तलामयेन साक्षादिव दर्शने सुखमनुभवतो मम स्मृतिकारिणा चित्रमिति स्मरणं कृतवता त्वया कान्ता चित्रीकृतालेख्यस्था कृता । अथवा-श्चर्यरूपा कृता । 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः । स्मृतिकारिणा चित्रीकृतेति शब्द-शक्तिमूलो विरोधाभासो व्यङ्ग्यः । उत्प्रेक्षा वतवतेति येनयेनेति कृताकान्तेति च्छेकश्रुति-वृत्त्यनुप्रासाः । भोजेन तु 'परप्रयत्नादपि स्मरणे स्मरणालङ्कारः' इत्युक्त्वा तदलङ्कारे इद-मुदाहृतम् । राजा—'अकारणपरित्याग—' इत्यादिनैतदन्तेन चित्रं नाम सन्ध्यन्तराङ्गमुप-

**सानुमती**—[1]पुव्वावरविरोहि अपुव्वो एसोवि(रह)हाणमग्गो ॥

**राजा**—वयस्य । कथ(मेवमविश्रान्त)मविश्रमदुःखमनुभवामि ?

**प्रजागरात् स्ख(खि)लीभूतस्तस्यास्स्वप्ने समागमः ।**
**बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥ २२**

**सानुमती**—[2]सव्वहा वअस्स पमज्जिदं तुए पच्चादेसदुक्खं सउन्दलाए ॥

**चतुरिका**—[3](प्रविश्य) जेदु जेदु भट्टा. वट्टिआकरण्डअं गेण्हिअ इदोमुहं पट्ठिदम्हि ॥

**राजा**—किञ्च ?

**चतुरिका**—[4]सो अम्महत्थादो अन्तरा तरळिआदु ईआए देवीए वसुमदीए अहं एव्व णं अज्जवुत्तस्स उवणइस्सन्ति सबळक्कारं गहीदो ॥

---

1 पूर्वापरविरोध्यपूर्व एष वि(रह)धानमार्गः ॥

2 सर्वथा वयस्य प्रमार्जितं त्वया प्रत्यादेशदुःखं शकुन्तलायाः ॥

3 जयतु जयतु भर्ता वर्तिकाकरण्डकं गृहीत्वा इतोमुखं प्रस्थितास्मि ।

4 सोऽस्मद्धस्तादन्तरा तरळिकाद्वितीयया देव्या वसुमत्या अहमेवैनमार्यपुत्रस्योपनेष्यामीति सबलात्कारं गृहीतः ॥

---

**वयस्येत्यादि ॥** अविश्रमं विश्रान्तिरहितम् ॥

**२२ प्रजागरादिति ॥** चित्रगतामपीत्यनेन साक्षाद्दर्शनं दुर्लभमिति व्यज्यते ॥

---

क्षिप्तम् । तल्लक्षणम्—'चित्रं त्वाकारस्य विलेखनम्' इति । पूर्वापरविरोध्यपूर्व एष विरहमार्गः । पूर्वं चित्रस्य चित्रत्वेन ज्ञानम्, पुनस्तस्योन्मादावस्थायां सत्यत्वेन ज्ञानम्, पुनरपि चित्रत्वेन ज्ञानमिति पूर्वापरविरोधः । उन्मादावस्थानन्तरं मूर्च्छाद्यवस्थाया अभावादिति भावः । अत एवापूर्वं आश्चर्यकारी ॥

**प्रजागरादिति ॥** तस्याः स्वप्ने समागमः प्रजागरात्खिलीभूतो निरुद्धः । तु पुनर्बाष्पोऽश्रुप्रवाहः । 'बाष्पो नेत्रजलोष्मणोः' इति विश्वः । एनां चित्रगतामपि । प्रत्यक्षदर्शनं पुनरनुपपन्नमित्यपिशब्दार्थः । द्रष्टुं न ददाति । हेत्वनुप्रासौ । सर्वथा प्रमार्जितं त्वया प्रत्यादेशदुःखं शकुन्तलायाः । जयतु जयतु भर्ता । वर्तिकाकरण्डकं तूलिकावर्णकादिभाण्डं गृहीत्वेतोमुखं प्रस्थितास्मि । स वर्तिकाकरण्डको मे मम हस्तादन्तरा मध्ये तरलिकाद्वितीयया देव्या वसुमत्याहमेवार्यपुत्रस्योपनेष्यामीति सबलात्कारं गृहीतः ।

**विदूषकः**—[1]दिट्ठि आ तुमं मुक्का ॥

**चतुरिका**—[2]जाव विडवळग्गं उत्तरीअअं देवीए तरळिआ मोएइ, दावमए णिव्वासिदो अ(त्ता)प्पा ॥

**राजा**—वयस्य ! उपस्थिता देवी बहुमानगर्विता च । भवानिमां प्रतिकृतिं रक्षतु ॥

**विदूषकः**—(चित्रफलकमादायोत्थाय) [3]अत्ताणंत्ति भण । जइ भवं अन्तेउर(कालकूडादो) कळहादो मुच्छेअदि तदोमं मेहपडिच्छन्दे पासादे सद्दावेहि ॥

(इति द्रुतपदं निष्क्रान्तः)

**सानुमती**—[4]अण्णसङ्कन्तहिअओवि पुडमसम्भावणं अवेक्खदि अदो असिधिळसोहदो एसो दाणिं ॥

(प्रविश्य पत्रहस्ता प्रतीहारी)

**प्रतीहारी**—[5]जेदु जेदु देवो ॥

**राजा**—वेत्रवति ! न खल्वन्तरा दृष्टा त्वया देवी ॥

**प्रतीहारी**—[6]अह इं भट्टिणी पत्तहत्थं मं पेक्खि अ पडिणिवुत्ता ॥

**राजा**—कार्यज्ञा कार्योपरोधं मे परिहरति ॥

---

1 दिष्ट्या त्वं मुक्ता ॥
2 यावद्विटपलग्नमुत्तरीयकं देव्यास्तरळिका मोचयति । तावन्मया निर्वासित आत्मा ॥
3 आत्मानमिति भण । यदि भवानन्तः पुर(कालकूटा) कलहान्मुच्यते ततो मां मेघप्रतिच्छन्दप्रासादे शब्दापय ॥
4 अन्यसंक्रान्तहृदयोऽपि प्रथमसम्भावनामपेक्षते ॥ अतोऽशिथिलसौहृद एष इदानीम् ॥
5 जयतु जयतु देवः ॥
6 अथ किम् ॥ भट्टिनी पत्रहस्तां मां दृष्ट्वा प्रतिनिवृत्ता ॥

---

शब्दापय आह्वयेत्यर्थः ॥ मेघप्रतिच्छन्द इति तस्य प्रासादस्य नाम ॥

दिष्ट्या त्वं मुक्ता । यावद्देव्या विटपलग्नमुत्तरीयं तरलिका मोचयति तावन्मया निर्वाहित आत्मा । पलायितास्मीत्यर्थः । इमां प्रतिकृतिं लिखितां शकुन्तलाप्रतिमाम् । आत्मानमिति भण । केवलं प्रतिकृतिरेव रक्षणीयेति न, अपि त्वात्मापि रक्षणीय इत्यर्थः । अत्रात्मशब्देन विदूषको राजा चेत्युभयमपि गृह्यते । तेन प्रतिकृतिरक्षणेनोभावपि रक्षिताविति भावः । यदि भवानन्तःपुरकालकूटान्मोक्ष्यते तदा मां मेघप्रतिच्छन्दनामनि प्रासादे शब्दापय । आकारयेत्यर्थः । अन्यसंक्रान्तहृदयोऽपि प्रथमसम्भावनामपेक्षते । शिथिलसौहार्द इदानीमेषः । जयतु जयतु देवः । अथ किम् । पत्रहस्तां मां प्रेक्ष्य प्रतिनिवृत्ता ।

**प्रतीहारी**—[1]देव, अमच्चो विण्णवेदि-अत्थजातस्य गणणाबहुदा एअज्ज एक्कं एव्व पोरकज्जं पच्च (अ) वेक्खिदं तं दाव पत्तारूढं देवो पच्चक्खीकरेदुत्ति॥

**राजा**—इतः पत्रिकां दर्शय ॥

(प्रतीहारी दर्श (उपन) यति)

**राजा**—(अनुवाच्य) कथं समुद्रव्यवहारी सार्थवाहो धनमित्रो नौव्यसनेन विपन्नः? अनपत्यश्च तपस्वी राजगामी तस्यार्थसञ्चय इत्यमात्येन लिखितम् ॥

**राजा**—कष्टं खल्वनपत्यता ॥

वेत्रवति! महाधनत्वाद्बहुपत्नीकेन तत्रभवता भवितव्यम् । विचार्यतां । यदि काचिदापन्नसत्त्वाऽपि तस्य भार्या (सु)स्यात् ॥

**प्रतीहारी**—[2]देव! दाणिं तस्स जाआणं मज्झे साकेदसेट्ठिणो दुहिआ निव्वुत्तपुंसवणा सुणीअदि ।

**राजा**—ननु । गर्भः पित्र्यमर्थ(रिक्थ)मर्हति॥ गच्छ॥ एवममात्यं ब्रूहि॥

**प्रतीहारी**—[3]जं देवो आणवेदि ॥

(इति निष्क्रान्ता)

**राजा**—एहि तावत् ॥

---

1 देव! अमात्यो विज्ञापयति—अर्थजातस्य गणनाबहुळतयाऽद्यैकमेव पौरकार्यं प्रत्य(अ) वेक्षितम्॥ तत्तावत्पत्रारूढं देवः प्रत्यक्षीकरोत्विति ॥

2 देव! इदानीं तस्य जायानां मध्ये साकेतश्रेष्ठिनो दुहिता निर्वृत्तपुंसवना श्रूयते ॥

3 यद्देव आज्ञापयति ॥

---

**नन्विति ॥** गर्भः गर्भस्थः पुत्रः पित्र्यं पितुरागतम्॥ 'पितुर्यच्चेति' यत्प्रत्ययः॥

---

देव, अमात्यो विज्ञापयति । अर्थजातस्य द्रव्यसमूहस्य गणनाबहुलतयैकमेव पौरकार्यमवेक्षितं तद्देवः पत्रारूढं प्रत्यक्षीकरोत्विति । नौव्यसने पोतभ्रंशे । 'व्यसनं विपदि भ्रंशे' इत्यमरः । विचार्यतामन्विष्यताम् । तस्य वणिजो भार्यासु मध्ये काचिद्भार्यापन्नसत्त्वा गुर्विणी स्यात् । देव, इदानीमेव साकेतस्यायोध्यायाः । 'स्यात्साकेतोऽयोध्यायाम्' इति हैमः । श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना जाया भार्यास्य श्रूयते । पित्र्यं पितृसम्बन्धि रिक्थं धनम् । 'रिक्थं धनं वसु' इत्यमरः । यद्देव आज्ञापयतीति ।

प्रतीहारी—[1]इअम्हि ॥

राजा—किमनेन सन्ततिरस्ति नास्तीति ?

येन येन विमुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।
स स पापादृते तासां दुष्यन्त इति घुष्यताम् ॥ २३

प्रतीहारी—[2]एव्वं णाम घोसइदव्वं (निष्क्रम्य पुनः प्रविश्य) काले पवुट्ठं विअ अहिणन्दिदं देवस्स सासणं अमच्चेण ॥

राजा—(दीर्घं (उष्णं च) निश्वस्य) एवं भोः सन्ततिविच्छेदनिरवलम्बानां (कुलानां) मूलपुरुषावसाने सम्पदः परमुपतिष्ठन्ति ममाप्यन्ते (पुरुवंशश्रीरकालइवोप्तबीजा भूरेवं वृत्ता) पूरुवंशश्रियोऽप्येष एव वृत्तान्तः ॥

प्रतीहारी—[3]पडिहदं अमङ्गलम् ॥

राजा—धिङ्मामुपस्थितश्रेयोवमानिनम् ॥

---

1 इयमस्मि ॥

2 एवं नाम घोषयितव्यम् ॥ काले प्रवृष्टमिवाभिनन्दितं देवस्य शासनममात्येन ॥

3 प्रतिहतममङ्गलम् ॥

---

२३ येनेत्यादि ॥ प्रजाः जनाः ॥ न तु श्रेष्ठिभार्यैका ॥ किन्तु सर्वाः प्रजा इत्यर्थः ॥ येन येन स्निग्धेन बन्धुना पितृभ्रातृपुत्रादिना वियुज्यन्ते जन्म मरण सुखदुःखादीनामनियतत्वात् कालवशाद्वियुक्ता भवन्ति । तासां वियुक्तानां प्रजानाम् ॥ दुष्यन्तः॥ पापादृते पापं विना ॥ स स बन्धुः ॥ यस्य पिता नास्ति तस्य पिता ॥ यस्य पुत्रो न विद्यते तस्य पुत्रः ॥ यस्य भ्राता नास्ति तस्य भ्राता ॥ इति घुष्यतां घोषणा क्रियताम् ॥ पटहवाद्यपुरस्सरं नगरे प्रकाश्यतामित्यर्थः ॥ पापादृते इत्यनेन यस्याः पतिर्नास्ति तस्याः पतिर्न भवामीति भावः ॥ पित्रादिनिर्वर्त्यानां पोषकत्वादीनामहमेव निर्वर्तक इत्यभिप्रायः ॥

---

इयमस्मि ॥

येनेति ॥ पापादृते । स्त्रीणां भर्तृत्वेन विनेत्यर्थः । छेकवृत्त्यनुप्रासौ । एवं नाम घोषयितव्यम् । काले प्रवृष्टमिवापेक्षितसमये प्रवर्षणमिवाभिनन्दितं देवस्य शासनमिति । अकाल उप्तबीजा भूरिव ममाप्यन्ते पुरुवंशश्रीरेवंवृत्तेत्यन्वयः । प्रतिहतममङ्गलम् । उपस्थितं प्राप्तं श्रेयः सगर्भशकुन्तलारूपम् ।

सानुमती—[1]असंसअं सहिं एव्व हिअए करिअ णिंदिदो णेण अप्पा ॥

राजा—

संरोपितेऽप्यात्मनि धर्मपत्नी
त्यक्ता मया नाम कुलप्रतिष्ठा ।
कल्पिष्यमाणा महते फलाय
वसुन्धरा काल इवोप्तबीजा ॥

सानुमती—[2]अपरिच्छिण्णा दाणिं दे सन्ददी भविस्सदि ॥

चतुरिका—(जनान्तिकम्) [3]अए इमिणा सद्धवाहवुत्तन्तेण *(द्विउणुव्वेओ) विमणा अदि भट्टा णं अस्सासिदुं मेहप्पडिच्छन्दादो अज्जं माढव्वं गण्हिअ आअ(च्छामि)च्छ ॥

1 असंशयं सखीमेव हृदये कृत्वा निन्दितोऽनेनात्मा ॥

2 अपरिच्छिन्नेदानीं ते सन्ततिर्भविष्यति ॥

3 अ(यि)ये अनेन सार्थवाहवृत्तान्तेन (द्विगुणोद्वेगो) विमनायते भर्ता ॥ एनमाश्वासयितुं मेघप्रतिच्छन्दादार्यमाढव्यं गृहीत्वा आग (च्छामि) च्छ ॥

२४ संरोपित इत्यादि ॥ आत्मनि स्वस्मिन् ॥ संरोपिते उप्ते सति यस्मादात्मैव पत्न्यां जायते तस्मादात्मनि संरोपित इत्युक्तम् ॥ तथा श्रुतिः—"अङ्गादङ्गात्सम्भवति हृदयादधिजायते । आत्मा वै पुत्रनामासि स जीव शरदश्शत"मिति ॥ कुलप्रतिष्ठा वंशप्रतिष्ठाकारणभूता ॥

असंशयं सखीमेव हृदये कृत्वा निन्दितोऽनेनात्मा ॥

संरोपित इति ॥ नामेति सम्भावनायाम् । मया तादृशधार्मिकेण तादृशसावधानेन संरोपितेऽप्यात्मनि पुत्रगर्भ उत्पादितेऽपि । 'आत्मा वै पुत्रनामासि' इति श्रुतेः । कुलप्रतिष्ठा पुत्रप्रसूतत्वाद्धर्मपत्नी त्यक्तावधीरिता । काले स्वसमय उप्तबीजा न्यस्तबीजात एव महते फलाय सस्याय कल्पिष्यमाणा वसुन्धरा यथोपेक्ष्यत इत्युपमा । काव्यलिङ्गं च । श्रुत्यनुप्रासः । अष्टम्युपजातिरिन्द्रवज्रोपेन्द्रवज्रयोः । अपरिच्छिन्नेदानीं ते सन्ततिर्भविष्यति । अयि, इमिणा अनेन सार्थवाहवृत्तान्तेन द्विगुणोद्वेगो भर्ता । एनमाश्वासयितुं मेघप्रतिच्छन्दनाम्नः सकाशादार्यं माढव्यं विदूषकं गृहीत्वागच्छ ।

* विमणाअदि भट्टा, तुमं गदुअ मेहप्पडिच्छन्दादो ॥ छा—विमनायते भर्ता ॥ त्वं गत्वा मेघप्रतिच्छन्दादित्यपि पाठः ॥

प्रतिहारी—[1]सुट्ठु भणासि ॥

(इति निष्क्रान्ता)

राजा—अहो! दुष्यन्तस्य संशयमारूढाः पिण्डभाजः ॥

अस्मात्परं बत यथाश्रुति संभृतानि
को नः कुले निवपनानि (नियच्छतीति) करिष्यतीति ।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
धौताश्रुशेषमुदकं पितरः पिबन्ति ॥ २५

(इति मोहमुपगतः)

---

1 सुष्ठु भणसि ॥

---

२५ **असादित्यादि ॥** बत खेदे ॥ धौतमश्रु येन तत्तथोक्तम् ॥ तस्मादुदकाच्छेषमवशिष्टं । अत्र प्रस्तुतश्रृङ्गारविरुद्धशोकस्थायिककरुणस्यानुभूयमानत्वेऽपि विप्रलम्भश्रृङ्गारस्य स्मर्यमाणत्वेन न विरोधः ॥ तथाहि ॥ स्थायिलक्षणं—"सजातीयविजातीयभावान्तरैरतिरस्कृतत्वेनोपनिबध्यमानो रत्यादिस्स्थयी भवति ॥ यथा बृहत्कथायां नरवाहनदत्तस्य मदनमंजुकायामनुरागस्तत्तदवान्तराधिकानुरागैरतिरस्कृतः स्थायी" यथा मालतीमाधवीये श्मशानाङ्के महामांसविक्रये बीभत्सेन मालत्यनुरागस्यातिरस्कृततया प्रस्तुतश्रृङ्गारपरिपोषणम् ॥ अथवा—यथा श्रृङ्गारबीभत्सयोर्विरोधस्तथा श्रृङ्गारकरुणयोर्न भवति ॥ तथाहि ॥ चित्तस्य विकाससम्भवयोः श्रृङ्गारहास्ययोर्विस्तरप्रभवयोर्वीराद्भुतयोः क्षोभोद्भूतयोः रौद्रभयानकयोर्विक्षेपजन्ययोर्बीभत्सकरुणयोरन्योन्यं सुहृत्त्वम् ॥ तथा श्रृङ्गारबीभत्सयोर्हास्यकरुणयोर्वीरभयानकयोरौद्राद्भुतयोर्वैरित्वं भवति ॥ यथा रघुवंशे—इन्दुमतीविनाशादजस्य । यथा च कुमारसम्भवे—स्मरविनाशाद्रतेः ॥ "अयं स रशनोत्कर्षी" इत्यादौ तु पूर्वानुगतश्रृङ्गारस्मरणेन श्रृङ्गारकरुणयोर्न विरोधः भोजराजस्तु श्रृङ्गारप्रकाशे—परिबर्हशालिनमेकमेव श्रृङ्गाररसं प्रत्यपादयत् "वटयक्षवचस्सदृशीं हास्यादिषु

---

सुष्टुभणसि । संशयमारूढाः पिण्डदाभावात् । पिण्डभाजः पितरः ॥

**असादिति ॥** बतेति खेदे । अस्मात्परं दुष्यन्तात्परं यथाश्रुति वेदानतिक्रमेणनोऽस्माकं कुले सम्भृतानि बहूपकरणयुक्तानि निवपनानि श्राद्धादीनि । 'पितृदानं निवापः. स्यात्' इत्यमरः । को नियच्छति ददाति । दास्यतीत्यर्थः । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् । इतिकारणान्नूनमुत्प्रेक्षे । प्रसूतिविकलेन पुत्ररहितेन मया प्रसिक्तं दत्तमुदकं धौतमश्रु येन तच्च तच्छेषं च तादृक्पितरः पिबन्ति । काव्यलिङ्गोत्प्रेक्षानुप्रासाः । वसन्ततिलकं वृत्तम् । 'राजा—दीर्घमुष्णं च निःश्वस्य' इत्यादिनैतदन्तेन छलनं नामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'आत्मावसादनं यत्तु छलनं तदुदाहृतम्' इति । 'राजा—संरोपिते' इत्यादिना 'मोहमुपगतः' इत्यन्तेन मूर्च्छना नाम कामदशोक्ता ।

**चतुरिका**—(ससम्भ्रम (मव(लोक्य)लम्ब्य)[1]समस्ससदु समस्ससदु भट्टा ॥

**सानुमती**—[2]हद्धि हद्धि ॥ (सतिखलु) विज्जन्तम्हिवि दीवे, ववधाणदोसेण एसो अन्धआर(दोसं) अणुहोदि ॥ अहं दाणिं एव्वणं णिव्वुदं करिस्सं अहवा सुदं मए सउन्दळं समस्सासअन्तीए महेन्दजणणीए मुहादो ॥ जण्णभाअपज्जुस्सुआ देवा एव्व तह अणु(चिट्ठि)ट्ठास्सन्दि । जह तुमं धम्मपत्तिं अइरेण भट्टा अहिणन्दइस्सदित्ति ॥ ता(ण)जुत्तं एदं काळंपडिवाळेदुं । (जाव)इमिणा वुत्तंदेण पिअसहिं समस्सासेमि ॥

(इति उद्भ्रान्तकेन सानुमती निष्क्रान्ता)

---

1 समाश्वसितु समाश्वसितु भर्ता ॥

2 हा धिक् हा धिक्! (सति खलु) विद्यमानेऽपि दीपे व्यवधानदोषेणैषोऽन्धकारमनुभवति ॥ अहमिदानीमेवैनं निर्वृतं करिष्यामि ॥ अथवा श्रुतं मया शकुन्तलां समाश्वासयन्त्याः महेन्द्रजनन्याः मुखाद्यज्ञभागपर्युत्सुका देवा एव तथानुष्ठास्यन्ति ॥ यथा त्वां धर्मपत्नीमचिरेणाभिनन्दयिष्यतीति ॥ त(न्नय)स्मायुक्तमेतं कालं प्रतिपालयितुम् ॥ अ(यावद) नेन वृत्तान्तेन प्रियसखीं समाश्वासयामि ॥

---

हास्यमुन्नयन् रसतां, रसमेकमाह राजा श्रृङ्गारं रसिकभावश्रृङ्गगतम्” वटेवटे यक्षस्तिष्ठतीत्यतिप्रमाणानुपेतत्वात् ॥ यथा तद्वचो हास्यं भवति । तद्वद्धास्यभयानकप्रभृतिषु रसप्रतिपादनं हसनीयमेवेति प्रतिपादयन् भोजो रसिकजनभावश्रृङ्गप्राप्तेरन्वर्थनामानं श्रृङ्गारमेकमेव रसं प्रत्यज्ञास्त ॥ यस्तु प्रस्तावनामारभ्य भरतवाक्यावधि प्रवर्तते स प्रबन्धरसः ॥

**उद्भ्रान्तकेनेति** ॥ उत्क्रान्तकेन उत्क्रमणेन आकाशं प्रत्युद्गमनेनेति यावत् ॥

---

समाश्वसितु भर्ता । सति, खलु दीपे व्यवधानं देशान्तरेणापवरकादिना च स एव दोषस्तेनान्धकारदोषं मोहलक्षणम् । अथ च तिमिरकृतं दोषं वस्त्वदर्शनलक्षणमनुभवति । सत्यामपि शकुन्तलायां तददर्शने प्रस्तुते साम्याद्दीपकस्याप्रस्तुतस्य वचनादप्रस्तुतप्रशंसा । अहमिदानीमेव निर्वृतं सुखितं करोमि । अथवेत्याक्षेपे । श्रुतं मया शकुन्तलां समाश्वासयन्त्या महेन्द्रजनन्या अदितेर्मुखाद्यज्ञभागोत्सुका देवा एव तथानुष्ठास्यन्ति यथाऽचिरेण धर्मपत्नीं शकुन्तलां भर्ताभिनन्दिष्यतीति । तन्न युक्तं कालं प्रतिपालयितुम् । विलम्बं कर्तुमित्यर्थः । यावदनेन वृत्तान्तेन प्रियसखीं शकुन्तलां समाश्वासयामि । श्रुतमित्यादिना वक्ष्यमाणमातलिप्रवेशः सूचितः । अनेनादानं नामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—‘बीजकार्योपगमनमादानमिति संज्ञितम्’ इति । भर्ता शकुन्तलामभिनन्दिष्यतीति बीजकार्योपगमनम् । उद्भ्रान्तकेनेत्युत्क्रान्तकना म्नोत्प्लुतिकरणेन । तल्लक्षणं सङ्गीतसुधानिधौ—‘पूर्वं दक्षिणमङ्घ्रिमुत्थापयित्वात्र कुञ्चयेत् । वामं शीघ्रं भ्रमेद्वामावर्तमुद्भ्रान्तकं विदुः ॥

(नेपथ्ये)

[1]अब्बम्हण्णं अब्बम्हण्णं ॥

राजा—(प्रत्यागतचेतनः) (कर्णं दत्वा) अये माढव्यस्येवार्तस्वरः ॥ कः कोऽत्र भोः ?

प्रतिहारी—(ससम्भ्रमं प्रविश्य) [2]परित्ताअदु परित्ताअदु देवो ॥ जेण केण अ कण्ठे गहीदं संसअगदं वअस्सम् ॥

राजा—केनात्त (गन्धो)कण्ठो माणवकः ?

प्रतिहारी—[3]देव, अदिट्ठरूव्वेण केण वि सत्तेण अक्कमिअ मेहप्पडिच्छन्दस्स पासादस्स अग्गभूमिं आरोविदो ॥

राजा—(उत्थाय) मा तावन्ममापि सत्त्वैरभिभूयन्ते गृहाः ॥

अथवा—

अहन्यहन्यात्मन एव तावद्
ज्ञातुं प्रमादस्खलितं न शक्यम् ।

1 अब्रह्मण्यम्, अब्रह्मण्यम् ।
2 परित्रायतां परित्रायतां देवः । येन केन च कण्ठे गृहीतं संशयगतं वयस्यम् ॥
3 देव, अदृष्टरूपेण केनापि सत्त्वेनाक्रम्य मेघप्रतिच्छन्दस्य प्रासादस्याग्रभूमिमारोपितः ॥

**अब्रह्मण्यमिति ॥** रक्षकं प्रत्यवध्योऽहमित्यापन्नाक्रोशः—"अब्रह्मण्यमवध्योक्ता"वित्यमरः ॥

ममापीत्यनेनात्मनो निर्दोषता गम्यते ॥ अथवेत्यादि ॥

२६ **अहनीति ॥** आत्मन एव स्वस्यैव प्रमादस्खलितं प्रमादेनानवधानतया प्राप्तं स्खलितं दुराचरणं ॥ तावत्साकल्येन ज्ञातुं न शक्यं ॥ प्रजासु जनेषु केन पथा असता

देशीविदां तु केषाञ्चिद्द्वाह्यभ्रमरिका मता ॥' इति । अब्रह्मण्यमवध्यः । 'अब्रह्मण्यमवध्योक्तौ' इत्यमरः । माढव्यस्येव विदूषकस्येव । परित्रायतां देवः संशयगतं जीवनमरणसंशयं प्राप्तं वयस्यं विदूषकम् । अनेन भयनामकं सन्ध्यन्तराङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'भयं त्वाकस्मिकस्त्रासः' इति । आत्तगन्धोऽभिभूतः । 'आत्तगन्धोऽभिभूतः स्यात्' इत्यमरः । माणवको विदूषकः । अदृष्टरूपेण केनचित्सत्त्वेन जन्तुनातिक्रम्य मेघप्रतिच्छन्दनाम्नः प्रासादस्याग्रभूमिमारोपितः । सत्त्वेनातिक्रम्येति यदुक्तं तन्निषेधे । मा तावदिति भिन्नं वाक्यम् । ममाप्यतिधार्मिकस्य यथाशास्त्रं प्रजापरिपालकस्य नानायज्ञादिकर्तुर्गृहाः सत्त्वैरभिभूयन्त इति प्रश्नकाकुः ॥अथवेत्याक्षेपे ॥

**अहनीति ॥** अहन्यहनि प्रतिदिनमात्मनः प्रमादस्खलितमनवधानेन विपरीतकरणं ज्ञातुं तावदादौ न शक्यम् ।

प्रजासु कः केन पथा प्रयाती-
त्यशेषतो वेदितुमस्ति शक्तिः ॥ २६

(नेपथ्ये)

[1]भो वअस्स अवि(हा)ह अवि(हा)हं ॥

राजा—(गतिभेदेन (परिक्रामन्) सखे न भेतव्यं न भेतव्यम् ॥

(नेपथ्ये)

(पुनस्तदेव पठित्वा) [2]अत्तभवं कहं ण भाइस्सं ? एसो मं को विपच्चा वणदसिरोहरं इक्खुं वि अति(ण्ण)क्ख भङ्गं करेदि ॥

राजा—(सदृष्टिक्षेपं) धनुस्तावत् ॥

शार्ङ्गहस्ता—यवनिका (प्रविश्य) [3]भट्टा एदं सरासणं हत्थावापसहिदं (राजा सशरं धनुरादत्ते)

(नेपथ्ये)

एष त्वामभिनवकण्ठशोणितार्थी
शार्दूलः पशुमिव हन्मि वे(चे)ष्टमानम् ।

1 भोवयस्य ! अविध अविध !

2 अत्रभवन् ! कथं न भेष्यामि ? एष मां कोऽपि पश्चादवनतशिरोधरमिक्षुमिव (त्रि) तीक्ष्णभङ्गं करोति ॥

3 भर्तः, इदं शरासनं हस्तावापसहितम् ॥

सता वा मार्गेण ॥ कः प्रयाति सञ्चरति ॥ अशेषतस्साकल्येन ॥ वेदितुं ज्ञातुं ॥ शक्तिस्सामर्थ्यं ॥

अविधेत्याक्रोशे ॥

गतिभेदेन गत्यन्तरेण त्वरितगमनेनेत्यर्थः ॥

हस्तावापो नाम ज्याघातवारणमुच्यते ॥

२७ एष इत्यादि ॥ शार्दूलो व्याघ्रः ॥ वेष्टमानं लुठन्तं ॥ आर्तानां दीनानां शरणं भवतु रक्षको भवतु ॥ दुष्यन्त इति नामग्रहणमाक्षेपे ॥ नेपथ्य इत्यादिनैतदन्तेन

एवकारव्यवच्छेद्यमाह—प्रजास्विति । प्रजासु मध्ये को जनः केन पथा प्रयातीत्यशेषतो वेदितुं ज्ञातुमात्मनः शक्तिर्नास्तीति सम्बन्धः । ज्ञातुं वेदितुमित्यर्थालङ्कारः । च्छेकवृत्त्यनुप्रासौ । त्रयोदश्युपजातिरिन्द्रवज्रोपेन्द्रवज्रयोः । भो वयस्य, अविहेति खेदे निपातः । 'अविहाविहा निर्वेदे' इत्युक्तेः । गतिभेदेन । क्रोधोद्धतगत्येत्यर्थः । कथं न भेष्यामि । एष मां कोऽपि प्रत्यवनतशिरोधरमिक्षुमिव त्रिभङ्गं खिखण्डं करोति । एतद्धस्तावापसहितं ज्याघातवारणसहितं शरासनं धनुः ॥

एष इति ॥ अभिनवं नूतनं यत्कण्ठशोणितं तदर्थी शार्दूलो व्याघ्रः । 'शार्दूलद्वीपिनौ व्याघ्रे' इत्यमरः । चेष्टमानमितस्ततो वलमानं पशुमिवैष त्वां हन्मि । अभिनवे-

आर्तानां भयमपनेतुमात्तधन्वा
दुष्यन्तस्तव शरणं भवत्विदानीम् ॥ २७

**राजा**—(सरोषम्) कथं मामेव निर्दिशति ॥ तिष्ठ तिष्ठ को(कु)णपा(शन)पशद त्वमिदानीं न भविष्यसि? (शार्ङ्गमारोप्य) वेत्रवति। सोपानमार्गमादेशय ॥

**वेत्रवती**—[1]इदो इदो देवो ॥

(सर्वे सत्वरमुपसर्पन्ति)

**राजा**—(समन्तादवलोक्य) शून्यं खल्विदम् ॥

(नेपथ्ये)

[2]अविह! अविह! अहं अत्तभवन्त पेक्खामि ॥ तुमं ण मं पेक्खसि, बिडाळगहीदो मूसिओ विअ णिरासोम्हि जीविए संवुत्तो ॥

---

1 इत इतो देवः ॥

2 अविध अविध, अहमत्रभवन्तं पश्यामि, त्वं न मां पश्यसि ॥ बिडालगृहीतो मूषिक इव निराशोऽस्मि जीविते संवृत्तः ॥

---

विद्रवो नाम गर्भसन्ध्यङ्गमुक्तं ॥ तदुक्तं—"वधोद्योगो विद्रवस्स्याद्बन्धसन्ताडनादिभिः" इति ॥ अत्र वदबन्धनाद्युद्योगाद्विद्रवः ॥

**कथमित्यादि ॥** मामित्यनेन स्वस्य शूरता व्यज्यते ॥ इदानीं मया शरासने गृहीते सति ॥

---

त्यादिविशेषणमेतदोऽपि योज्यम्। चेष्टमानमिति युष्मदोऽपि। अनेन बीभत्सरसो ध्वनितः। तल्लक्षणं तु–'हृद्यानां तु पदार्थानां दर्शनश्रवणादयः। स्वभावाद्धातुदोषाद्वा वस्त्वत्यन्ताप्रियात्मकम्। स्याद्विभावोऽथानुभावाद्धृत्कम्पो गात्रधूननम्। अथ सञ्चारिणो मोहावेगापस्मारमृत्यवः। व्याधिश्च यत्र बीभत्सः स स्थायिन्या जुगुप्सया। शुद्धोऽशुद्धोऽत्यन्तशुद्धो बीभत्सस्तु त्रिधा मतः। आद्यौ रुधिरविष्टादिशुद्धाशुद्धविभावजौ॥' इति। दशरूपकेऽपि—'रुधिरान्त्रकीकसवसास्नाय्वादिभिः क्षोभणः' इति द्वितीयो बीभत्सभेदः। आर्तानां पीडितानां भयमपनेतुं दूरीकर्तुमात्तधन्वा गृहीतचाप इति स्वाभाविकं क्रोधावेगसूचनम्। उपमावृत्तिश्रुत्यनुप्रासाः। प्रहर्षिणीवृत्तम्। अनेनौजो नाम सन्ध्यन्तराङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'ओजस्तु वागुपन्यासो निजशक्तिप्रकाशकः' इति। तदभिप्रायेण राजा सरोषमिति। कुणपाशन राक्षस। 'राजा—सरोषम्' इत्यादिनैतदन्तेन क्रोधो नाम सन्ध्यन्तराङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'क्रोधस्तु चेतसो दीप्तिरपराधादिदर्शनात्' इति। इत इतो देवः। अविहा खेदे। अहमत्रभवन्तं पूज्यं राजानं पश्यामि। त्वं मां न पश्यसि। बिडालगृहीतो मार्जारगृहीतो मूषिक इव निराशोऽस्मि जीविते संवृत्तः। अनेनोपमानेन त्यागेऽपि जीविता-

**राजा**—भोस्तिरस्करिणीगर्वित ! मदीय(शस्त्रं)मस्त्रं त्वां द्रक्ष्यति ॥ सम्प्रति स्थिरो भव ॥ एषोऽहं तमिषुं सन्दधे ॥

यो हनिष्यति वध्यं त्वां रक्ष्यं रक्षति च द्विजम् ।
हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः ॥ २८

(अस्त्रं च सन्धत्ते)

(ततः प्रविशति विदूषकमुत्सृज्य मातलिः ॥ विदूषकश्च)

**मातलिः**—राजन्,

कृताश्शर(व्यं)व्या हरिणा तवासुराः
शरासनं तेषु विकृष्यतामिदम् ।

---

भोस्तिरस्करिणीत्यादिना तन्मिश्रावर्जयन्त्यपइत्यन्तेन दुष्यन्तेन स्वशक्तिकथनाद्व्यवसायइति सन्ध्यङ्गमुक्तं तदुक्तं—"व्यवसायस्स्वशक्त्युक्तिः" इति ॥

२८ **य इति** ॥ द्विजं विदूषकं तन्मिश्राः तदेकीभूताः ॥

**ततः प्रविशतीत्यादि** ॥ मातलिर्नामेन्द्रसारथिः ॥

२९ **कृता इति** ॥ हरिणा देवेन्द्रेण ॥ तव ॥ अमानुषप्रभावस्य तवेति यावत् ॥ असुराः विविधमायागर्विता देवशत्रवः ॥ शरव्याः लक्ष्याः ॥ अत्र देवेन्द्रप्रेषितमातलिसमागमेन परिवर्तको नाम सात्त्वतीवृत्त्यङ्गमुक्तं भवति ॥ तदुक्तं—"त्यक्त्वा प्रकृतमन्यस्य

---

भावः सूचितः । तिरस्करिणी विद्या तया गर्वित, यद्यहं न पश्यामि तथापि मदीयं शस्त्रं त्वां द्रक्ष्यति । एष इत्यस्य श्लोकेनान्वयः ॥

**य इति** ॥ यः शरो वध्यं त्वां हनिष्यति प्रहरिष्यति । द्विजं विदूषकं रक्ष्यं रक्षति रक्षिष्यति । तमिषुं सन्दध इति सम्बन्धः । एकस्योभयकारित्वे दृष्टान्तमाह—हंस इति । अत्रोपमेय उभयस्यादृष्टत्वेन रूपेणैक्यं विवक्षितम् । 'राजा—भोः' इत्यादिनैतदन्तेन व्यवसायो नामाङ्गमुपक्षिप्तम् । तल्लक्षणं दशरूपके—'व्यवसायः स्वशक्त्युक्तिः' इति । राज्ञा स्वशक्तेराविष्करणात् । 'नेपथ्ये' इत्यादिनैतदन्तेन रौद्रो रसो ध्वनितः । तल्लक्षणं तु—'हन्तृप्रकृतयो रक्षोदैत्याद्यन्यायकारिणः । जिघांसाद्याश्च यत्र स्युर्विभावाः परिकीर्तिताः ॥ भ्रुकुटी रक्तनेत्रत्वं कपोलस्फुरणं तथा । दन्तौष्ठपीडनं हस्तनिष्पेषोऽथान्यविग्रहे ॥ तलाद्यैस्ताडनं छेदो मर्दः पाटनमोटने । शस्त्राणां ग्रहणं घातः प्रहारो रुधिरस्रुतिः ॥ एतेऽनुभावा बोधावमर्शावेगौ च चापलम् । स्वेदवेपथुरोमाञ्चगद्गदस्वरतादयः ॥ भावाः सञ्चारिणः स्थायी क्रोधो रौद्रोऽभ्यधायि सः ॥' इति ।

**कृता इति** ॥ हरिणेन्द्रेणासुरा दैत्यास्तव शरव्यं लक्ष्यं कृताः । 'लक्षं लक्ष्यं शरव्यं च' इत्यमरः । अत इदं शरासनं तेषु विकृष्यताम् । तदर्थमहमागतोऽस्मीति सूचि-

प्रसादसौम्यानि सतां सुहृज्जने
पतन्ति चक्षूंषि न दारुणाः शराः ॥ २९

राजा—(अस्त्रमुपसंहरन्) अये मातले ! स्वागतं देवेन्द्रसारथे ?

(प्रविश्य)

विदूषकः—[1]जेण अहं इट्ठिपसुमारं मारिदो, सो इमिणा साअदेण अहिणंदीअदि ॥

मातलिः—(सस्मितम्) आयुष्मन् ! श्रूयताम् ॥ यदस्मि हरिणा भवत्सकाशं प्रेषितः ॥

राजा—अवहितोऽस्मि ॥

मातलिः—अस्ति कालनेमिप्रसूतिर्दुर्जयो नाम दानवगणः ॥

राजा—(अस्ति) श्रुतपूर्वो मया नारदात् ॥

---

1 येनाहमिष्टिपशुमारं मारितः; सोऽनेन स्वागतेनाभिनन्द्यते ॥

---

करणं परिवर्तक" इति। अत्र प्रकृतं परित्यज्यान्यस्य करणेऽपि तदन्यत्कार्यं यथा प्रकृत एव पर्यवस्यति तथा कर्तव्यं ॥ अन्यथा प्रबन्धवस्तुविच्छेदप्रसङ्गात् ॥ यथा प्रकृते शकुन्तलाविषयविरहाकुलस्य राज्ञो मातलिसमागमस्तेन सह नाकगमनं तस्मात् प्रतिनिवर्तनसमये मारीचाश्रमे शकुन्तलादर्शनम् ॥

जेणेत्यादि ॥ अनेन राज्ञा ॥ इष्टिपशुमारं मारित इत्यत्र उपमाने कर्मणि चेति णमुल् ॥ कषादित्वाद्यथाविध्यनुप्रयोगः ॥

---

तम् । सूक्ष्मकाव्यलिङ्गं च । सुहृज्जने सतां प्रसादेन सौम्यान्यनुग्राणि चक्षूंषि पतन्ति न दारुणा मर्मभेदिनः शराः । तेन तेषु धनुराकर्षणमात्रं न, अपि तु शरपातोऽपि कर्तव्य इति भावः । अत्र तव मयीति विशेषे वक्तव्ये सतां सुहृज्जन इति सामान्योक्तेरप्रस्तुतप्रशंसा । सतां तादृशचक्षुषा सुहृज्जनसम्बन्धप्रतीतेः समालङ्कारो व्यङ्ग्यः । न दारुणा इति व्यतिरेकः । वृत्त्यनुप्रासः । वंशस्थं वृत्तम् । अस्त्रं बाणम् । अये इत्याश्चर्ये । मातलेर्महत्त्वमिन्द्रसारथित्वेनैवेति महेन्द्रसारथे इत्युक्तिः । अहं येनेष्टिपशुमारं मारितः सोऽनेन स्वागतेनाभिनन्द्यते । अस्मीत्यहमर्थे निपातः । हरिणेन्द्रेण । अवहितोऽस्मि सावधानोऽस्मि । 'राजा—अस्ति' इति पूर्वस्योत्तररूपं भिन्नं वाक्यम् ॥

**मातलिः**—

**सख्युस्ते स किल शतक्रतोरजय्य-**
**स्तस्य त्वं रणशिरसि स्मृतो निहन्ता ।**
**उच्छेत्तुं प्रभवति यं न सप्तसप्ति-**
**स्तं नैशं तिमिरमपाकरोति चन्द्रः ॥** ३०

स भवानात्तशस्त्र एवेदानीमिममैन्द्ररथमारुह्य विजयाय प्रतिष्ठताम् ॥

**राजा**—अनुगृहीतोऽहमनया मघवत्सम्भावनया ॥ अथ, माढव्यं प्रति भवता किमेवं प्रयुक्तम् ?

**मातलिः**—तदपि कथ्यते ॥ किंनिमित्तादपि मनस्सन्तापादायुष्मान् मया विक्लबो दृष्टः, पश्चात्कोपयितुं (आयुष्मन्तं) तथा कृतवानस्मि, कुतः ?

**ज्वलति चलितेन्धनोऽग्नि-**
**र्विप्रकृतः पन्नगः फ(णां)णं कुरुते ।**
**प्रायः स्वं महिमानं**
**क्षोभात्प्रतिपद्यते हि जनः ॥** ३१

---

३० **सख्युरिति** ॥ सः दुर्जयो दानवगणः ॥ किलेति ॥ प्रसिद्धौ ॥ सप्तसप्तिस्सूर्यः ॥

३१ **ज्वलतीत्यादि** ॥ हि यतो हेतोः ॥ विप्रकृतः विकारितः ॥ महिमानं प्रभावम् ॥

---

**सख्युरिति** ॥ किलेति प्रसिद्धौ । ते तव सख्युर्मित्रस्य । अनेन जन्मप्रभृति तेन सह मैत्र्यभिनियोगत्वेनेदं मन्तव्यमिति भावः । शतक्रतोरिन्द्रस्याजय्यः । प्रयत्नसहस्रैरपि जेतुमशक्य इत्यर्थः । 'क्षय्यजय्यौ शक्यार्थे' इति निपातः । रणशिरसि सङ्ग्रामाग्रे तस्य दानवगणस्य त्वं नियन्ता स्मृतः । सप्तसप्तिः सूर्यो यन्नैशं निशासम्बन्धि तिमिरमुच्छेत्तुं नाशयितुं न प्रभवति समर्थो न भवति चन्द्रस्तदपाकरोति । दृष्टान्तः । स्तेसस्तस्येति सप्तसप्तीति च्छेकवृत्त्यनुप्रासाः । प्रहर्षिणीवृत्तम् । अत्रानेन स्वस्वामिनः सूर्योपमानत्वेन तेजस्वित्वं वदता तदशक्यकरत्वेनास्य चन्द्रोपमानत्वं वदतोभयत्रौचित्यं ध्वनितम् ।

**ज्वलतीति** ॥ चलितं चलनं प्राप्तमिन्धनं यस्य सोऽग्निर्ज्वलति । विप्रकृतः कोपितः पन्नगः सर्पः फणां फटामूर्ध्वं कुरुत इत्यर्थः । 'फटायां तु फणा द्वयोः' इत्यमरः । हि निश्चितं जनः सर्वो लोकः क्षोभाच्चित्तक्रौर्यात्स्वं महिमानमात्मप्रभावं प्रायो बाहुल्येन

**राजा**—युक्तमिदमनुष्ठितं भवद्भिः ॥ (जनान्तिकं) वयस्य ! अनतिक्रमणीया दिवस्पतेराज्ञा ॥ तदत्र परिगतार्थं कृत्वा मद्वचनादमात्यपिशुनं ब्रूहि ॥

त्वन्मतिः केवला तावत्परिपालयतु प्रजाः ।
अधिज्यमिदमन्यस्मिन् कर्मणि व्यापृतं धनुः ॥ ३२

**विदूषकः**—[1]जं भवं आणवेदि ॥

(इति निष्क्रान्तः)

**मातलिः**—(आयुष्मान्रथमारोहतु) इत इत आयुष्मन् !

(राजा रथाधिरोहणं नाटयति)

(निष्क्रान्ताः सर्वे)

इति श्रीमहाकविकालिदासकृतौ शाकुन्तलनाटके

षष्ठोऽङ्कः ॥

1 यद्भवानाज्ञापयति ॥ न. विश्वनाथ शास्त्री.

३२ त्वन्मतिरित्यादि ॥ केवला प्रजा पालनैकतत्परा ॥ प्रजास्तावत्पालयतु ॥ यावन्मदागमनं तावदित्यर्थः ॥ तेन च पुनरागमने बिन्दुरुक्तः ॥ अधिज्यमारोपितगुणकम् ॥

इति श्रीरमणवेङ्कटाचलेश्वरपादारविन्दसमाराधकवैखानसकुलतिलक
श्रीकौशिकगोत्र श्रीतिरुमलाचार्यपुत्त्रेण ध्वनिप्रस्थानपरमाचार्याष्ट-
भाषाचक्रवर्ति श्रीनिवासाचार्येण विरचितायां
शाकुन्तलव्याख्यायां षष्ठोऽङ्कः ॥

प्रतिपद्यते प्राप्नोति । मालादृष्टान्तालङ्कारः । भवानिति विशेषे प्रस्तुते जन इति सामान्योक्तेरप्रस्तुतप्रशंसा । लतिलिते इति छेकवृत्त्यनुप्रासौ । तत्तस्मादत्र विषये ममेन्द्राज्ञया तत्र गमनरूपेण परिगतार्थं ज्ञातार्थं कृत्वा । पिशुन इति मन्त्रिनाम ॥

**त्वन्मतिरिति** ॥ इति ब्रूहीति सम्बन्धः । पूर्वं प्रजापरिपालन उभयमपि व्यापृतमासीत् । अधुना ते मतिरेवेति केवलेत्युक्तम् । अनेनोभयायत्तसिद्धित्वमात्मनः सूचितम् । द्वितीयस्यान्यत्र विनियोगमाह—अधीति । अन्यस्मिन्कर्मणि दानवमारणे । एतेन लोकद्वयरक्षकत्वमस्य ध्वनितम् । अधिज्यमित्यनेनैतत्समयमारभ्य दानवमारणपर्यन्तं ज्यानुत्तारणं ध्वनितम् । यद्भवानाज्ञापयति । रथाधिरोहणं नाटयतीत्यूर्ध्वजानुचर्या । तल्लक्षणं तु सङ्गीतरत्नाकरे—"कुञ्चितोत्क्षिप्तपादः स्याज्जानुस्तनसमं यदा । न्यस्तस्याधः कृतोऽन्योऽङ्घ्रिरूर्ध्वजानुस्तदा भवेत् ॥" इति ॥

इति श्रीमदभिज्ञानशाकुन्तलटीकायामर्थद्योतनिकायां षष्ठोऽङ्कः समाप्तः ॥

॥ श्रीरस्तु ॥

# ॥ अभिज्ञानशाकुन्तलम् ॥

## ॥ सप्तमोऽङ्कः ॥

(ततः प्रविशत्याकाशयानेन रथाधिरूढो राजा मातलिश्च)

**राजा**—मातले, अनुष्ठितनिदेशोऽपि मघवतस्सत्क्रियाविशेषादनुपयुक्तमिवात्मानं समर्थये ॥

**मातलिः**—(सस्मितम्) आयुष्मन्, *उभयोरप्यपरितोषः ॥

कविरिदानीं कथासङ्घटनार्थमंकास्यं नामार्थोपक्षेपकं प्रस्तौति—**ततः प्रविशतीत्यादिना** ॥ तदुक्तं—"अङ्कान्तपात्रैरंकास्यमुत्तरांकार्थसूचना" यत्र पूर्वांकान्तपात्रैरुत्तरांकार्थस्सूच्यते तदंकास्यमिति ॥ यथा—षष्ठांकावसाने मातलिश्श्रूयतामित्यादिना एतदन्तेन षष्ठाङ्कावसानस्थितपात्राभ्यां राजमातलिभ्यां सप्तमाङ्कादौ प्रवेशः कृतः ॥ अङ्कावसान एवोत्तरांकाद्यर्थसूचनमपि कृतं ॥ आयुष्मन् श्रूयुतामित्यादिना ॥ नाटके

इतो निर्वहणसन्धिः समाप्तिं यावत् । तल्लक्षणं यथा सुधाकरे—'मुखसन्ध्यादयो यत्र विकीर्णा बीजसंयुताः । महा(यदा)प्रयोजनं यान्ति तन्निर्वहणमुच्यते ॥' इति । कार्यफलप्रयोगेणास्य सन्धित्वम् । तल्लक्षणं मातृगुप्ताचार्यैरुक्तम्—'यदाधिकारिकं वस्तु सम्यक्प्राज्ञैः प्रयुज्यते । तदर्थो यः समारम्भस्तत्कार्यं कथ्यते इति ॥ अभिप्रेतं समर्थं च प्रतिरूपं क्रियाफलम् । इतिवृत्तं भवेद्यस्मिन्फलयोगः स उच्यते' इति । अङ्गानि तु—'सन्धिर्निबोधो ग्रथनं निर्णयः परिभाषणम् । प्रसादानन्दसमयः कृतिर्भावोऽवगूहनम् ॥ पूर्वभावोपसंहारौ प्रशस्तिश्च चतुर्दश ॥' इति । एतेषां लक्षणानि व्याख्यानावसरे तत्र तत्र वक्ष्यामः । अत्र दानवयुद्धं युद्धत्वेन साक्षान्निषिद्धमित्यङ्केनैव सूचितम् । प्रकृते प्रयोजनाभावादन्यद्वारा वाचिकाभिनयेनापि नोक्तम् । अनङ्गस्याभिधानमिति रसदोषापत्तेः । अतः कृतकार्ययोः सूतरथिनोरेव प्रवेशः । तत्संवादेनैव कार्यमुन्नेयम् । आकाशयानेनेत्यनेन मरीच्याश्रमगमनं ध्वनितम् । अनुष्ठितनिदेशः कृताज्ञः । मघवत इन्द्रस्येति मध्यमस्थमुभयत्राप्यन्वेति । सत्क्रियाविशेषात्सम्मानाधिक्यात् । अनुपयुक्तमिवोपयोगरहितमिव, अर्थादिन्द्रं प्रति यन्मया कार्यं कृतं तदिन्द्रसंमाननायाः सहस्रांशेनापि तुलयितुं न क्षममिति सूक्ष्मालङ्कारः । एतेनेन्द्रस्य प्रत्युपकारशीलत्वं विनययुक्तत्वं गुणग्राहित्वं च । आत्मनस्तु परमशौर्यशालित्वमिन्द्रेण तथापूजितत्वादत्यन्तसौभाग्यास्पदत्वं च व्यज्यते । उभयं भवदुपकृतिमिन्द्रसत्कृतं च । त्वं त्वात्मोपकृतमेव तथा समर्थयसे । अहं पुनरुभयमपि । न विद्यते परितोषो यत्रार्थात्कर्त्रोस्तदपरितोषं समर्थये । इन्द्रस्तु त्वत्कर्माधिकं मन्यते । त्वं त्विन्द्रकृतां पूजामधिकां मन्यस इति भावः ।

* 'उभयमप्यपरितोषम्' इति पाठान्तरम् ॥

प्रथमोपकृतं मरुत्वतः
 प्रतिपत्त्या लघु मन्यते भवान् ।
गणयत्यपदानविस्मितो
 भवतस्सोऽपि न सत्क्रियागुणान् ॥ १

---

यदि दूरदेशगमनं प्रस्तुतं तदा पूर्वाङ्कं विच्छिद्य गत्वा उत्तरांकप्रवेशे तत्कार्यं निर्दिशेत् ॥ यथा मातलिना कालनेमिप्रसूतदुर्जयप्रमुखदानवगणं जेतुं दुष्यन्तस्याह्वाने प्रियाविरहविह्वलमानसं दुष्यन्तं कार्यान्तरविक्षिप्तचित्तं कर्तुं विदूषकं प्रक्षोभ्य सौधतलं राजानमानीय तत्र राज्ञे शक्रेणाज्ञप्तं कार्यं निवेद्य अङ्कावसाने दुष्यन्तश्शक्रसमीपं नीतः ॥ सप्तमांकादौ प्रकृतकार्यसिद्धिश्चोक्ता—अनुष्ठितनिदेशोऽपीत्यादिना ॥ अनुष्ठितनिदेशोऽपि कृतशासनोऽपि नियोज्यपुरुषोऽपीति यावत् ॥ मघवतः देवेन्द्रस्य ॥ उभयोरप्यपरितोषः ॥ भवानिन्द्रश्चोभावप्यन्योन्यापरितुष्टौ ॥

१ **प्रथमोपकृतमित्यादि ॥** प्रथमोपकृतं राक्षसविजयरूपं पूर्वोपकारम् ॥ मरुत्वतः प्रतिपत्त्या देवेन्द्रविषयकभक्त्या ॥ लघु अत्यल्पम् ॥ सोऽपि देवेन्द्रोऽपि भवतः अपदानविस्मितः कृतपौरुषविस्मितः ॥ सत्क्रियागुणान् सम्भावनाविशेषान् न गणयति ॥ प्रत्युपकारं न विचारयति ॥ वर्तमानव्यपदेशेन देवेन्द्रस्त्वद्यापि सानुशय एव तिष्ठतीति व्यज्यते ॥

---

तदेव दर्शयति—

**प्रथमेति ॥** भवान्मरुत्वत इन्द्रस्य प्रतिपत्त्या गौरवेण पश्चात्कृतेन प्रथममुपकृतं लघु स्वल्पं मन्यते । भवतोऽवदानेन शुद्धकर्मणा विस्मितः । 'अवदानं शुद्धकर्म' इत्यमरः । सोऽपीन्द्रः सत्क्रिया स्वकृतसंमानना तस्यां गुणानादरातिशयादीनथवा तया गुणांस्त्वन्निविनयार्जवादीन्न गणयति । तव कर्म स्मृत्वा मया तस्य संमानना कृतेति चेतस्यपि तस्य नायातीत्यर्थः । बहुवचनेन संमाननाधिक्यं ध्वन्यते । क्रिया चेत्कथं गुणा इति विरोधाभासो व्यङ्ग्यः शब्दशक्तिमूलः । त्वदवदानस्मरणेनाभिव्यक्तविस्मयस्ते विगलितवेद्यान्तरत्वेन किमपि न स्मरतीति भावः । तेन 'उदात्तवस्तुना सम्पत्' इत्युदात्तालङ्कारः । हेतुश्रुत्यनुप्रासौ । उपमेयोपमा व्यङ्ग्या । परस्परं क्रियाजननादन्योन्यमपि । अत्र सत्क्रियालक्षणे कारणे सत्यपि यद्गणनलक्षणकार्यानुत्पत्तिः सा विशेषोक्तिः । अथ च गणनाभावलक्षणकार्योत्पत्तौ कारणाभावाद्विभावनापि । यद्यपि कारणाभावो नोक्तस्तथापि तद्विरुद्धमुखेनोक्त एवेति सन्देहसङ्करः । अवदानविस्मितत्वेनोक्तनिमित्तत्वमुभयत्र । वैतालीयं वृत्तम् । अन्ये त्वर्धसमं प्रबोधितां मन्यन्ते ।

राजा—मातले ! मा मैवम् ॥ स खलु मनोरथानामप्यभूमिर्विसर्जनावसरसत्कारः ॥ मम हि दिवौकसां समक्षमर्धासनोपवेशितस्य ॥

अन्तर्गतप्रार्थनमन्तिकस्थं
जयन्तमुद्वीक्ष्य कृतस्मितेन ।
आमृष्टवक्षोहरिचन्दनाङ्का
मन्दारमाला हरिणा पिनद्धा ॥ २

मातलिः—किमिवायुष्मानमरेश्वरान्नार्हति ? पश्य ।

---

स खल्वित्यादि ॥ खलु यतः विसर्जनावसरसत्कारः सः मनोरथानामप्यभूमिरविषयः ॥ सत्कारप्रकारमाह—मम हीत्यादि ॥

२ अन्तर्गतेति ॥ आमृष्टवक्षोहरिचन्दनाङ्केत्यनेन दित्सात्वरा व्यज्यते ॥ हरिणा देवेन्द्रेण । मन्दारमाला पिनद्धेत्यनेन देवेन्द्रातिशायिसकलैश्वर्यवत्तया स्वस्य भूलोकविलक्षणमन्दारमालामात्रं लभ्यांशस्त्वन्यत्प्राप्यवस्तु नास्तीति सूच्यते ॥

---

मनोरथातिभूमित्वमेव दर्शयति—मम हीति । मम मनुष्यमात्रस्य । दिवौकसो देवस्य न, अपि तु सकलदिवौकसां देवानाम् । श्रूयमाणतया न, अपि तु समक्षं प्रत्यक्षम् । आसनमात्रे न, अपि तु स्वार्धासने । निविष्टस्य न, अपितूपवेशितस्येत्यस्य श्लोकेनान्वयः ॥

अन्तरिति ॥ अन्तर्गता हृद्गता प्रार्थना मन्दारमालाविषयिणी याच्ञा यस्य स तम् । न दूरस्थम्, अपि त्वन्तिकस्थं समीपस्थम् । 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा' इत्यमरः । जयन्तं पुत्रमुदधिकं वीक्ष्य दृष्ट्वा कृतस्मितेनेति तस्य मनोगतां याच्ञां ज्ञात्वेति सूक्ष्मं जयन्तादप्यात्मनोऽधिकस्नेहपात्रता ध्वन्यते । हरिणेन्द्रेणामृष्टं स्पृष्टं यद्वक्षोहरिचन्दनं हृदयानुलेपः सोऽङ्कश्चिह्नमस्याः सा । अत्राङ्कपदोपादानेन मालायास्तत्कालधारणं तस्यास्तत्कालकृतं चन्दनानुलेपत्वं च व्यज्यते । तेन तत्कण्ठयोग्यत्वाम्लानत्वात्यन्तसुरभित्वमनोहरत्वादिकं ध्वन्यते । मन्दारपुष्पाणां माला मम पिनद्धा मुक्ता स्वयं परिधापिता, न तु दत्ता । गौरवस्याधिक्यादुदात्तम् । न्तन्तीतिन्दन्देति छेकवृत्त्यनुप्रासौ । द्वितीयोपजातिरिन्द्रवज्रोपेन्द्रवज्रयोः । मातलिः—अत्यल्पमिदमुच्यते । भवानमरेश्वरादिति मनोरथातीतवस्तुदानेऽपि सामर्थ्यं ध्वनितम् । किमिव नार्हति । यदतिप्रियमतिरम्यमत्युत्कृष्टं जीवितायमानमपि तदप्यर्हति, अन्यदर्हतीति किं वक्तव्यमिति भावः ॥

सुखपरस्य हरेरुभयैः कृतं
त्रिदिवमुद्धृतदानवकण्टकम् ।
तव शरैरधुना नतपर्वभिः
पुरुषकेसरिणश्च पुरा नखैः ॥ ३

राजा—अत्र खलु शतक्रतोरेव महिमा स्तुत्यः ॥

---

३ सुखपरस्येत्यादि ॥ हरेर्देवेन्द्रस्य पुरुषकेसरिणो नृसिंहस्य यथा शरेण नखेन चानायासेन कण्टकोद्धारणं क्रियते तद्वत्त्वयापि दुर्जयदानवगणविजयः कृत इति यावत् ॥ साहित्यटीका ॥ नतपर्वभिः ॥ नतान्यनुन्नतानि स्वल्पानीति यावत् ॥ पर्वाणि ग्रन्थयो येषां ते तथोक्ताः तैः ॥ शराणां ग्रन्थयोनताश्चेत् न ऋजुत्वं भवतीत्यर्थः ॥ नखानां पक्षे ॥ नतानि मग्नानि हिरण्यकशिपोरुदर इति शेषः ॥ पर्वाणि अङ्गुलिग्रन्थयो येषां ते तथोक्ताः तैर्नखैः ॥

---

सुखेति ॥ सुखपरस्य सुखे परः सुखपरस्तस्य । यद्वा सुखमेव परं यस्यातिसुखिन इति विधेयम् । हरेरिन्द्रस्योभयैः । त्रिदिवं स्वर्गः । दानवाः कण्टका इव दानवकण्टकाः । उद्धृता दानवकण्टका यत्र तत्कृतम् । अत्रोद्धृतपदेन तेषां समूलनाशादत्यन्ताभावो ध्वन्यते । दुःखप्रदत्वं साधर्म्यं गम्यम् । अनया वाऽनयोः पुरस्तेषां जडतरत्वं ध्वन्यते । उद्धृतदानवकण्टकत्वात्सुखपरत्वस्य विधेयत्वे वक्तव्ये यत्तस्यार्थे विधेयत्वमुक्तं तदस्य प्राधान्यं द्योतयितुम् । काव्यलिङ्गं व्यङ्ग्यम् । यथा कश्चिन्मार्गमुद्धृतकण्टकं करोतीत्युक्तिलेशः । एतेन क्लेशाभावो ध्वनितः । अथ च सुखपरस्य सिंहीविलासलालसस्य हरेः सिंहस्य त्रिदिवमिव त्रिदिवं स्थानम् । यद्वा त्रिदिवं सुखं विद्यते यत्र तत् । अर्शआदित्वादच् । 'त्रिदिवं सुखे । 'स्वर्गे च त्रिदिवा नद्याम्' इति हैमः । एतादृशं दानं मदोदकं वान्ति प्राप्नुवन्तीति दोषोपन्यासः । कैरुभयैरित्यत आह—तवेति । अधुना नतानि पर्वाणि येषां ते नतपर्वाणस्तैः । पर्वणां नतत्वं ग्रन्थिस्थले तल्लक्षणात् । एतेन सरलत्वं शीघ्रगत्वं मनोहरत्वं च ध्वनितम् । तव परमशूरस्य विख्यातपौरुषस्य शरैर्नान्यस्येति सम्बन्धस्य व्यञ्जकत्वं बोद्धव्यम् । पुरा पूर्वं च पुरुषकेसरिणो नृसिंहस्य पर्वणः सकाशात् । नतमिति भावे क्तः । नतं पर्वणो येषां तैर्नखैश्च । इन्द्रं प्रत्युभयस्याप्राकरणिकत्वे नतपर्वत्वसाम्यात्तुल्ययोगिता । तेन नखैः शराणां नृसिंहपदेन चापस्य राज्ञ औपम्यं ध्वनितम् । उपमानुप्रासौ ननु दानवा एव कण्टका इति रूपकं सन्देहसङ्करो वास्तु कथमुपमेति चेदुच्यते । उद्धृतपदस्य दानवकण्टकयोः साधारण्यान्न रूपकसाधकत्वम् । किञ्च रूपके कण्टकानां प्राधान्याद्बृहरिदुष्यन्तयोरनुत्कर्षापातात् । उपमायां तु दानवानामेव प्राधान्यात्तदुत्कर्षसिद्धेः । अत एव न सङ्करोऽपि । उपमाकरणप्रयोजनं पूर्वमेवोक्तमिति हीनोपमापि नाशङ्कनीया । द्रुतविलम्बितं वृत्तम् ॥

सिद्ध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
सम्भावनागुणमवेहि तमीश्वराणाम् ।
किं वाऽभविष्यदरुणस्तमसां विभेत्ता
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥ ४

मातलिः—सदृशमेवैतत् ॥ (स्तोकमन्तरमतीत्य) आयुष्मन् इतः ॥ पश्य नाकपृष्ठप्रतिष्ठितस्य सौभाग्यमात्मयशसः ॥

---

४ सिद्ध्यन्तीत्यादि ॥ नियोज्याः प्रेष्यजनाः ॥ बहुवचनेन न त्वहमेक एव ॥ किन्तु मत्सदृशा बहवो देवेन्द्रस्य नियोज्यास्सन्तीति स्वगर्वपरिहारस्सूच्यते ॥ महत्स्वपि प्रभूणामपि कथंचित्साध्येष्वपि न तु नियोज्यजनसाधनीयेष्विति यावत् ॥ कर्मसु स्वदुर्दशानिस्तारककृत्येषु ॥ सिद्ध्यन्ति फलन्ति ॥ अनायासेन साधका भवन्तीत्यर्थः ॥ वर्तमान व्यपदेशेन ईश्वराणां दृष्टिपथ एव ॥ नतु परोक्ष इति व्यज्यते ॥ सम्भावनागुणं बहुमानविशेषमवेहि ॥ अत्र दृष्टान्तमाह— सहस्रकिरणस्स्वयमन्धकारनाशकरणसमर्थस्सूर्यः ॥ तमरुणमनूरुं धुरि अग्रे नाकरिष्यच्चेत् नायोजयिष्यच्चेत् ॥ क्रियातिपत्तौ लृङ् ॥ किं वा ऽभविष्यत्? किमजनिष्यत एवेत्याक्षेपप्रश्ने ॥ सूर्येणारुणस्य धुर्यत्वस्थापनमेवारुणस्य तमोनिवर्तकत्वे निमित्तम् ॥ सूर्येणारुणो धुरि न स्थापितश्चेत्तमो निहन्तुमसमर्थ इति क्रियातिपत्तिः ॥ सुखपरस्येत्यादि पूर्वश्लोकेन मातलिना राक्षसविजयनिमित्तेन दुष्यन्ते स्तुते राज्ञा देवेन्द्रस्येदं सामर्थ्यमिति स्वात्मश्लाघा न कृतेत्यविकत्थनत्वरूपधीरोदात्तत्वं व्यज्यते । तदुक्तं—"गम्भीरो विनयोपेतः कृपावानविकत्थनः । धीरोदात्तस्स विज्ञेयो नायकेषु गुणान्वितः" इति अत्र प्रियवचनं नामालङ्कारः तदुक्तम्—"यत्प्रसन्नेन मनसा पूज्यं पूजयितुं वचः । हर्षप्रकाशनार्थं तु सा प्रियोक्तिरुदाहृता" इति ॥ अत्र सिद्ध्यन्तीत्यादौ पूज्यमिन्द्रं पूजयितुं स्वस्य सन्तोषं ख्यापयितुं च मातलिं प्रति दुष्यन्तस्योक्तिः ॥

---

सिध्यन्तीति ॥ महत्स्वपि कर्मसु कार्येषु नियोज्याः सेवका यत्सिध्यन्ति कार्यनिष्पादका भवन्ति । ईश्वराणां प्रभूणां यत्सम्भावना गौरवं तस्य गुणं तमवेहि जानीहि । प्रभुमहत्त्वेनैव तत्कार्यसिद्धिः, सेवकगुणः कोऽपि नास्तीति भावः । 'सम्भावना वासनायां गौरवे ध्यानकर्मणि' इत्यजयः । अत्रेन्द्र आत्मनि च विशेषे प्रस्तुतेऽप्रस्तुतप्रभुभृत्यवचनादप्रस्तुतप्रशंसा । अनया च स्वस्य भृत्यत्वं तस्य प्रभुत्वं च सूचयन्त्या विनयातिशयद्योतनादुदात्तालङ्कारो व्यज्यते । अरुणस्तमसां भेत्तान्धकारनाशकः किं वा कथमभविष्यत् । चेद्यदि सहस्रकिरणो रविर्धुर्यग्रे नाकरिष्यदिति क्रियातिपातः । दृष्टान्तालङ्कारः, अनुप्रासश्च । किंवेति निपातसमुदायः कथमर्थे । वसन्ततिलकं वृत्तम् । सदृशमेवैतत्तवेत्यर्थः । तेनैतादृशमेव वक्तुमुचितमिति भावः । स्तोकमल्पमन्तरमवकाशमतीत्यातिक्रम्येति कविवचनम् । मातलिः पुनस्तस्यैव स्तुतिं विवक्षन्नाह—आयुष्मन्निति । नाकपृष्ठे स्वर्गतले प्रतिष्ठितस्य सर्वदा स्थिरत्वेन प्रतिष्ठां प्राप्तस्य ॥

विच्छित्तिशेषैस्सुरसुन्दरीणां
वर्णैरमी कल्पलतांशुकेषु ।
सञ्चिं(विचिं)त्य गीतिक्षममर्थ(जातं)बन्धं
दिवौकसस्त्वच्चरितं लिखन्ति ॥ ५

५ विच्छित्तिशेषैरित्यादि ॥ सुरसुन्दरीणां विच्छित्तिशेषैः विच्छित्तेरवशिष्टैः वर्णैः कुङ्कुमकस्तूरिकादिवर्णकैः ॥ विच्छित्तिर्नाम खेलनादिना अनादरेण स्तोकादानम् ॥ उक्तं च—"स्वल्पोऽप्यनादरान्न्यासः कुङ्कुमादेस्स्वमण्डने । या परां जनयेच्छोभां सा विच्छित्तिरुदाहृता" इति ॥ अमी ये दुर्जयदानवगणाभिभूतास्ते अमी इति यावत् ॥ दिवौकसः मनुष्येभ्योऽधिकाः क्रान्तदर्शिनः ॥ दिव्या इति यावत् ॥ अर्थबन्धं अर्थो राक्षसविजयादिकथा बध्यतेऽनेनेत्यर्थबन्धः पदम् ॥ तं गीतिक्षमं गानयोग्यं सुकुमारमित्यर्थः ॥ गीतिः "शिशुर्वेत्ति पशुर्वेत्ति वेत्ति गीतिस्वरं फणी" इति न्यायेन सकलजन्तुश्राव्यशुद्धादिपञ्चविक्रिया ॥ यदाह—"गोपीपतिरनन्तोऽपि वंशध्वनिवशङ्गतः । सामगीतिरसो ब्रह्मा वीणासक्ता सरस्वती ॥ किमन्ये यक्षगन्धर्वदेवदानवपन्नगाः । वनेचरस्तृणाहारः बालः पर्यङ्किकातले । रुदन् गीतामृतं पीत्वा हर्षोत्कर्षं प्रपद्यते । ब्रह्मानन्दरसादेतदधिकं सम्प्रचक्षते" इति ॥ त्वच्चरितं तव युद्धवीरभूलोकेन्द्रमनुष्यस्य तवैकाकितया क्षिप्रविजयकारित्वाद्यपदानमिति यावत् ॥ एकवचनेन चरितस्यानन्यविषयतया अद्वितीयत्वं द्योत्यते ॥ कल्पलतांशुकेषु स्वर्गसद्भावाविनाभूतकल्पलतानामंशुकेषु ॥ अनेन कीर्तेश्चिरस्थायित्वं व्यज्यते ॥ यद्वा । स्वर्गवासिनां स्त्रीपुंसानां विविधमाल्याभरणवस्त्राङ्गलेपपुष्पापचयनावतंसविहरणावासप्रदानसमर्थकल्पलतानामंशुकेषु ॥ अनेन यशसस्सार्वकालिकस्वर्गवासिसकललोकचित्ताधिष्ठानवत्तया मूर्धन्यता प्रकाश्यते ॥ त्वत्कीर्तेः कल्पलतास्तु प्रसिद्धविलक्षणचिरस्थायिजयस्तम्भाभा इति भावः ॥ कल्पवृक्षेषु वस्त्राभरणादीनि विद्यन्त इति प्रसिद्धिः ॥ लिखन्ति कीर्तेश्चिरस्थायितासिद्ध्यर्थमक्षराणि निक्षिपन्ति ॥ तदुक्तं दण्डिना—

विच्छित्तीति ॥ सुरसुन्दरीणां न तु सुरयोषितां, विच्छित्तिशेषैरङ्गरागावशेषैर्यक्षकर्दमादिभिः । 'विच्छित्तिरङ्गरागेऽपि हरिविच्छेदयोरपि' इति विश्वः । तैः स्वहस्तेन तासामङ्गरागं कृत्वावशेषितैरित्यनेन त्वच्चरितानामतिप्रियत्वमासूचितम् । वर्णैर्वर्णकैः सितपीतादिभिरमी दिवौकसः कल्पलतांशुकेषु कल्पवल्लीवस्त्रेषु । एतेनैतदेवाधिकरणं तल्लिखनयोग्यमिति ध्वन्यते । त्वच्चरितं त्वदवदानं लिखन्ति । चरितस्यालेखनासम्भवादाह । गीतक्षमं गातुं योग्यमर्थजातमर्थसमूहं विचिन्त्य विचार्य त्वदीयचरितानि गीतनिबद्धानि कृत्वा लिखन्तीत्यर्थः । क्वचित् 'अर्थतत्त्वम्' इति पाठः । एवं विशिष्टकर्तृविशिष्टकरणविशिष्टाधिकरणनिर्देशेन चरितलेखनस्य वर्णितत्वादुदात्तालङ्कारः । तेन तेषामेवं विधसदाशृङ्गाररसोपभोगयोग्यस्थितिस्त्वत्प्रसादादिति वस्तु ध्वनितम् । अत्र विच्छित्तिविशेषस्य यक्षकर्दमादेर्वर्णकत्वेन निरूपणात्तस्य च प्रकृतोपयोगित्वाच्च परिणामालङ्कारश्च । श्रुतिवृत्त्यनुप्रासौ च । अष्टम्युपजातिरिन्द्रवज्रोपेन्द्रवज्रयोः । महापुरुषत्वादस्य स्वस्तुतिश्रवणं लज्जाकरमसावपि तत्स्तुतेर्न विरमतीति राजा तस्य विषयान्त-

**राजा**—मातले ! असुरसंप्रहारोत्सुकेन पूर्वेद्युर्दिवमधिरोहता न लक्षितो मया स्वर्गमार्गः ।। तस्मात्कथय कतमस्मिन् मरुतां पथि वर्तामहे ?

---

"आदिराजयशोबिम्बमादर्शं प्राप्य वाङ्मयं । तेषामसन्निधानेऽपि न स्वयं पश्य नश्यति" इति ॥ अन्यैर्महाकविभिरप्युक्तं—"किमप्यहिंस्यस्तव चेन्मतोऽहं यशश्शरीरे भव मे दयालुः । एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु" इति पाञ्चभौतिकस्य शरीरस्य नियतनश्वरत्वं कीर्तिशरीरस्य नियतस्थायित्वं च भणितम् ॥ राज्ञस्तु क्षमार्जनोपायसाम्परायवैयात्यक्षमारक्षणवर्धनदानादिरूपक्षमाभोग्यजन्यास्सर्वा अपि कीर्तयश्श्रानुचितार्थत्यागोचितार्थस्वीकाररूपपदसन्दर्भगुम्भिताः कांक्षणीया भवन्ति ॥ तथात्वे हि न नश्यन्ति ॥ यथा रावणादिवधजनितापि रामस्य कीर्तिर्वाल्मीकिविरचितगीतियोग्यरामायणकाव्येन स्थापिता । इदानींतनानामपि कवीनां स्वीकार्यतया वाग्विषयत्वादद्यापि वृद्धिमधिगच्छति । तस्माच्छौर्यादिजनितापि राज्ञां कीर्तिः पदसन्दर्भेणैव स्थाप्यते ॥ लिखन्तीति वर्तमानव्यपदेशेन त्वदृष्टिपथ एवाद्यापि लिखन्तीति चरितस्यापरिच्छेद्यता प्रकाश्यते ॥

**असुरेत्यादि** ॥ पूर्वेद्युरित्यनेन दिवसान्तरव्यवधानाभावकथनादनायासेन राक्षसविजयरूपक्षिप्रकारित्वं स्वस्य सूच्यते ॥ तदुक्तं—"दक्षः क्षिप्रकारी" इति ॥ एष धीरोदात्तनायकगुणो भवति ॥ असुराः दानवाः ॥ सुरप्रतिपक्षविजातीयाकृतिक्रियाभीषणविविधमायाभिज्ञा इति यावत् ॥ तेषां सम्प्रहारो रणं तस्मिन्नुत्सुकेन स्वारसिकोत्कण्ठितेन असुरशब्देन मनुष्यविजातीयकथनात् सामभेददानानर्हतया दण्डार्हता सूच्यते ॥ मयेत्येकवचनेन साहाय्यनैरपेक्ष्यात् स्वस्य युद्धवीरत्वं ध्वनितम् ॥ वीरस्तु युद्धदानदयाभेदेन त्रिविधः ॥ तस्योत्साहस्स्थायी यदाह—"विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः । नीतस्सदस्यरस्यत्वमुत्साहो वीर उच्यते । विरुद्धान्त्राति हन्तीति वीरो विद्वद्भिरीरितः । अभीतिर्बहुभिर्युद्धे ऽप्यसहायो रणे मदः । हर्षश्शस्त्रास्त्रघातेषु समरादपलायनम् । भीताभयप्रदानं च प्रसन्नस्यार्तिभञ्जनम् । एवं युद्धात्मको वीरस्तज्ज्ञैः कविभिरीरितः ॥ अर्थिनामीप्सितानर्थान् प्रदायेच्छाधिकं बहु, अर्थिनः पुनरायातान् स्वजनानितरानपि । यं मानयति दानेन वाक्येन मधुरेण च । एष दानात्मको वीरः कथ्यते दानशालिभिः ॥ व्याधिदारिद्र्यशस्त्रादिक्षुत्पिपासादि पीडितान् । अनुगृह्णाति यः पाति स वीरस्स्याद्दयात्मकः ॥" वीरस्योद्दीपनविभावाः विवेकाध्यवसायनयविनय बलपराक्रमशक्तित्रयप्रभावादयः ॥ अनुभावास्तु स्थैर्यधैर्यत्यागशौर्यवैशारद्यरोमाञ्चादयः ॥ सञ्चारिणस्तु धृतिमतिगर्वामर्षवेगस्मृत्यादयः ॥ प्रकृते दुर्जयदानवजयेन दुष्यन्तस्य युद्धवीरत्वं फलितम् ॥ दानवीरास्तु परशुरामबलिप्रभृतयः ॥ दयावीरा हि जीमूतवाहनादयः ॥ त्रिविधोऽपि वीर उत्तमपुरुष एव ॥ स तु धीरोदात्त एव भवति ॥ धीरोद्धतस्तु धीरोदात्तगुणवैपरीत्येन प्रतिनायकेषु राक्षसादिषु वर्णनीयः ॥ धीरो-

---

रसञ्चारं करोति । असुराणां दैत्यानां सम्प्रहार उत्सुकेन पूर्वेद्युर्दिवं स्वर्गं प्रत्यधिरोहता स्वर्गमार्गो न लक्षितः । किं नु कुत्र वर्तत इति न ज्ञातमिति भावः । मरुतां पथि वायुस्कन्धे । तत्र सप्त वायुस्कन्धा आवहादयः । तन्मध्ये कतरस्मिन्मरुतां स्कन्धे वर्तामहे । तदुक्तं सिद्धान्तशिरोमणौ—'भूवायुरावह इह प्रवहस्तदूर्ध्वं स्यादुद्वहस्तदनु संवहसंज्ञकश्च । अन्यस्ततोऽपि सुवहः प्रतिपूर्वकोऽस्माद्बाह्यापरावह इमे पवनाः प्रसिद्धाः ॥' इति ॥

मातलिः—

त्रिस्रोतसं वहति यो गगनप्रतिष्ठां
ज्योतींषि वर्तयति च प्रविभक्तर(श्मिः)श्मि ।
तस्य द्वितीयहरिविक्रमनिस्तमस्कं
वायोरिमं परिवहस्य वदन्ति मार्गम् ॥ ६

दात्तधीरोद्धतधीरललितधीरशान्ता इति चतुर्विधनायका अपि तत्तदवस्थावाचकाः न तु नियतवृत्तयः॥ एतेषां प्रत्येकमनुकूलदक्षिणशठधृष्टभेदेन षोडशभेदा भवन्ति॥ तेषां ज्येष्ठमध्यमकनिष्ठभेदेन प्रत्येकं त्रैविध्यादष्टचत्वारिंशन्नायकभेदाः एते च दिव्या अदिव्या दिव्यादिव्याश्चेति प्रत्येकं त्रिविधाः॥ ततश्चतुश्चत्वारिंशदधिकशतभेदा भवन्ति ॥ अतएव मदीये नैषधानन्दे भणितम्॥ तथाहि—"नेतुर्भेदान्नायिकानां च जातिश्चेष्टावस्थादेशकालानुरूपाः। ज्ञात्वा सन्धीन् यौवनानां प्रणीतं प्राहुः प्राज्ञा नाटकं नाट्ययोग्यं" इति॥ दिव्यानां कुत्रापि सम्भोगो न वर्णनीयः॥ स्वः पातालसमुद्रोल्लङ्घनाद्युत्साहो दिव्येष्वेव॥ अदिव्योत्तमेष्वपि क्वचिद्भवति॥ दिव्यादिव्येषूभयमपि प्रतिपादनीयं॥ ननु कथं कुमारसम्भवे महाकविना देवीसम्भोगवर्णनं कृतमिति चेदुच्यते ॥ दोषस्तु द्विविधः॥ कवेरव्युत्पत्तिकृतोऽशक्तिकृतश्चेति ॥ तत्राव्युत्पत्तिकृतो दोषश्शक्तितिरस्कृतत्वात् कदाचिन्न लक्ष्यते ॥ यस्त्वशक्तिकृतो दोषस्स झडिति प्रतीयते॥ तस्मान्महाकवीनामव्युत्पत्तिकृतमप्युत्तमदेवताविषयप्रतिषिद्धसम्भोगश्शृङ्गारनिबन्धनाद्यनौचित्यमुत्तमदेवीविषयम् ॥ शक्तितिरस्कृतत्वात् ग्राम्यत्वेन न प्रतीयते॥

६ त्रिस्रोतसमित्यादि ॥ यो वायुर्गगनं निरालम्बः प्रतिष्ठा आस्पदं यस्यास्सा ॥ तां त्रिस्रोतसं मन्दाकिनीम् ॥ ज्योतींषि सप्तर्षीणां स्थानानि ॥ प्रविभक्तरश्मि प्रविभक्ता असंकीर्णा रश्मयस्तेजांसि यस्मिन् कर्मणि तत्तथा ॥ वर्तयति सञ्चारयति ॥ द्वितीयहरिविक्रमनिस्तमस्कम् ॥ द्वितीयेन हरेर्विष्णोर्विक्रमेण पदन्यासेन निस्तमस्कं निर्दोषम्॥ तस्य परिवहाख्यस्य वायोर्मार्गं वदन्ति॥ परिवहो नाम स्वर्गंगासप्तर्षिमण्डल-

**त्रिस्रोतसमिति ॥** यो गगने प्रतिष्ठा स्थितिर्यस्या एवंभूतां त्रिस्रोतसं गङ्गां वहति । तथाच विष्णुपुराणे—'विष्णोर्बिभर्ति यां भक्त्या शिरसाहर्निशं ध्रुवः । ततः सप्तर्षयो यस्य प्राणायामपरायणाः॥ तिष्ठन्ति वीचिमालाभिः सिच्यमानजटाजले । वार्योघैः सन्ततैर्यस्याः प्लावितं शशिमण्डलम् । भूयोऽधिकतमां कान्तिं वहत्येतदहःक्षये । मेरुपृष्ठे वहत्युच्चैर्निष्क्रान्ता शशिमण्डलात्॥' इति । यो मार्गः प्रविभक्ता रश्मयोऽर्थाद्वायुरूपा एव यत्र कर्मणि । ज्योतींषि ध्रुवादिनक्षत्रान्तानि वर्तयति परिभ्रमयति । तथा च विष्णुपुराणे-'सूर्याचन्द्रमसौ तारा नक्षत्राणि ग्रहैः सह । वातानीकमयैर्बन्धैर्ध्रुवैर्बद्धानि तानि वै॥' इति । तथा 'ग्रहर्क्षताराधिष्ण्यानि ध्रुवे बद्धान्यशेषतः । भ्रमन्त्युचितचारेण मैत्रेयानिलरश्मिभिः॥' इति । तस्य परिवहस्य परिवहनाम्नो वायोरिमं मार्गं वदन्ति । द्वितीयो हरेर्वामनावतारे विक्रमः पादनिक्षेपस्तेन निस्तमस्कं पापरहितं शोकरहितं च । 'तमोऽन्ध-

**राजा**—अतः खलु स बाह्यान्तःकरणोऽन्तरात्मा प्रसीदति (रथाङ्गं विलोक्य) मेघपदवीमवतीर्णौ स्वः ॥

**मातलिः**—कथमवगम्यते ?

**राजा**—

**अयमरविवरेभ्यश्चातकैर्निष्पतद्भि-**
**र्हरिभिरचिरभासां तेजसा चानुलिप्तैः ।**

---

प्रवर्तकष्षष्ठो वायुस्कन्धः ॥ यथोक्तं ब्रह्माण्डपुराणे—"आवहः प्रवहश्चैव संवहश्चोद्वहस्ततः । विवहाख्यः परिवहः परावह इति क्रमात् ॥ सप्तैते मारुतस्कन्धा महर्षिभिरुदीरिताः । आवहो वर्तयेद्वायुर्मेघोल्कावृष्टिविद्युतः । वर्तयेत्प्रवहश्चाथ तथा मार्ताण्डमण्डलम् । वर्तयेदुद्वहश्चापि तथा नक्षत्रमण्डलम् । संवहो मारुतस्कन्धस्तथा शीतांशुमण्डलम् । पञ्चमोऽपि विवाहाख्यस्तथैव ग्रहमण्डलम् । सप्तर्षिचक्रं स्वर्गङ्गां षष्ठः परिवहस्तथा । परावहस्तथा वायुर्वर्तयद्ध्रुवमण्डल"मिति ॥

**७ अयमरविवरेभ्य इत्यादि ॥** अरविवरेभ्यः अराणां नेम्यवष्टम्भमण्डलाकारचक्रावयवानाम् ॥ विवरेभ्यः अन्तरालप्रदेशेभ्यः ॥ वारिगर्भोदराणाम् ॥ वारि गर्भे

---

कारे स्वर्भानौ पापे शोके गुणान्तरे' इति हैमः । तदुक्तं वामनपुराणे—'क्रमत्रये तोयमवेक्ष्य दत्तं महासुरेन्द्रेण विभुर्यशस्वी । चक्रे ततो लङ्घयितुं त्रिलोकं त्रिविक्रमं रूपमनन्तशक्तिः ॥ कृत्वानुरूपं दितिजांश्च हत्वा प्रणम्य चर्षीन्प्रथमक्रमेण । महीं महीध्रैः सहितां महार्णवाञ्जहार रत्नाकर पत्तनैर्युताम् ॥ भुवं सनाकं त्रिदशाधिवासं सोमार्कऋक्षैरभिनन्दितं नभः । देवो द्वितीयेन जहार वेगात्क्रमेण देवप्रियमीप्सुरीश्वरः ॥' इति । अन्यत्रापि—'क्रमेणैकेन जगतीं स जहार चराचराम् । नभश्चाक्रमतस्तस्य सूर्येन्दू सव्यदक्षिणौ । द्वितीयेन क्रमेणाथ स्वर्महर्जनतापसाः ॥' इति । विष्णुपुराणेऽस्यान्वर्थताप्युक्ता—'यावन्त्यश्चैव तास्तारास्तावन्तो वातरश्मयः । सर्वे ध्रुवनिबद्धास्ते भ्रमन्तो भ्रामयन्ति तम् ॥ तैलपीडा यथा चक्रं भ्रमन्तो भ्रामयन्ति वै । तथा भ्रमन्ति ज्योतींषि वातविद्धानि सर्वशः ॥ अलातचक्रवद्यान्ति वातचक्रेरितानि तु । यस्माज्ज्योतींषि वहति' इति । तदुक्तं सिद्धान्तशिरोमणौ—'भूमेर्बहिर्द्वादशयोजनानि भूवायुपुत्राम्बुदविद्युताद्यम् । तदूर्ध्वगो यः स चिरङ्गतस्य प्रत्यागतिस्तस्य तु मध्यसंस्था ॥ नक्षत्रकक्षाः खचरैः समेता यस्मादतस्तेन समागतोऽयम् । यथाजरः खेचरचक्रयुक्तो भ्रमत्यजस्रं प्रवहानिलेन ॥' इति । अङ्गभूतमहापुरुषचरितवर्णनादुदात्तालङ्कारः । अनुप्रासश्च । वसन्ततिलकं वृत्तम् । अतः पूर्वोक्तप्रवहवायुस्कन्धसञ्चारतः सबाह्यकरणो बाह्येन्द्रियसहितः ॥

**अयमिति ॥** सीकरैरम्बुकणैः क्लिन्ना आर्द्रा नेमयश्चक्रप्रान्ता यस्य स तेऽयं रथः । अराणि चक्राङ्गानि तेषां विवरेभ्यश्छिद्रेभ्यः । 'अरं शीघ्रे च चक्राङ्गे' इति विश्वः । निष्पतद्भिर्निर्गच्छद्भिश्चातकैः पक्षिविशेषैः कृत्वा अचिरभासां विद्युतां तेजसानुलिप्तैः परीतैर्हरिभी रथाश्वैश्च कृत्वा वारिगर्भाण्युदराणि येषां ते तादृशाम् । अनेन सम्पूर्णजलभरितत्वं ध्वनितम् ।

गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते शीकरक्लिन्ननेमिः ॥ ७

मातलिः—क्षणादूर्ध्वमायुष्मानात्माधिकारभूमौ वर्तिष्यते ॥

राजा—(अधो विलोक्य) मातले ! वेगावतरणादाश्चर्यदर्शनस्संलक्ष्यते मनुष्यलोकः ॥

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी
प(र्णस्वा)र्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात्पादपाः ।

---

येषान्तानि तथोक्तानि तान्युदराणि येषां ते तथोक्ताः ॥ तेषां गतं गमनं पिशुनयति सूचयति ॥ वर्तमानव्यपदेशेनाद्यापि मेघमार्ग एव रथश्शनैर्गच्छतीति मातलिं प्रति वदतीति व्यज्यते ॥

अतएव मातलिराह—क्षणादूर्ध्वमित्यादि ॥ क्षणादुपरि ॥ आत्माधिकारभूमौ भूलोके ॥ इतः परं शीघ्रं रथस्तु गमिष्यतीति भावः ॥

८ शैलानामित्यादि ॥ उन्मज्जतामुद्गच्छतामिव स्थितानां शैलानां भूमिस्थसकलपदार्थापेक्षयाधिकोन्नतानां पर्वतानां शिखरात् ॥ मेदिनी या समतया दृष्टा सा भूमिः ॥ अवरोहति अधो गच्छतीव ॥

---

गर्भोदरयोरन्यतरोपादाने तु सम्बन्धमात्रप्रतीतेः घनानामुपरि गतं गमनं पिशुनयति सूचयति । 'पिशुनौ खलसूचकौ' इत्यमरः । अत्र वारिगर्भोदराणामित्यस्य हेतुद्वयं प्रत्यार्थं हेतुत्वं बोद्धव्यम् । तेन हेतुकाव्यलिङ्गयोरङ्गाङ्गिभावलक्षणः सङ्करः । वारिगर्भोदरत्वं प्रति रथविशेषणस्यार्थं हेतुत्वं बोध्यम् । रेभ्यरिभिरभेतिच्छेकवृत्त्यनुप्रासौ । मालिनीवृत्तम् । क्षणादिति रथवेगसूचनम् । स्वस्याधिकारो यस्यां सा स्वाधिकारा । सा चासौ भूमिश्च तस्याम् ॥

शैलानामिति ॥ उन्मज्जतां प्रकटीभवताम् । अत्रोन्मज्जनेन कारणेन प्राकट्यं कार्यं लक्षयता तद्गतमल्पत्वं ध्वनितम् । यत्र धर्मो लक्ष्यते तत्र तद्गता धर्मा व्यङ्ग्याः । यथा तीरे लक्षिते तद्गतपावनत्वादयः । यत्र धर्मो लक्ष्यते तत्र धर्मान्तराभावात्तद्गतो विशेष एव व्यङ्ग्यः । यथा विकासेन प्रसृतत्वे लक्षिते तद्गतातिशयित्वादिति आकर एव स्थितम् । शैलानां पर्वतानां शिखरादग्रभागात् । जात्येकवचनम् । मेदिन्यवरोहतीवाधो यातीवेत्युत्प्रेक्षा । पादपा वृक्षाः । स्कन्धानां प्रकाण्डानामुदयात्प्राकट्यात् । 'अस्त्री प्रकाण्डः स्कन्धः स्यात्' इत्यमरः । अत्रोदयशब्दः प्राकट्यं लक्षयंस्तदतिशयं ध्वनयति । पर्णानां स्वतिशयेन यदन्तरं मध्यं तत्र विलीनतां तदाकारतां जहति । प्रकटीभवन्तीत्यर्थः । तनो-

सन्तानैस्तनुभावनष्टसलिला व्यक्तिं व्रजन्त्यापगाः
केनाप्युत्क्षिपतेव मर्त्यभुवनं मत्पार्श्वमानीयते ॥ ८

**मातलिः**—साधु दृष्टम् (सबहुमानं विलोक्य) अहो! उ(दार)दग्ररमणीया पृथिवी !

**राजा**—मातले ! कतमोऽयं पूर्वापरसमुद्रावगाढः कनकरसनिष्यन्दी सान्ध्य इव मेघः सानुमाना(लोक्यते)लक्ष्यते ॥

**मातलिः**—आयुष्मन् ! एष खलु हेमकूटो नाम किंपुरुषपर्वतः ॥ परं तपस्विनां सिद्धिक्षेत्रम् पश्य—

स्वायम्भुवान्मरीचेर्यः प्रबभूव प्रजापतिः ।
सुरासुरगुरुस्सोऽस्मिन् सपत्नीकस्तपस्यति ॥ ९

---

९ **स्वायंभुवादित्यादि ॥** स्वयम्भुवोऽपत्यं पुमान् स्वायम्भुवः तस्माद्ब्रह्मसूनोः ॥ सुरासुरगुरुः ॥ सद्वृत्तानां सुराणामसद्वृत्तानामसुराणां च गुरुः ॥

---

र्भावस्तनुत्वं तेन नष्टमदृश्यं सलिलं यासां ता आपगा नद्यः सन्तानैर्विस्तारैः । अर्थाद्दृष्टेरित्यर्थः । 'सन्तानो विस्तृतौ देववृक्षे चापत्यगोत्रयोः' इति धरणिः । व्यक्तिं प्रकटतां भजन्ति यान्ति । पश्येति वाक्यार्थस्य कर्मत्वम् । उत्क्षिपतोर्ध्वीकुर्वतेत्युत्प्रेक्षा । केनापि भुवनं मत्पार्श्वं मन्निकटमानीयत इवेति गम्योत्प्रेक्षा । 'पार्श्वं कक्षाधरे चक्रोपान्ते पर्शुगणेऽपि च' इति विश्वः । स्वभावोक्तिकाव्यलिङ्गोत्प्रेक्षयोः संसृष्टिः । तानैस्तन्विति छेकवृत्तिश्रुत्यनुप्रासाः । शार्दूलविक्रीडितं वृत्तम् । अत्र 'काश्यानाकलिताम्भसः पृथुतया व्यक्तिम्' इति पठित्वाऽस्थानस्थपदलक्षणे दोषः परिहरणीयः । एतेन सन्तानशब्देऽप्रयुक्तत्वं निहतार्थत्वं वा । नष्टशब्दो नाम प्रकटलक्षणार्थानभिधानात्तत्रावाचकत्वं च परिहृतं भवति । हेतूनामार्थत्वशाब्दत्वे भिन्नवाक्यत्वेन परिहरणीये । महावाक्यत्वेनैकवाक्यत्वेऽपि 'उन्मज्जनात्' इति पठित्वा परिहर्तव्ये । 'स्कन्धोदयाः' इति पाठे तु 'पृथुतराः' इति पठित्वा परिहरणीये । पश्येत्यस्योत्तरं साधु दृष्टमिति । सबहुमानमवलोक्येति तत्क्रियानुवादकं कविवाक्यम् । अहो आश्चर्ये । उदारा महती रमणीया च । तत्स्थानस्थित्यैकदैव सर्वस्या दृग्गोचरत्वादेवमुक्तिः । पूर्वापरसमुद्रयोरवगाढः सम्बद्धः सान्ध्यः सायङ्कालीनो मेघोऽर्गल इव सानुमान्पर्वतः । अर्गलेनौपम्यं दैर्घ्यज्ञापनार्थम् ॥ तच्च विष्णुपुराणे—'हिमवान्हेमकूटश्च निषधस्तस्य दक्षिणे । नीलः श्वेतश्च भृङ्गी च उत्तरे वर्षपर्वताः । लक्ष्यमाणौ द्वौ मध्यौ' इति । जम्बुद्वीपस्यापि लक्षयोजनत्वात्पूर्वापरसमुद्रावगाढत्वं सम्भवत्येव । किम्पुरुषेति । तदुक्तं विष्णुपुराणे—'भारतं प्रथमं वर्षं ततः किम्पुरुषं स्मृतम् । हरिवर्षं तथैवान्यन्मेरोर्दक्षिणतो द्विज ॥' इति । तपःसंसिद्धिक्षेत्रमित्यनेन मारीचस्य सूचनम् ॥

**स्वायम्भुवादिति ॥** स्वायम्भुवाद्ब्रह्मसम्बन्धिनो मरीचेर्यः प्रजापतिः कश्यपो बभूव । सुरासुरगुरुरित्यनेनावश्यं नमस्करणीयत्वं सूचयति । सपत्नीक इत्यनेन तवापि

राजा—तेन ह्यनतिक्रमणीयानि श्रेयांसि प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामि ॥

मातलिः—प्रथमः कल्पः ॥

(एतावुवतीर्णौ स्वः)

राजा—(सस्मितम्) मातले !

उपोढशब्दा न रथाङ्गनेमयः
प्रवर्तमानं न च दृश्यते रजः ।
अभूतलस्पर्शतया निरुद्ध-
स्तवावतीर्णोऽपि रथो न लक्ष्यते ॥ १०

मातलिः—एतावानेव शतक्रतोरायुष्मतश्च विशेषः ॥

राजा—मातले! कतमस्मिन् प्रदेशे मारीचाश्रमः ?

मातलिः—(हस्तेन (दर्शयन्)

---

श्रेयांसि शुभानि काश्यपदर्शननमस्कारादीनि ॥ प्रथमः कल्पः मुख्यः पक्षः ॥

---

पत्नीयोगोऽत्र भावीति ध्वनितम् । छेकवृत्त्यनुप्रासौ । प्रथमः कल्प उत्तमः पक्षः । नाट्येनावतीर्णाविति रथावतरणमेवैतयोरारोपितं कविना कविवाक्यं चेदम् । रथावतरणे यानि चिह्नानि तेषामजातत्वात्तदेवाह—

**उपोढेति** ॥ अभूतलस्पर्शतया भूमिस्पर्शाभावेन रथाङ्गनेमयश्चक्रप्रधय उपोढशब्दाः कृतस्वना न । रजश्च नेम्युद्धतं प्रवर्तमानं न दृश्यते । अनिरुद्धतोऽनिरोधात् । यतो भूतलस्पर्शे सत्यवतरणे रश्मिनिरोधो भवति । अत्र तदभावात् । अतएवाभूतलेऽपि त्रिष्वपि हेतुत्वेन योज्यम् । तव रथोऽवतीर्णोऽपि न लक्ष्यत इति न । अपि तु लक्ष्यत एव । 'तवावतीर्णोपि' इति क्वचित्पाठः । तत्र काका व्याख्येयम् । अत्र रथावतरणे सति तत्कार्याणां नेमिशब्दादीनामभावादुक्तनिमित्तकापि विशेषोक्तिः श्रुत्यनुप्रासश्च । अवतीर्णोऽपि न लक्ष्यत इति विरोधाभासोऽपि । वंशस्थं वृत्तम् । एतावानेवेति व्यतिरेकालङ्कारः । हस्तेनेत्युत्तानितेन पताकेन ॥

वल्मीका(ग्र)र्धनिमग्नमूर्तिरुरसा सन्दष्टसर्पत्वचा
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसम्पीडितः ।
अंसव्यापि शकुन्तनीडनिचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥ ११

राजा—नमोऽस्त्वस्मै कष्टतपसे ॥

मातलिः—(संयतप्रग्रहं कृत्वा) (महाराज) एताव(दि)ति परिवर्धितमन्दार वृक्षकं प्रजापतेराश्रमं प्रविष्टौ स्वः ॥

राजा—स्वर्गादधिकतरं निर्वृतिस्थानममृतह्रदमिवावगाढोऽस्मि ॥

मातलिः—(रथं स्थापयित्वा) अवतीर्यताम् ॥

राजा—(अवतीर्य) भवान् कथमिदानीम्?

---

११ वल्मीकेत्यादि ॥ उरसा उपलक्षितः स्थाणुरिव शाखारहिततरुस्कन्ध इव अचलः स्थिरस्सन् ॥ अभ्यर्कबिम्बं अर्कबिम्बाभिमुखम् ॥

कष्टतपसे कष्टं दुष्करं तपो यस्य स तथोक्तः तस्मै ॥

---

वल्मीकेति ॥ वल्मीकस्य पिपीलिकाकृतमृत्पुञ्जस्याग्रं प्रान्तस्तत्र निमग्ना मूर्तिः शरीरं यस्य सः 'अग्रमालम्बने व्राते' इति विश्वः । 'मूर्तिः काठिन्यकाययोः' इत्यमरः । अनेनानेककालतपश्चरणमुक्तम् । सन्दष्टाः सर्पत्वचो यत्र तेनोरसोपलक्षितः । अनेन सर्वजन्तुसाधारणत्वमुक्तम् । कण्ठे जीर्णेत्यनेन स्थूलत्वं बहुशाखात्वं ध्वनितम् । लताप्रतानं वल्लीसमूहः स वलय इव कण्ठरोमाणीवेत्युपमितसमासः । सम्पीडस्य साधकत्वात् । 'वलयः कण्ठरोग्णि स्याद्वलयं कङ्कणेऽपि च' इति विश्वः । तेनात्यर्थसम्पीडितः । अनेनापकारिण्यप्युपकारकत्वमुक्तम् । अंसयोर्व्याप्नोति तदंसव्यापि । अनेन महत्त्वमुक्तम् । शकुन्तानां पक्षिणां नीडं स्थानं तेन निचितं व्याप्तम् ॥ 'स्थाने कुले चयः' इति विश्वः । जटानां मण्डलं समूहं बिभ्रत् । अनेन परनिमित्तसम्पत्त्वं द्योत्यते । स्थाणुरिवाचलो निश्चलः । स्थाणुपक्षेऽपि विशेषणानि योज्यानि । उरसा मध्येन । कण्ठ उपकण्ठे । समीप इति यावत् । अंसः स्कन्धः । जटा प्ररोहरूपा । असौ मुनिरर्कबिम्बमभि लक्ष्यीकृत्य । कर्मप्रवचनीयतत्वेन तद्योगे द्वितीया । यत्र स्थितः स मारीचाश्रम इत्यन्वयः । परिकरश्लेषोपमानुप्रासाः । शार्दूलविक्रीडितं वृत्तम्, संयता नियमिताः प्रग्रहा रश्मिरज्जवो यत्र तत् । रथमित्यार्थम् । कृत्वेति कविवचनम् । रथस्य भूमिस्पृष्टत्वादिति कृत्वा मातलिर्वदतीत्यन्वयः । किमुक्तं तत्राह—एतावाश्रमं प्रविष्टौ स्व इति । अदितिस्तत्पत्नी तया परिवर्धिता मन्दारवृक्षा यत्र । स्वर्गादधिकतरं निर्वृतिस्थानं सुखस्थानमिति भिन्नं वाक्यम् ।

**मातलिः**—संयन्त्रितो मया रथः ॥ वयमप्यवतरामः ॥ (तथा कृत्वा इत इत आयुष्मन्! दृश्यन्तामत्रभवतामृषीणां तपोवनभूमयः ॥

**राजा**—विस्मयादवलोकयामि ॥

**प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने**
**तोये काञ्चनपद्मरेणुकपिशे धर्माभिषेकक्रिया ।**
**ध्यानं रत्नशिलातलेषु विबुधस्त्रीसंनिधौ संयमो**
**यत्काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥** १२

---

१२ **प्राणानामित्यादि ॥** सत्कल्पवृक्षे विद्यमानकल्पवृक्षे ॥ न तु कल्पवृक्षसदृश इति यावत् ॥ वने सकलवृक्षसमुदायस्थले ॥ कल्पवृक्षपदेन सार्वकालिकाक्षयसकलभोज्यधार्यपदार्थाधिकरणता ध्वन्यते ॥ तत्रापि वनपदेन कल्पवृक्षाणां बाहुल्यं सूच्यते ॥ तथापि । प्राणानामुचिता स्वारसिका वृत्तिर्जीवनम् ॥ अनिलेन वायुना ॥ न तु मधुरादिभोज्यपदार्थैरिति यावत् ॥ काञ्चनपद्मरेणुकपिशइत्यनेन विविधजलक्रीडार्हता ध्वन्यते ॥ धर्माभिषेकक्रिया धर्मार्थमेवाभिषेकक्रिया स्नानाचरणम् ॥ न तु जलक्रीडेति व्यज्यते ॥ रत्नशिलातलेष्वित्यनेन विहारयोग्यावस्थानं सूच्यते ॥ बहुवचनेन विविधरत्नशिलातलप्रदेशास्सूच्यन्ते ॥ ध्यानं ध्यानमार्गे चित्तमनुरक्तं भवति ॥ न तु विहार इति व्यज्यते ॥ विबुधस्त्रीसन्निधौ देवानामपि विकारजनकस्त्रीसन्निधाने ॥ संयमः इन्द्रियनिग्रहः ॥ न तु मदनविकारजनितसात्विकभावादिनिष्पत्तिरिति भावः ॥ एभिस्सत्कल्पवृक्षत्वादिविशेषैरयं प्रदेशस्स्वर्गएवेति प्रतीयते ॥ अन्ये मुनयः मननशीलाः ॥ तपोभिरिति बहुवचनेन तपःकरणस्य बहुविधत्वं प्रतीयते ॥ यत्कांक्षन्ति यत् स्थानं वांछन्ति तस्मिन् स्वर्गप्रदेशे ॥ अमी मुनयस्तानि परिहृत्य तपस्यन्ति ॥ अनेन तेषां मोक्षार्थित्वमेवेति ध्वन्यते ॥ आनन्दवर्धनाचार्यास्तु— अभिधालक्षणातात्पर्याख्यव्यापारत्रितयातिवर्तिव्यञ्जनध्वननादिशब्दवाच्यव्यापारविशेषस्स्वीकार्यइति वदन्ति ॥ अलङ्कारशास्त्रप्रथमप्रवक्तारो न भामहादयस्तद्दोषरहितौ गुणालङ्काराविति ध्वन्यमानवस्त्वलङ्काराविति च काव्ये सर्वत्रालङ्काराणामेव प्राधान्यं प्रत्यपादयन् ॥

---

अमृतेति । ज्ञानामृतह्रदावगाहन इवेत्युत्प्रेक्षा । अत्र पूर्ववाक्यं हेतुत्वेन ज्ञेयम् । कथमिति प्रश्ने । किं करिष्यसीत्यर्थः ॥

**प्राणानामिति ॥** सत्कल्पवृक्षेऽपि वन उचितावश्यकर्तव्या प्राणानां वृत्तिः प्राणधारणक्रियानिलेन वायुना । न तु कल्पवृक्षदत्तवस्तुना । काञ्चनपद्मरेणुभिः कपिशे पिङ्गलवर्णे तोये जले धर्मार्थम् । न तु भोगार्थमभिषेकक्रिया स्नानविधिः । रत्नशिलातलेषु ध्यानम् । आधारमात्रपर्यवसितत्वात् । न तु रत्नशिलातलत्वेन तत्र क्रीडादि । विबुधस्त्रीसंनिधौ देवयोषिदभ्याशे संयमः । अन्यसंनिधावेव संयमो न सिध्यति विशेषतः स्त्रीसंनिधौ ततोऽपि देवस्त्रीसंनिधावित्यर्थः । अत्र कल्पवृक्षादीनां कारणानां सद्भावे सति तत्कार्याभावे वक्तव्ये तद्विरुद्धानिलप्राणवृत्तित्वाद्युक्तेरुक्तनिमित्ता मालाविशेषोक्तिः । एतया चैतन्नि-

**मातलिः**—उत्सर्पिणी महतां प्रार्थना (परिक्रम्य) (आकाशे) अये ! वृद्धशाकल्य ! किमनुतिष्ठति भगवान् मारीचः ? किं ब्रवीषि ? दाक्षायण्या पतिव्रताधर्ममधिकृत्य पृष्टस्तस्यै महर्षिपत्नीसहितायै कथयतीति ॥

**राजा**—(अये) तर्हि प्रतिपाल्यावसरः खलु प्रस्तावः ॥

**मातलिः**—(राजानमवलोक्य) अस्मिन्नशोकमूले तावदास्तामायुष्मान् यावत्त्वा(मिन्द्र) महं गुरवे निवेदयितुमन्तरान्वेषी भवामि ॥

**राजा**—यथा भवान् मन्यते ॥

(इति स्थितः)

(निष्क्रान्तो मातलिः)

**राजा**—निमित्तं सूचयित्वा)

**मनोरथाय नाशंसे किं बाहो स्पन्दसे वृथा ।**

---

**उत्सर्पिणीत्यादि ॥** उत्सर्पिणी उद्गमनशीला । अतिशायिनीत्यर्थः ॥

१२ **मनोरथायेत्यादि ॥** मनोरथाय मनोरथविषयाय इष्टवस्तुने ॥ लाक्षणिकोऽयं प्रयोगः ॥ नाशंसे मनोरथं प्राप्तुं नेच्छामीत्यर्थः ॥ हे बाहो आलिङ्गनकर्मनिपुण ! त्वं वृथा किमर्थं स्पन्दसे स्फुरसि ॥ फलानुपपत्तेर्मा स्पन्दस्वेत्यर्थः ॥

---

वासिनां तपस्विनां धैर्यातिशयो व्यज्यते । अन्यमुनयो भूमिष्ठास्तपस्विनो यत्स्थानं तपोभिः काङ्क्षन्ति तपःफलेनेच्छन्ति तस्मिन्स्थानेऽमी तपस्यन्ति तपश्चरन्ति । 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' इति क्यङ् । 'तपसः परस्मैपदं च' इति परस्मैपदम् । तपोतप इति न्यनयेति स्तस्तेति छेकश्रुतिवृत्त्यनुप्रासाः । हेत्वलङ्कारो व्यङ्ग्यः । वृत्तमनन्तरोक्तम् । खलु यस्मादुत्सर्पिण्युपर्युपरि धावन्ती महतां प्रार्थनेति पूर्वार्धस्य समर्थकत्वादर्थान्तरन्यासः । अयं प्रस्तावः पतिव्रताधर्मकथनलक्षणः । खलु निश्चितम् । प्रतिपाल्योऽवसरः समयो यस्य सः । पुनरुक्तवदाभासोऽलङ्कारः । अशोकवृक्षेत्यनेनात्रोपविष्टस्य शोकराहित्यं भविष्यतीति ध्वनितम् । अन्तरं मध्यमन्वेष्टुं शीलं यस्य सः । निमित्तं दक्षिणबाहुस्फुरणम् ॥

**मनइति ॥** हे बाहो, वृथा किं स्पन्दसे स्फुरसि । वृथात्वं कुत इत्याह—मनोरथाय शकुन्तलारूपाय नाशंसे । मम तु मनोरथाशंसापि नास्ति प्राप्तिस्तु दूरतो निरस्तेति

पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते ॥ १३

(नेपथ्ये)

[1]माखु माखु चावळं करेहि कहं गदो एव्व अत्तणो पकिदिम् ?

राजा—(कर्णं दत्वा) अभूमिरियमविनयस्य को नु खल्वेष (निषिध्यते) शिक्ष्यते ? (शब्दानुसारेणावलोक्य सविस्मयं) अये को नु खल्वयमनुबध्यमानस्तापसीभ्यामबालसत्त्वो बालः ?

अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम् ।
प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति । १४

(ततः प्रविशति यथानिर्दिष्टकर्मा बालस्तापसीभ्यां सह)

बालः—[2]जिम्भ जिम्भ सिंहडिम्भ दन्दाइ दे गणइस्सम् ॥

---

1 मा खलु मा खलु चापलं कुरु, कथं गत एवात्मनः प्रकृतिम् ?

2 जृम्भस्व जृम्भस्व सिंहडिम्भ दन्तांस्ते गणयिष्यामि ॥

---

तत्र हेतुमाह—हीति । हि यस्मात्कारणात् पूर्वावधीरितं प्रथम निरस्तं श्रेयः शुभं शकुन्तलारूपं । दुःखं परिवर्तते परिणमति ॥ तस्मात्कारणादिति सम्बन्धः ॥ अत्र मनोरथादिशब्दैः पुनर्बीजोद्भेदाद्बीजोद्भेदोनाम निर्वहणसन्ध्यङ्गमुक्तम् ॥ "बीजोद्भेदः पुनस्सन्धि" रित्युक्तत्वात् निर्वहणसन्धिरुच्यते ॥ "मुखादिसन्धयस्साङ्गा यत्र बीजानुबन्धिनः । प्रयोजनैक्याद्यथोत्पन्ते तन्निर्वहणमीरितं" अस्याङ्गानि—"सन्धिर्विरोधो ग्रथनं निर्णयः परिभाषणं । प्रसादानन्द समयाकृतिभाषोपगूहनं । पूर्वभाषोपसंहारौ प्रशस्तिश्च चतुर्दश" इति ॥

---

भावः । मनोरथायेति विषयस्य निगरणादतिशयोक्तिः । पूर्वमवधीरितं तिरस्कृतम्, न तु त्यक्तं, श्रेयः कल्याणं दुःखं यथा स्यात्तथा परिवर्तते व्यावर्तते । अर्थान्तरन्यासः । वृत्त्यनुप्रासोऽपि । मा खलु चापलं कुरु । कथं गत एवात्मनः प्रकृतिम् । स्वभावचापलं कृतवानेवेत्यर्थः । अभूमिरस्थानम् । अबालस्येव सत्त्वं बलं यस्य सः ॥

अर्धेति ॥ को नु खलु बालः केवलं कर्षणेनानायान्तं सिंहशिशुं बलात्कारेण कर्षतीति चूर्णिकया सहान्वयः । किं कर्तुम् । प्रक्रीडितुं क्रीडां कर्तुम् । मनोविनोदनार्थमिति भावः । एतेनावश्यकार्यार्थं साहसमपि क्रियेत । क्रीडार्थं तत्कारित्वे मानातिशयबलदर्पतया जगत्तृणवन्मन्यत इति ध्वन्यते । कीदृशम् । मातुरर्धपीतस्तनम् । शिशुनान्यत्कर्षणमेव दुष्करम्, तत्रापि सिंहशिशुकर्षणम्, तत्राप्यन्यस्मात्, तत्रापि मातुः क्रोडात्, तत्रापि स्तनं धयन्तमिति सर्वोत्कर्षो व्यज्यते । पुनः कीदृशम् । आमर्देनाकर्षणेनावेगेन क्लिष्टा विसंस्थुलाः केसराः स्कन्धबाला यस्य तम् । स्वभावोक्तिः उदात्तमनुप्रासश्च । यथानिर्दिष्टं सिंहबालकाकर्षणरूपं कर्म यस्य सः । तपस्विनीभ्यामिति सहार्थे तृतीया । जृम्भस्व सिंह !

**प्रथमा**—[1]अविणीद ! किं णो अपच्चणिव्विसेसाइ सत्ताइ विप्पअरेसि ? *कहं वड्ढिदो एव्व संरम्भो । ठाणे खु इसिजणेण सव्वदमणोत्ति किदणामहेओसि ॥

**राजा**—किं नु खलु बालेऽस्मिन्नौरस इव पुत्रे स्निह्यति मे मनः ? नूनमनपत्य(ता मां)तैवं वत्सलयति ॥

**द्वितीया**—[2]सव्वदमण, एसा खु केसरिणी तुमं लङ्घेइ जइसे पुत्तअं ण मुञ्चेसि ॥

**बालः**—(सस्मितम्) अंहो [3]बलीअं खु भीदो ॥

(इत्यधरं दर्शयति)

**राजा**—महतस्तेजसो बीजं (बालो)पुत्रोऽयं प्रतिभाति मे ।
स्फुलिङ्गावस्थया वह्निरेधोऽपेक्ष इव स्थितः ॥ १५

---

1 अविनीत, किं नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि ? कथं वर्धित एव संरंभः ? स्थाने खल्वृषिजनेन सर्वदमन इति कृतनामधेयोसि ॥

2 सर्वदमन, एषा खलु केसरिणी त्वां लङ्घयति ॥ यद्यस्याः पुत्रकं न मुञ्चसि ॥

3 अहो बलवत्खलु भीतोऽस्मि ॥

---

अहो बलवत्खलु भीतोऽस्मीत्यधरं दर्शयति ॥ अधरप्रदर्शनमनादरे ॥

१५ **महत इत्यादि ॥** तेजसः तेजस्विनः ॥ तेजश्शब्देन तेजस्वी लक्ष्यते ॥ तथा रघुवंशे—"तेजसां हि न वयस्समीक्ष्यत" इति ॥ एधांसि इन्धनानि ॥

---

दन्तांस्ते गणयिष्ये । अविनीत, किं नोऽस्माकमपत्यनिर्विशेषाणि सत्त्वानि प्राणिनो विप्रकरोषि । हन्तेति खेदे । वर्धते तव संरम्भः । स्थाने युक्तं खलु ऋषिजनेन सर्वदमन इति कृतनामधेयोऽसि । एषा खलु केसरिणो सिंही त्वां लङ्घयिष्यति तवोपद्रवं किञ्चित्करिष्यति । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति वर्तमानप्रयोगः । यदि तस्याः पुत्रकं न मुञ्चसि । अम्हहे आश्चर्ये । त्वद्वचनाद्बलिअं अधिकं भीतोऽस्मीति सोलुण्ठम् । अधरं विसृष्टं तस्यैव तत्र विनियोगात् । तदुक्तं सङ्गीतसुधानिधौ—'विनिष्क्रान्तो विसृष्टः स्यादधरोऽलक्तकादिना । रञ्जने बालकानां च चेष्टाभेदे नियुज्यते । स्त्रीणां विलासबिब्बोकहर्षादिषु च कीर्तितः ॥' इति ॥

**महत इति ॥** अयं बालो महतस्तेजसो बीजं मूलम् । बाल्यान्महन्निगूढं तेजोऽस्मिन्वर्तत इत्यर्थः । स्फुलिङ्गावस्थया स्थितो वह्निरिव । महतस्तेजसो बीजमित्यस्य प्रतिबि-

---

* "हन्त वड्ढइ दे संरम्भो ; हन्तवर्धते ते संरम्भ" इत्यपि पाठः ॥

प्रथमा—[1]वच्छ ! मुञ्च एदं वाळमिइन्दं अवरं दे कीळणीअअं दाइस्सम् ॥

(इति हस्तं प्रसारयति)

बालः—[2]कहिं ? देहि णम् ॥

राजा—(दृष्ट्वा सविस्मयम्) कथं चक्रवर्तिलक्षणमप्यनेन धार्यते ? तथा हि अस्य—

प्रलोभ्यवस्तुप्रणयप्रसारितो
विभाति जालग्रथितांगुळिः करः ।
अलक्ष्यपत्रान्तरमिद्धरागया
नवोषसा भिन्नमिवैकपङ्कजम् ॥ १६

1 वत्स ! मुञ्चैतं बालमृगेन्द्रं ॥ अपरं ते क्रीडनीयकं दास्यामि ॥
2 कुत्र ? देह्येनम् ॥

१६ प्रलोभ्यवस्त्वित्यादि ॥ प्रलोभ्यं प्रकर्षेण स्पृहणीयं वस्तु द्रव्यं । तस्मिन् प्रणयो याच्ञा तेन प्रसारितः करः जालग्रथिताङ्गुलिः जालेष्वन्तराळेषु ग्रथितास्संसृष्टा अङ्गुळयो यस्य स तथोक्तः ॥ इद्धरागया नवोषसा नवमुषः यस्यास्सा नवोषास्तया प्रातस्सन्ध्यया भिन्नं विकासितम् ॥

स्वमेधापेक्ष इति । उपमानुप्रासौ । वत्स, एनं बालमृगेन्द्रं मुञ्च । अपरं ते क्रीडनकं दास्यामि । कहिं कुत्र । देहि णं । 'तदो णः स्यादौ क्वचित्' इति णादेशः ॥

प्रलोभ्येति ॥ प्रलोभ्यं प्रलोभकारकं यद्वस्तु तत्र यः प्रणयो याच्ञा प्रीतिर्वा तेन प्रसारित इति स्वभावाख्यानम् । तेन विना दर्शनासम्भवात् । करो विभाति जालवद्ग्रथिता अङ्गुलयो यस्य सः । उक्तं च पुरुषलक्षणे सामुद्रे—'अतिरक्तः करो यस्य ग्रथिताङ्गुलिको मृदुः । चापाङ्कुशाङ्कितः सोऽपि चक्रवर्ती भवेद्ध्रुवम् ॥' इति । एकं मुख्यं पङ्कजमिव । तत्प्रथमविकासित्वान्मुख्यत्वम् । कीदृक् । इद्धः समृद्धो रागो लौहित्यं यस्यास्तया । अनेनैतस्य विकाससामर्थ्यं ध्वनितम् । नवोषसा नूतनप्रातःकालेन । नूतनत्वमजरठीभावः । 'उषा रात्रौ तदन्ते स्यादत्रानव्ययमप्युषा' इति विश्वः । तेन भिन्नं भेदं प्राप्तम् । न तु सम्यग्विकसितम् । अत एवालक्ष्याणि पत्राणामन्तराणि सन्धिविभागा यस्य तत् । काव्यलिङ्गोपमे । प्रप्रेति त्वान्तरेति छेकश्रुतिवृत्त्यनुप्रासाः । अत्र बिम्बप्रतिबिम्बभावेनोपम्यादुपमाया भिन्नलिङ्गत्वं न सहृदयोद्वेगकरम् । प्रसारितमित्यस्य प्रतिबिम्बत्वेन भिन्नमित्युपात्तम् । तत्र बालक-

द्वितीया—[1]सुव्वदे । ण सक्को एसो आआमेत्तेण विरमइदुं । गच्छ ममकेरए उडए मक्कण्डअस्स इसिउमारस्स वण्णचित्तिदो मित्तिआमोरो चिठ्ठइ तं से उवहर ॥

प्रथमा—[2]तह (इति निष्क्रान्ता)

बालः—[3]अणेण एव्व दाव कीळइस्सं (इति तापसीं विलोक्य हसति)

राजा—स्पृहयामि खलु दुर्ललितायास्मै ॥

आलक्ष्यदन्तमुकुळाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचः प्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान्वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ १७

1 सुव्रते । न शक्य एष वाङ्मात्रेण विरमयितुं । गच्छ मदीये उटजे मार्कण्डेयस्य ऋषिकुमारस्य वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति ॥ तमस्मा उपहर ॥

2 तथा ॥

3 अनेनैव तावत्क्रीडयिष्यामि ॥

स्पृहयामीति ॥ दुर्ललिताय धूर्ताय ॥

१७ आलक्ष्येति ॥ स्पष्टम् ॥

करत्वात्सम्यग्विकासो नोक्तः । जालेत्यादेरलक्ष्येत्यादिरुपमा । वंशस्थं वृत्तम् । सुव्रते इति तापस्याः सम्बुद्धिः । न शक्य एषो वाचामात्रेण विरमयितुम् । त्वं गच्छ । ममकेरए मदीये । 'इदमर्थे केरः' इति इदमर्थप्रत्ययस्य केरादेशे 'स्वार्थे कश्च' इति के रूपम् । उटजे मार्कण्डेयस्यर्षिकुमारस्य वर्णै रक्तपीतादिभिश्चित्रितो मृत्तिकामयूरस्तिष्ठति तमस्योपहर । तह इति तथेति । अनेनैव तावत्क्रीडिष्यामि । अस्मै इति 'स्पृहेरीप्सितः' इति सम्प्रदानत्वे चतुर्थी ॥

आलक्ष्येति ॥ अनिमित्तहासैरकारणहासैर्दन्ता मुकुला इवेत्युपमितसमासः । हासानां साधकत्वात् । आ ईषल्लक्ष्या दृश्या दन्तमुकुला येषां ते तान् । अव्यक्ता वर्णा यासु ता अतएव रमणीया वचःप्रवृत्तयो वाग्व्यापारा येषां तानिति बहुव्रीहिगर्भो बहुव्रीहिः । अङ्के क्रोडे य आश्रयः स्थितिस्तत्र प्रणयो याच्ञा प्रीतिर्वा । येषां बालानामङ्गरजसा मलिनीभवन्ति । अत एतद्बालेत्यादिविशेषे प्रस्तुते सामान्यवचनादप्रस्तुतप्रशंसा । तया चाहमधन्य इति व्यज्यते । णीयणयीति स्तस्तेति नयान्येति छेकवृत्तिश्रुत्यनुप्रासाः । वसन्त-

**तापसी**—[1]होदु । एस मं ण गणअदि (पार्श्वमवलोक्य) को एत्थ इसिउमाराणं ? (राजानं दृष्ट्वा) भद्दमुह । एहि मोअअ दाव अणेण दुम्मोअहत्थग्गाहेण डम्भलीळाए बाहिअमाणं बाळमिइन्दम् ॥

**राजा**—(सस्मितमुपगम्य) अयि भोः महर्षिपुत्र !

एवमाश्रमविरुद्धवर्तिना
संयमः किमिति जन्मनस्त्वया ।
सत्त्वसंश्रयगुणोऽपि दूष्यते
कृष्णसर्पशिशुनेव चन्दनः ॥ १८

**तापसी**—[2]भद्दमुह ! अअं ण खु इसिउमारओ ॥

---

1 भवतु ॥ एष मां न गणयंति ॥ कोऽत्र ऋषिकुमाराणां ? भद्रमुख । एहि मोचय तावदनेन दुर्मोचहस्तग्राहेण डिम्भलीलया बाध्यमानं बालमृगेन्द्रं ॥

2 भद्रमुख ! अयं न खलु ऋषिकुमारः ॥

---

कोऽत्र ऋषिकुमाराणां । निर्धारणे षष्ठी ॥ भद्रमुखेति मान्यस्यामन्त्रणे ॥ "सौम्य भद्रमुखेत्येवं मान्यो राजसुतो भवेत्" इति ॥

१८ **एवमाश्रमेत्यादि ॥** एवमित्थमाश्रमविरुद्धवर्तिना आश्रमस्य विरुद्धं यथा भवति तथा वर्तत इति तथोक्तः ॥ तेन त्वया जन्मनो हेतोः ॥ सत्त्वसंश्रयगुणोऽपि सत्वस्य संश्रयः आश्रयणं स एव गुणो धर्मो यस्य स तथोक्तः संयमः शमः किमिति किमर्थं दूष्यते ॥ अत्रोपमामाह—कृष्णसर्पशिशुना चन्दन इवेति ॥

---

तिलकावृत्तम् । भवतु । न मामयं गणयति । कोऽत्र ऋषिकुमाराणाम् । भद्रमुख, एहि तावत् । मोचयानेन दुर्मोकहस्तग्रहेण । दुर्मोको मोचयितुमशक्यो हस्तेन ग्रहो यस्यार्थादस्माभिस्तेन । डिम्भलीलया बालक्रीडया बाध्यमानं बालमृगेन्द्रं मोचयेति सम्बन्धः ॥

**एवमिति ॥** आश्रमस्य विरुद्धा वृत्तिर्यस्य तेन त्वया । सत्त्वानां जन्तूनां संश्रयः । सुखयतीति सुखः । सत्त्वसंश्रयश्चासौ सुखश्च । सोऽपि संयमः सम्यग्यमोऽहिंसादिः । जन्मतो जन्मारभ्य । एवं सत्त्वोपद्रवादिना किमिति दूष्यत इति सम्बन्धः । कृष्णसर्पशिशुना यथा चन्दनं दूष्यते । उपमानुप्रासौ । अत्रापि सामान्यधर्मस्योभयत्र यथास्थितत्वेनान्वयान्न विलिङ्गत्वं दोषः । अथवा 'चन्दनोऽस्त्रियाम्' इति कोशाच्चन्दन इति पठनीयम् । तदा सत्त्वसंश्रयसुख इति विशेषणमत्रापि योज्यम् । पूर्वत्रपक्षेऽपि विभक्तिविपरिणामेन योज्यम् । आश्रमेत्यादिविशिष्टस्यैवोपमेयत्वान्न न्यूनोपमात्वम् । स्वागता वृत्तम् । भद्रमुख, न खल्वयमृषिकुमारः ।

**राजा**—आकारसदृशं चेष्टितमेवास्य कथयति. स्थानप्रत्ययात्तु वयमेवं तर्किणः ॥

(यथाभ्यर्थितमनुतिष्ठन् बालस्पर्शसुखमुपलभ्य, आत्मगतम्)

अनेन कस्यापि कुलाङ्कुरेण
स्पृष्टस्य गात्रेषु सुखं ममैवम् ।
कां निर्वृतिं तस्य जनस्य कुर्याद्
यस्यायमङ्गात्कृतिनः प्ररूढः ॥ १९

**तापसी**—(उभौ निर्वर्ण्य) [1]अचरिअं अचरिअम् ॥

**राजा**—किमिव ?

**तापसी**—[2]इमस्स बाळस्स तुह सम्बन्धसंवादिणी आकिदित्ति विम्हिदम्हि ॥ अवरिइदस्सवि अज्जस्स अप्पदिळोमो संवुत्तोत्ति ॥

**राजा**—(बालमुपलालयन्) आर्ये, न चेन्मुनिकुमारोऽयमथ कोऽस्य व्यपदेशः ?

---

1 आश्चर्यमाश्चर्यम् ॥

2 अस्य बालस्य तव सम्बन्धसंवादिन्याकृतिरिति विस्मितास्मि ॥ अपरिचितस्याप्यार्यस्य अप्रतिलोमस्संवृत्त इति ॥

---

१९ अनेनेत्यादि ॥ एवमनुभवैकवेद्यं । अन्यत् स्पष्टं ॥

आर्ये इत्यादि ॥ व्यपदेशः कुलप्रसिद्धिः ॥

---

आकारेति । आकारश्चेष्टितम् । ऋषिकुमारोऽयं न भवतीति कथयतीत्यर्थः । स्थानप्रत्ययात्स्थानविश्वासात् । यथाभ्यर्थितं बालमृगेन्द्रमोचनमनुतिष्ठन्कुर्वन् ॥

**अनेनेति ॥** कस्याप्यज्ञायमानस्याथवा वाचा वर्णयितुमशक्यस्य कुलेऽङ्कुरेणाल्पदिनजातत्वकोमलत्वमनोहरत्वादिनाङ्कुररूपेणानेन गात्रेषु द्वित्रेष्ववयवेषु स्पृष्टस्य न तु सर्वाङ्गस्पृष्टस्य ममैवं वक्तुमशक्यमनुभवैकगम्यं विगलितवेद्यान्तरं सुखं यदि तदा कृतिनः । अयमेव कृतीत्यर्थः । यस्याङ्कादुत्सङ्गादयं प्ररूढो वृद्धिं प्राप्तस्तस्य चेतसि कां निर्वृतिं किं सुखं कुर्यादिति न ज्ञायत इति भावः । तस्य सुखानुभवेन प्राकरणिकेनार्थेन तत्पित्रादेः सुखातिशयस्यार्थादापतनादर्थापत्तिरलङ्कारः । रूपकम् । तसितस्येति कात्कृतीति छेकवृत्तिश्रुत्यनुप्रासाः । इन्द्रवज्रोपेन्द्रवज्रयोः प्रथमोपजातिः । उभौ बालदुष्यन्तौ । निर्वर्ण्य दृष्ट्वा । आश्चर्यमाश्चर्यम् । इमस्स अस्य बालस्य तव च सम्बन्धेन संवादिनी सदृश्याकृतिरिति विस्मापितास्मि । अपरिचितस्यापि तेऽप्रतिलोमोऽनुकूलः संवृत्त इति विस्मापितास्मीत्यनुषज्यते । कोऽस्य व्यपदेशः किं कुलम् ।

तापसी—[1]पूरुवंसओ एसो ॥

राजा—(आत्मगतम्) कथमेकान्वयो मम? अतः खलु मदनुकारिणमेवमत्रभवती मन्यते ॥ अस्त्येतत्पौरवाणामन्त्यं कुलव्रतम् ॥

भवनेषु सुधासितेषु पूर्वं
क्षितिरक्षार्थमुशन्ति ये निवासम् ।
नियतैकपतिव्रतानि पश्चात्
तरुमूलानि गृहा भवन्ति तेषाम् ॥ २०

(प्रकाशं) न पुनरात्मगत्या मानुषाणामेष विषयः ॥

तापसी—[2]जह भद्दमुहो भणादि, अच्छरासम्बन्धेण इमस्स बालस्स जणणी एत्थ देवगुरुणो तवोवणे पसूदा ॥

---

1 पूरुवंशज एषः ॥

2 यथा भद्रमुखः भणति ॥ अप्सरस्सम्बन्धेनास्य बालस्य जनन्यत्र देवगुरोस्तपोवने प्रसूता ॥

---

२० भवनेष्वित्यादि ॥ ये पौरवाः क्षितिरक्षार्थं षष्ठांशकरग्रहणेन जनानां विनयाधानरक्षणमरणादिभिश्च कुलक्रमागतभूलोकरक्षणार्थं ॥ भुवनेषु परिखा प्राकारतोरणाद्यलंकृतमहापुरमध्यवर्तितत्तदृतुयोग्यावस्थानार्हगृहेषु ॥ पुनः कीदृग्विधेष्वित्यत्राह—सुधासितेष्विति ॥ सुधया धवळेषु । विविधप्रासादालंकृतेष्वित्यर्थः ॥ बहुवचनेन । सभामण्डपसङ्गीतशालाविविधकेळीगृहखुरळीभवनादिगृहभेदास्सूच्यन्ते ॥ निवासमुशन्ति वांछन्ति पश्चात् वार्धकावस्थायां प्राप्तायां ॥ तरुमूलानि वातातपवृष्ट्यादिजनितबाधानिवारकशून्यवृक्षमूलानि वनानीति यावत् ॥ नियतैकपतिव्रतानि स्वारसिकानि गृहीभ-

---

पुरुवंशः । अन्त्यं वानप्रस्थाश्रमविषयम् ॥

भवनेष्विति ॥ पूर्वं यौवने ये राजानः । रसो रागः श्रृङ्गारादिश्च मधुरादिश्चास्वादश्च एते अधिका येषु । एतैर्वाधिकान्युत्तमानि तेषु । 'रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः । श्रृङ्गारादौ द्रवे वीर्ये देहधात्वम्बुपारदे' इति विश्वः । भवनेषु गृहेषु । क्षितिरक्षार्थं पृथ्वीरक्षणाय । निवासं स्थितिमुशन्ति वाञ्छन्ति । 'वश कान्तौ' इति धातुः । कान्तिरिच्छेति क्षीरतरङ्गिणीकारः । तत्र केवलं महीरक्षायै स्थितिवाञ्छैव न तत्त्वतः स्थितिरिति भावः । पश्चाद्वार्धके । तेषां राज्ञां तरुमूलानि गृहीभवन्ति । वानप्रस्थाश्रमं विधाय तत्राश्रमे निवसन्तीत्यर्थः । कीदृशानि तरुमूलानि । नियता नियमयुक्ता तपःसंतोषादियुतैका केवला पतिव्रता धर्मव्रती येषु तानि । एतेन तत्पुत्रजन्मादिसंभावनापाकृता । रूपकानुप्रासौ । मालभारिणी वृत्तम् । आत्मगत्या स्वभावगत्या । मानुषस्वरूपेणेति यावत् । एष देशो मानुषाणां विषयो न पुनरिति संबन्धः । एवमुभयथात्मस्पर्शित्वमेवाभिव्यक्तम् । यथा भद्रमुखो भणति । तत्तथैवेत्यार्थम् । अप्सरःसंबन्धेनास्य बालस्य जनन्यत्र देवगुरोः

**राजा**—(आत्मगतं) हन्त ! द्वितीयमिदमाशाजननम् ॥ (प्रकाशं) तत्र-भवती किमाख्यस्य राजर्षेः पत्नी ?

**तापसी**—[1]को तस्स धम्मदारपरिच्चाइणो णाम चिन्तइस्सदि ?

**राजा**—(स्वगतं) इयं खलु कथा मामेव ल(क्ष्यी)क्षीकरोति, यदितावदस्य शिशोर्मातरं नामतः पृ(च्छामि) च्छेयम् ॥ अथवा, अ(नार्यः)न्याय्योऽन्य(पर)दारव्यवहारः ॥

**तापसी**—(प्रविश्य मृन्मयूरहस्ता) [2]सव्वदमण, सउन्दळावण्णं पेक्ख ॥

**बालः**—(सदृष्टिक्षेपं) [3]कहिं वा मे अज्जू ॥

**उभे**—(विहस्य) [4]णामसारिस्सेण वंचिदो मादुवच्छळो ॥

**द्वितीया**—[5]वच्छ, इमस्स मित्तिआमोरस्स रम्मत्तणं पेक्खत्ति भणिदोसि ॥

---

1 कस्तस्य धर्मदारपरित्यागिना नाम चिन्तयिष्यति ?
2 सर्वदमन ! शकुन्तलावण्यं पश्य ॥
3 कुत्र वा मेऽम्बा ?
4 नामसादृश्येन वञ्चितो मातृवत्सलः ॥
5 वत्स ! अस्य मृत्तिकामयूरस्य रम्यत्वं पश्येति भणितोऽसि ॥

---

वन्ति वानप्रस्थाश्रमतो भवन्तीति यावत् ॥ अत्र स्वारसिकानीति पदार्थे नियतैकपतिव्रतानीति वाक्यार्थकथनात् प्रौढिर्गुणः ॥ तदुक्तं—"पदार्थे वाक्यवचनं वाक्यार्थे च पदाभिधा । प्रौढिर्व्याससमासा"वित्यादि ॥ एवंविधा प्रौढिर्या तल्लक्षणमोजो न गुणः ॥ किन्तु वैचित्र्यमात्रमेव गुणकक्ष्यायां न गण्यते ॥ तदभावेऽपि काव्यव्यवहारस्यैव विसंवादः ॥ सगुण इति हि रहस्यम् ॥ कैश्चिच्चतुर्विंशतिगुणवादिनां दशगुणवादिनां सर्वेषामपि मतनिरसनेन त्रय एव गुणास्स्वीकृताः । ते च रसगोचरा व्यंग्याश्च भवन्ति ॥ एते त्रय एव शब्दार्थगोचरत्वेनाप्युपचारलक्षणया लक्षिता ॥ इति ॥

शकुन्तलावण्यं पश्य ॥ शकुन्तस्य पक्षिणः लावण्यं अङ्गसौष्ठवम् ॥

---

कश्यपस्य तपोवने प्रसूता । हन्तेति हर्षे । एको वंशः । एकमिदमिति द्वितीयम् । कस्तस्य धर्मदारपरित्यागिनो नाम संकीर्तयितुं चिन्तयिष्यति । संकीर्तनार्थं हृदि चिन्तनेऽपि दोषः । संकीर्तने पुनः किं वक्तव्यमिति भावः । 'अस्त्येतत्पौरवाणाम्' इत्यादिना 'परदारव्यवहारः' इत्यन्तेन विबोधनामकमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'कार्यस्यान्वेषणं युक्त्या विबोधः परिकीर्तितः' इति । सर्वदमन, शकुन्तस्य पक्षिणो लावण्यम् । अथ शकुन्तलाया वर्णं पश्येति श्लेषवक्रोक्त्यलंकारः । कुत्र वा मे मम अज्जु माता । 'अज्ज अज्जु च मातरि' इति देशीकोशः । आर्यभविष्णु श्वश्वामेव (?) । तथा च सूत्रम्—'आर्यायां वा श्वश्वाम्' इति । नामसादृश्येन वञ्चितो मातृवत्सलः । वत्स, अस्य मृत्तिकामयूरस्य रम्यत्वं पश्येति मया

राजा—(आत्मगतं) किंवा शकुन्तलेत्यस्य मातुराख्या? सन्ति पुनर्नामधेयसादृश्यानि ॥ अपि नाम मृगतृष्णिकेवायमत्र प्रस्तावो विषादाय मे कल्पते?

बालः—[1]अज्ज, रोअदे मे एसो भद्दमोरओ ॥

(इति क्रीड(नक)नीयकमादत्ते)

प्रथमा—(सोद्वेगं) [2]अम्मो! रक्खाकरण्डअं अस्स मणिबन्धे ण दिस्सइ ॥

राजा—अलमलमावेगेन, नन्विदमस्य सिंह(शाव)विमर्दनात्परिभ्रष्टम्॥ (इत्यादातुमिच्छति)

उभे—[3]माखु माखु। एदं अवलम्बिअ कहं गहीदं णेण?

(विस्मयादुरोनिहितहस्ते परस्परमवलोकयतः)

राजा—किमर्थं प्रतिषिद्धाः स्मः?

---

1 अम्ब रोचते मे एष भद्रमयूरकः॥

2 अहो! रक्षाकरण्डकमस्य मणिबन्धे न दृश्यते॥

3 मा खलु मा खलु। इदमवलम्ब्य कथं गृहीतमनेन?

---

अम्हो इत्यादिना परस्परमवलोकयत इत्यन्तेन अद्भुतार्थप्राप्तिरुपगूहनं नाम सन्ध्यङ्गमुक्तं ॥ तदुक्तं—"अत्यद्भुतार्थसम्प्राप्तिरुपगूहनमुच्यते" इति ॥

---

भणितोऽसि। राजा—'यदि तावदस्य' इत्यादिना 'मातुराख्या' इत्यन्तेनाक्षरसंघातकं नाम भूषणमुपक्षिप्तम्। तल्लक्षणं तु—'वाक्यमक्षरसंघातो भिन्नार्थः श्लिष्टवर्णकम्' इति। अपि नामेति। यथा मृगतृष्णिका विषादाय कल्पते तद्वन्नाममात्रप्रस्ताव इत्यर्थः। अत्र सन्ति पुनर्नामधेयसादृश्यानीति हेतुत्वेन योऽयम्। अज्जुए मातः। रोचते म एष भद्रमयूरः अम्हहे इति खेदे। रक्षाकरण्डकं मणिबन्धेऽस्य न दृश्यते रक्षाकरण्डकं रक्षावीटिका। 'करण्डो मधुकोशेस्याद्वीटिकाखड्गकोशयोः' इत्यमरः। मा खल्विदमवलम्ब्य। कथं गृहीतमनेन। उरोनिहितहस्ते इति विस्मयाभिनयः। एतदुक्तमादिभरते चित्राभिनयाध्याये—'शिरोधुतं पताकश्च वक्षस्थो विस्मये भवेत्' इति। अनेनैतत्स्थायी अद्भुतरसो व्यज्यते। तल्लक्षणं प्रागुक्तमेव। उक्तं च धनिकेन—'कुर्यान्निर्वहणेऽद्भुतम्' इति। आदिभरतेनापि—'निर्वहणे कर्तव्यो नित्यं हि रसोऽद्भुतः कविभिः' इति। अनेनोपगूहनलक्षणमङ्गमुपक्षिप्तम्। तल्लक्षणं तु—

**प्रथमा**—[1]सुणादु महाराओ। एसा अवराजिदा णाम ओसही। इमस्स जादकम्मसमए भअवदा मारीएण दिण्णा एदं किळ मादापिदरा अत्ताणं च वज्जिअ अवरो भूमिपदिदं ण गेण्हादि ॥

**राजा**—अथवा गृह्णाति ?

**प्रथमा**—[2]तदो सज्ज एव्व सप्पो भविअ दंसइ ॥

**राजा**—भवतीभ्यां कदाचिदस्याः प्रत्यक्षीकृता विक्रिया ?

**उभे**—[3]अणेअसो ॥

**राजा**—(सहर्षं) किमिदानीं (कथमिव) पूर्णमपि मनोरथं नाभिनन्दामि ॥ (बालं परिष्वजते) आ

**द्वितीया**—[4]सुव्वदे। एहि इमं वुत्तंदं णियमव्वावुदाए सउन्दळाए णिवेदेम्ह ॥

(इति निष्क्रान्ते)

**बालः**—[5]मुञ्च मं अज्जूए सआसं गच्छम्हि ॥

**राजा**—पुत्र ! मया सहैव मातरमभिनन्दयिष्यसि ॥

**बालः**—[6]मम खु तादो दुस्सन्दो। (ण)तुमं को ?

---

1 शृणोतु महाराजः। एषाऽपराजिता नामौषधिः। अस्यै जातकर्मसमये भगवता मारीचेन दत्ता। एतां किल मातापितरावात्मानं च वर्जयित्वा अपरो भूमिपतितां न गृह्णाति ॥

2 ततस्सद्य एव सर्पो भूत्वा दंशति ॥

3 अनेकशः ॥

4 सुव्रते। एहि ॥ इमं वृत्तान्तं नियमव्यापृतायै शकुन्तळायै निवेदयावः ॥

5 मुञ्च मामम्बायास्सकाशं गच्छामि ॥

6 मम खलु तातो दुष्यन्तः। त्वं कः ?

---

'अद्भुतस्य तु या प्राप्तिर्भवेत्तदुपगूहनम्' इति। शृणोतु महाराजः। एषाऽपराजिता नामौषधिरस्य जातकर्मसमये भगवता मारीचेन काश्यपेन दत्ता। एतां किल मातापितरावात्मानं च वर्जयित्वाऽपरो भूमिपतितां न गृह्णाति। ततस्तं सर्पो भूत्वा दशति। अनेकशः। 'प्रथमा—सुणादु महाराओ' इत्यादिना 'अणेअसो' इत्यन्तेन पूर्वभावनामकमङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'पूर्वभावस्तु विज्ञेयो यथार्थोक्तोपदेशकः' इति। सुव्रते, एहि। इमं वृत्तान्तं नियमव्यापृतायै। अनेनाद्यापि तत्प्राप्त्यर्थं नियमकारित्वमुक्तम्। शकुन्तलायै निवेदयावः। मुञ्च माम्। यावन्मातुः सकाशं गमिष्यामि। मम खलु तातो दुष्यन्तः। न त्वम्।

**राजा**—(सस्मितं) एष विवाद एव प्रत्याययति ॥

(ततः प्रविशत्येकवेणीधरा शकुन्तला·)

**शकुन्तला**—[1]विआरकालेवि पकिदिट्ठं सव्वदमणस्स ओसहिं सुणिअविण मे आसंसा आसि अत्तणो भाअहेएसु ॥ अहवा, जहसाणुमदीए आचक्खिदं तह सम्भावीअदि ॥

**राजा**—(शकुन्तलां दृष्ट्वा) अये, इयमत्रभवती शकुन्तला ॥

**वसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवे(णिः)णी ।**
**अपि निष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्ति ॥ २१**

---

1 विकारकालेऽपि प्रकृतिस्थां सर्वदमनस्यौषधिं श्रुत्वापि न मे आशंसाऽसीदात्मनो भागधेयेषु । अथवा यथा सानुमत्या आख्यातं तथा संभाव्यते ॥

---

प्रत्याययति विश्वासं जनयति ॥ पुत्त्रेत्यादिना प्रत्याययतीत्यन्तेन कार्यस्य दृष्टत्वात् पूर्वभाव इति सन्ध्यङ्गमुक्तं भवति ॥ "पूर्वभावस्स विज्ञेयो यत्तु कार्योपपादनं" इति ॥

**२१ वसने इत्यादि ॥** शुद्धशीला ॥ न तु कृत्रिमशीला ॥ दीर्घं बहुकालव्यापकं ॥ विरहिजनासह्यषड्तुव्यापकमिति यावत् ॥ बिभर्तीति वर्तमानव्यपदेशेन मम दर्शनसमयेऽपि बिभर्तीति विरहव्रतानुष्ठानस्याकृत्रिमत्वं व्यज्यते ॥

---

प्रत्याययतीत्येतावत्पर्यन्तं प्रत्ययो नोत्पन्न एवेति भावः । विकारकालेऽपि प्रकृतिस्थां सर्वदमनस्यौषधिं श्रुत्वा न म आशासीदात्मनो भागधेयेषु । अथवा यथा सानुमत्याख्यातं तथा सम्भाव्यत एतत् । अनेन समयाख्यमङ्गमुपक्षिप्तम् । तल्लक्षणम्—'दुःखस्यापगमो यस्तु समयः स निगद्यते' इति ॥

**वसन इति ॥** परितः सर्वतो धूसरे नोज्ज्वले । इदमेव विधेयम् । वसने अन्तरीयोपसंव्याने वसाना । नियमेन तपआदिना क्षामं कृशं मुखं यस्याः सा । अत्रापावृतमुख्या मुखस्यैव दर्शनात्क्षाममुखीत्युक्तिः । अनेन नाभिगृहस्थितावप्यतिशयलज्जालुत्वं व्यज्यते । मुखापवरणं तु चिरतरकालतद्दर्शनोत्कण्ठया तदर्थमेव च प्रवृत्तेरिति नानौचित्यम् । धृतैका वेणिर्यस्याः सा । यत एतादृश्यत एव शुद्धशीला शुद्धस्वभावा । अतिनिष्करुणस्यातिशयकृपाहीनस्य मम मत्सम्बन्धिनं दीर्घं बहुकालीनं विरहव्रतं बिभर्ति । काव्यलिङ्गस्वभावोक्ती । वसवसेति सनेसानेति छेकानुप्रासवृत्त्यनुप्रासौ । वृत्तमनन्तरोक्तम् । 'राजा—' इत्यादिनैतदन्तेन सन्धिनामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'मुखबीजोपगमनं सन्धिरित्यभिधीयते'

**शकुन्तला**—(पश्चात्तापविवर्णं राजानं दृष्ट्वा) [1]ण खु अज्जवुत्तो वि अ ॥ तदो को एसो (किद) अकिदरक्खामङ्गळं दारअं मे गत्तसंसग्गेण दूसेइ ?

**बालः**—(मातरमुपेत्य) [2]अज्जु, एसो कोवि परकेरओ मं पुत्तोत्ति आळिङ्गदि ॥

**राजा**—प्रिये, क्रौर्यमपि मे त्वयि प्रयुक्तमनुकूलपरिणामं संवृत्तम् ॥ यदहमिदानीं त्वया प्रत्यभिज्ञातमात्मानं पश्यामि ॥

**शकुन्तला**—(आत्मगतं) [3]हिअअ, समस्ससहि समस्ससहि (अस्सस अस्सस) परिच्चत्तमच्चळेण अणुअंविदम्हि देव्वेण ॥ अज्जउत्तो एव्व एसो ॥

---

1 न खल्वार्यपुत्र इव । ततः क एषोऽकृत (कृत) रक्षामङ्गळं दारकं मे गात्रसंसर्गेण दूषयति ?

2 अम्ब ! एष कोऽपि परकीयो मां पुत्र इत्यालिङ्गति ॥

3 हृदय ! समाश्वसिहि समाश्वसिहि । परित्यक्तमत्सरेणानुकम्पितास्मि देवेन ॥ आर्यपुत्र एवैषः ॥

---

**प्रिये क्रौर्यमित्यादि ॥** प्रयुक्तं कृतं मे क्रौर्यमपि प्रत्यादेशक्रौर्यमपि ॥ अनुकूलपरिपाकं संवृत्तं सञ्जातं ॥ परस्परविरहजनितशरीरकार्श्यवैवर्ण्यादीनामुभाभ्यामनुरागज्ञापकहेतुतया दृष्टान्तत्वादनुगुणपरिपाकं जातं ॥ तदेव विशदयति—यदित्यादि ॥ यद्यस्मात्कारणात् ॥ इदानीं हठाद्यादृच्छिकदर्शने सतीत्यर्थः अयमहं पश्चात्तापजनितकार्श्यवैवर्ण्यादिक्लिष्टोऽहमिति यावत् ॥ आत्मानं मां त्वया प्रत्यभिज्ञातं ॥ कुत्र वायमिति पश्चात्तापकार्श्यवैवर्ण्यादिभिः ज्ञातं ॥ पश्यामि जानामि ॥ तस्मादनुकूलपरिणाममिति सम्बन्धः ॥

---

इति । न खल्वार्यपुत्र इव । पश्चात्तापविवर्णत्वं हेतुत्वेन योज्यम् । ततः क एष इदानीं कृतरक्षामङ्गलं दारकं मे गात्रसंसर्गेण दूषयति । मातः । एष कोऽपि पुरुषः पुत्र इति मामालिङ्गति । अनुकूलः परिणामः परिपाको यस्य तत् । त्वं यदागतासि तदा मया न प्रत्यभिज्ञातासि । मयि पुनरागते त्वया प्रत्यभिज्ञात इत्यनुकूलपरिणामता । हृदय, आश्वसिहि आश्वसिहि । परित्यक्तमत्सरेणानुकम्पितास्मि दैवेन । आर्यपुत्रः खल्वेषः । अनेनानन्दनामकमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'समागमस्तु योऽर्थानामानन्दः स तु कीर्त्यते' इति ॥

राजा—

स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि मे सुमुखि ! ।
उपरागान्ते शशिनस्समुपगतेवाशु रोहिणीयोगम् ॥ २२

शकुन्तला—[1]जेदु अज्जउत्तो ॥

(इत्यर्धोक्ते लज्जया सबाष्पकण्ठं विरमति)

---

1 जयत्वार्यपुत्र ॥

---

२२ **स्मृतिभिन्नेत्यादि ॥** सुमुखीति सम्बोधने ॥ स्मृत्या स्मरणेन भिन्नं नष्टं मोह एव तमः यस्य स तथोक्तः ॥ तस्य चन्द्रपक्षे तमश्शब्दो राहुवाचकः उपरागान्ते योगं प्राप्तिं समुपगता रोहिणीवासीत्यनेन यथा चन्द्रस्याश्विन्यादिकलत्रेषु सत्स्वपि रोहिण्यामसाधारणोऽनुरागस्तथा मम बहुवल्लभत्वेऽपि त्वय्येवानुरागप्रकर्षः ॥ तद्व्यतिरिक्तभार्यास्संख्यामात्रपूरका इति भावः ॥ तेन च स्वशरीरक्षामतादीनां शकुन्तलाविरहनिमित्तकत्वं द्योत्यते ॥ वर्तमानप्रत्ययेन शकुन्तलादर्शनानन्तरमुत्तरक्षणे स्वस्य तद्विरहजनितकार्श्यवैवर्ण्यभ्रंशान्मुखशोभाप्रादुर्भावः प्रकाश्यते सुमुखीति सम्बोधनेन शकुन्तलाया अपि दुष्यन्तदर्शनानन्तरमुत्तरक्षणे देहतनुतादिवैवर्ण्यभ्रंशान्मुखशोभाप्रादुर्भावो राज्ञा सूच्यते ॥ अनेन हि तदीयमुखनिर्गतवचनश्रवणौत्सुक्यं च प्रकाश्यते । तेन च तदीयप्रेमवीक्षणं ध्वन्यते । अयमर्थशक्तिमूलस्संलक्ष्यको व्यंग्यः तदुक्तं—"वाच्यव्यंग्यावगतौ लक्ष्यो यत्र क्रमोनुरणनात्मा शब्दार्थोभयशक्त्या त्रेधा संलक्ष्यकव्यंग्यः" इति ॥ कांस्यादीनामास्फालनसमयसमादीर्णप्राथमिकध्वनिसदृशी वाच्यार्थावगतिः ॥ आस्फालन समनन्तरसमयश्रूयमाणध्वनिसदृशी व्यंग्यार्थावगतिः ॥

इत्थं स्वकीयवचनश्रवणतात्पर्यं व्यंग्यमिति मनसि निधाय वदति—**जेदु इत्यादि ॥** जयत्वित्यर्धोक्ते अर्धस्य वाक्यैकदेशस्य उक्ते आर्यपुत्रेत्यादिवाक्यपूरकपदनिर्गमनात्प्रागेवेत्यर्थः ॥ सुन्दरीत्यनेन स्वदर्शनादरजनिततच्छरीरशोभाप्रकर्षस्सूच्यते ॥ तेन च पूर्वानुभूततदीययौवनपरिपोषस्मरणेन गाढालिङ्गनेच्छा द्योत्यते ॥

---

**स्मृतीति ॥** मोहस्तमो राहुरिव मोहतमः । अनेनोपमानेन राज्ञा तस्य गाढत्वमुक्तम् । 'तमस्तु राहुः स्वर्भानुः' इत्यमरः । उपमासाधकमनन्तरमेव वक्ष्यामः । स्मृत्या भिन्नं दूरीकृतं मोहतमो यस्य तस्य मे मम प्रमुखे सम्मुखे दिष्ट्या दैवेन हे सुमुखि, स्थितासि । सुमुखीति साभिप्रायम् । सुमुखस्यैव सम्मुखे स्थातुं योग्यत्वात्कुमुखगोपनमेव करोतीति यावत् । उपरागान्ते ग्रहान्ते । 'उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च' इत्यमरः । शशिनश्चन्द्रस्य रोहिणी नक्षत्रविशेषो योगं सम्बन्धं समुपगता । अत्र मुखेमुखीति सिमेसस्विति छेकानुप्रासः । सन्देहसङ्करः । सकारादीनां दन्त्याक्षराणां मकारादीनामोष्ठ्याक्षराणां बहूनां सत्त्वाच्छ्रुत्यनुप्रासः । अनेन सहपूर्वस्यैकवाचकानुप्रवेशलक्षणः सङ्करः । अर्थाभ्यां यत्तद्भ्यामेकवाक्यत्वात् सम्भवद्वस्तुसम्बन्धान्निदर्शनम् । मोहतम इत्येकदेशविवर्तिन्युपमाने तत्स्मृतेर्नियतत्वमप्युपमितम् । ततश्च विशेषणत्वेनापि योज्यम् । नियत्या भिन्नं मोहवत्तमो राहुर्यस्येत्युपमासाधिका चात्र निदर्शनैव । अन्ये तु दृष्टान्तमेवाहुः । अन्ये साधकबाधकप्रमाणाभावादुभयोः सन्देहसङ्करमाहुः । जयतु जयत्वार्यपुत्रः ॥

राजा—सुन्दरि !

बाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया ।
यत्ते दृष्टमसंस्कारपाटलोष्ठपुटं मुखम् ॥ २३

बालः—[1]अज्जु, को एसो ?

शकुन्तला—[2]वच्छ, दे भाअहेआणि पुच्छ ॥

राजा—(शकुन्तलायाः पादयोः प्रणिपत्य) ॥

सुतनु हृदयात्प्रत्यादेशव्यलीकमपैतु ते
किमपि मनसस्सम्मोहो मे तदा बलवानभूत् ।

1 अम्ब ! क एषः ?
2 वत्स ! ते भागधेयानि पृच्छ ॥

२३ बाष्पेणेत्यादि ॥ बाष्पेण प्रतिषिद्धेऽपि तादृगनुरागानुचितप्रत्यादेशक्रौर्यस्मरणजनितदुःखवशात् स्वच्छन्दगस्यापि बाष्पस्य निर्गमने सत्यमांगल्यधिया कण्ठ एवोपरोधात् गद्गदभावेन वर्णोच्चारणाशक्त्या जयशब्दे प्रतिबद्धेऽपीत्यर्थः ॥ मया त्वद्विरहपरम्पराजनितदुःखासहिष्णुतया जीवितधारणेऽप्यशक्तेन मयेत्यर्थः ॥ प्रत्यादेशजनितविप्रियस्य त्वच्चित्ते रूढमूलतया प्रसादकरण सूचककर्णरसायनजयशब्दनिर्गमाभावेऽपि दुःखपरित्यागसूचकबाष्पप्रादुर्भावेन वचनोच्चारणोद्योगमात्रेण च त्वत्प्रसादः प्राप्त इत्यर्थः ॥ अतस्त्वावर्जितमित्युक्तं ॥ यद्यस्मात्कारणात् असंस्कारपाटलोष्ठपुटं श्वेताधरं ॥ मुखं नेत्राधरकपोलादि बहुचुम्बनविषयभूतमाननमिति यावत् ॥ अज्जु इत्यादि ॥

२४ सुतन्वित्यादि ॥ सुतन्वित्यनेन गाढालिङ्गनेच्छा द्योत्यते ॥ तेन स्वशरीरसद्भावनस्य त्वदीयालिङ्गनादिमत्त्वेन सफलत्वं 'एतावत्पर्यन्तं तदभावात् स्वयं भाग्यहीन इति द्योत्यते ॥ तेनानुशयो व्यज्यते ॥ हृदयात् सर्वकरणप्रधानभूतचित्तात् । प्रत्यादेशव्यलीकं न्यक्कारजनिताप्रियं—"अलीकं त्वप्रियेऽनृत" इत्यमरः ॥ हृदयादित्यनेन पश्चात्तापजनित-

बाष्पेणेति ॥ बाष्पेणाश्रुप्रारम्भेण । एतेन चातिविरहक्रान्तत्वं व्यज्यते । एतादृशं ते मुखं दृष्टमिति विशिष्टं विधेयम् । विशिष्टमुखदर्शनेन च विरहनाशः । अत एव जय इत्यवधातव्यम् । जयशब्दे प्रतिषिद्धेऽपि जितमिति विरोधाभासः । जितं प्रत्युत्तरार्धस्य हेतुत्वेनोपादानात्काव्यलिङ्गमपि । श्रुतिवृत्त्यनुप्रासौ । मातः, एष कः । वत्स, ते भागधेयानि पृच्छ । क्वचित्पुस्तके 'पुच्छेहि' इति नास्ति । तस्मिन्पाठे रूपकम् ॥

सुतन्विति ॥ कुतनावप्रीतिर्न सुतनाविति सम्बोधनं हे सुतन्विति । तव हृदयात्प्रत्यादेशव्यलीकं निराकरणाप्रियमपैतु दूरीभवतु । 'व्यलीकं त्वप्रियेऽनृते' इत्यमरः । अप्रियस्य हृदयात्त्यागेऽर्थतः सिद्धेऽपि पुनस्तद्ग्रहणं विप्रियं मया त्यक्तमिति वाङ्मात्रेण न त्यागः । अपि तु तत्संस्कारोन्मूलनपूर्वकं त्याग इति ध्वनयति । किमर्थमप्रियं कृतं तत्राह—किमपीषन्मनो यस्यासौ किमपिमनास्तस्य किमपिमनसो मे मम तदा त्वद्दर्शनसमये

प्रबलतमसामेवंप्रायाश्शुभेषु हि वृत्तय-
स्स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥ २४

शकुन्तला—(सबाष्पं) [1]उट्ठेदु उट्ठेदु अज्जउत्तो ॥ णूणं मम सुअरिद-पडिबन्धअं पुराकिदं तेसु दिअसेसु परिणामाहि मुहं आसि, जेण साणुक्कोसो वि अज्जउत्तो मइ तहाविहो संवुत्तो ॥ (राजा उत्तिष्ठति)

---

1 उत्तिष्ठतूत्तिष्ठत्वार्यपुत्रः ॥ नूनं मम सुचरितप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणामाभिमुखमासीत् । येन सानुक्रोशोऽप्यार्यपुत्रो मयि तथाविधस्संवृत्तः ॥

---

मदीयशरीरकार्श्यवैवर्ण्यगद्गददैन्यवचनदर्शनश्रवणाभ्यां त्वदीयनेत्रश्रोत्रस्थितप्रत्यादेशव्यळीकं गतमिदानीं पादप्रणामेन हृदयस्थव्यळीकमपि गच्छत्विति भावः ॥ तदा पञ्चमेऽङ्के त्वदागमनसमये ॥ मे तादृगनुरागातिशयवतो ममेत्यर्थः ॥ मनसः ज्ञानाधारकरणस्य ॥ न तु त्वदीयसौन्दर्यवचनदर्शनश्रवणवैमुख्येन नेत्रश्रोत्रयोः ॥ किन्तु मनसः ॥ मनोवागक्ष्यगोचरं कारणशून्यमिति यावत् ॥ अभूदिति भूतार्थेन तदानीन्तनसम्मोहस्यानिर्वचनीयतया स्मरणानर्हता ध्वन्यते ॥ तेन निर्वेदः ॥ प्रबलतमसामिति ॥ बहुवचनं निर्वेदसूचकं ॥ एवमनुभवप्रकारेण प्रायो भूमा यासां ताः ॥ शुभेष्वपि पूर्वजन्मान्तरोपार्जितसुकृतविशेषैः प्रार्थनीयसुखजनकवस्तुप्राप्तिष्वपि ॥ वृत्तयः व्यापाराः ॥ तदेव दृष्टान्तेन विशदयति—स्रजमपीति ॥ अन्धः ॥ सर्वेन्द्रियाणां नयनं प्रधानमिति न्यायेन रम्यवस्तुदर्शनजनितसुखानुभवशून्य इति यावत् ॥ स्रजमपि सौरभमार्दवदर्शनीयतया धार्यपदार्थमपि ॥ शिरसि पुष्पधारणार्हप्रदेशे । शिरसीति यावत् ॥ न तु कण्ठे ॥ अनेन श्लोकेन प्रसादो नाम सन्ध्यङ्गमुक्तं ॥ "प्रसादः पर्युपासनं" इति ॥ अत्र हि राज्ञा शकुन्तलायाः पर्युपासनं कृतम् ॥

---

बलवानधिकः सम्मोहोऽज्ञानमभूदिति विशिष्टं विधेयम् । तेन सम्मोहेन मन्मनःसमुन्मूलनं जातमित्यर्थः । तेन चित्ताभावात्कृतमिदं क्षन्तव्यमिति भावः । सम्मोहान्मनःसमुन्मूलनं जातमित्यस्य शब्दे विधेयत्वे वक्तव्ये पदार्थविधेयत्वं तत्सम्मोहस्य प्राधान्यद्योतनाय । तेन सम्मोहस्य मनोधर्मत्वान्मनसः सम्मोहो जात इत्यर्थपौनरुक्त्यं निरस्तम् । प्रबलेति । प्रबलतमसामधिकसम्मोहानाम् । अत्र प्रबलतमःशब्देनाधिकशोक उच्यते तेन तज्जन्यः सम्मोहो लक्ष्यते तदतिशयो व्यज्यते । अतएवोद्देश्यप्रतिनिर्देश्यप्रक्रमभङ्गो नाशङ्कनीयः । 'तमः शोके गुणान्तरे' इति विश्वः । शुभेषु कार्येषु एवंप्रायाः शुभत्यागरूपाः प्रवृत्तयो भवन्ति इत्यर्थान्तरन्यासः । दृष्टान्तमप्याह—स्रजमिति । अन्धः शिरःस्थापितां परिधापितां स्रजं मालामप्यहिशङ्कया सर्पशङ्कया धुनोति तिरस्करोति । अहिशङ्कयेति भ्रान्तिमान् । काव्यलिङ्गश्रुत्यनुप्रासौ । कमकिमेति मपैमपीति बलबलेति छेकानुप्रासः । हरिणीवृत्तम् । 'राजा—शकुन्तलायाः पादयोः प्रणिपत्य' इत्यादिनानुनयो नाम भूषणमुपक्षिप्तम् । तल्लक्षणं तु—'अभ्यर्थनापरं वाक्यं विज्ञेयोऽनुनयो बुधैः' इति । उत्तिष्ठत्वार्यपुत्रः । नूनं निश्चितं मे सुचरितप्रतिबन्धकं पुराकृतम् । कर्मेत्यर्थः । तेषु दिवसेषु परिणाममुखं परिपाकोन्मुखमासी-

शकुन्तला—[1]अह कहं अज्जउत्तेण सुमरिदो दुक्खहाई अअंजणो ?

राजा—उद्धृतविषादशल्यः पश्चात्कथयिष्यामि ॥

मोहान्मया सुतनु पूर्वमुपेक्षितस्ते
यो बद्धबिन्दुरधरं परिबाधमानः ।
तं तावदाकुटिलपक्ष्मविलग्नमद्य
बाष्पं प्रमृज्य विगतानुशयो भ(वेयं)वामि ॥ २५

(यथोक्तमनुतिष्ठति)

---

1 अथ कथमार्यपुत्रेण स्मृतो दुःखभागयं जनः ?

---

उद्धृतविषादशल्य इत्यादि ॥

२५ **मोहादिति** ॥ पूर्वं ॥ इतः प्रत्यादेशादित्यत्रप्रसक्तप्रत्यादेशकवेळायामुत्पन्नो यो बाष्प उपेक्षितः अपरिमृष्टः ॥ तं बाष्पमद्य प्रमृज्यापनीय विगतानुशयोऽपगतपश्चात्तापः ॥

---

द्येन सानुक्रोशोऽपि सकृपोऽप्यार्यपुत्रो मयि विरसो विरागः संवृत्तः । अथ कथमार्यपुत्रेण स्मृतो दुःखभाग्ययं जनः । उद्धृतविषादशल्य इत्युपमा । इह श्लोके शोकस्य वक्ष्यमाणत्वादतिखेदवत्त्वं व्यङ्ग्यम् ॥

**मोहादिति** ॥ हे सुतनु, मया परमविवेकिना धर्मभीरुणा परमविदग्धेन दुष्यन्तेनेत्यर्थान्तरसंक्रान्तम् । मोहादज्ञानात्ते तव बाष्पबिन्दुः । जात्येकवचनम् । उपेक्षितो न मार्जितोऽत एवाधरं परितः सर्वतो बाधमानः स्थित इति शेषः । अनेन बिन्दूनामनवरतपातिता स्थूलतोष्णताद्ययावत्स्थितिश्च ध्वनिता । तेन मार्जनकारणसामग्र्यां सत्यामपि यत्तदनुत्पत्तिः सा विशेषोक्तिः । मोहादिति निमित्तस्योक्तत्वादुक्तनिमित्तता । तावदादावादित्वकथनापेक्षया तं बाष्पं प्रमृज्य प्रास्य विगतानुशयो गतपश्चात्तापो भवेयम् । आशंसायां लिङ् । कीदृशम् । आ ईषत्कुटिलं यत्पक्ष्म तत्र विलग्नं सम्बद्धम् । अनेनास्य बाष्पस्य बिन्दुत्वाभावस्तदभावेनाधरपीडनाभावश्च ध्वनितः । ननु तस्य बाष्पस्यातीतत्वात्तमिति तच्छेषनिर्देशः कथमिति चेदुच्यते । यतश्चिरानुभूतान्यपि बन्धुदर्शनाज्जनस्य दुःखानि नवीभवन्तीत्युक्तदिशा एनं दृष्ट्वा तस्याः पूर्वदुःखस्मरणेन यो बाष्प उत्पन्नः स तच्छब्देन राज्ञा परामृष्टः । दुःखहेतुत्वादुभयोः आकुटिलेति व्यतिरेकः । यस्तदा शोकावेगवशाद्बिन्दुरूप एवोत्पन्नः । अधुना क्रमिकत्वात्तदवस्थाभाव इति बोद्धव्यम् । अत एतत्प्रमार्जनेन विगतानुशयत्वम् । इदमेवोद्धृतविषादशल्यत्वम् । यतोऽपराधादिनानुशयो हि विषादः । तदुक्तं सुधाकरे—'अपराधपरिज्ञानादनुतापस्तु यो भवेत् । स विषादः' इति । श्रुतिवृत्त्यनुप्रासो । वसन्ततिलका वृत्तम् । यथोक्तमनुतिष्ठति । बाष्पमार्जनं करोतीत्यर्थः । तच्च त्रिपताकवक्रानामिकयेति ज्ञेयम् । तदुक्तं संगीतरत्नाकरे—'तन्मार्जने च स्यादधो यान्तीमनामिकाम् । नेत्रक्षेत्रगतां बिभ्रत्' इति । अनेन कथयिष्यामीति यदुक्तं तत्प्रसङ्गोऽप्युपदर्शितः ।

**शकुन्तला**—(नाममुद्रां दृष्ट्वा) [1]अज्जउत्त, णं एदं तं अङ्गुलीअअं!

**राजा**—अथ किं ॥ त(अ)स्मादङ्गुलीयोपलम्भात्खलु स्मृतिरुपलब्धा!

**शकुन्तला**—[2]विसमं किदं णेण, जं दाव अज्जउत्तस्स पच्चाअणकाळे दुळ्ळहं आसि ॥

**राजा**—तर्हि ऋतुसमवायचिह्नं प्रतिपद्यतां लताकुसुमम् ॥

**शकुन्तला**—[3]णत्थि मे एत्थ विस्सासो ॥ अज्जउत्तो एव्व णं धारेदु॥

**मातलिः**—(प्रविश्य) दिष्ट्या धर्मपत्नीसमागमेन पुत्त्रमुखदर्शनेन चायुष्मान् वर्धते ॥

**राजा**—सुहृत्सम्पादितत्वात्स्वादुतरस्सफलो भवति मे मनोरथः ॥ मातले, न खलु विदितोऽयमाखण्ड(लेन वृत्तान्तः स्यात्) लस्यार्थः ॥

**मातलिः**—(सस्मितं) किमीश्वराणां परोक्षं नाम? एह्यायुष्मन्, भगवान्मारीचस्ते दर्शनं वितरति ॥

**राजा**—शकुन्तले! अवलम्ब्यतां पुत्त्रः, त्वां पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि ॥

**शकुन्तला**—[4]जिहिरिआमि अज्जउत्तेण सह गुरुसमीपं गन्दुम् ॥

---

1 आर्यपुत्र! नन्वेतत्तदङ्गुलीयकम्?

2 विषमं कृतमनेन। यत्तावदार्यपुत्रस्य प्रत्यायनकाले दुर्लभमासीत्॥

3 नास्तिमेऽत्र विश्वासः। आर्यपुत्रएवैतद्धारयतु॥

4 जिह्रेम्यार्यपुत्रेण सह गुरुसमीपं गन्तुं॥

---

आर्यपुत्र, इदं तेऽङ्गुलीयकम्। अङ्गुलीयस्योपलम्भः प्रासिस्तस्मात्। विषमं कृतमनेन यत्तदार्यपुत्रस्य प्रत्ययकाले दुर्लभमासीत्। तेन कारणेन हि निश्चितं लता कर्त्री ऋतोः समवायः संबन्धस्तस्य चिह्नं कुसुमं प्रतिपद्यताम्। अत्र त्वयाङ्गुलीयकं धारणीयमिति प्रस्तुते यल्लताकुसुमवृत्तान्तोऽन्योऽप्रस्तुत उक्तः। सादृश्येन साऽप्रस्तुतप्रशंसा। नास्य विश्वसिमि। आर्यपुत्र एवैतद्धारयतु। 'राजा—प्रिये, स्मृतिभिन्न—' इत्यादिनैतदन्तेन परिभाषणं नामाङ्गमुपक्षिसम्। तल्लक्षणं तु—'मिथः संजल्पनं यत्स्यात्तदाहुः परिभाषणम्' इति। 'ततः प्रविशति मातलिः' इत्यादिना ग्रथनं नामाङ्गमुपक्षिसम्। तल्लक्षणं तु—'उपक्षेपस्त कार्याणां ग्रथनं परिकीर्तितम्' इति। 'राजा—अभूत्संपादितस्वादुफलो मे मनोरथः' इत्यनेन प्रहर्षनामा नाट्यालंकार उपक्षिप्तः। तल्लक्षणं तु—'प्रहर्षः प्रमदाद्वाक्यम्' इति। लज्जाम्यार्यपुत्रेण सह गुरुसमीपं गन्तुम्।

राजा—अलं ह्रिया, एवमाचरितव्यमभ्युदयकालेषु ॥ एह्येहि ॥

(सर्वे परिक्रामन्ति)

(ततः प्रविशत्यदित्या सार्धमासनस्थो मारीचः)

मारीचः—(राजानमवलोक्य) दाक्षायणि !

पुत्त्रस्य ते रणशिरस्ययमग्रयायी
दुष्यन्त इत्यभिहितो भुवनस्य गोप्ता ।
चापेन यस्य विनिवर्तितकर्मजातं
तत्कोटिमत्कुलिशमाभरणं मघोनः ॥ २६

दाक्षायणी—[1]सम्भावणिज्जाणुहावासे आकिदी ॥

मातलिः—आयुष्मन्, एतौ पुत्त्रप्रीतिपिशुनेन चक्षुषा दिवौकसां पितरावायुष्मन्तमवलोकयतः ॥ तस्मादुपसर्प ॥

राजा—मातले !

1 सम्भावनीयानुभावास्याकृतिः ॥

२६ पुत्त्रस्येत्यादि ॥ ते तव यस्य पुत्रस्य चापेन ॥ विनिवर्तितकर्मजातं निर्वर्तितकार्यसमूहं ॥ कोटिमच्छतकोटिकुलिशं ॥ मघोनः देवेन्द्रस्य ॥ आभरणं वज्ररूपत्वादलङ्करणं नत्वायुधभावेन दुष्टनिग्रहादिरूपक्रियासाधकम् ॥

अभ्युदयकालेषु मङ्गलोत्सवादिसमयेष्विदमाचरितव्यमेव । दाक्षायणि दक्षपुत्रि ॥

पुत्रस्येति ॥ अयं दुष्यन्त इत्यभिहितः । इतिना परामर्शाच्छब्दपरो निर्देशः । तेन दुष्यन्तनामधेयक इत्यर्थः । भुवनस्य भर्ता भूमण्डलस्य पालकः । ते तव पुत्रस्येन्द्रस्य रणशिरस्यग्रयाय्यग्रेसरः । इदमेव विधेयम् । यस्य चापेन धनुषा विनिवर्तितकर्म समापितकार्यं कोटिमदित्यकुण्ठकोटिमदित्यर्थः । तेन युद्धक्षमत्वं ध्वन्यते । एतादृगपि मघोनः कुलिशं वज्रमाभरणं जातम् । वीर्यलक्षणस्य वस्तुनोऽतिशयितत्वेन वर्णनादुदात्तं रूपकं च । स्यस्येति ययायीति छेकवृत्त्यनुप्रासौ च । वसन्ततिलका वृत्तम् । संभावनीयानुभावाऽस्याकृतिः । संभावनीयोऽनुभावः प्रभावो यस्याः सा । पुत्रप्रीतिपिशुनेन पुत्रस्नेहसूचकेन । 'पिशुनौ खलसूचकौ' इत्यमरः । इन्द्रोऽनयोः पुत्रस्तस्य त्वं मित्रम् । अतस्त्वमपि पुत्रप्रायः । पुत्रस्नेह इत्यर्थः । दिवौकसां देवानां पितरावदितिकश्यपौ ॥

प्राहुर्द्वादशधा स्थितस्य मुनयो यत्तेजसः कारणं
भर्तारं भुवनत्रयस्य सुषुवे यद्यज्ञभागेश्वरं ।
यस्मिन्नात्म(भ)भुवः परोऽपि पुरुषश्चक्रे भवायास्पदं
द्वन्द्वं दक्षमरीचिसम्भवमिदं तत्स्रष्टुरेकान्तरम् ॥ २७

मातलिः—अथ किम् ॥

राजा—(उपेत्य)उभाभ्यामपि वासव(वानु)नियोज्यो दुष्यन्तः प्रणमति॥

मारीचः—वत्स ! चिरं महीं पालय ॥

---

२७ प्राहुर्द्वादशधेति ॥ यद्द्वन्द्वं द्वादशधा स्थितस्य तेजसः सूर्यात्मकस्य कारणं हेतुं जनकमाहुः। यद्द्वन्द्वं यज्ञभागेश्वरं यज्ञभागानामीश्वरं ॥ भुवनत्रयस्य भर्तारं देवेन्द्रमित्यर्थः ॥ सुषुवे जनयामास ॥ यस्मिन् द्वन्द्वे ॥ आत्मभुवः ब्रह्मणः ॥ परः श्रेष्ठोऽपि विष्णुः भवाय जन्मने आस्पदं प्रतिष्ठां चक्रे ॥ उपेन्द्रावतारस्य कारणमुक्तं ॥ दक्षमरीचिसम्भवं दक्षमरीचिभ्यां सम्भवमुत्पन्नं ॥ दक्षाददितिः। मरीचेः काश्यप इत्यनुसन्धेयं ॥ अत एव स्रष्टुर्ब्रह्मणः एकान्तरं एकः पुरुषः अन्तरं व्यवधानं यस्य तत्तथोक्तं ब्रह्मणो मरीचिः॥ मरीचेः काश्यपः ॥ ब्रह्मणो दक्षः ॥ दक्षाददितिः ॥ इत्येकान्तरमित्यनुसन्धेयम् ॥

---

प्राहुरिति ॥ मुनयो व्यासादयः' इत्यनेनैषां विप्रलम्भकरणापाटवादिराहित्यं ध्वन्यते। तेन च तदुक्तेर्वेदानुमानेन प्रामाण्यम् द्वादशधा स्थितस्य द्वादशसु मासेषु द्वादशमूर्तिधरस्य तेजसः सूर्यस्य यत्कारणं निदानमामनन्ति । जगत्प्रदीपस्य विश्वाशेषक्रियाकलापकारणभूतस्योत्पादकत्वेन तेजोराशित्वं ध्वनितम् । तथा च विष्णुपुराणे—'तत्र विष्णुश्च शक्रश्च जज्ञाते पुनरेव हि। अर्यमा चैव धाता च त्वष्टा पूषा तथैव च ॥ विवस्वान्सविता चैव मित्रो वरुण एव च। अंशुर्भगश्चादितिज आदित्या द्वादश स्मृताः॥ चाक्षुषस्यान्तरे पूर्वमासे ये तुषिताः सुराः । वैवस्वतेऽन्तरे ते वै आदित्या द्वादश स्मृताः॥' इति। अथवा द्वादशधा स्थितस्य द्वादशकलात्मकस्य । तदुक्तमाचार्यैः—'तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः। सुषुम्ना भोगदा विश्वा बोधिनी धारिणी क्षमा ॥ कभाद्या वसुधा सौर्या ठण्डान्ता द्वादशेरिताः' इति । यद्भुवनत्रयस्य भूर्भुवःस्वर्लक्षणस्य भर्तारं पोषकत्वेन धारणसमर्थम् । स्वामिनमिति यावत् । यज्ञस्य भागो विद्यते येषां ते यज्ञभागा देवास्तेषामीश्वरम्। इन्द्रमित्यर्थः। सुषुवे जनयामास। यज्ञभागेश्वरम्, न सुरेश्वरम्, न भुवनस्य भर्तारम् अपि तु त्रयस्येति । तस्योत्कर्षं वदता पदसमुदायेन तदुत्पादकत्वात्तस्य कोऽप्यतिशयो ध्वनितः। यस्मिन्द्वन्द्वे आत्मना भवतीत्यात्मभवः स्वयंभूः परः पुरुषो विष्णुर्भवाय जन्मन आस्पदं स्थानं चक्रे। विष्णुपुराणे—'मन्वन्तरे च संप्राप्ते तथा वैवस्वते द्विज। वामनः कश्यपाद्विष्णुरदित्यां संबभूव ह॥' इति । इदं च द्वन्द्वं मिथुनम्। दक्षः प्रजापतिस्तत्संभवादितिः । मरीचिसंभवः कश्यपः। अतएव स्रष्टुर्ब्रह्मण एको मरी-

**अदितिः**—[1]अप्पडिरहो होहि ॥

**शकुन्तला**—[2]दारअसहिदा वो पादवन्दणं करेमि ॥

**मारीचः**—वत्से !

**आखण्डलसमो भर्ता जयन्तप्रतिमस्सुतः ।**
**आशीरन्या न ते योग्या पौलोम्या सदृशी भव ॥** २८

**अदितिः**—[3]जादे । भत्तुणो बहुमदा होहि ॥ अवस्सन्दे दीहाऊ-वच्छो उभअकुळणंदणो होदु ॥ उवविसह ॥

(सर्वे प्रजापतिमभित उपविशन्ति)

**मारीचः**—(एकैकं निर्दिशन्) ॥

1 अप्रतिरथो भव ॥

2 दारकसहिता वां पादवन्दनं करोमि ॥

3 जाते ! भर्तुर्बहुमता भव ॥ अवश्यं ते दीर्घायुर्वत्स उभयकुलनन्दनो भवतु ॥ उपविशत ॥

२८ **आखण्डलेत्यादि ॥** पौलोम्या इन्द्राण्या सदृशी भव ॥

च्यादिरन्तरं यस्य सः । अनेन ब्रह्मतुल्यत्वं ध्वनितम् । 'अङ्गभूतमहापुरुषचरितवर्णनमुदात्तम्' इति तल्लक्षणादत्र पादत्रये मालोदात्तालंकारः । आत्मभवो भवायेति विरोधाभासोऽपि भवोभवेति द्वन्द्वेति छेकानुप्रासवृत्त्यनुप्रासौ । यज्ञभागेश्वरमिति विशेष्यम् । परः पुरुष इति विशेषणप्रक्रमभङ्गो न शङ्कनीयः । समुदायेन संज्ञिप्रतिपादकत्वमवयवार्थेन च व्यञ्जकत्वं कपालिपदवन्न विरुद्धम् । कारणं सुषुवे भवायास्पदं चक्र इति पर्यायैरेकस्यैवार्थस्य ग्रहणादर्थावृत्तिरलंकारः । शार्दूलविक्रीडितं वृत्तम् । तदुक्तं विष्णुपुराणे—'अथान्यान्मानसान्पुत्रान्सदृशानात्मनोऽसृजत् । भृगुं पुलस्त्यं पुलहं क्रतुमङ्गिरसं तथा । मरीचिं दक्षमत्रिं च मानसान्' इति । तथा 'भृगोः ख्यातिर्भवेत्सत्यं संसृतिश्च मरीचयः' इति । तथा 'षष्टिं दक्षोऽसृजत्कन्या दारिण्यामिति नः श्रुतम् । ददौ स दश धर्माय कश्यपाय त्रयोदश ॥' इति । तथा 'मारीचाः कश्यपाज्जातास्ते दैत्या दक्षकन्ययोः' इति । इयं च सृष्टिर्वैवस्वतमन्वन्तरे । नन्वयं प्राचेतसः पृथुवंशसमुद्भवो दक्षस्तस्य स्रष्टुरेकान्तरत्वं कथमिति चेदुच्यते—'स एव दक्षस्तत्रत्यः' इत्यदोषः । तथा च विष्णुपुराणम्—'दशभ्यस्तु प्रचेतोभ्यो मारिषायां प्रजापतिः । जज्ञे दक्षो महाभागो यः पूर्वं ब्रह्मणोऽभवत् ॥' इति । अप्रतिरथो भव । दारकसहिता बालकयुता वां युष्माकं पादवन्दनं करोमि ॥

**आखण्डलेति ॥** ते तव भर्ताखण्डलस्य सम इन्द्रतुल्यः । सुतो जयन्तप्रतिम इन्द्रपुत्रतुल्यः । अतः कारणात्ते तवान्याशीर्योग्या न । तृतीयचरणार्थे पूर्वार्धं हेतुत्वेन योज्यम् । पौलोम्याः शच्याः सदृशी भवेतीयमेव युक्ताशीरित्यर्थः । काव्यलिङ्गोपमे अनुप्रासश्च । जाते, भर्तुरभिमता भव । अवश्यं दीर्घायुर्वत्स उभयकुलनन्दनो भवतु । उपविशत ॥

दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान् ।
श्रद्धा वित्तं विधिश्चेति त्रितयं वस्स(तत्स)मागतम् ॥ २९

राजा—भगवन् ! प्रागभिप्रेतसिद्धिः पश्चाद्दर्शनं । अतोऽपूर्वः खलु वोऽनुग्रहः पश्यतु भवान् ॥

उदेति पूर्वं कुसुमं ततः फलं
घनोदयः प्राक्तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं क्रम-
स्तव प्रसादस्य पुरस्तु सम्पदः ॥ ३०

---

२९ दिष्ट्येत्यादि ॥ शकुन्तला पक्षिणामपि दयाविषयभूता ॥ श्रद्धा वेदचोदितावश्यम्भावनिश्चयः ॥ वित्तं द्रव्यं ॥ विधिरनुष्ठानं ॥ दिष्ट्या धर्मपत्नीत्यादिना एतदन्तेन सिद्धिर्नामालङ्कारो व्यज्यते ॥ "बहूनामप्रधानानां नाम यत्रानु कीर्त्यते । अभीप्सितार्थसिद्ध्यर्थं सा सिद्धिरभिधीयते" प्रकृते शकुन्तलभाग्याद्दुष्यन्तादिनामकीर्तनमिष्टसिद्ध्यर्थं मुनिना कृतं ॥ किञ्चानेन फलागमो नाम प्रथमावस्था व्यज्यते ॥ तदुक्तं—"फलागमः फलप्राप्तिः समग्रा प्रकृतोचिता" इति ॥ अत्र साध्व्याश्शकुन्तलायाः सत्पुत्त्रस्य राजर्षेर्दुष्यन्तस्य च समागमः समग्रफलसम्पत्तिः ॥

३० उदेतीत्यादि ॥ प्रसादस्य पुर इति ॥ समर्थः प्रत्ययेनेति षष्ठी ॥

---

दिष्ट्येति ॥ साध्वी शकुन्तला । इदं सदपत्यम् । भवानित्यर्थान्तरसंक्रमितवाच्यम् । तेन तत्तद्गुणगरिष्ठो भवानित्यनेन विशेषणप्रक्रमभङ्गः परिहृतः । श्रद्धा वित्तं विधिश्चेति त्रितयं समागतं तद्दिष्ट्येति सम्बन्धः । निदर्शना । श्रद्धादिभिरौपम्यस्य कल्पितत्वात् । 'त्रितयं वः समागतम्' इति पाठ एकैकं निर्दिशन्निति योजना । तेनाभिरूपसमागमात्समालङ्कारः । त्रितयपदेन समागमं प्रति प्रत्येकं कर्तृत्वं बोधयता स्त्रीबालावित्यनयोरवज्ञा न कार्येति भावः । 'देवानामपि ये देवा महात्मानो महर्षयः । भगवन्निति ते वाच्या यास्तेषां योषितस्तथा ॥' इति भरतोक्तेर्भगवन्निति सम्बुद्धिः ॥

उदेतीति ॥ कुसुमं पूर्वमुदेति ततः फलमुदेतीत्येव । घनोदयो मेघोद्गमः प्रागुदेतीत्येव । तदनन्तरं पयो जलमुदेतीत्येव आदिक्रियादीपकम् । निमित्तनैमित्तिकयोः कार्यकारणयोरयं पूर्वोक्तः क्रमः प्राकरणिकत्वेन प्राकरणिकार्थापातान्मालार्थापत्तिः । व्यतिरेकमाह—तव प्रसादस्य पुरः पूर्वं सम्पद इति कार्यकारणविपर्ययादतिशयोक्तिः । मम शकुन्तलापुत्रलाभ इति प्रस्तुतस्य विशेषस्य गम्यत्वे सम्पद इत्यप्रस्तुतप्रशंसा । निमिनैमीति निमित्तनैमित्तीति छेकवृत्त्यनुप्रासौ । वंशस्थं वृत्तम् । अनेन मधुरं नाम भूषणमुपक्षिप्तम् । तल्लक्षणं तु—'यत्प्रत्ययेन मनसा पूज्यपूजयितुर्वचः । स्मृतिप्रकाशनं यत्तत्स्मृतं मधुरभाष-

**मातलिः**—एवं विधातारः प्रसीदन्ति ॥

**राजा**—भगवन्! इमामाज्ञाकरीं वो गान्धर्वेण विवाहेनोपयम्य कस्यचित्कालस्य बन्धुभिरानीतां स्मृतिवैकल्यात्प्रत्यादिशन्नपराद्धोऽस्मि तत्रभवतो युष्मत्सगोत्रस्य कण्वस्य पश्चादेनामङ्गुलीयकदर्शनादूढपूर्वामवगतोऽहं ॥ तच्चित्रमिव मे प्रतिभाति ॥

**यथागजो नेति समक्षरूपे**
**तस्मिन्नतिक्रामति संशयस्स्यात् ।**
**पदानि दृष्ट्वा तु भवेत्प्रतीति-**
**स्तथाविधो मे मनसो विकारः ॥ २१**

**मारीचः**—वत्स! अलमात्माप(राध)चारशङ्कया ॥ सम्मोहो हि त्वय्युपपन्न एव श्रूयताम् ॥

**राजा**—अवहितोऽस्मि ॥

---

**२१ यथा गज इत्यादि ॥** यथा यस्य कस्यचिन्मूढस्य प्रत्यक्षरूपे प्रत्यक्षीकृते गजे ॥ गजो नेति प्रत्ययस्स्यात् ॥ तदनन्तरं तस्मिन्गजे अतिक्रामति । संशयः गजो वा नवेति सन्देहस्स्यात् ॥ ततः पश्चात्पदानि तस्य गजस्य दृष्ट्वा गजएवायमिति सत्यज्ञानं भवेत् ॥ मे मनसो विकारस्तथाविधः तादृशः ॥ पूर्वं विवादकाले किमिदमुपन्यस्तमित्यादिना शकुन्तलायाः परिग्रहाभावनिश्चयः ॥ पश्चात्तस्यामन्तर्गतायां "कामं प्रत्यादिष्टा"मित्यादिना परिगृहीता वा न वेति संशयः ॥ अनन्तरमङ्गुलीयकदर्शनादियं परिगृहीतेति सम्यक्प्रतीतिरित्येवं रूप इत्यर्थः ॥

**वत्सेत्यादि ॥** सम्मोहोऽपि सम्यङ्मोहः उपपन्नः वत्सेत्यादिना अङ्गुलीयकदर्शनावसान इत्यन्तेन अनुनयो नामालङ्कारो व्यज्यते ॥ तदुक्तं—"उभयोः प्रीतिजननो विरुद्धाभिनिवेशयोः । अर्थस्य साधकश्चैव विज्ञेयोऽनुनयो बुधैः" इति ॥ अत्र शकुन्तलादुष्यन्तयोः प्रीतिजनको दुष्यन्ते रोषाभावसाधको मारीचमुनिवाक्योपन्यासः ॥

---

णम्' ॥ इति । विधातारः स्रष्टारः । व आज्ञाकरीमित्यनेन विनयोक्तिः । उपयम्य विवाह्य । स्मृतिशैथिल्याच्च तत्त्वतः स्मृतेरभावः । स्थायिन्या रतेरविच्छेदात्प्रत्यादिशन्निराकुर्वन् । तत्रभवतः पूज्यस्य ॥

**यथेति ॥** समक्षरूपे गजेऽयं गजो न वेति संशयः स्यात् तस्मिन्नपक्रामति गच्छति सति पदानि भूमौ चरणचिह्नानि दृष्ट्वा यथा प्रतीतिर्निश्चयबुद्धिर्भवति गज एवायमिति तथाविधस्तादृशो मे मनसो विकार आसीत् । निदर्शनानुप्रासश्च । द्वादश्युपजातिरिन्द्रवज्रोपेन्द्रवज्रयोः । अलमिति निषेधे । आत्मनोऽपराधस्तच्छङ्कयालमिति समन्वयः ।

**मारीचः**— यदैवाप्सरस्तीर्थावतरणात्प्र(त्यक्षवैक्लब्यां)त्यादेशविक्लवां शकुन्तलामादाय मेनका दाक्षायणीमुपगता, तदैव ध्यानादवगतोऽस्मि । दुर्वाससश्शापादियं तपस्विनी सह धर्मचारिणी त्वया प्रत्यादिष्टा नान्यथेति सचायमङ्गुलीयकदर्शनावसानः ॥

**राजा**—(सोच्छ्वासं) एष वचनीयान्मुक्ताऽस्मि ॥

**शकुन्तला**—(आत्मगतं) [1]दिट्ठिआ अकाळणप्पच्चादेसी ण अज्जउत्तो । णखु सच्चं तदा हं अत्ताणं सुमरामि ॥ अहवा पत्तो मए सावो विरहसुण्णहिअअए (णविदिदो) अदो सहीहिं सन्दिट्ठम्हि भत्तुणो अङ्गुळीअअं दंसइदव्वंत्ति ॥

**मारीचः**—(शकुन्तलां विलोक्य) वत्से ! विदि(चरि)तार्थासि सहधर्मचारिणं प्रति न त्वया मन्युः कर्तव्यः ॥

**पश्य**—

**शापादसि प्रतिहता स्मृतिरोधरूक्षे**
**भर्तर्यपेततमसि प्रभुता तवैवं ।**

---

1 दिष्ट्या अकारणप्रत्यादेशी नार्यपुत्रः । न खलु सत्यं तदाहमात्मानं स्मरामि ॥ अथवा प्राप्तो मया शापो विरहशून्यहृदयया ॥ अतस्सखीभ्यां सन्दिष्टास्मि भर्त्रे अङ्कुळीयकं दर्शयितव्यमिति ॥

---

३२ **शापादित्यादि** ॥ शापाद्धेतोः स्मृतिरोधरूक्षे स्मृतेः स्मरणस्य रोधः प्रतिबन्धः तेन रूक्षः क्रूरः तस्मिन् सति ॥ प्रतिहता प्रत्यादिष्टा ॥ तस्मिन्नपेततमसि सति पश्चादङ्गुळीयकदर्शनेन प्राप्तस्मरणे सतीत्यभिप्रायः ॥ प्रभुता प्रधाननायिका त्वं तवैवं

---

दाक्षायणीमदितिम् । ध्यानादवगतं ज्ञानं विद्यते यस्मिन्नित्यवगतोऽस्मि ज्ञातवानस्मि । 'मारीचः—वत्स, अलमात्मा—' इत्यादिना 'दर्शनावसानः' इत्यन्तेन निर्णयनामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'अनुभूतार्थकथनं निर्णयः समुदाहृतः' इति । वचनीयाल्लोकापवादात् । दिष्ट्या दैवेन । अकारणप्रत्यादेशी नार्यपुत्रः । न खलु शप्तमात्मानं स्मरामि । अहवा अथवा । प्राप्तो मया स हि शापो विरहशून्यहृदयया न विदितः । अतः सखीभ्यां सन्दिष्टास्मि भर्तुरङ्गुलीयकं दर्शयितव्यमिति । चरितार्था कृतार्थासि सहधर्मचारिणं प्रति । पश्येति । वाक्यार्थस्य कर्मत्वम् ।

**शापादिति** ॥ शापात्त्वं प्रतिहतासि तिरस्कृतासि भर्त्रेत्यर्थः । शापादित्यनेन तस्य दोषाभाव उक्तः । पूर्वं स्मृतेः स्मरणस्य रोधेन रूक्षे निःस्नेह इव । अत्रापि शापादित्यनुषज्यते । अधुनापेतं दूरीभूतं तमः शापलक्षणं यस्मादेवंभूते भर्तरि तवैव प्रभुता ।

छाया(नमूर्छति)विभाति न मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशा ॥ ३२

राजा—यथाह भगवान् ।

मारीचः—वत्स ! कच्चिदभिनन्दितस्त्वया विधिवदस्माभिरनुष्ठितजातकर्मा पुत्र एष शाकुन्तलेयः—(इत्यन्यत्राधिकपाठः)॥

राजा—भगवन् ! अत्र खलु मे वंशप्रतिष्ठा ॥

मारीचः—तथाभाविनमेनं चक्रवर्तिनमवगच्छतु भवान् ॥

पश्य—

रथेनानुत्खातस्तिमितगतिना तीर्णजलधिः
पुरा सप्तद्वीपां जयति वसुधामप्रतिरथः ।

---

पूर्वदेव ॥ अनेन परिग्रहबहुत्वेऽपीत्यादिना यदुक्तं तत्परामृश्यते ॥ अत्र दृष्टान्तमाह—न मलोपहतप्रसाद इत्यादिना ॥

रथेत्यादि ॥ चक्रवर्तिनं सार्वभौमम् ॥

३३ रथेनेति ॥ अनुत्खातस्तिमितगतिना उत्खातस्य निम्नोन्नतप्रदेशस्याभावोनुत्खातः ॥ तेन स्तिमिता निष्कम्पा गतिर्यस्य स तथोक्तः ॥ तेन ॥ अनेन विशेषणेन रथस्याकाशगामित्वं सूच्यते ॥ पुराजयति जेष्यति ॥

---

असम्बन्धे सम्बन्धातिशयोक्तिरियं भर्तृसम्बद्धायाः प्रभुतायाः प्रसिद्धत्वात् । अथ च यो भर्ता स प्रभुः, या वनिता सा गुणभूता इति शास्त्रस्थितौ भर्तृत्वं तस्मिन्प्रभुता चास्यामित्यसङ्गतिश्च । अतिशयोक्त्या सहाङ्गाङ्गिभावः । मलेनागन्तुकेन दोषेणोपहतो दूरीकृतः प्रसादो यस्य तस्मिन्दर्पणतल आदर्शे छाया प्रतिबिम्बं न मूर्च्छति न प्रसरति । 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्यमरः । सा छाया शुद्धे निर्मले दर्पणतले सुलभावकाशा । अत्यन्तं व्यक्ता दृश्यत इत्यर्थः । हेतुदृष्टान्तौ । ततताविति तमतिमेति छेकवृत्त्यनुप्रासौ । वसन्ततिलका वृत्तम् ॥

रथेनेति ॥ न विद्यते प्रतिद्वन्द्वी रथो यस्य सोऽप्रतिरथोऽयम् । अनुद्घातास्खलितात एव स्तिमिता निश्चला गतिर्यस्य तेनेति स्वभावोक्तिः । जले स्खलनासम्भवात् । एवंभूतेन तीर्णजलधिरुत्तीर्णसमुद्रः सप्त कुशक्रौञ्चादीनि द्वीपानि यस्याः सा सप्तद्वीपा तां वसुधां पुरा जयति जेष्यति । 'यावत्पुरानिपातयोर्लट्' । अत्र भाविकालङ्कारः । 'प्रत्यक्षा इव

इहायं सत्त्वानां प्रसभदमनात्सर्वदमनः
पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात् ॥ २३

राजा—भगवता कृतसंस्कारे सर्वमस्मिन्वयमाशास्महे ॥

अदितिः—[1]भअवं । इमाए दुहिदुमणोरहसम्पत्तीए कण्णोवि दावपरिचारेहिं सुदवित्थारो करीअदु दुहिदुवच्छला मेणआ एत्थ एव्व मं परिचरन्ती चिट्ठइ ॥

शकुन्तला—(आत्मगतं) [2]मणोरहो खु मे भणिदो भअवदीए ॥

मारीचः—तपःप्रभावात्प्रत्यक्षं सर्वमेतत्तत्रभवतः ॥

राजा—अतः खलु मामनतिक्रुद्धो मुनिः ॥

मारीचः—तथाप्यसौ प्रिय(मस्माभिश्श्रावयितव्यः) समभियोगस्सन्देष्टव्यः॥कः कोऽत्र भोः ?

शिष्यः—(प्रविश्य) भगवन् ! अयमस्मि ॥

---

1 भगवन् ! अनया दुहितृमनोरथसम्पत्त्या कण्वोऽपितावत्परिचारकैश्श्रुतविस्तारः क्रियतां ॥ दुहितृवत्सला मेनका अत्रैवमां परिचरन्ती तिष्ठति ॥

2 मनोरथः खलु मे फणितो भगवत्या ॥

---

इहास्मिन्नाश्रमे सत्त्वानां शरभसिंहादीनां प्रसभदमनात् प्रसभेन बलात्कारेण मर्दनात् ॥ सर्वदमनः ॥ लोकस्य जगतः भरणाद्भरत इति पुनः पश्चात् आख्यां नामधेयं यास्यति ॥ तथाभाविनमेव चक्रवर्तिनमित्यादिना एतदन्तेन पूर्वभावो नाम सन्ध्यङ्गमुक्तं 'कार्यज्ञानं पूर्वभावः' अत्र मारीचेन भविष्यत्कार्यमुक्तम् ॥

---

यत्रार्थाः क्रियन्ते भूतभाविनः । तद्भाविकम्' इति तल्लक्षणात् । अतएव जेष्यतीति वक्तव्ये पुरायोगे लडित्यवधेयम् । इहाश्रमे सत्त्वानां प्राणिनां प्रसभं हठेन दमनात्सर्वदमन इत्याख्यामभिधां यातः । पुनर्लोकस्य जनस्य भुवनस्य वा भरणाद्रक्षणात्पोषणाद्वा भरत इत्याख्यां यास्यति । 'लोकस्तु भुवने जने' इत्यमरः । छेकवृत्त्यनुप्रासौ काव्यलिङ्गं च । शिखरिणीवृत्तम् । 'मारीचः—वत्से, चरितार्थासि' इत्यादिना 'आशास्महे' इत्यन्तेन प्रसादलक्षणमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'शुश्रूषाद्युपसम्पन्ना प्रसादस्तु प्रसन्नता' इति । भगवन्, अनया दुहितृमनोरथसम्पत्त्या कण्वोऽपि तावच्छ्रुतविस्तारः क्रियताम् । दुहितृवत्सला मेनकेहैवोपचरन्ती समीपचारणी तिष्ठति । मनोरथः खलु मे भणितो भगवत्या । अत्र कृतिर्नामाङ्गमुपक्षिप्तम् । तल्लक्षणम्—'लब्धस्यार्थस्य शमनं कृतिरित्यभिधीयते' इति । 'किं ते भूयः प्रियमुपकरोमि' इत्यनेन काव्यसंहारलक्षणमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—

**मारीचः**—गालव ! इदानीमेव विहायसा गत्वा तत्रभवते कण्वाय-मद्वचनात्प्रियमावेदय । यथा पुत्रवती शकुन्तला तच्छापनिवृत्तौ स्मृतिमता दुष्यन्तेन प्रतिगृहीतेति ॥

**शिष्यः**—यदाज्ञापयति भगवान् ॥

(इति निष्क्रान्तः)

**मारीचः**—वत्स ! त्वमपि स्वापत्यदारसहितः सख्युराखण्डलस्य रथमारुह्य राजधानीं प्रतिष्ठस्व ॥

**राजा**—यदाज्ञापयति भगवान् ॥

***मारीचः**—(राजानं विलोक्य)

त्वयि भवतु बिडौजाः प्राज्यवृष्टिः प्रजासु
त्वमपि विततयज्ञस्स्वर्गिणो भावयालम् ।
युगशतपरिवृत्तान्येवमन्योन्यकृत्यै-
र्नयतमुभयलोकानुग्रहश्लाघनीयैः ॥ ३४

**राजा**—भगवन् ! यथाशक्ति श्रेयसि प्रयतिष्ये ॥

**मारीचः**—वत्स ! किं ते भूयः प्रियमुपहरामि ?

**राजा**—अतः परमपि (प्रियमस्ति) यदि(ह)भगवान् (प्रियं) प्रसादं कर्तुमिच्छति । तथा (तर्हीं)पीदमस्तु भरतवाक्यम् ॥

---

३४ **त्वयि भवत्वित्यादि ॥** प्रजासु त्वयीति च विषयसप्तमी ॥ बिडौजाः देवेन्द्रः विततयज्ञः विस्तृतयोगः ॥ अलम्भावय सम्भावय ॥ एवमनेन प्रकारेण ॥ उभयलोकानुग्रहश्लाघनीयैः उभौ लोकौ मर्त्यस्वर्गलोकौ तयोरनुग्रहः अभ्युपपत्तिः तेन श्लाघनीयैः स्तुत्यैः ॥ अनेनोपसंसृतिर्नाम सन्ध्यङ्गमुक्तं ॥ उक्तञ्च—"वराप्तिः कार्यसंसृति"रिति ॥ अत्र मारीचेन मुनिना राज्ञोवरप्राप्तियोगात् ॥

**वत्स किं ते भूय इत्यादि ॥** उपहरामि समर्पयामि ॥ अतः परमपि अधिकमपि ॥ भरतस्य नटाध्यक्षस्य वाक्यं वचनम् ॥

---

'वरप्रदानसम्प्राप्तिः काव्यसंहार उच्यते ।' इति । भरतवाक्यं नटवाक्यम् । नाटकाभिनयसमाप्तौ सामाजिकेभ्यो नटेनाशीर्दीयत इत्यर्थः । प्रस्तावनानन्तरं नटवाक्याभावादत्र भरतवाक्यमित्युक्तिः ॥

---

*इदमादि 'प्रयतिष्य' इत्यन्तमन्यत्र कोशे न दृश्यते

प्रवर्ततां प्रकृतिहिताय पार्थिव-
स्सरस्वती श्रु(त)तिमहतां महीय(सां)तां ।
ममापि च क्षपयतु नीललोहितः
पुनर्भवं परिगतशक्तिरात्मभूः ॥ ३५

(इति निष्क्रान्तास्सर्वे)

इति श्रीमहाकविकाळिदासकृतौ शाकुन्तलनाटके

सप्तमोऽङ्कः ॥

---

**प्रवर्ततामिति** ॥ पार्थिवो राजा ॥ जातावेकवचनं ॥ प्रकृतिहिताय प्रकृतीनां प्रजानां हिताय इष्टाय ॥ श्रुतिमतां श्रेष्ठानां ॥ "श्रुतं शास्त्रावधृतयो"रित्यमरः ॥ सरस्वती महीयतां पूज्यतां ॥ परिगतशक्तिः प्राप्तशक्तिः ॥ अर्धनारीश्वर इति यावत् ॥ अतएव नीललोहितः ॥ वामभागे नीलो दक्षिणभागे लोहितः । तथाचोक्तं—"अर्धमिन्द्रमणिमेचकमर्धं प्रक्रियां वहति विद्रुमराशेः" इत्यादि ॥ आत्मभूस्स्वयम्भूः ममापि पुनर्भवं पुनर्जन्म क्षपयतु अपाकरोतु ॥ अनेन प्रशस्तिर्नाम सन्ध्यङ्गमुक्तं भवति ॥ प्रशस्तिस्तु शुभाशंसेति अत्र पुनर्जन्मक्षपणस्यात्यन्तनिषिद्धत्वोपलक्षितपरमानन्दस्वरूपत्वे शुभत्वं अतस्तदाशंसा भवति ॥ एवं सर्वनाटकेषु भरतवाक्येषु शुभाशंसा योजनीया ॥

इति श्रीरमणवेंकटाचलेश्वरपादारविन्दसमाराधकवैखानसकुलतिलक कौशिकगोत्र श्रीवेङ्कटभट्ट इति गोत्रक्रमागतभट्टबिरुद श्रीतिरुमलाचार्यपुत्रेण ध्वनिप्रस्थान-परमाचार्येण अष्टभाषाचक्रवर्ति श्रीनिवासाचार्येण विरचितायां शाकुन्तलव्याख्यायां सप्तमोऽङ्कः ॥

अभिज्ञानशाकुन्तलं नाम नाटकं सव्याख्यानं सम्पूर्णम्

---

**प्रवर्ततामिति** ॥ प्रकृतिहिताय पौरश्रेणिहिताय पार्थिवः प्रवर्तताम् । श्रुतेन शास्त्रश्रवणेन महतां गरिष्ठानां महीयसामुत्कृष्टानामुत्कृष्टशक्तिमतां कवीनाम् । विशेषणेनैव विशेष्यप्रतिपत्तेर्न विशेष्योपादानम् । सरस्वती प्रवर्ततामित्यनुषज्यते । आदिक्रियादीपकम् । नीललोहितो महादेवो मम पुनर्भवं जन्मान्तरं क्षपयतु नाशयतु । कीदृङ् नीललोहितः । आत्मना भवतीत्यात्मभूः । परितो गता व्याप्ता शक्तिः सामर्थ्यमस्येत्यनेन तत्तच्छक्तित्वं व्यज्यते । क्रियासमुच्चयः तमतामेति महमहीति छेकवृत्त्यनुप्रासौ । रुचिरा वृत्तम् । तल्लक्षणं तु—'चतुर्ग्रहैरिह रुचिरा जभौ सजौ गः' इति । अनेन प्रशस्तिनामकमङ्गमुपक्षिप्तम् । तल्लक्षणमादिभरते—'देवद्विजनृपादीनां प्रशस्तिः स्यात्प्रशंसनम्' इति ॥

इति श्रीमदभिज्ञानशाकुन्तलटीकायामर्थद्योतनिकायां

सप्तमोऽङ्कः समाप्तः ॥

---

## Our Sanskrit Publications.

| | RS. | A. | P. |
|---|---|---|---|
| **Kalidasa's Sakuntala** with Sanskrit Commentary by **Sathavadhana Pandit Srinivasachariar,** Introduction, English Notes and Translation. | 3 | 8 | 0 |
| **Kalidasa's Malavikagnimitra** with elaborate Introduction, English Notes and Translation by **A. S. Krishna Rao,** M.A., Lecturer in Sanskrit, Loyola College, Madras. ... | 2 | 0 | 0 |
| **Meghasandesa** with Mallinatha's Commentary and exhaustive Introduction, Sanskrit-English Notes and English Translation, by Vidwan **G. J. Somayajulu,** M.A., L.T., Lecturer, Pachaiyappa's College, Madras. ... | 1 | 12 | 0 |
| **Kavyadarsa** by Dandin with Sanskrit Commentary and English Translation by **V. Narayana Iyer,** M.A., M.L., Advocate, Madras ... | 3 | 0 | 0 |
| **Sri Harsha's Priyadarsika** with Introduction, Translation, Notes and Appendix by **P. V. Ramanujaswami,** M.A., Principal, Maharajah's Sanskrit College, Vizianagrum ... | 1 | 12 | 0 |
| **Sri Harsha's Ratnavali** with Introduction, Translation, Notes and Appendix by **P. V. Ramanujaswami,** M.A., Principal, Maharajah's Sanskrit College, Vizianagrum ... | 2 | 0 | 0 |
| **Sri Harsha's Nagananda** with Introduction, Translation, Notes and Appendix by **P. V. Ramanujaswami,** M.A., Principal, Maharajah's Sanskrit College, Vizianagrum ... | 2 | 0 | 0 |

*Apply to :—*

V. Ramaswamy Sastrulu & Sons

*292, Esplanade, MADRAS.*